॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
३३३

# संस्कृतकाव्यशास्त्रेतिहासः

लेखकः

**आचार्य डॉ० जगदीशचन्द्रमिश्रः**

साहित्याचार्य, व्या० शा०
एम० ए० ( द्वितय ), पी-एच्० डी०, डिप्-इन-एड्०






चौखम्बा सुरभारती प्रकाशन
वाराणसी

प्रकाशक

चौखम्बा सुरभारती प्रकाशन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० 37/117, गोपालमन्दिर लेन

पो० बा० नं० 1129, वाराणसी 221001

फोन : 335263
333371





प्रथम संस्करण - 2002

मूल्य : 350-00 (सजिल्द)
120-00 (अजिल्द)





अन्य प्राप्तिस्थान

चौखम्बा संस्कृत प्रतिष्ठान

38 यू. ए. बंगलो रोड, जवाहरनगर

पो० बा० नं० 2113

दिल्ली 110007

फोन : 3956391

*

प्रधान वितरक

चौखम्बा विद्याभवन

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० 1069, वाराणसी 221001

फोन : 320404

---

कम्प्यूटर टाइप सेटर :
मालवीय कम्प्यूटर्स
वाराणसी

मुद्रक :
ए० के० लिथोग्राफर
दिल्ली

The

CHAUKHAMBA SURABHARATI GRANTHAMALA

333

# SANSKRIT KĀVYAŚĀSTRETIHĀSAḤ

## ( The History of Sanskrit Poetics )

*By*

**Dr. JAGADISH CHANDRA MISHRA**

Sahityacharya, M.A., Ph.D., Dip-in-Ed.



**CHAUKHAMBA SURBHARATI PRAKASHAN**

**VARANASI**

*Publishers:*

**© CHAUKHAMBA SURBHARATI PRAKASHAN**

*( Oriental Publishers & Distributors )*

K. 37 / 117, Gopal Mandir Lane

Post Box No.1129

VARANASI 221001

*Telephone : 335263*
*: 333371*

First Edition
2002

*Also can be had of*

**CHAUKHAMBA SANSKRIT PRATISHTHAN**

38 U. A. Bungalow Road, Jawaharnagar

Post Box No. 2113

DELHI 110007

*Telephone : 3956391*

*

*Sole Distributors :*

**CHOWKHAMBA VIDYABHAWAN**

Chowk ( Behind The Benares State Bank Building )

Post Box No. 1069

VARANASI 221001

*Telephone : 320404*

---

*Computer Type-setters :*
**Malaviya Computers**
**Varanasi**

*Printers :*
**A. K. Lithographers**
**Delhi**

# उपोद्घातः

ईश्वरकृपया विद्वज्जनसमक्षं काव्यशास्त्रंस्येतिहासस्यप्रस्तुतोऽयंसंस्करणः। सत्यपि सुविस्तृते काव्यशास्त्रसाहित्ये सुमहत्यामप्यस्येतिहासप्रणयनपरम्परायां संस्कृतभाषायां काव्यशास्त्रेतिहासस्य नितरामभावो वर्त्तते। अस्मादेव कारणादुपक्रम्यते मुद्रापयित्वा प्रकाशयितुमयं काव्यशास्त्रेतिहासः।

इदानीन्तने युगे पल्लवग्राहिणिमात्रशिक्षाक्रमे प्रवर्त्तमाने प्रायशः समग्रग्रन्थानां पठनपाठनमपि न प्रचलन्ति, अध्येतारोऽपि तादृशीं विषयोन्मेषशक्तिं तथा नैवाधिगच्छन्ति यथा पुरा पठनपाठनपरिपाटी पटीयसी सतीसुकुमारशेमुषीकान् तर्कोपकरणैः सनाथी कुरुतेस्म। यद्यपि बहोः कालादेवायं **काव्यशास्त्रेतिहासः (History of Sanskrit Poetics)** सर्वत्र पठनपाठनयोरपेक्षते, बह्वीषु च परीक्षासु पाठ्यत्वेनाय्यं निर्धारितोऽस्ति, तथाप्येतावत्काले नाप्यस्य ग्रन्थस्य संस्कृतसंस्करणस्याभावो महद्दुःखाकरं चेतसः।

भाषान्तरेषु ये काव्यशास्त्रेतिहासाः बहुभिः सुप्रसिद्धपण्डितधौरेयः प्राणायिषत लोके च प्रसिद्धिंगतास्तेऽपि संस्कृतछात्राणामावश्यकतां न पूरयन्ति, यतः संस्कृतछात्राः काव्यशास्त्रेतिहासविषयकप्रश्नानामुत्तराणि संस्कृतभाषायामेव दित्सन्ति पठन्ति चेतिहासमन्यस्यां भाषायाम्। तत्र चानभ्यासजन्यपाटवविरहाद् बहुधा छात्राः कान्दिशीकतामेवावगाहन्ते। परीक्षाकाले ते निजभावान् यथावत् सुरगिरि प्रकाशयितुं न क्षमन्ते। अपि च भाषान्तरे लिखितेषु काव्यशास्त्रेतिहासपुस्तकेषु विचाराः तत्तद्भाषाशैल्या विस्तृततयेति प्रकटिताः, न च शक्नुवन्ति संस्कृतछात्राः विस्तृततयोक्तानर्थान् स्वयं संक्षेपितुमतोऽपि ते काठिन्यमनुभवन्ति। अतस्तेषां कृते दुस्तरे परीक्षाविस्तारे सरलतया सुरगिरा निबद्धः इतिहासस्य विविधानां काव्यशास्त्रकाराणां परिचायकः प्रतिपाद्यविषयस्य स्वरूपप्रदर्शकः ग्रन्थस्यास्मिन्क्षेत्र नितरामावश्यकतामपेक्षतेति। एतत्सर्वं विचार्य काशीस्थचौखम्बा सुरभारती अध्यक्षैः संस्कृतभाषायां संक्षिप्तकाव्यशास्त्रेतिहासलेखनार्थमनुरुद्धो मया ग्रन्थोऽयं प्रस्तुतः। यावच्छक्यबहुप्रयत्य सर्वेऽपि परीक्षोपयोगिविषयान् संक्षिप्य संस्करणोऽयं सम्पादितो मयेति।

अस्मादेव कारणादेष जनः एतादृशि दुष्करे कार्ये आत्मानं न्ययूयुजत्। अत्रेदमपि निःसंकोचभावेन स्वीक्रियते यद्यमुमुद्देशं पुरो निधाय ग्रन्थोऽयं विरचितस्तस्योद्देशस्य पूर्त्तिरिह वस्तुत एकदेशतोऽपि न संवृत्ता। यतो

काव्यशास्त्रेतिहासो न केवलं काव्यशास्त्रकाराणां जीवनमात्रं विषयीकरोत्यपितु तदीयकृतिर्मूल्यनिर्धारणादि प्रधानतयापेक्षते, तथा तत्कार्यं च गभीरमध्ययनमपेक्षते । अस्यां स्थितौ मादृशजनस्य प्रयासोऽयं दुस्साहसमात्रमेव ।

अतः कामनेयं यदस्यां दिशायामधिकारिणो मनीषिणः प्रवर्तेरन् । येन काव्यशास्त्रेतिहासस्येदमप्यंगं पूर्णतया सम्पुष्टं स्यात् ।

येषां विदुषां ग्रन्थानहं साहायरूपेण स्वीकृतवान् तेऽपि सर्वे मया साभारैः सत्क्रियन्ते । सत्यन्त्विदं यद्यदि ते साहायग्रन्था नाभविष्यंस्तदा कार्यमिदं ममासाध्यमेवाभविष्यत् । तत्रापि विशिष्टधन्यवादार्हाः कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयस्य भूतपूर्वकुलपतिमहोदयाः अस्मद्काव्यशास्त्रगुरवः येषां सन्मन्त्रणया प्रवृत्तोऽहं जातम् ।

यद्यपि मत्सदृशसरागाणां स्वविरचितसन्दर्भे दोषदृष्टिनैव जायते, तथापि स्वप्रेमपूर्णनयनावलोकनमात्रेण कस्यचित् सगुणत्वं न भवितुमर्हतीत्येतत्प्रबन्धस्य समीचीनत्वासमीचीनत्वविचारणायां निष्पक्षन्यायभाजः सहृदया विद्वद्वराः एव प्रमाणम्, अपि च—

मर्त्यैरसर्वविदुरैर्विहिते क्व नाम ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि—

इति न्यायात् प्रमादस्य स्वाभाविकत्वात् कण्टकाक्षरद्रोषाद् वा यदत्र स्खलनं सञ्जातं तत् क्षमासारा विद्वद्वरादयोदयमधुरदृशा निरीक्षमाणाः सन्तः क्षमिष्यन्ते मामिति सप्रश्रयं निवेदयति ।

विदुषामाश्रवः

**जगदीशचन्द्र मिश्रः**

# विषयानुक्रमणिका

॥ श्रीः ॥

# संस्कृतकाव्यशास्त्रेतिहासः



## प्रस्तावना

### (क) संस्कृतकाव्यशास्त्रस्य परिचयः

संस्कृतभाषायां संस्कृतकाव्यशास्त्रस्य प्राचीनतमं नाम काव्यालङ्कार एवास्ति । यस्मिन् शास्त्रेऽस्य सौन्दर्यस्य पर्यालोचनं क्रियते तच्छास्त्रं काव्यशास्त्रमित्यभिधीयते । काव्यशास्त्रस्यादिमे काले एतस्मै काव्यालङ्कारशब्दस्य प्रयोगः क्रियतेस्म । एतम्मादेव हेतोः काव्यशास्त्रस्यादियुगस्य सर्वे आचार्याः स्वग्रन्थानां नामानि काव्यालङ्कार इत्यकार्षुः । अलङ्कारशास्त्रस्य प्रख्यात आचार्यो भामहः स्वग्रन्थस्य नाम काव्यालङ्कार इत्यकार्षीत् । रुद्रटोऽपि स्वकाव्यशास्त्रविवेचनात्मकस्य ग्रन्थस्य नाम काव्यालङ्कारसार-संग्रहः इत्यकरोत् । रुद्रटस्याऽपि काव्यशास्त्रविषयकस्य ग्रन्थस्य नाम काव्यालङ्कार एवास्ते । काव्यशास्त्रमिदं स्वोत्पत्तिसमयादेव नितरां लोकप्रियताङ्गतं तस्मादेतत् काव्या-लङ्कार-काव्यशास्त्र-क्रिया-कल्प-साहित्यविद्यालङ्कारशास्त्रसाहित्यशास्त्रादि-कतिपय-नामभिः ससंमानं सानुरागञ्च समादृतमभूत् । शास्त्रमिदं शास्त्रान्तराणीव परमोपादेयं शास्त्रम् । लौकिकानां वैदिकानाञ्च शास्त्राणां सर्वाङ्गीणतया ज्ञानं तावन्न भवितुमर्हति यावदस्य काव्यशास्त्रस्य ज्ञानं न वर्त्तते । वेदवेदाङ्गादिषु—**'उत त्वः पष्यन् न ददर्श वाचम्... जायेव पत्ये उषती सुवासा' द्वासुपर्णा सयुजा सखाया'** इत्यादिकानि सन्ति सहस्राणि वाक्यानि एतादृशानि येषां भावान्न काव्यशास्त्रानभिज्ञो जनः ज्ञातुं प्रभवति, अथ च यो जनः काव्यशास्त्रे न निष्णातोऽस्ति स व्यञ्जना प्रतिपाद्यमानान् अर्थान् अपि नावबोद्धुं शक्नोति । एवं स्थिते तस्य गतिस्तेषु स्थलेषु केन प्रकारेण स्यात् यानि व्यङ्ग्यार्थ-विलसितानि व्यञ्जकपदावलिपेशलानि च स्थलानि विद्यन्ते तस्मात् काव्यशास्त्रस्या-निवार्यत्वेनाध्येतव्यतापेक्ष्यते । काव्यशास्त्रस्यास्यानेक स्वकीय विशिष्टताः विलोक्यैव राजशेखरः शास्त्रमिदं वेदाङ्गमिव मन्यते । स ब्रूते—'उपकारकत्वादलङ्कारः ग्प्तम-मङ्गमिति, ऋते च तत्स्वरूपपरिज्ञानादेवार्थानवगतिः' सः काव्यशास्त्रशिक्षां स्वतन्त्र-विद्यामेव न मन्यते, अपितु तर्कत्रयीवार्तादण्डनीतिनामधेयानां चतसृणामपि विद्यानां निष्यन्दमवगच्छति । स्वकीयानां काव्यमीमांसायां लिखति सः—'पञ्चमी साहित्य विद्या' इति यायावरीयाः, 'सा हि चतसृणामपि विद्यानां निष्यन्दः' । तथा स्वकीय काव्यादर्शे महेश्वरेणोक्तम्—

**'सुकुमारान् राजकुमारान् स्वादुकाव्यप्रवृत्तिद्वारा गहने शास्त्रान्तरे प्रवर्त्तयितुमग्निपुराणादुद्धृत्य काव्यरसास्वादकारणमलङ्कारशास्त्रं कारिकाभिः संक्षिप्य भरतमुनिः प्रणीतवान् ।'** एवं विद्याभूषणरचितसाहित्यकौमुद्याः टीकाकृष्णनन्दिन्यां—**'काव्यरसास्वादनाय वह्निपुराणादिदृष्टां साहित्यप्रक्रियां भरतः संक्षिप्ताभिः कारिकाभि र्निबन्ध'** ।

काव्यशास्त्रस्योत्पत्तिमधिकृत्य काव्यमीमांसाकारो राजशेखरो यामाख्यायिकां समुपस्थापयति सा कथयति पुरा त्रिषु लोकेषु काव्यशास्त्रप्रचारार्थाय श्रीकण्ठः सरस्वतीपुत्रं काव्यपुरुषं नियुक्तवान् । एतेन कथनेन शास्त्रस्यास्याविर्भावो भगवतः शङ्करात् विदितो जायते । तेन भगवान् शङ्करो ब्रह्मणे शास्त्रमेनमुपदिष्टवान् । तदनन्तरं ततो देवादय ऋषयश्च शिक्षिताः । अष्टादशोपदेशकद्वारा चैतस्य शास्त्रस्याष्टादशाधिकरणेषु रचना सञ्जाता । तत्र दृश्यकाव्यस्य निरूपणं भरतेन कृतम् । नन्दिकेश्वरेण रसस्य, धिषणेन दोषस्य, उपमन्युना गुणस्य, सहस्राक्षेण कविरहस्यस्य उक्तिगर्भेण औक्तिकस्य सुवर्णनाभेन रीतेः प्रचेतायनेन अनुप्रासस्य, चित्राङ्गदेन यमकस्य चित्रस्य च, शेषेण शब्दश्लेषस्य, पुलस्त्येन वास्तवस्य, औपकायनेन उपमायाः, पराशरेणातिशयस्य, उतथ्येनार्थश्लेषस्य, कुबेरेणोभयालङ्कारस्य, कामदेवेन वैजोदिकस्य, भरतेण रूपकस्य, कुचुमारेणौपनिषदिकस्य निरूपणं कृतमिति ।

परमेतादृशीषु आख्यायिकासु न साम्प्रतिको वैज्ञानिकः कालः श्रद्धते । काव्यसौन्दर्यस्याधायकानि यानि गुणरीतिध्वन्यलङ्कारादितत्त्वानि काव्यशास्त्रं विविनक्ति तानि सर्वाण्यपि तत्त्वानि मूलतो वेदेषु प्राप्तानि भवन्ति । तस्मात् काव्यशास्त्रमपि स्वोत्पत्यर्थमुपादानानि सामग्रीं वा वेदेभ्यः एव लेभे—इत्यपि तथ्यपूर्णां प्रतिभाति । वेदस्तु स्वयमेव **'अमरकाव्यम्'** इत्येतेन नाम्ना भुवनविदितः । **'देवस्य पश्य काव्यम् न ममार न जीर्यति ।'** एवं स्थितेः साहित्याथवा काव्यशास्त्रस्य जन्मदात्री वेदमातैव सिद्ध्यति । इदन्त्ववश्यम्, वेदवेदाङ्गादिषु केवलमलङ्कारशास्त्रस्य तत्त्वानि समुपलभ्यन्ते, न च तानि शास्त्राणि प्रत्यक्षतयाऽप्रत्यक्षतया वा तस्य शास्त्रीयं निरूपणं कुर्वाणानि दृष्टानि जायन्ते । तदीयं शास्त्रीयस्वरूपं तु भरतमुनिसमयात् प्रारब्धं भवति । भरतमुनेः समयमधिकृत्य विदुषां सन्ति भिन्नभिन्नानि मतानि । किञ्च भरतमुनेः कालो विक्रमात् प्राग्वर्तिशतकद्वयमारब्ध तदर्वाग्वर्ति शतकद्वयं यावत् यो विद्यते तस्यान्तराले सुधीभिः प्रायेण विचिन्त्यते ।

पूर्ववर्णितराजशेखरस्य काव्यपुरुषस्तु हिमालये पुत्रार्थं तपोनिरतायाः मातुः सरस्वत्याः समीपं विधातुर्वरदानेनावतरति चरणौ स्पृशति काव्यमय्या वाण्या च वदति—

**यदेतत्वाङ्मयं विश्वम् अर्थमूर्त्या विवर्त्तते ।**
**सोऽस्मि काव्यपुमानम्ब पादौ वन्दे च तावकौ ॥**

श्रुत्येदं वचनं माता सरस्वती उवाच—'पुत्रक ! छन्दोमय्याः वाण्याः प्रणेतासि । वाङ्मयमाताऽहमपि त्वया जिता । पुत्रात्पराजयो द्वितीयपुत्रजन्ममहोत्सव इव भवति ।

पूर्वमनीषिभिर्गद्यमेवज्ञातं त्वया तु छन्दोमयी वाणी प्रवर्त्तिता । अतएव प्रशंसनीयोऽसि ।'

काव्यपुरुषजन्मसंकेतो मिलत्यन्यत्रापि । किन्तु तत्राभिधानाभावः । अस्य काव्य पुरुषस्य शरीरं वर्णयन् राजशेखरो वदति—'**शब्दार्थौ चास्य शरीरम् । प्राकृतं बाहुः । पिशाचभाषा चरणौ । गुणाः गुणस्थानीयाः मिश्रभाषावक्षस्थलम् । संस्कृतं मुखम् । छन्दांसि रोमस्थानानि । अलङ्काराश्चालङ्करणभूताः । रस आत्मा । वचन विपर्यासो रीतिः । प्रवृत्तिश्च वेषविन्यासो**' इत्यादि ।

एतत् सर्वं सर्वप्रथमं विचारणीय प्रश्नोऽयमस्ति, तत्किमिदं काव्यशास्त्रम् ? का परिभाषा तच्छास्त्रस्य? अस्मिन्विषये राजशेखर एव प्रमाणम्, तेन दाढ्र्येन प्रतिपादितं यत् सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्, अर्थात्—पञ्चदशविद्यास्थानं काव्यपदार्थस्य शासनं करोति । अस्य कथनस्यायमाशयः—काव्यरूपलक्षस्य लक्षणं लक्षणानि वा यस्मिन् शास्त्रे स्युस्तन्नाम काव्यशास्त्रमस्ति, अथवा सुस्पष्टीकरणायैतत् कथनीयं स्याद्यत्—तासां विविधानामालोचनानां संज्ञा काव्यशास्त्रमस्ति, याभिः काव्यस्य सूक्ष्मातिसूक्ष्माः गतिविधयः सौष्ठवं किम्वाऽसौष्ठवं परिज्ञातं भवेत् । अलङ्कारशास्त्रमेव, प्रकारान्तरेण, शब्दान्तरेण च काव्यशास्त्रम् अथवा साहित्यशास्त्रं कथयन्ति विद्वांसः । विद्वन्मूर्धन्येन राजशेखरेणाऽपि '**शब्दार्थयोर्थोवत् सहभावेन विद्या साहित्यविद्या**' इति प्रतिपाद्य साहित्यशब्दस्यार्थः काव्यमिति स्वीकृतम् ।

अनेन विचारेण निष्कर्षोऽयं समायाति यत्काव्यशास्त्रस्य प्राचीनतमं नाम काव्यालङ्कार एवाऽस्ति । यस्मिन् शास्त्रेऽस्य सौन्दर्यस्य पर्यालोचनं क्रियते, तच्छास्त्रं अस्मै शास्त्राय मुख्यरूपेण काव्यशास्त्रस्य प्रयोगमकार्षीत् । किन्तु शास्त्रशब्दस्य व्युत्पत्तिमयं विधिप्रतिषेधपरामाह । तथा चोक्तं तेन—

**यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम् ।**
**तदध्येयं विदुस्तेन लोकयात्रा प्रवर्त्तते ॥ इति ।**

तयोर्विधिप्रतिषेधयोः साधनानि त्रीणि सन्ति । काव्यम्, शास्त्रम्, इतिहासञ्च एतेषां त्रयाणां मिश्रणेन त्रीण्यपराण्यपि जायन्ते साधनानि काव्यशास्त्रम्, काव्येतिहास शास्त्रेतिहासश्च । इत्त्थमाहत्य षट्साधनानि भवन्ति विधिप्रतिषेधबोधकानि । तथा चोक्तं भोजराजेण सरस्वतीकण्ठाभरणे—

**काव्यं शास्त्रेतिहासो काव्यशास्त्रं तथैव च ।**
**काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम् ॥ इति ।**

यद्यपि भोजराजोऽपि काव्यशास्त्रस्य प्रमुखं प्रयोजनं कान्तासम्मिततयोपदेशयुजे' इति मन्यते किन्तु नायं बहुजन समाहतः पक्षः । ते तु सद्यः परिनिर्वृतिरूपम् रसास्वदनं विगलितवेद्यान्तरमेव काव्यस्य परमं प्रयोजनं स्वीचक्रुः । वस्तुतः सद्यःपरि-निर्वृत्तिरेवास्य काव्यस्य वेदादिभ्यो भेदकं प्रयोजनमस्ति ।

अनेन प्रकरेण विभिन्न सम्प्रदायगताः आचार्याः अस्य काव्यशास्त्रस्य स्वरूपत्वं प्रतिष्ठापयितुं तस्य शास्त्रत्वं साधयितुं तस्य सर्वाङ्गाणि निष्पादयितुं निरूपयितुं च

पूर्णमनोयोगपूर्वकं प्रयासं विदधुः । तेषां प्रयासादविरामात् यस्य साहित्यस्य काव्यस्य च बीजानि तत्त्वानि वा वेदादिषु विकीर्णान्यासंस्तानि शास्त्रीयं रूपमधिजग्मुः ।

एवञ्च वेदादिसांख्यादिदर्शनानि वस्तुतो मानवविशेषमेवोपकुर्वन्ति वा निज सन्ति मानवमात्रोपकारिणीं काव्यशास्त्रमेव मानवमात्रस्य श्रेयः प्रेयश्च समादधति । तदेव मानवस्य क्षमतां तदीयां मनोवृत्तिं सम्यग् वेत्ति । तत् तथा यतते येन सर्वेऽपि मानवाः सत्पथगामिनो भूत्वा स्वीये परमार्थं लब्धुं शक्नुयुः । तन्मानवो येषु रतिक्रोधशोकादिस्थायिभावेषु स्वीपिति, जागर्त्ति, क्रीडति न किञ्च यान् निर्वेदादि वेगश्रममदादीन् भावान् अहोरात्रं जीवने व्यवहरति तान् सर्वान् अपि शास्त्रमिदं निरूपयति । काव्यस्यास्य विषय-प्रयोजनोद्देश्याधिकारिप्रभृतीनां स्वतन्त्रत्वात् तस्य शास्त्रत्वं निर्बाधमेव । शास्त्रेषु तत् स्वीयमुत्कर्षमुपादेयत्वाञ्चादाय विलसतितरामिति ।

## (ख) संस्कृतकाव्यशास्त्रीयविषयाणां संक्षिप्तविवरणम्

ईदृग्विधस्य काव्यस्य लक्षणमुक्त्वाऽन्यसाहित्यविधातस्तस्य पार्थक्यप्रदर्शनमतीवदुष्करं कृत्यमस्ति । अस्मिन् विषये पं० वेदव्यासशुक्लेनोक्तं—'सम्यग्रूपेणाविचारिते प्रतिभातीदमेव यत् सरलस्य सुव्यक्तस्य सर्वत्रस्थ परिभाषाकरणं कठिनप्रायम्' । किं तावत् लक्षणस्य लक्षणमित्यपि विचारणीयम् । विश्वस्य साहित्यिकपदकोषस्य (Dictionary of World literary terms page 92, Shiptey) महोदयो लिखति यत्—परिभाषा कस्यापि शब्दस्योचितं स्पष्टं निश्चितं पूर्णां निर्धारणं भवति । संक्षेपेणेदमवसीयते यत्तत्रविशिष्टा भाषासरणिः, ग्रन्थस्य विषयसंभारस्तथा विषयप्रतिपादनस्य सुप्रवृत्तिश्च । अनया दृष्ट्याऽऽर्याणामादिग्रन्थः ऋग्वेदः यद्यपि मुख्यरूपेण धर्मग्रन्थोऽस्ति तथापि तस्मिन् वेदे काव्यस्यानेकगुणाः सन्ति । विशेषतः उषाविषयकेषु सूक्तेषु सरसकाव्यस्थानेकान्युदाहरणानि सन्ति । तद्यथा—'**अभ्रातेव पुंस एति प्रतीचीगर्तारुगिव सनयेघनानाम् । जायेव पत्य उशती सुवासा उषा उस्रेव नि रिणीते अप्सः ॥** (ऋग्वेद १.१२४.२०) मन्त्रेऽस्मिन् चतस्रः उपमाः सन्ति । '**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्व जाते । तयोरेन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति ।**' (ऋग्वेद १.१६४.२०) अस्य मन्त्रस्य विषये राजशेखरोऽपि स्वकीय काव्यमीमांसायामलिखत्—**उपकारकत्वादलङ्कारः सप्तममङ्गं इति यायावरीयः । ऋते च तत्स्वरूपपरिज्ञानात् वेदार्थानवगतिः । यथा—द्वा सुपर्णा... अभिचाकशीति** (पृ० ३) । एवं रसगङ्गाधरेऽपि—**इयं चातिशयोक्ति वेदेऽपि दृश्यते यथा—द्वा सुपर्णा... शीति ।**' एवमतिशयोक्तेरेकमन्यमुदाहरणमपि दृश्यते—**चत्वारि श्रृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य । त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्या आविवेश ।**' (ऋ ४.५८.३) । अस्य मन्त्रस्य व्याख्या निरुक्ते १३.७ एवं महाभाष्ये प्रथमभागे तृतीय पृष्ठेऽपि द्रष्टव्येति । संस्कृत-आलङ्कारिकाणां विचारे तु पूर्वोक्त प्रथममन्त्रे सुष्ठुभाव संगुफितः रूपकातिशयोक्तिरलङ्कारोऽस्ति । (**निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्**) । **द्वादशारं नहि तज्जराय वर्पन्ति चक्रं परिद्यामृतस्य** (१.१६४.११) अत्र व्यतिरेकालङ्कारोऽस्ति । '**स्वसुर्जारः श्रृणोतु नः**' (ऋ० ६.५५.५) **यत्रासुपर्णा अमृतस्य आदि** (ऋ० १.१६४.२१) अस्य निरुक्ते (३.१२) अर्थद्वयस्य प्रतिपादनं

कृतमस्ति । एवंविधेषु मन्त्रेषु श्लेषालङ्कारः स्पष्टतया प्रतिभाति । निरुक्ते (३.१२) कतिपय शब्दानामर्थद्वयस्य प्रतिपादनमस्ति । शतपथब्राह्मणे 'हित'शब्दस्यार्थद्वयम् हितम् = स्थितः, हितम् = हितकरम्, तथा वर्षः = वत्सरः एवं वृष्टिः, अनेन प्रकारेणेव ऋग्वेदे—**अरण्यान्यरण्यान्यसौ या प्रेव नश्यति । कथाग्रामं पृच्छसि नत्वा भीरिव विन्दती ॥** (१०.१४६.१) मन्त्रेऽस्मिन् उत्प्रेक्षालङ्कारोऽस्ति । एवं ऋग्वेदे **सोऽपां जपादनभिज्ञातवर्णोऽन्यस्येवेह तन्वाविवेश ।'** अस्मिन् श्लोकेऽपि उत्प्रेक्षा-लङ्कारोऽस्ति । अनेनोदाहरणेन प्रमाणितो भवति ऋग्वेदकालीनाः कवयः न केवलम् उपमा-अतिशयोक्ति-श्लेष-रूपकाद्यलङ्काराणां प्रयोक्तारः आसन्, अपितु काव्यशास्त्रस्य सिद्धान्तानामपि ज्ञातारः आसन् । तेभ्यो विद्वद्भ्यः' शब्दानामक्षराणाञ्च पुनरावृत्तिः अतीव रोचते । यथा—**'रक्षाणो अग्ने तव रक्षेणेभी राक्षाणे'** (४.३.१४), **प्रतार्यग्ने प्रतरं न आयुः** (४.१२.६) **अब्जा गोजा ऋतजा अद्रिजा ऋतम्** (४.४०.५), **वयमग्ने वनूयां त्वोता वसूयवो'**(५.३.६) अनेनैव प्रकारेण कतिपयानां पदानां प्रारम्भे एकैवशब्दस्य पुनरावृत्तिरयोक्ष्यत् । तद्यथा ऋग्वेदे—**'हंसः शुचिषद् वसुरन्तरिक्ष-सद्गोजा वेदिषदतिथिर्दुरोणसत् ।'**(४.५७.५), **दद्ऋचा सन्नियते ददन्मेधामृतायते ।'** (५.२७.४) तथा **दिवाभिषित्वेऽव सा गभिष्ठा पत्यवर्त्ति दाशुषे शंभविष्ठा ।'** (५. ९६.२) आगामि समये प्रवृत्तिरेषा एवानुप्रासस्य यमकस्य च रूपे विकसिताऽभवत् । ऋषिः कथयति—सर्वथा देवता सन्मुखेऽभिनव स्वकीया वाण्या मन्त्राणां सृष्टिः स करोति—**प्र तव्यसीं नव्यसीं धीतिमग्नये वाचोमतिं सहस सूनवे भरे ऋक्** (१.१४३. १) अन्यमप्येकमुदाहरणमतीवरोचकमस्ति—**'सक्तुमिव तितउना पुनन्तो । यत्र धीरा मनसा वाचम ऋत । अत्रा सखायः संख्यानि जानते भद्रैषां लक्ष्मीर्निहिताविवाचि ।'** बुद्धिमान् जनः स्वबुद्धया एवं विधानां पदानां निर्माणं करोति यथा तितउना यवसात् यवान् पृथक् करोति । काव्यार्थ ज्ञातुमेवं विधेः बुद्धिरावश्यकता भवति । अनेन सिद्धो भवति यत्सामान्यभाषातः काव्यभाषा भिन्ना भवति । ऋग्वेदे (१०.१२५.५) वाचः स्तुतौ वाक् रचितः मन्त्रोऽस्ति । तस्मिन् मन्त्रे वाक्शक्तेः प्रभावोत्पादकरूपेण चित्रात्मकशैल्यां वर्णनमस्ति—तस्यार्थांशमेवात्रोद्धृतमस्ति—**यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्** । अन्यच्च—ऋग्वेदे एव (१.७१.४) **उत त्वः पश्यन्न ददर्श वाचमुत त्व श्रृण्वन्न श्रृणोत्येनाम् । उतो त्वस्यै तन्वं विसस्त्रं जायेव पत्ये उशती सुवासाः** । अस्य पदस्य निरुक्तौ (१.१९) एवं महाभाष्यस्य प्रथमभागे व्याख्या-कृताऽस्ति । पद्येऽस्मिन् प्रकारद्वयस्य जनस्य निरूपणमस्ति । एकोहि भाषणं श्रुत्वाऽपि तदर्थावगन्तुमसमर्थो भवति । अन्यच्छब्दानां बाह्यरूपापेक्षया भाषणस्यान्तरिकार्थस्य महत्त्वं प्रयच्छति । ऋग्वेदे काव्यशब्दस्य कविताशब्दस्य चाऽपि बहुधा प्रयोगः परिलक्ष्यते । तद्यथा—**आ देवानामभवः केतुरग्ने मन्द्रो विश्वानि काव्यानि विद्वान्** (ऋ० ३.१.१७) अर्थात् हे अग्ने त्वम् दिवौकसां ध्वजदण्डोऽसि, तथा त्वमेव सर्वेषां काव्यानां ज्ञातासि । अग्निर्विश्वानि काव्यानि काव्यानि विद्वान्' (ऋ० ३.१.१८) एवं मधुछन्दो भजतिरेभ इष्टौ (ऋ० वे० ६.११.३) अर्थात् गायकः आहुतिकाले मन्त्रगानं मधुरेण स्वरेण करोति । **उदुत्ये मधुमत्तमा गिरःस्तोमास ईरिते** (८.३.१५) ते जनाः स्तुति गीतं मधुरं वाचां उद्गिरन्ति । अनेन प्रमाणेन सिद्धो भवति यत् प्राचीन-

कालेऽपि मधुरशब्दमयः काव्यस्य सर्वाधिकमहत्त्वमासीत् । यद्यपि तस्मिन् काले काव्य-सिद्धान्तस्य निर्माणं नाभूत् । तथाप्यस्य काव्यसिद्धान्तस्य मूलबीजं तत्र निहितैवासीत्। शतपथब्राह्मणे (१२.५.१६) नारी सौन्दर्यमवलम्ब्य यादृशं वर्णनं मिलति तदेवाधारं मत्वाऽद्याप्युत्तरवत्त्यभिजातसंस्कृतकाव्येषु कवयो वर्णयन्ति । **'एवमेव हि योषां प्रशंसन्ति पृथुश्रोणीर्विमृष्टान्तरान् सा मध्ये संग्राह्येति ।'**

प्रसङ्गेऽस्मिन् नाटकम्, नाटकप्रदर्शनञ्चाऽपि विवेचनीयमेवास्ति । नाटक-प्रदर्शनस्य प्रायः चतुरङ्गानि भवन्ति । तानि च सामान्यतः कथोपकथनम्, गीतम्, सङ्गीतम्, नृत्यञ्चेति । एतानि चत्वारि अङ्गानि वैदिकसाहित्येऽवभासित्यान्येवम् अस्योदाहरणम्, वा० सं० २३.९.१२-११, एवं शतपथब्राह्मणे द्रष्टव्यम् । वैदिकसंस्कारेषु कतिपयान्येवं विधानि कर्माणि भवन्ति येषां निरूपणं नाटकमिव प्रतिभाति । तद्यथा—प्रथम अध्वर्युः—सोमविक्रेतोर्मध्ये वार्त्तालाप इव श्रूयते तथा महाव्रत नामके पक्षे ब्राह्मण-शूद्रयोर्मध्ये कृतक-कलहः अस्यैवनिदर्शनं समुपख्यापयन्ति । (द्रष्ट० धर्मशास्त्रास्येतिहासे पृ० १२४४, भाग० २) अनेनैव प्रकारेण पटहो वादयति, पुरोहितः मन्त्रोच्चारणं करोति, तेषां पत्न्यः वृन्दगानं कुर्वन्ति । विभिन्नवादित्रं वादयन्ति, परिचारिकाः, शीर्षे घटं नीत्वा नृत्यन्ति, गौणस्तुतौ होतारः गीतं गायन्ति (द्र० तै० सं० ७.५.१०) अश्वमेधयज्ञेऽश्वाहुतेः पश्चात् राजपुरोहितराज्ञोर्मध्ये तथा राज्ञः प्रिय पत्नी-ब्रह्मपुरोहितयोर्मध्येऽश्लीलशब्दानामादानप्रदानं बभूव । (धर्मशास्त्रे० भा० २, पृ० १२३४-३५), अश्वमेधयज्ञो एवौको ब्राह्मणः राजन्यश्च वर्षपर्यन्तं प्रतिदिने वीणावादने संलग्नमास्ताम् । उभावपि स्व-स्व निर्मित त्रीणि-त्रीणि गीतानि अंगायताम् । ब्रह्मणस्य गीते आसीत्... अयजतेव्य ददादिति ब्राह्मणो गायति... अयुध्यतेत्यमुं संग्रामजयदिति राजन्यो... तिस्रोऽन्यो गाथा गायति तिस्रोऽन्यः । (शतपथब्राह्मण १३१.५.६) तिस्रः स्वयंसभृता गाथा गायति... । (शत० १३-४.२.८) त्वमिदं दानं कृतम्, त्वमेतावद्-बलिदानं कृतम् । ब्राह्मण-गीते आसीत् । राजन्यगीते तु त्वमिदं युद्धं कृतम्' त्वमस्मिन् युद्धो विजयमलभथाः । शतपथब्राह्मणेवीणायाः उत्तरमन्दरा नामकस्य लयविस्तारस्योल्लेखः आयाति । तत्रैव विभिन्न वाद्य यन्त्राणामप्युल्लेखो भवति । तद्यथा—**'दुन्दुभिः'** (ऋ० वे० १.२८.४९) **'गर्गरः'** (ऋ०वे०७.६९.९), **वाणः** (ऋ. वे. १०.५०.१) **'वाशाः शततन्तुभवित'** (तै० स० ७.५.९.२) समायाति । तैत्तरीयब्राह्मणे (३.४.१३) वीणा, तूणव, दुन्दुभि, शङ्ख, प्रभृतीनां वाद्ययन्त्राणां तद्वादकानाञ्चोल्लेखो मिलति । ऋग्वेदे (१.९२.४) एव उषायाः तुलना लासिकया सह कृताऽस्ति । सा नर्त्तकी आभूषणं शरीरे धारयति, किञ्च तस्याः वक्षःस्थलम-संवृत्तमस्ति । **(अधिक पेशांसि वपते नृतुरित्वापोर्णुते वक्ष उस्रेव वर्जहम्** (ऋ०वे० १०-९४) तत्रैव (४-५) नृत्यस्यापि उल्लेख समायाति । वाज० संहितायाम् (३०. ६) प्रतीकात्मक पुरुषमेधे सूतम् नृत्याय शैलूषञ्च गीताय आदिष्टो भवति । तत्रास्य विपरीतमेव कथितमस्ति । यथा—(गीताय सूतं नृताय शैलूषम्) । ऐ० आ० (३.२. ५) अत्र केशयुक्त चर्मनिर्मिताऽवरणो रक्षिता वीणायाः उल्लेखोऽस्ति, यस्यां वीणायामनेकभागाः भवन्ति । कौषि० ब्राह्मणे (२४.९) त्रिवृधै शिल्पम्, नृत्यं, गीतं त्रादितमिति कथितमस्ति । अनेनोल्लेखेन स्पष्टोभवति यद्वैदिक साहित्यस्य प्रारम्भिक

कालेऽपि धार्मिकस्वरूपस्य नाटकप्रदर्शनमभवत् । श्रोडर विडिंश, आल्डनवर्ग, पिशेलप्रभृति पाश्चात्य विद्वांसः संस्कृतनाटकस्योद्गमविषये विभिन्न सिद्धान्तानां प्रतिपादनं कृतमस्ति । स्वनिर्मित 'संस्कृत ड्रामा' नामकग्रन्थे (१५-२७) पृष्ठे एतेषां सिद्धान्तानां ए०बी० कीथ महोदयेन आलोचना कृताऽस्ति । भरतस्य नाट्यशास्त्रेण ज्ञातोभवति यदभिजात्य संस्कृतनाटकस्य मूलाधारो वैदिक युगे एवोपलब्धो भवति भरतस्य नाट्यशास्त्रानुसारेण (चौ० सं० १.१७) गीतं ऋग्वेदात्, अभिनयः सामवेदात्, रसः यजुर्वेदात्, नृत्यमथर्ववेदाच्च विकसितोऽस्ति । बौद्धग्रन्थे (१.४.५) एकः श्लोकोऽस्ति। श्लोकेऽस्मिन् चक्रवाकखगानामुल्लेखो मिलति । चक्रवाकस्तु संस्कृत-नाटकेषु प्रेमाः प्रतीकोऽस्ति । सीमन्तोन्नयनप्रसङ्गे धर्मशास्त्रस्य श्लोकोऽयं द्रष्टव्यः—

**'चक्रवाकं संवजनं यन्नदीभ्यः उदाहृतम् ।**
**यद्वित्तौ देवगन्धर्वौ तेज संवनिभौ स्वः ।।'**

यद्यपि उपनिषत्सु दार्शनिकसत्यस्यैवान्वेषणमस्ति तथापि तेषु ग्रन्थेष्वपि उत्कृष्टकवित्वमयावतरणस्याऽप्यभावो नास्ति । तद्यथा—**धनुर्गृहीत्वौपनिषदं महास्मं शरं ह्युपासनिशितं सन्धयीत । आयभ्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्य विद्धि ।।** (मुण्डकोपनि० २.२.३) अनेनैव प्रकारेण—**'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।'** (कठोपनि० १.३.३) श्लोकेऽस्मिन् रूपकालङ्कारस्य निदर्शनं दर्शनीय-मस्ति । एवं 'इन्द्रियेभ्यः परा अर्था, अर्थेभ्यश्च परं भवः... तत्पुरुषः ।' इत्यादिश्लोके रसालङ्कारो वर्त्तते (शत० ब्रा० ७.१८.१०-३३-६) अत्र शुनःशेपगाथा शौनःशेपा-ख्यान नाम्ना ख्यातोऽस्ति । ऐतरेयब्राह्मणे (३.२५.१-१३-१) सौपर्णाख्यानस्याऽपि उल्लेखो मिलति ।

खीष्टाब्दस्य शतकद्वयात्पूर्वमेवोत्कृष्टकाव्यानां रचना बभूव । अस्य कथनस्य पर्याप्तप्रमाणं मिलति । तत्र कतिपयैः प्रमाणैः विद्वांसः कल्पयन्ति यत् वर्त्तमानं महाभारतं खीष्ट्रस्य ५०० ईसवीं पूर्वसमयात् प्रागेव निर्मितं न ततः परमिति । सीरीयादेशभाषायामुपलभ्यमानस्य शान्तिपर्वाध्यायस्य साक्ष्येण हर्टलमहोदयः प्रमाणयति यत् प्रचलितं महाभारतं ईसवीपूर्व पञ्चमशतक निवद्वात् महाभारतात् न भिद्यते । ड्योन् क्राइसोस्तोम (Dion Chyrosostom) महोदयस्य साक्ष्येण प्रतीयते यत् पञ्चाशत् खीष्टाब्दसमये लक्षपद्यात्मकं महाभारतं दक्षिणापथे लब्धप्रचारमासीत् । खीष्ट्रप्रथमशतके स्थितेन वज्रसूचीकृताश्वघोषेण हरिवंशस्थपद्यमेकमुद्धृतम् । एभिः सर्वैः समुदितैरेतत् सिद्ध्यति खीष्टशतकप्रारम्भं महाभारतमवश्यमेव वर्त्तत । अपि च-पाणिनिः महाभारतं जानाति स्मेति डल्हमैनं (Delhman) साक्ष्येण प्रतीयते । खीष्ट्रपूर्वपञ्चम-शतकप्रणीते आश्वलायनगृह्यसूत्रे महाभारतस्योल्लेखो दृश्यते । खीष्टपूर्वचतुःशतकसमये निर्मिते बौधायनधर्मसूत्रे महाभारतस्योल्लेखोऽस्ति । बौद्धायनगृह्यसूत्रे महाभारतीयं विष्णुसहस्त्रनामोद्ध्रियते स्म । महाभारतीयशान्तिपर्वणि विष्णोर्दशावतारगणनाकाले बुधस्य नाम आयाति । मेगास्थनीजप्रणीते भारतवर्णने याः कथास्ता महाभारत एव प्राप्याः । महाभारते ब्रह्मा सर्वदेवज्येष्ठतया प्रतिपादितः । पालिभाषासाहित्येन ज्ञायते यद् ब्रह्मणो ज्येष्ठत्वं खीष्टपूर्वपञ्चमशतकात् प्रागेव प्ररुढप्रचारमासीत् । अतः सर्व-

समीक्षया महाभारतं खीष्टपूर्वं पञ्चमशतकात् परतो न निर्मितं किन्तु कदाचित् पूर्वमेव निर्मितमिति प्रतीयते ।

यावत्पर्यन्तं रामायणरचनाकालस्य प्रश्नोऽस्ति तत्तु—रामायणे महाभारतवर्णितस्य कस्यापि पात्रस्य नाम नोपलभ्यते, महाभारते तु रामकथा वर्णिता लभ्यते । महाभारतस्य सप्तमपर्वणि लङ्काकाण्डगतं पद्यद्वयमवाप्यते तेन च रामायणं महाभारतात् प्राचीनम् । बौद्धसाहित्यस्य विशेषज्ञः सिल्वाँलेविमहोदयो विशेषरूपेण स्पष्टमभिप्रैति यत् सद्धर्मस्मृत्युपस्थान नाम्नो बौद्धधर्मग्रन्थविशेषस्य मूलेन रामायणेनावश्यं भवितव्यम् । सद्धर्मस्मृत्युपस्थाने वर्त्तमानं जम्बूद्वीपवर्णनं रामायणस्थितदिग्वर्णनमनुहरति । याकोविमहोदयोऽपि भाषाविज्ञानद्वारा बौद्धकालपूर्वभवत्वं रामायणस्याह । एभिः प्रमाणैः रामायणस्य बुद्धपूर्वकालिकता सिद्ध्यति । रामस्य सम्बन्धे बेलफूरनामा पाश्चात्यपण्डितः "Cyclopaedia of India" Vol. III—नामके निबन्धे लिखति—"Rama of the solar line of Hindu chronology is, however placed by brahmains 867-102 B.C. between the silver and bronzen ages. But he has been variously suposed to have lived 2022 B.C. Jones. 950 Hamilton, and 1100 Todd, and according to Bently he was one year old in 960 B.C. born in Sixth April 961 B.C, Ram preceded Krishna, but as their historians Valmiki and Vyass, who wrote events. They witnessed, they were contemporaries, it could not have been many years"

एभिः सर्वैरपि प्रमाणैरिदं सिद्धं यद्रामायणं खीष्टपूर्वपञ्चशतकात्पूर्वमेव कदाचित् प्रणीतं न तु ततोऽर्वाक् । पाणिनिकृत व्याकरणलक्षणहीन भाषारहितत्त्वमपि रामायणस्य सिद्धान्तमिमं पोषयति । उभयोरपि महाकाव्ययोरुत्तमकोटीनां कविताः समुपलब्धा भवन्ति । महाभारतादुद्धृतानि कतिपयान्यवतरणानि ध्वन्यालोकेऽवभासयन्ति । तद्यथा—१५३ पृष्ठे—**'या निशा सर्वभूतानाम्'** तथा तत्रैव **'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः'** (आ०प०अ० १. पृ० २५६) । काव्यप्रकाशस्य चतुर्थ उल्लासेऽपि महाभारतस्य गृद्धगोमायु संवादो मिलति । काव्यप्रकाशेऽपि गृद्धगोमायु संवादस्य कतिपयाश्लोकाः प्रबन्धनिष्ठध्वनेरुदाहरणस्वरूपेणोल्लिखिताः सन्ति । **'या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी'**। अस्य श्लोकस्य ध्वन्यालोके टीकायाम्—**'अनेन हि वाक्येन निशा यो न जागरणार्थः कश्चिद्विवक्षितः किं तर्हि तत्त्वज्ञानाय हि तत्त्वमतत्त्वपराङ्मुखत्वञ्च मुनेः पूतिपाद्यत इति तिरस्कृतवाच्यस्यास्य व्यञ्जकत्वम् ।'** रामायणादपि ध्वन्यालोके कतिपयान्युदाहरणान्युद्धृतानि सन्ति । महाभारतन्तु काव्यापेक्षया धर्मशास्त्रमेवाधिकमस्ति । यद्यपि ग्रन्थेऽस्मिन् कुत्राप्यहंभावनायाः प्रकटीकरणन्नास्ति । तथाऽपि बहुविधकाव्यानामुपजीव्योऽयं ग्रन्थः । इतिहासोत्तमादस्माज्जायते कविबुद्धयाः' म०भा० आदि० प० २.३८५ एवं इदं कविवरैः, स वै सखानमुपजीव्यते' आ०प० २.३८९) । रामायणः स्वोद्देश्य-स्वरूप-विषयाणाञ्च दृष्ट्या वस्तुतः काव्यग्रन्थोऽस्ति । अस्मिन् काव्ये वर्णनस्य प्राचुर्यं कल्पनायाः सौन्दर्यं सर्वत्र परिलक्षितो भवति । अत्र ध्वन्यालोकस्य प्रसङ्गोऽयं द्रष्टव्यः । रसादिरूप व्यङ्ग्य एव काव्ये जीवनाधायक इति प्राचीनेतिवृत्तोपन्यासेन द्रढयति—

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।**
**क्रौञ्चद्वन्द्व वियोगोत्थः शोकः श्लोकत्वमागतः ॥**

(ध्व० प्र० उ० ५)

तदादिकवेः श्लोकं निर्दिशति—

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समा ।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितः ॥**

(रा० बा० द्वि० स० १५)

अस्य श्लोकस्य व्याख्याप्रसङ्गे ध्वन्यालोकस्यायं श्लोकोऽपि द्रष्टव्यस्तथा तस्य व्याख्याऽपि द्रष्टव्यम्—

**तस्मात्तु मिथुनादेकं पुमासं पापनिश्चयः ।**
**जघान वैरिनिलयो निषादस्तस्य पश्यतः ॥**

'त इति तदीय रामायणे निषादकृतक्रौञ्चघातस्यैव सिद्धेः, तत्समशिरस्कतया मतिमारूढे श्रीरामचरितात्मक द्वितीयार्थेऽपि रावणवधस्यैव प्रसिद्धेश्च । अतएव कश्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धम्' इति भोजराजः प्रायुक्तः । एतेन 'अनुप्रेषितश्च स तथा निषादनिहितसहचरीकं क्रौञ्चयुवानं करुण क्रेङ्कारया गिरा क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद' इति राजशेखरोक्तिरप्यपहस्तितैव ।'

अस्मिन्विषये इदमपि प्रसिद्धमस्ति या युधिष्ठिरस्याग्रहेण व्यासेन मुनिनास्य रामायणस्य व्याख्या लिखिता—

"A curious Mss. is that of Ramayana Tatparya- Dipika which said to have been an exposition the meaning of the Ramayana by Vyass at the request of Yudhishthir."

Studies in Ramayana, Riddles of Ramayana by K.S. Ram, Shastri, Book II. p.1)

द्रोणपर्वस्य १४३ । ६६-६७ श्लोके वाल्मीकेः युद्धकाण्डस्य कतिपयानां श्लोकानामुल्लेखं कृतम् । तद्यथा—

**अपि चायं पुरागीतं श्लोको वाल्मीकिना भुवि ।**
**न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम ।**
**पीडाकरममित्राणां यत्स्यात् कर्त्तव्यमेव तत् ॥**

(महा० उद्योगोप० १४३, ६७-६८)

भट्टिकाव्येऽपि अस्य प्रभावः परिलक्ष्यते । रामायणेन 'आद्यं काव्यम्' इव महाभारतेनापि हि ऐतिहासिक पौराणिकाऽऽख्यानिकानामभिर्व्यपदिश्यमानस्य काव्यस्याद्यं स्वरूपं प्रतिनिधीयते किल । अस्य तावत् भूयिष्ठमनुष्टुमयम् । यत्र तत्र च उपजातीनां

वंशस्थस्य चाद्यत्वे अनुपयुज्यमानानि पुराणतरस्वरूपव्यञ्जकानि लक्ष्याणि लक्ष्यन्ते । अस्य च धर्मस्य निकृष्टं सारभूतं स्वरूपं यथा विवक्षितं तद् हि तावत्—

**यस्मिन् यथा वर्त्तते यो मनुष्यस्तस्मिन् तथा वर्त्तितव्यं स धर्मः ।**
**मायाचारो मायया बाधितव्यः, साध्वाचारः साधुना प्रत्युपेयः ।।**

इत्येतस्मिन् पद्ये परिभाषितं प्रतिभाति । अथ भाषा तावदुभयोः रामायण-महाभारतमहाकाव्ययोः अतीव प्रसन्ना एवं प्रायः सर्वत्र प्राञ्जलतरा प्रतिभाति । 'अधिकृत्य कृते ग्रन्थे' (४.३.८७) अस्मात् पाणिनिसूत्रात् ज्ञातो भवति यत् पाणिनेः प्रागेव लौकिककाव्यग्रन्थानां रचना बभूव । रुद्रटस्य टीकाकारः नमिसाधोः कथनानुसारेण पाणिनि 'पातालविजयः' नामकं महाकाव्यमेकं लिलेख । राजशेखरेणापि सूक्तिमुक्तावल्याः द्विचत्वारिंशत्पृष्ठे श्लोकोऽयमुद्धृतः—

**स्वास्तिपाणिनये तस्मै यस्य रुद्रप्रसादतः ।**
**आदौ व्याकरणं काव्यमनु जाम्बवतीजयः ।।**

तत्रैव त्रयश्चत्वारिंशत्पृष्ठे—

**यथार्थता कथं नाम्नि मा भूद्वररूचेरिहः ।**
**व्यधत्त कण्ठाभरणं यः सशरोहणप्रियः ।।**

राजशेखरस्य प्रमाणानुसारेण पूर्वोक्त जाम्बवतीविजयनामकस्य काव्यस्य रचनाकारो वैयाकरण पाणिनि एवासीत् । यद्यपि परवर्त्तिनः आचार्याः एव काव्यशास्त्रस्यार्थेऽलङ्कारशास्त्रशब्दस्य प्रयोगमकार्षुः । प्रतापरुद्रीयस्य टीकायामलङ्कारशास्त्रेति नाम्नः समर्थनाय छत्रिन्यायस्याश्रयणं कृतमास्ते । तेन लिखितम्—**'यद्यपि रसालङ्काराद्यनेकविषयमिदं शास्त्रं तथापि छत्रिन्यायेन अलङ्कारशास्त्रमिदमुच्यते'** । अलङ्कारशास्त्रस्य विषयेऽन्येषामपि संमालोचकानामेतादृशमेव प्रायोमतमास्ते । यतो हि प्राचीनसाहित्येऽपि नैवंविध काऽपि सामग्री मिलति यद्बलेनालङ्कारशास्त्रस्योत्पत्तिविषये किमपि ज्ञातुं समर्थो भवति । वेदाङ्गनाम्नाऽभिहितेषु परम्परितवैदिकसंहितादिग्रन्थेषु नैवंविध कोऽप्याधारोऽस्ति, येनास्य शास्त्रस्योत्पत्तिं प्रमाणितो भवति । उदाहरणायोपमाशब्दस्य प्राचीनतमप्रयोगः ऋग्वेदे (५.३४.९.१,३१,१५) मिलति, यस्यार्थः सायणेनोपमानं कृतम् । पाणिन्यपि (२.३.७२) तथैव । अथवा दृष्टान्तरूपेणैवास्यार्थः प्रस्तौति । किञ्च औपम्यस्य सामान्यार्थे प्रयुक्ते शब्देऽस्मिन् न काऽप्यसाधरणता वर्त्तते, यस्य व्याख्यावसरे किञ्चिदपि विशिष्टकाल्पनिकार्थस्य महत्त्वं वक्तुं शक्यते । यास्कस्य साक्ष्येन पाणिनेः प्रमाणेन च परिलक्षितो भवति यदस्य स्पष्टप्रभावः वैदिकभाषायां तथाऽस्यैव स्वराघाते परिलक्षिते भवति, उपमा औपम्यस्य च सङ्कल्पना । किञ्च व्याकरणविषयकस्य भाषामीमांसाविषयकस्य चाभिरुचेरतिरिक्तः काव्यशास्त्रस्य कस्यापि सिद्धान्तस्य संकेतो न मिलति । वैदिकसाहित्ये अलङ्काराणां प्रयोगः अनायासः स्वाभाविकश्च प्रतीयते, तथा काव्यशास्त्रीयालङ्काराणां प्रयोगः सायासः सुनिश्चितः नियमबद्धश्च प्रतीयते । अनयोर्मध्ये दीर्घकालिकसमयान्तरालं भवितुमर्हति ।

अलङ्काराणां शास्त्रीयनिरूपणे स्थूलक्रियाकलापानां निश्चितं प्रमाणम्, निघण्टौ निरुक्ते च मिलति । निरुक्ते पारिभाषिकार्थे कुत्राऽपि प्रयोगाः नाप्नोति । किञ्च यास्केन —'अलङ्करिष्णु' शब्दस्य सामान्यार्थे प्रयोगः कृतोऽस्ति । भाषायाः सामान्यरूपस्य वैलक्ष्यणानुसन्धानात् लोकानां चिन्तनमलङ्काराणां विश्लेषणं प्रतिसमाकृष्टोऽभवत् पाणिनिना (३.२.१३६) अस्यालङ्करिष्णुशब्दस्य व्याख्या कृता । शब्दोऽयं स्पष्टतः शतपथब्राह्मणे (११.८.४.७;३.५.१.३६) तथा छान्दोग्योपनिषदि (८.८.१) अस्मिन्नेवार्थे प्रयुक्तोऽस्ति । निघण्टौ (३.१३) वैदिकोपमायाः द्वादशभेदानामेव नामानुक्रमणिका सन्निविष्टाऽस्ति । यस्योदाहरणानि निरुक्ते (१,४,३.१३-१८, एवं ९.६) द्रष्टव्यानि सन्ति एतेषूदाहरणेषु —'इव' 'यथा' 'न' 'चित्' 'नु' तथा 'आ' निपातात् बहुद्दिष्टभेदानां चर्चा यास्केन 'उपमानार्थे निपातः' सूत्रस्यास्य विवेचनं कुर्वन् कृताऽस्ति (१.४) तथेमानंशत्तः कर्मोपमान्तर्गते एव सन्निवेशिता (३.१५) । तत्पश्चात् यास्केन भूतोपमया सहरूपोपमायाः अप्युल्लेखः कृतः । भूतोपमायां 'उपमित' आचरणात् व्यवहाराद्वा उपमानतुल्यमेव भवति तथा रूपोपमायां 'उपमितस्य' रूपमुपमानतुल्यो भवति । उपमायाश्चतुर्थप्रकारे 'यथा' निपातस्य प्रयोगः वाचकशब्दस्य रूपे एव भवति। तदनन्तरे सिद्धोपमायाः वर्णनमस्ति । अस्मिन् वर्णने तुलनायाः मानः सम्यक् सिद्ध एवास्ति । मानोऽयं 'वत्' प्रत्ययस्य प्रयोगेन विशिष्टगुणे क्रियायाञ्च सर्वातिशायी एवास्ति । उपमायाश्चान्तिमो भेदः 'लुप्तोपमा' 'अर्थोपमा वास्ति । अस्योदाहरणं निरुक्ते (३.१८) मिलति, यत्र प्रशंसावाचकाः सिंह-व्याघ्रादि शब्दास्तथा निन्दावाचकाः श्वन्, काकादि शब्दानां लोकप्रियप्रयोगस्योदाहरणानि सन्ति । यास्कस्तु निपातानां निर्देशार्थमेव उपमान' शब्दस्य प्रयोगः कृतवान् । (७.३१) । तुलनाया महत्त्वं तु सामान्यतः १,१९,२,६,७,१३ पृष्ठे निर्दिष्टोऽस्ति । दुर्गाचार्यस्य व्याख्यानुसारेण **'अर्थात् उपमा यत् एतत् तत्सदृशं इति गार्ग्यः, तद् आसां कर्म ज्यायसा वा गुणेन प्रख्याततमेनं वा कनीयांसं वा प्रख्यातं वोपमिमीतेऽथापि कनीयसा ज्यायांसम् ॥'** उपमा तत्रैव भवति यत्र कमप्यसमान वस्तुसादृश्येन तादृशा विशिष्टतासम्पन्न कमप्यन्ये वस्तुसदृशो भवति—**'एवमेतत् तत्स्वरूपेण गुणेन गुणसामान्यादुपनीयते इत्येवं गार्ग्याचार्यो मन्यते ।'**

आपाणिनि उपमायाः कल्पनेयम् अव्यक्तरूपेण मान्यताप्राप्ताऽसीत् । एतत् सम्बन्धिनां पारिभाषिकशब्दानां—'उपमानः' 'उपमितः' तथा सामान्यशब्दानां यथा 'उपमा' औपम्यः 'उपमार्थः' 'सदृशः' प्रभृतिशब्दानां सर्वत्र प्रयोगः परिदृश्यते । उपमायाः सामान्यः सामान्यनियमानुसारेणोपमेयस्यापेक्षया उपमानस्य गुणाधिक्यं प्रासिद्ध्यञ्च भवितव्यम् । किञ्चास्य मते (३-१४-१५) अस्य प्रतिलोमोऽपि मान्य एवासीत् । अस्योदाहरणानि ऋग्वेदे (१०-४०-२, १०-४, ६) द्रष्टव्यानि । परिभाषेयमतिविस्तृतातिव्याप्ता च भवन् मम्मटस्येवंविध अभ्युक्तिं स्मारयति । पाणिनेरष्टाध्याय्यां प्रायशः पञ्चाशत् सूत्रेषु यत्र तत्र विकीर्णाः प्रत्ययानां क्षेत्रे यथाप्रसङ्गं वैयाकरणदृष्ट्या विचारः उपलब्धो भवति । तस्मिन् क्षेत्रेऽनुबन्ध-कारक-स्त्रीप्रत्यय-कृत-तद्धितसमासान्तप्रत्यययौगिकादीनां शब्दानां निर्माणो विचारः उपलब्धो भवति । अस्मिन् विचारे स्वराघातोऽपि सम्मिलितोऽस्ति । उपमायाः भाषायामुपरि प्रभावोऽपि विचारित-

मस्ति । एतादृशप्रभावः 'अतिदेश' शब्दस्य विचारधारायामपि परिलक्षितो भवति । यस्य प्रयोगः पाणिनि स्वयं कुत्राऽपि कृतवान्नास्ति, किञ्चास्य भाष्यकाराः शब्दस्यास्य व्याख्यामकुर्वन्। अस्य व्याख्यासादृश्येन समरूपतया वा विस्तृतप्रयोगरूपे भवितुमर्हति। कात्यायनोऽपि कतिपयेषु निजवार्त्तिकेषु अनुरूपतायाः प्रभावं परिदर्शयन् पाणिनेः अनुसरणं कृतम् । शान्तनवेनाऽपि स्वकीय 'फिट्सूत्रे' स्वरसंधानस्य सम्बन्धेऽस्यो परिचर्चा कृतास्ति (यथा २.१६, ४-१८) । पतञ्जलिस्तु महाभाष्ये पाणिना प्रयुक्तोपमान शब्दस्य परिभाषा उदाहरणद्वयेन सह दत्तवान् । उपमानः मानशब्दस्य समीपवर्ती अस्ति तेन शब्दोऽयं कमपि वस्तुं निर्धारयति । यथा मया कथ्यते गवयः गो सदृशोऽस्ति (**मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयतेऽनिर्ज्ञातमर्थं ज्ञास्यामीति तत्समीपे यन्नाट्यतायमिमीते तदुपमानं गौरिव गवय इति,** सं० कीलहार्न १. पृ० ३९७) । वस्तुतः कोऽपि काव्यशास्त्री पतञ्जलिना प्रयुक्तमुदाहरणं काव्यगतोपमायाः उदाहरणं स्वीकर्त्तुं समर्थो न भवति, (**गो सदृशो गवय इति नोपमा**, चि० मीमांसा, पृ० ६) यतः अस्यां भावाभिव्यक्त्यां काव्ये प्रयुक्तालङ्कारायापेक्षितविशिष्टसौन्दर्यस्याभावोऽस्ति; तथाऽपि व्याकरणदृष्ट्या उपमायाः एवं विश्लेषणं प्राचीनमस्ति तथा काव्यशास्त्रस्य प्रविधिकल्पनायाः समीपतरमस्ति । उपमायाः सङ्कल्पना भतृहरेः वाक्यपदीये पूर्णरूपेण सिद्धः प्रतीतो भवति (यथा—१.६३) । अनेन प्रतीतो भवति यदलङ्कारशास्त्रस्योद्भवः भाषायाः काव्यात्मकसौन्दर्यस्य विश्लेषणात्मकव्याख्यायाः परिणामस्वरूपे एवाऽभवत् । कार्यमिदं काव्यरचनायाः नियम निर्धारणाय क्रियात्मकोद्देश्येन सम्पादितोऽभवत् । एतदतिरिक्तः वैयाकरणैः कृतोदात्तविवेचनादपि शास्त्रमिदं प्रेरणाञ्चालभत् । अस्य शास्त्रस्यान्तःसाक्ष्यात् तथा काव्यशास्त्रस्यैव कतिपयानां निर्भ्रान्तप्राचीनविदुषां वचनात् स्पष्टरूपेण प्रमाणितो भवति यदस्य शास्त्रस्य सैद्धान्तिकपृष्ठभूमिः भाषाशास्त्रीयदार्शनिकपरिकल्पनायामुपरि आधारिताऽसीत् । अतएव भारतस्य प्राचीनतमेषु पुष्टतमेषु च विज्ञानेषु विज्ञानमेकं व्याकरणशास्त्रमप्यस्ति । इदमेव व्याकरणशास्त्रमस्यालङ्कारशास्त्रस्य जनकः आसीत् । काव्यशास्त्रस्य लोकग्राह्यस्वरूपनिर्माणेऽस्यैव व्याकरणशास्त्रस्य योगदानमस्ति । आनन्दवर्धनोऽपि स्वकीयं सिद्धान्तं वैयाकरणानां प्रामाण्योपरि आधारितमेवाकथयत् । तेषामग्रगण्यविदुषां सः प्रशशंसः—

**प्रथमे हि विद्वांसो वैयाकरणाः ।**
**व्याकरणमूलत्वात् सर्वविद्यानाम् ॥** (पृ० ४७)

काव्यसिद्धान्तस्य प्राचीनतमो भामहाचार्योऽप्यस्य शास्त्रस्य व्याकरणजन्यशुद्धतायाः जयघोषमकरोत् । वामनोऽपि क्रियाविधेरनुकरणं कृतवान् । उपमालङ्कारस्येदमुपविभाजनं व्याकरणमूलकमेवास्ति । अनेन प्रकारेण 'श्रौती' 'उपमायाः प्रमाणस्याधारः पाणिनेः सूत्रद्वयमस्ति (५.१ ११५-११६) अस्यामुपमायां तुलनायाः भावः 'यथा' 'इव' 'वा' निपातेनाथवा इवार्थे प्रयुक्तः 'वत्' प्रत्ययेन व्यक्तो भवति । पूर्वोक्तौ सूत्राभ्यामिदं निर्धारणं भवति यत् वत्प्रत्ययस्य प्रयोगः षष्ठ्यां सप्तम्यां वा विभक्तौ प्रयुक्तस्य तुलनायारूपमानेन सह विभक्त्यन्तप्रत्ययस्य तथा 'इव' स्थाने तृतीयान्तेन संज्ञावाचकशब्देन सह करणीयं भवति । अस्यामवस्थायां तस्यार्थस्तेन तुल्यं भवति

तथाऽयं सादृश्यः गुणवाचकोऽभूत्वा क्रियावाचक एवं भवति । अनेनैव प्रकारेण 'मथुरावत्' = मथुरायामिव, पाटलिपुत्रे प्राकारः, चैत्रवत् = चैत्रस्य इव', मैत्रस्य गावः, तथा ब्राह्मणवत्' ब्राह्मणेन तुल्यं तथा अधीते प्रभृति रूपाणि मिलन्ति । किञ्च चैत्रवत् कृशो नास्तिं अनेनैव प्रकारेण पाणिनेः सूत्रोपरि (२.४,७२) वार्त्तिकानुसारेण—'इवेन समासो विभक्त्यलोपः' यथा कुम्भाविव स्तनौः समासगा श्रौती उपमायाः उदाहरणमिदमस्ति । अनेनैव प्रकारेण पाणिनः सूत्रानुसारेण (३.१.१०) क्यच् प्रत्ययस्य प्रयोगः कर्मभूतोपमानस्य । सुबन्तेन सहाऽपि आचारद्योतनाय भवति । अनेन 'पौरञ्जनं सुतीयसि' इव वाक्यांशे उपमायारुदाहरणं मिलति । पाणिनेः नियमानुसारेण 'क्यण्' प्रत्ययस्य प्रयोगः कर्त्ताकारके प्रयुक्तोपमानवाचकेन कर्तृसुबन्तेन सहाचारद्योतनाय भवति । एवं नियमोऽयं 'तव सदारमणीयते: श्री' इव वाक्यांशे अभिव्यक्तोपमायाः आधारोऽस्ति । किं बहुना एभिरुदाहरणैः सिद्धो भवति यत् उपर्युक्त वैयाकरणानां विचारः काव्यशास्त्रीयभाषायाश्चिन्तनस्य च महत्त्वपूर्णाधारोऽस्ति ।

सामान्यतः भाषासम्बन्धेन काव्यसिद्धान्तस्य कतिपयाः मौलिक सम्प्रत्ययाः वैयाकरणानां विचारोपरि निर्धारिता एवास्ति । उदाहरणार्थः येन संकेतेन शब्दस्याभिधेयार्थस्य बोधो भवति तस्य विषयनिर्णयः वैयाकरणानां मतानुसारेणैवास्ति । यतो हि वैयाकरणाः जाति-द्रव्य-क्रिया-गुणपरकाः शब्दार्थं मन्यन्ते । मम्मटस्तु स्पष्टरूपेण महाभाष्यस्योद्धरणमेवालिखत्—**'चतुष्टयी शब्दानां प्रवृत्तिः ।'** (श० व्या० पृ०२) वस्तुतस्तु शब्दस्यार्थस्य च द्वे शक्ती स्तः । आनन्दवर्द्धनस्याभिनवरसशास्त्रोऽपि शब्दस्य तृतीयाशक्तिः 'व्यञ्जना'याः स्थापना-क्रमेऽस्याः व्यञ्जनाशक्त्याः' 'सम्पुष्टौ प्राक्-पाणिनीय वैयाकरण-स्फोटायनस्य स्फोट-सिद्धान्तस्य पूर्णरूपेण विकासः समजनि। एतेषु कतिपयसम्प्रत्ययानां विवेचनं तस्मिन् विविध दार्शनिकवादेषूपलब्धमस्ति, यस्मिन् श्रुतीनां तद्भाष्याणाञ्च प्रसङ्गे शब्दस्य निरूपणमस्ति । काव्यशास्त्रसम्बन्धिनः स्फोट-सिद्धान्तस्य कतिपयेषु दर्शनशास्त्रेष्वत्यन्तं महत्त्वमस्ति । व्यञ्जनावृत्तौ निहिताऽभिव्यक्तिः कमपि अभिनवगुणमप्रदर्शयन्नेव तस्मिन् विद्यमानगुणमेव व्यक्तङ्करोति । भारतीयचिन्तन-धारायां व्यञ्जनायाः एवंविध कल्पना काप्यभिनवा वस्तु नास्ति । सांख्यस्य (१.११७-११८) सत्कार्यवादे एवंविधा विचारशृङ्खला मिलत्येव । तदनुसारेण कार्यस्योत्पत्तिर्न भवति, तत्तु पूर्वादिवाव्यक्तरूपेण कारणे एव निहितोऽस्ति । वेदान्तिनो मोक्षस्य सामान्यकल्पनायामपि एतादृशं सादृश्यमस्ति । अस्मिन् मोक्षः ईदृश्यैकावस्थाऽस्ति यस्यारुत्पत्तिर्न भवति, किन्तु मायावरणापसरणादेव तस्यानुभूतिर्भवति । अस्मिन्संदर्भे अप्पयदीक्षितस्य कथनमपि द्रष्टव्यम्—भगवता बादरायणेन **'नानुमानिकमपि एकेषामिति चेन्न, शरीररूपक विन्यस्त गृहीतेर्दर्शया च' इति शरीरिकसूत्रे रूपमङ्गीकृतम्** (चि०मी० पृ० ५४, का०मा०स० १९०७)। काव्यशास्त्रीय अभिधा-लक्षणाख्या शब्दशक्तिद्वयस्य सिद्धान्तस्याध्ययनं न केवल-वैयाकरणाः, अपितु दार्शनिकाः, विशेषतः नैयायिकाः, मीमांसकाश्चाध्ययनं कृतवन्तः । उदाहरणतया नैयायिकानां मतमस्ति यच्छब्दस्याभिधाशक्त्या न केवलः व्यक्तेरपि तु जातेः गुणस्य चापि बोधो भवति (न्यायसूत्र २.२.६८) । मीमांसकानां कथनमस्ति यदियं मुख्य-रूपेण जातिमेव् निर्दिशति तथा जात्याऽवियुज्य सम्बन्धेन व्यक्तेरपि बोधः आक्षेपेण

भवति । (पू०मी० १.३.३३) न्यायसूत्रे तेषां शब्दसम्बन्धानामनुक्रमणिका प्रदत्ताऽस्ति, येन माध्यमेन शब्दस्यामुख्याऽर्थे प्रयोगः कर्त्तुं शक्यते । अमुख्यार्थस्यानेकानि नामानि सन्ति । यथा—गौणः, भाक्तः, लाक्षणिकः, औपचारिकाद्यर्थो भवति वेदान्तसूत्र २, ३,१६, ३.१,१७, न्यायसूत्र २.२.६४ एवम् १,२,११,१४,१५, सांख्यसूत्र ५. ६७ इत्यादि द्रष्टव्यम्) अस्य मुख्येतरार्थस्य विवेचनं प्रायः सर्वेषु दर्शनेषु मिलति । वस्तुतः अस्मिन् विषये काव्यशास्त्रस्य सिद्धान्तः न्याय-मीमांसा-सिद्धान्तात् पर्याप्तरूपेण संमिश्रितोऽभवत् भामहस्य काव्यशास्त्रविषयकः प्राचीनरचनायां काव्यस्य तर्कान्वयिता तथा' शब्दानामर्थाभिव्यक्तिविषयकालोचनाऽप्यस्ति ।

रसस्य काव्यसिद्धान्तोपरि सांख्यस्य वेदान्तस्य च पर्याप्तप्रभावः परिलक्षते । उपमाजन्य कल्पनायाः सादृशस्य तुलनायाश्च वा सामान्यधारणायाः बोधो भवति । अनेकेषु दर्शनशास्त्रेषु प्रमाप्रमेयप्रमाणविषयकेषु चर्चास्वस्यातीव महत्त्वं वर्त्तते । यथा मैत्रेयोपनिषदि प्रमाणत्रयस्य (५.१०.१४) उदाहरणे दृष्टः अथवा प्रत्यक्षः, लिङ्गः अथवा अनुमानम्, उपमा अथवा उपमानम्, एतेषामुदाहरणत्रयाणां चर्चा मिलति असंदिग्धरूपेण कणादकपिलावुपमानं वोपमां वा नैवे स्वतंत्रः नाऽपि पुष्टप्रदप्रमाणमेव मन्येते । नैयायिकस्तु तां प्रमाणमेव मन्यते, तदनुसारेणोपमया कस्मिंश्चिदपि वस्तुनि पूर्वस्मादेव कालात् कस्याप्यज्ञातवस्तुनः ज्ञातवस्तु-सादृश्याधारेणैव ज्ञातो भवति । वात्स्यायनस्तु (१.१-३) टीकां कुर्वन् उपमायाः यत्परिभाषा कृतवानस्ति तत्तु—**'सामीप्यमानं उपमानम्'** महाभाष्यस्यांशात् (पृ० ५) मिलति । अतएव नैयायिकानां मतानुसारेण अभिधानाभिधेयसंबन्धस्य स्थापनायामेवोपमा वा उपमानस्य सार्थकता वर्त्तते तथा अनेनैव प्रकारेण तदेवाभिव्यक्तेः आधारोऽस्ति । अतिदेश वाक्योऽपि सादृश्यमूलकाभिज्ञानस्य साधनं प्रतीतो भवति तद्द्वादि लोकप्रसिद्धपदार्थस्य गवयादि प्रथमदृष्ट्या केनापि नवीनवस्तुना सह समानतायाः आधारोपरि गवयादेः प्रत्यभिज्ञानार्थं सहायकरूपेणैव द्रष्टव्यमस्ति । पञ्चावयववाक्येऽपि उपमानस्य सह योगस्यावश्यकता वर्त्तते । अत्रोपनय नाम्नाऽवयवरूपे प्रकटो भवति (१.१.३२) । काव्यशास्त्रे उपमानस्यास्य चिन्तनस्यावशेषः भोजकृत सरस्वतीकण्ठाभरणे (३.५० ) मिलति । भोजस्तु —उपमालङ्कारम् उपमानालङ्कारात् भिन्नालङ्कारो मन्यते यद्यपि अप्पयदीक्षितस्यातिरिक्तः न कोऽप्यस्य समर्थनं कृत्वा 'उपमानम्' काव्यस्यैकः पृथगलङ्कारः स्वीकरोति । नागेशभट्टोऽपि तमुपमायामेव समाविष्टो मन्यते । (कु०न०नि०सा०प्रे० पृ० १७४) । मीमांसकास्तु उपमानेन सह अतिदेशस्योपरि विचारस्यापि विवेचनं कृतम् । किञ्च तेषां कथनमस्ति यद् इत्थं ज्ञातवस्तु परिलक्षयति यत्प्रथमवारे दृग्गोचरीभूतवस्तुनः सदृशो भवति । अथवा शबरस्वामिनोद्धृतस्योपवर्षस्य शब्देषु उपमानन्तु तत् सादृश्यमस्ति यदसन्निकृष्टवस्तुमपि स्मृतिपथे आनयति । यथा गवयदर्शनसन्मुखेऽविद्यमाने सत्यपि गवय सदृश गोः स्मरणं कारयति । **(उपमानमपि सादृश्यं असन्निकृष्टेऽर्थे बुद्धिं उत्पादयति, यथा गवय दर्शनं गोस्मरणम्** । (१.१.१५) ।

एवंविध चिन्तनस्य काव्यशास्त्रेणाप्रत्यक्षसम्बन्धमस्ति । काव्यशास्त्रीय मौलिक सिद्धान्तानां विकासे एवंविध चिन्तनस्य कियतांशेन सहयोगो वर्तते इति वक्तुं न

शक्यते । अस्य चिन्तनस्य आधारोपरि वयमिदं निर्णेतुं न शक्यते यत् काव्यशास्त्रमिदं कियत्प्राचीनमस्ति । विचित्रेयं वार्त्ताऽस्ति यत्प्राचीनग्रन्थेषु काव्यशास्त्रस्य शास्त्रस्वरूपेण कुत्राऽपि उल्लेखो नास्ति । यद्यपि नवम शतकस्यान्ते राजशखरेण वेदस्य सप्तमाङ्गरूपेण मान्यताजन्य परम्परायाः उल्लेखः कृतः । छान्दोग्योपनिषदि (४, १-२-४) विविधविद्यापरिगणनाविषयके सुप्रसिद्धप्रकरणे काव्यशास्त्रस्योल्लेखो नास्ति । आपस्तम्बे (२.४.११) तु सामान्यतः षडङ्गानामेवोल्लेखोऽस्ति । किञ्च याज्ञवल्क्यस्तु सर्वतोभावेन चतुर्दशानां शास्त्राणामेवोल्लेखः कृतवान् तथा विष्णुपुराणे एतदतिरिक्तश्चतसृणामन्यासामपि विद्यानामुल्लेखोऽस्ति । यद्यप्येतेषु परिगणितेषु नामसु काव्यशास्त्रस्योल्लेखो नास्ति । ललितविस्तरेऽप्येवंविधैकानुक्रमणिकाऽस्तिं, यस्यां सूच्यां 'काव्यकरणग्रन्थस्य' नाट्यस्य च नाम्ना उल्लेखोऽस्ति, येन नाम्ना क्रमशः काव्यशास्त्रनाट्यशास्त्राभिप्रेतोऽस्ति । किञ्चालङ्कारनाम सर्वप्रथमं शुक्रनीतौ एव मिलति । अर्थशास्त्रकामशास्त्रशिल्पशास्त्रादि द्वात्रिंशत् शास्त्रेषु तस्याऽपि परिगणना कृताऽस्ति । राइस डेविड्समहोदयस्य कथनानुसारेण 'अंगुत्तर' (१.७२. ३-१०७) तथा 'संयुत्तनिकायः' (१.३८. २-२६७) प्रभृति प्राचीनपालिग्रन्थेषु एवंविधैकस्य शास्त्रस्योल्लेखोऽस्ति । उल्लेखोऽयमैतिहासिकदृष्ट्याऽतीव महत्त्वपूर्णोऽस्ति । यतोऽस्मिन्नुलेखेऽस्यशास्त्रस्यातीव निन्दाकृताऽस्ति, किञ्चायमुल्लेखः अलङ्कारशास्त्रस्यैवाऽस्ति, किञ्च विषयोऽयं न तु तस्य प्रकरणस्याभिधार्थात् प्रकटो भवति नैव व्यङ्ग्यार्थादेव ।

अत एवानुमीयते यदेतावत्कालपर्यन्तं शास्त्रस्वरूपेण काव्यशास्त्रस्य उद्भवो नाभूत् । कदाचित् खीष्टाब्दस्य प्रथमशतकेऽस्य विकासारम्भोऽभवत् । (पतञ्जलि १-२८३,३४०,४२६,४४४; २-३४,१०२,११९,१०७,३१३,३१५; ३-१४३, ३३८ कीलहार्न) गुप्त सम्राजाम् संरक्षणे खीष्ट्रस्य चतुर्थ-पञ्चमशतके संस्कृतसाहित्यस्य परम विकासोऽभवत् । तेनैव सह संस्कृतकाव्यशास्त्रमपि प्रगतिपथि समारूढोऽभवत् । अस्यामवस्थायां संस्कृत-काव्यसरण्याः यस्य विकासस्योल्लेखः लासेनमहोदयेन कृतस्तस्य सम्पुष्टि बूहलर-महोदयस्य पुरालेखीय (epigraphical) अनुसंधानादेव भवति (Die Indischen Inschriften अनुवादस्तु—इन्डियन ऐंटी क्वेरी, १३-१९१३, पृ०२९ द्रष्टव्यम्) । तस्य काव्यभवनस्य वेशमभूरिदमेव पुरालेखीय साहित्यशास्त्रमस्ति, यस्य विशदनिर्माणं खिष्टस्याष्टमनवमशतके बभूव । अस्मिन्नेव काले काव्यशास्त्रीय सिद्धान्तानां सम्यक्प्रतिपादनमप्यभूत् । पुरातनीय शिलालेखानां बूहलरकृत परीक्षणेनेदं प्रमाणितोऽभवत् यत् खीष्ट्रस्य प्रथमपञ्चशतकाभ्यन्तरे कतिपयेषूत्कृष्टकाव्यरीतिषु सुष्ठु गद्य-पद्यमयेषु रचनाः उपलब्धाः आसन् । सहैवास्यानुमानस्याऽपि सम्पुष्टिर्भवति यदस्मिन्नधिकतराः प्रशस्तिलेखकाः काव्यशास्त्रस्य नियमैः परिचिताः आसन् । बूहलर महोदयेनेदं प्रमाणायितुं प्रयत्नः कृतोऽस्ति, यदलङ्कारशास्त्रीय नियमानुसारेण वस्तुतः भामहदण्डिनोः प्राचीनतमोपलब्धग्रन्थेषु एतेषां लेखकानां प्रौढत्वं शास्त्रीय नियमानामनुसरणमेवासीत् । अनेन सिद्धो भवति यत् तस्मिन् अलङ्कारशास्त्रेऽथवा काव्यकलायाः सिद्धान्ताः उपस्थिताः एवाऽसन् । खीष्टस्य द्वितीयशतकस्य गिरनार शिलालेखस्यैकांशेन निष्कर्षोऽयं समायाति । यथा—स्फुट-लघु-मधुर-चित्र-कांत-शब्द-समयोदारा-लङ्कृतगद्यपद्येत्यात्यादि (एपिग्राफिका

इंडिका, VIII पृ०४४) । अत्र स्फुट-मधुर-कान्त-चित्रगुणादि संभवतः प्रसाद-माधुर्य-कान्ति प्रभृति गुणाः एव सन्ति येषां चर्चा दण्डिना कृताऽस्ति । शिलालेखोऽयं गद्यशैल्यामेवास्ति, यस्मिन् दीर्घसमस्तपदानां तथा शास्त्रसम्मतानुप्रासादि शब्दालङ्काराणां बाहुल्यमस्ति ।

अस्मादेवकालात् काव्यसाहित्येऽपि काव्यशास्त्रीयसिद्धान्तानामस्तित्वस्य न्यूनाधिक-निश्चयेन सह संकेतो मिलति । रामायणे महाभारते चालङ्कारेणासम्बद्धः सामान्यशब्दानां प्रयोगः विद्यमानोऽस्ति, यथा—उपमा, काव्यम्, नाटकम्, कथा, अख्यायिकादि । किञ्चास्याधारे एतेषां शास्त्रीयविषयाणां प्राचीनप्रयोगस्य प्रसङ्गे कमपि निष्कर्षं विवक्षितुं न शक्यते । यतः तेषूपलब्धपाठेषु सर्वग्राहितायाः प्रयासो विद्यते । किञ्चाश्वघोष-रचितबुद्धचरिते उपमा-उत्प्रेक्षा-रूपक इव सामान्यालङ्काराणामतिरिक्तः यथासंख्य-अप्रस्तुतप्रशंसा इव विशदालङ्काराणामपि विलक्षणः प्रयोगो मिलति । अनेन ज्ञातो भवति यल्लेखकः काव्यशास्त्राध्ययनेन परिचितोऽस्ति । प्रथमश्लोके एव 'उपमा' शब्दस्य पारिभाषिकेऽर्थे एव प्रयोगोऽस्ति । यस्यार्थः एवंविध नूतनभावस्य समावेशोऽस्ति, येन भावेन वर्त्तमानरसस्य निष्पत्तौ बाधको भवति । अश्वघोषस्तु नाट्यशास्त्रस्य रसप्रकरणे प्रदत्तार्थेषु 'हावभावादिशब्दानां प्रयोगः कृतवान् (४-७२) । अतएव काबेलमहोदयस्य कथनमिदमुचितमेव प्रतिभाति यदासां कवितानां विशेषमहत्त्व-मस्ति, यतोऽनेन विचारेण प्रोफेसर बूहलरमहोदयस्यास्य विचारस्य सुपुष्टिर्भवति । यदुत्तरभारते काव्यस्य तथाऽलङ्कारशास्त्राणां सफलो विकासः ख्रिष्टस्य प्रथमशतके-ऽभवत्। कालिदासस्य रचनायामस्य कथनस्य स्पष्टरूपेण प्रभावः परिलक्ष्यते। तासु रचनासु सिद्धहस्त-कुशलकलाकारस्य परिष्कृता प्रकृष्टा च कलायाः दर्शनं भवति । प्रचीनाः काव्यकर्त्तारः काव्यालङ्काराणां परिष्कृतप्रयोगः सुविचारितेन रीत्या चक्रुः । ते काव्य-नियमानां सामान्यरूपेण पालनमप्यकुर्वन् । अतीव महत्त्वपूर्णमिदं तथ्यमस्ति । अनेनैव तथ्येनानुमीयते यत् ख्रिष्टस्य प्रथमशतके काव्यशास्त्रीयज्ञानस्य सामान्यरूपेण विस्तारः सर्वत्र समजनि ।

सुबन्धोस्तथा बाणस्य मधुराख्यायिकास्वपि प्रयत्नप्रसूतसज्जायाः प्रवृत्तिरियं दृष्टिपथे समायाति । सुबन्धुः स्वकीयरचनां वासवदत्तां प्रत्यक्षरश्लेषमयविन्यासवैदग्ध्य-निधिं मत्वा स्वात्मानं गौरवान्वितं मन्यते ।

**प्रत्यक्षर-श्लेषमय-प्रपञ्च विन्यास-वैदग्ध्यनिधिं प्रबन्धम् ।**
**सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुः सुजनैकबन्धुः ॥**

(सं० श्रीरङ्गम् १९०६ पृ०३५७-५८)

वासवदत्तायां सर्वत्र प्राप्तशब्दचमत्कारात् अस्याः गर्वोक्तेः सम्पुष्टिर्भवति । स स्वकीय रचनायामेवा सावुत्तमश्लेषे तथा वाक्यप्रयोगे च पटुदीर्घोच्छ्वासमय सत्काव्य-प्रबन्धानां विषये अकथयत् । स एवोत्प्रेक्षा तथाऽऽक्षेपनामकस्यालङ्कारद्वयस्य विशेष-रूपेणोल्लेखः कृतवान् । बाणेनाऽपि कादम्बर्याः प्रारम्भिकैकस्मिन् श्लोके उपमा जाति-दीपक-श्लेषादीनामलङ्काराणां, काव्यरसस्य, शय्यायाश्चोल्लेखं कुर्वन् असंदिग्ध-

रूपेणालङ्कारशास्त्रेण सहात्मपरिचयो व्यक्तः कृतः । एतदतिरिक्तः बाणेन अक्षरच्युत -बिन्दुमती-गूढचतुर्थपादादीनां प्रहेलिकानामप्युल्लेखः कृतोऽस्ति । (सं० पीटर्सन, पृ० ७ द्रष्टव्यम्) तथा कथा-आख्यायिकयोः काव्यशास्त्रीयभेदोऽप्यसौ विजानाति । बाणेन हर्षचरिते (३ अनु० ५) 'भरतमार्गभजनगीतस्य' तथा तत्रैव चतुर्थानुच्छेदे भरतेन विवेचितम् (२०.५४) आरभटीवृत्तौ नाट्यं कुर्वन् नटानामुल्लेखः कृतोऽस्ति ।

तथ्यैरेभिः प्रमाणितो भवति यत् खीष्ट्रस्य षष्ठशतकपर्यन्तं काव्यशास्त्रीय-सिद्धान्तानां नियमानाञ्च पर्याप्तविकासः समजनि । काव्यशास्त्रस्य प्राचीनतमाः ज्ञाताचार्याः स्वपूर्ववर्त्तिनामाचार्याणामुल्लेखः यत्र तत्राकुर्वन् । भामहेन मेधाविनस्तथाऽ-न्येषां विदुषामपि चर्चा कृताऽस्ति । तेषां रचनानामपि निश्चितरूपेणोपयोगोऽपि कृताऽस्ति । अनेनैव प्रकारेण दण्डिनाऽपि प्राचीनग्रन्थानामुल्लेखः कृताऽस्ति । तस्यैकः टीकाकारोऽपि अस्मिन् सन्दर्भे दण्डिनः पूर्ववर्त्तिनावाचार्यद्वयस्य काश्यपस्य, वृद्धरुचेश्चोल्लेखः कृतवानस्ति । अलङ्कारशास्त्रविषयकाचार्यत्वस्य सम्बन्धे, यस्यान्यत्र कुत्राऽपि परिचयो नास्ति, किञ्च विभिन्नाचार्यमतानामुद्धरणात् प्रमाणितो भवति यद्दण्डी भामहादिभ्योऽपि पूर्ववर्तिनोऽस्य शास्त्रस्याचार्याः आसन् । अस्य कथनस्य सम्पुष्टिः प्राप्य ग्रन्थानां विवेचनसरणिप्रकाराणां प्रौढत्वादपि भवति । यतोऽस्य यादृशी प्रतिपादनशैली उपलब्धा भवति, तदेकपदे हि विकसितुं न शक्यते । अस्मिन् रूपेऽस्य विचारस्य विकासात् पूर्वमनेकग्रन्थानां रचनायाः संभावनाऽपि वर्त्तते । अस्याः कल्पनायाः सम्पुष्टिरपि अस्मादेव तथ्यात् संभवति यत्प्राप्यग्रन्थानामाचार्याः कतिपय पारिभाषिकशब्दानां सूत्राणाञ्च (वक्रोक्ति-रीति-गुणादिकाः) व्याख्या विनैव प्रयोगः कृतवन्तः । अनया प्रक्रियया प्रमाणितो भवति यदेतेषां शब्दानामर्थस्तु पूर्वस्मादेव-कालात् सुविदित एवासीत् तथा पूर्ववर्त्तिषु ग्रन्थेषु पूर्वमेव प्रतिपादितोऽभवत् ।

अनेनैवं प्रतीतो भवति यत् काव्यशास्त्रस्यैव हि समानधर्मा नाट्यशास्त्रस्यापि उद्भवः अस्मात्किञ्चितपूर्वमेवाऽभवत् । तस्मादेव नाटयशास्त्रात् काव्यशास्त्रममुम् आदर्शस्वरूपस्य तथाऽलङ्कारशास्त्रस्य महत्त्वपूर्णरससिद्धान्तस्य च प्राप्तिरभूत् । अपेक्षाकृत ब्राह्मणग्रन्थेषु बौद्धग्रन्थेषु चाभिनयस्योल्लेखो मिलत्येव । प्राचीनाचार्येण पाणिनिनाऽपि कृशाश्व-शिलालिनौ नटसूत्रकर्त्तारौ स्मारितौ । यथा—**'पाराशर्य शिलालिभ्यां भिक्षुनटसूत्रयोः** (४.३.११०) **शैलालिनो नटाः तथा कर्मन्द कृशाश्वादिनिः'** (४.३.१११) । अत्राऽपि कृशाश्विनो नटाः । नाट्यशास्त्रविषयकानां पुरातन-ग्रन्थानामस्तित्वमप्यनेन तथ्येनैव प्रमाणितो भवति । काव्यशास्त्रस्य सर्वे प्राचीन-लेखकाः भामह-दण्डी-वामनप्रभृतयः स्व-स्वप्रतिभयाऽस्य विषयस्योद्भावनं विवेचनं वा नैव चक्रुः प्रत्युत् विषयस्याध्ययनार्थं पाठकान् परामर्शमेवायच्छन् । एवंविधानां रचनानां प्राचीनतरस्वरूपं प्रायः लुप्तोऽभवत् । किञ्चोपलब्धग्रन्थेषु सर्वाधिकप्राचीनतमं प्रामाणिकतमञ्च विषयेऽस्मिन् भरतस्य नाट्यशास्त्रमेव मन्यते । अस्य नाट्यशास्त्रस्य वर्त्तमानपाठमपि षष्ठशतकात्, खीष्टात् परवर्त्ती कथितुं न शक्यते । स्वयं भरतेनाऽपि नाटकीयभाषायाः काव्यगुणानामालङ्कारिकसाधनानाञ्च चर्चा एकस्मिन् सम्पूर्णाध्याये कृताऽस्ति । अनेन प्रतीतो भवति यदलङ्काराणां शास्त्रीयस्वरूपं भरतादपि प्राचीनतर-

मस्ति । भामह-दण्डीप्रभृतयः प्राचीनाः आचार्याः यस्याः परम्परायाः अनुसरणं कृतवन्तः तत्तु कालदृष्ट्या यथाकामं भरतात्परवर्त्ती भवतु, किञ्च वर्ण्यविषयदृष्ट्या भरतात्पूर्ववर्त्ती एवास्ति । वस्तुतस्तु अलङ्कार-रीति-ध्वनि-प्रभृतिनां सिद्धान्तोपरि आधारितानि विभिन्नमतानि भामह-दण्डी-ध्वनिकारादीनां ग्रन्थेषु प्रतिष्ठितानि सन्ति । एतानि मतानि पूर्वकालादेव विकसितान्यासन् । एतेषु लेखकेषु कोऽपि अस्य सिद्धान्तस्य प्रथमप्रवर्त्तकरूपेण स्वीकर्त्तुं न शक्यते । एवंविध चिन्तनस्य सिद्धान्तरूपेण प्रतिष्ठितो भवनात्पूर्वमेवैकः प्रयोगात्मकस्थितिरवश्यमेवासीत् । यदि तत्कालीनरचनाऽद्याऽपि समुपलब्धा भवति, तदा तया रचनया प्रमाणीकर्त्तुं शक्यते, यत् भामह-दण्डी-ध्वनिकारादीनां सिद्धान्तानां विकासः केन प्रकारेणाभवत् । अतएव एतेषां लेखकानां ग्रन्थानस्य शास्त्रस्योत्पत्तिहेतुरवगन्तुं न शक्यते, किञ्चेमान् ग्रन्थानस्य शास्त्रस्य ऐतिहासिकरचनात्मकयुगस्यादि प्रवर्त्तकः स्वीकर्त्तुं शक्यते । तथ्यमिदं मनसि कृत्वा पूर्वाग्रहरहितेनेदं ज्ञातुं शक्यते यदलङ्कारशास्त्रस्योत्पत्तिः पृथक् शास्त्रस्वरूपेण खीष्टस्य प्रारम्भिकशतके एवाभवत् तथा खीष्टस्य पञ्चमवाषष्ठशतके एवापेक्षाकृत विकसितरूपेण प्रगतिर्बभूव । भरतकृत नाट्यशास्त्रस्य तथा भामहकृत काव्यालङ्कारस्य कतिपयेष्वध्यायेषु प्रकटीकरणात्पूर्वस्यास्य विकासक्रमः दुर्भाग्यवशादन्धकाराच्छन्नोऽस्ति ।



## शास्त्रस्यास्य नामकरणम्

हन्त, संस्कृतसाहित्यानुसन्धातृभिः कृतेऽपि तादृशसामीक्षिक (Critical) मार्ग-माणो तथाविध क्लेशश्लेषविषमे च प्रचुरप्रयासे संस्कृतसाहित्यस्य इतिवृत्तं यावदद्य अनापद्यमानं प्रकाशपद्यां वेविद्यते । भामह-वामन-रुद्रटादीनां काव्यशास्त्रसम्बन्धिनः ग्रन्थाः सामान्यतः काव्याऽलङ्कारनाम्ना प्रसिद्धाः सन्ति । कदाचिन्नामेदमेतेषु ग्रन्थेषु अलङ्काराणां वैशिष्ट्यदृष्ट्यैव सम्प्राप्तम् । प्रायः प्राधान्येन व्यपदेशा भवन्ति' अस्याः उक्त्यारेवानुसरणं कृतम् । वामनेन 'काव्यालङ्कारसूत्रे' कथितम् यदलङ्कार शब्दः अर्थद्वये प्रयुक्तो भवति सुण्ठुवस्तुस्वरूपे तथा अलङ्कारस्वरूपे च यथाऽलंक्रियते अनेनेति' अस्मिन्मते काव्यशास्त्रेण संबद्ध ग्रन्थान् 'काव्यालङ्कारः अनेन कारणेन कथ्यते, यतोहि अस्मिन् शास्त्रे काव्यगतसौन्दर्यस्य निर्देशो भवति । अनेन काव्यं ग्राह्यं भवति **'काव्यं ग्राह्यमलङ्करात्' सौन्दर्यमलङ्कारः'** (काव्या० सू. १.१.१-२) । अस्य सूत्रस्य वृत्तिस्तु —**'अलंकृतिरलङ्कारः । करण व्युत्पत्त्या पुनरलङ्कारशब्दो यमुपमादिषु वर्त्तते'** । कामधेनौ—'योऽयमलङ्कारः काव्यग्रहणे हेतुत्वेन उपन्यस्यते तदव्युत्पादकत्वाच्छास्त्रमपि अलङ्कारनाम्ना व्यपदिश्यत इति शास्त्रस्यालङ्कारत्वेन प्रसिद्धिः प्रतिष्ठितास्यादिति सूचयितुमयं विन्यासः कृतः काव्यं ग्राह्यमलङ्कारादिति ।' विवेचनमिदं शास्त्रसम्मतमस्ति । यतः येषां प्राचीनसाहित्यशास्त्रीयग्रन्थानामलङ्कारनाम्ना नैवाभिधानं दृश्यते, तेष्वपि ग्रन्थेषु अलङ्काराणामेव प्रधानताऽस्ति यथा दण्डिनः 'काव्यादर्शे त्रिचतुर्थांशे शब्दालङ्कार -अर्थालङ्कारयोरेव व्याख्याऽवलोक्य काव्यादर्शे (१.२) कथितमस्ति—**'यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम्** ।' ध्वन्यालोकेऽपि (पृ० ११.१३) काव्यशास्त्रां रचयितृन् 'काव्यलक्षणविधायिनरुच्यते । भामहेन 'शूरौ' (१.१) स्वकीय रचनायाः नाम काव्यालङ्कार एव कथ्यते किञ्चास्यान्ते (६-६४) अनेनैव अवलोक्य मतानि सत्कवीनामवगन्तव्य स्वधिया च काव्यलक्ष्म' इत्युच्यते । ध्वन्यालोकेऽपि (१.३) 'काव्य लक्ष्मविधायिभिः' एवंविधकथनस्योल्लेखोऽपि दर्शनीयः स्यात् काव्यशास्त्रस्यैवापरो नाम साहित्यमस्ति । येन प्रकारेण काव्यशास्त्राय काव्यालङ्कारशब्दस्य प्राचीनादेव कालात् प्रयोगः समुपलभ्यते, तेनैव प्रकारेण काव्यशास्त्राय साहित्यशब्दस्याऽपि प्रयोगः प्राचीनकालादेव समुपलभ्यते । अस्य साहित्यशब्दस्य काव्यशास्त्राय प्रयोगस्त्वर्वाचीने कालेऽतीव प्रख्यातिमगात् । चतुर्दशशताब्दस्याचार्य विश्वनाथः साहित्यशब्दस्यैवोपयुक्ततामाश्रित्य स्वकीयस्य काव्यशास्त्रीयविषयकस्य ग्रन्थस्य नाम 'साहित्यदर्पणः' इत्यकार्षीत् । किन्तु, साहित्यशब्दस्यादि प्रवर्त्तकः काव्यशास्त्राय आचार्यो विश्वनाथो नास्ति । काव्यशास्त्रग्रन्थकर्तृषु प्राचीनतमः आचार्यो भामह एवास्य सर्वप्रथमं प्रयोगमकार्षीत् स्वकीये काव्यालङ्काराभिधाने ग्रन्थे । काव्यं लक्षयन् आचार्यो भामहः

काव्यालङ्कारस्यादावेव प्रावोचत्—'**शब्दार्थौ सहितौ काव्यम्**' । इति । वर्त्तमान समयेऽपि अस्य प्रयोगः सामान्यतः काव्यशास्त्राय एव भवति । एकादशशताब्दस्य आचार्यो रुय्यकः 'साहित्यमीमांसा' नामकस्य ग्रन्थस्य प्रणयनं कृत्वा काव्याशास्त्रस्यार्थे साहित्यशब्दस्य प्रयोगमकरोत् । साहित्यशब्दस्याभिप्राय अभिव्यञ्जनाचार्यः कुन्तको वक्रोक्तिजीविताभिधाने स्वकीये ग्रन्थे प्राह—

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।**
**अन्यूननतिरिक्तत्व　　मनोहारिण्यवस्थितिः ।। इति ।**

कुन्तकमतानुसारेण शब्दार्थयोरुभयोरेव सौन्दर्यं समानं स्यात् न तु न्यूनाधिकम् । आचार्योऽयं स्वकीये काव्यलक्षणेऽपि शब्दार्थयोः साहित्यस्य समावेशमकार्षीत् । तथा हि—

**शब्दार्थौ　सहितौ वक्रकविव्यापारशालिनि ।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ।।**

इत्थं कुन्तकभामहावुभावेवाचार्यौ शब्दार्थयोः साहित्यमेवाश्रित्य काव्यस्य लक्षणं चक्रतुः । बिल्हणोऽपि स्वकीये विक्रमाङ्कदेवचरिते (१.११) प्राह—

**'साहित्यपाथोनिधिमन्थनोत्थं काव्यामृतं रक्षत हे कवीन्द्राः ।'**

यद्यप्यस्मिन् श्लोके साहित्यशब्दस्य प्रयोगः वाङ्मयमात्रार्थे एवायाति । अत्र काव्यामृतस्योद्गमः साहित्य-सागरादेव संभाव्यते । काव्यमत्र साहित्यस्य सारमेवास्ति । प्रतीहारेन्दुराजेणाऽपि स्वकीय गुरोः मुकुलस्य मीमांसायास्तथा शास्त्रेषु तस्य नैपुण्यस्य श्लाघां कुर्वन् तं 'साहित्यश्रीमुरारेः' 'कथितम् । अत्र स्पष्टतः साहित्यशब्दः साहित्य-शास्त्राय एव प्रयुक्तोऽपि मुकुलोऽपि स्वकीय कृतेः—'**पदवाक्यप्रमाणेषु वदेतत् प्रतिबिम्बितम्, यो योजयति साहित्ये तस्य वाणीं प्रसीदति**' **अस्याभिधावृत्तिः** (पृ० २२) अपि—'**व्याकरणमीमांसा-तर्क-साहित्यात्मकेषु चतुर्षु शास्त्रेषूपयोगात् ।**' राजशेखरोऽपि काव्यमींमासायाम् (पृ०५) प्रोक्तः—'**पञ्चमी साहित्यविद्येति यायावरीयः । सा हि चतसृणामपि विद्यानां निष्यन्दः ।**' मङ्खकोप्युक्तः—'**विना न साहित्यविद्याऽपरत्र गुणः कथंचित् प्रथते कवीनाम् ।**' (श्रीकण्ठचरिते २.१२) । अनेन सिद्धो भवति यदेकतो राजशेखरो भवभूतेरवतारं किल आत्मानं घोषयति, अष्टमशतकभवादालङ्कारिकोद्भटाद् नवमशतकजातादानन्दवर्धनाच्चोदाहरति । अपरतः (९६०मिते खीष्ट्राब्दे समाप्तायाः) यशस्तिलक चम्पवाः कर्त्रा सोमदेवेन, धाराधिपस्य मुञ्जस्य (९७४-९९३) कृपाश्रितेन धनञ्जयेन चायमुल्लिखितः । एतत् प्रणीतेभ्य-श्चतुर्भ्यो नाटकेभ्यश्च ज्ञायते यदेष कान्यकुब्जेश्वरस्य महेन्द्रपालस्याध्यात्मिकगुरुरासीत् । महेन्द्रपालकारितौ शिलालेखौ च ९०३ तमे ९०७ तमे च खीष्टाब्दे उत्कीर्णौ । अस्मिन् संदर्भे ज्ञपमसीवतद सम्पादितः 'एपिग्राफिका-इण्डिका' नामकः ग्रन्थः (१. १७१) द्रष्टव्यः । तस्मात् ९०० मितस्य खीष्टसम्वत्सरस्यासन्नवर्त्तिनि काले राजशेखरो बभूव इत्यवधार्यते । अनेन प्रमाणितो भवति यद्राजशेखरसमयात् किञ्चित्पूर्वकाल्लादेव साहित्यशब्दस्य प्रयोगः काव्यमीमांसाशास्त्रस्यार्थे प्रयुक्तोऽभवत् । साहित्यशब्दः 'सहित-

शब्दात् सम्प्राप्तोऽस्ति । अस्मात्पूर्वकालात् कदायमर्थः रूढोऽभवत् वक्तुं न शक्यते । यदा काव्यस्य लक्षणम् **'शब्दार्थौ सहितौ काव्यम्'** कृतम्, तदा काव्यस्य परिभाषा प्रस्तुतकर्त्तारः काव्यसमीक्षाशास्त्रस्य नाम साहित्यशास्त्रमचिन्वन् । राजशेखरस्तु साहित्य-शब्दस्य व्युत्पत्तिरनेन प्रकारेण कृतवान्—**'शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्या'** (काव्यमीमांसा पृ० ५) अनेनैव प्रकारेण व्यक्तिविवेकटीकायाम् (पृ० ३६) **'न च काव्ये शास्त्रादिवदर्थ प्रतीत्यर्थशब्दमात्रं प्रयुज्यते साहितयोः शब्दार्थयो-स्तत्र प्रयोगात् साहित्यं तुल्यकक्षत्वेनान्यूनातिरिक्तत्वम्'** लिखितमस्ति । भामहेना-ऽपि **'शब्दार्थौ सहितौ काव्यम्** (१.१६) कथितम् । शिशुपालवधेऽपि—**'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते'** (२.८६) एवं विधः उल्लेखः आयाति । अवितथ-काव्यरचनायै साहित्यस्य शब्दार्थे विशिष्टसौन्दर्यमपेक्षितमस्ति । अतः काव्यशास्त्र-निमित्तकसाहित्यशब्दस्य प्रयोगः संभवतः ख्रीष्टस्य सप्तम वा अष्टम शतकोपरान्ते एवाऽभवत् । काव्यमीमांसायां राजशेखरः काव्यशास्त्रं साहित्यविद्याशब्देनाभिहितवान् । यथा—**'पञ्चमीं साहित्य विद्येति यायावरीयः ।'** एतदतिरिक्तान्यपि अनेकान्यपि नामानि काव्यशास्त्रस्य सन्ति । किन्तु, तेभ्यः सर्वेभ्यः प्राचीनं नामास्ते क्रियाकल्प इति । अस्य निर्देशो वात्स्यायनस्य कामशास्त्रे परिगणितासु चतुःषष्टि कलासु समुपलभ्यते । काव्यक्रियाकल्पस्य संक्षिप्तनामाभाति इदम् । वाल्मीकीय रामायणास्योत्तरकाण्डस्य चतुर्नवतितमे सर्गेऽपि क्रियाकल्पशब्दस्य काव्यवित् शब्दस्य च प्रयोगः समुपलभ्यते । तत्र काव्यवित् शब्दस्यार्थो भवति—काव्यरसग्रहणक्षमः पुरुषः, किन्तु क्रियाकल्पशब्द-स्यार्थोऽस्ति काव्यसौन्दर्यपरीक्षणसमर्थः पुरुषः । तथा च वाल्मीकीयरामायण-वाक्यम्—

**'क्रियाकल्पविदश्चैव तथा काव्यविदो जनान् ।' इति ।**

अनेन विवेचनेन डॉ राघवनमहोदयस्याऽपि मतस्य सम्पुष्टिर्भवति । अस्मिन् सन्दर्भे जे० ओ आर० मद्रासस्य नवमभागे (पृ० १२८-१३४) 'Some concepts of Alankar Shastra' (Page 264-67) इत्यपि द्रष्टव्यमस्ति । अस्मिन् लेखे डॉ० राघवन महोदयेनानेन प्रकारेण स्वाभिमतं प्रकाशितम् । अस्य महोदयस्य विचारे दण्डी-भामहयोः कालात् पूर्वं संस्कृतकाव्यशास्त्रस्य नाम क्रियाकल्प एवासीत् । अयं हि महोदयः वात्स्यायनस्य कामशास्त्रे परिगणितानां चतुःषष्टि कलानां सूची तथा रामायणस्योत्तरकाण्डस्य चतुर्नवतितमसर्गे प्रयुक्तक्रियाकल्पशब्दस्य चाश्रयं गृहीत्वा पक्षोऽयं स्थापितः । किञ्च विवेचनमिदं परस्परं विरोधिनमस्ति । यतोऽस्य कथनस्य किमपि निश्चितनिदर्शनं नास्तिं वाल्मीकिरामायणस्य चतुर्नवतितमोऽध्यायः, अस्ति नवेति । डॉ० राघवनमहोदयः विना कस्याऽपि प्रमाणस्यैव कथनमिदं स्वीकृतम् । न जाने अंशोऽयम् रामायणस्य यथार्थभागोऽस्ति वाऽस्य महाकाव्यस्य कोऽपि पुरातनांशोऽस्ति । एवंविध विवदमानविषयम् (Controversial Subject) आश्रित्य निश्चयपूर्वकं किमपि कथितुं न शक्यते । उत्तरकाण्डं रामायणास्यैवांशः स्वीकरणेऽपि प्रमाणितमिदं न भवति यत् काव्यशास्त्रमेव क्रियाकल्पः कथ्यते । 'काव्यविद्' शब्दस्यार्थः काव्यशास्त्रस्य ज्ञाता भवितुं शक्यते । अस्याऽपि तुलना पूर्वोक्तेन

साहित्यविद्यया सह कर्त्तव्यम् । अतः क्रियाकल्पशब्दस्य व्याख्या कयाप्यन्या पद्धत्या कर्त्तव्येति । उपर्युक्त प्रसङ्गानुसारेण क्रियाशब्दस्यार्थः काव्यक्रिया भवितुमर्हति तथा क्रियाकल्पस्यार्थः काव्यरचनाप्रक्रियाऽपि भवितुं शक्यते न तु काव्यशास्त्रस्य समग्र ग्रन्थाः कल्पशब्दस्यार्थोऽस्य पारिभाषिकार्थे कल्पसूत्रानुसारेण 'श्रौतवल्यंर्थेण सह प्रक्रियाऽपि भवति । क्रियाशब्दस्य स्वकीयार्थः 'मृत्युसंबंधी' अथवा मृत्यु पश्चात् क्रियमाण श्राद्धादिकर्माण्यपि भवितुमर्हति । उदाहरणार्थ विष्णुपुराणे (३.१३.३४) **'पूर्वाः क्रियामध्यमाश्च तथा चैवोत्तरा; क्रियाः ।'** क्रियापद्धतिनामकाः बहुतराः ग्रन्थाः सन्ति; येषु ग्रन्थेषु मृत्युसम्बन्धिनस्तथा तदुपरान्त मृत्युजन्यसंस्काराणामाख्यान-मस्ति । यथा डी० सी० हस्तलिप्याः १८७९-८० तस्याः संख्या ११८, एवं १८८४-८७ तस्याः संख्या २०७, एवम् १९८०-८१ तस्याः संख्या १५६, तथा १८८४-८६ अस्याः संख्या ९९ द्रष्टव्या । प्रसङ्गं परित्यज्य यदि क्रियाशब्दस्य स्वकीयार्थः भामह-दण्डिभ्यां पूर्वं काव्यं भवति तदा समुद्रगुप्तप्रशस्तौ 'काव्यक्रियाभिः अस्योल्लेखस्य तथा नाट्यशास्त्रे (२२-२३) **मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया**–अस्योल्लेखस्य का आवश्यकताऽऽसीत् । श्लोकोऽयं के० एम० संस्करणस्य २०, २३ तथा जी० ओ० एस० संस्करणस्य तृतीयभागे नवतितमे पृष्ठे लिखितोऽस्ति । अस्य श्लोकस्य व्याख्या तत्रैवास्ति—**'काव्यस्य क्रिया काव्यरूपतापादानं तदेव हेतुः ततः ।'** कामसूत्रे (१.३.१६) चतुःषष्टिकलानां परिगणाना कृताऽस्ति । आसां कलानामभ्यासः गुप्तरूपेण कन्याभ्यः कर्त्तव्यमासीत् । तद्यथा कामसूत्रे (१,३,१४) 'अभ्यासप्रयोज्यांश्च चतुःषष्टिकान्योगान् कन्या रहस्येकाकिन्यभ्यसेत् ।' एता एव कलाः गणिकाभ्योऽपि शिक्षणीयमासीत् । (कामसूत्रे (१.३.२०) । अस्यामेव सूच्यां निम्नलिखितः श्लोकोप्यस्ति—'संपाठ्यं मानसी काव्यक्रिया, अभिधानकोषः, छन्दोज्ञानम् क्रियाकल्पः, ललितकलायोगाः ।' योग्यवरान् तथा प्रणयिजनाञ्चाकर्षयितुमस्याः शिक्षायाः महत्त्वमासीत् । तासां कन्यानां गणिकानाञ्च कृते गीत-वाद्य-नृत्य-आलेख्यादिभिः सह कलाशिक्षणस्यापि तथैव महत्त्वमासीत् कामसूत्रे मात्र 'क्रियाकल्पः' शब्दस्यैव प्रयोगोऽभवत् न तु काव्यक्रियाकल्पशब्दस्य । कालिदासेनाऽपि स्वयमेकस्मिन् स्थले' क्रिया'शब्दस्य संस्कारार्थे प्रयोगः कृतोऽस्ति—**(कुतो धर्म क्रियाविघ्नः)**। असावस्य प्रयोगः ज्ञानप्राप्त्यर्थेऽपि कृतवानस्ति। तद्यथा—**'शिष्टा क्रिया कस्यचित्'** (मालविका० १) । सौन्दरानन्देऽपि (१-५५) **'समाजैरुत्सवैर्दायैः क्रियाविधिभिरेव च । अलंचक्रुरलंवीर्यास्ते जगद्धामतत्पुरम् ।'** अत्रेदमभ्युपगमनं कदापि स्वीकार्यत्र भवेत् यतो हि समग्र नगरस्य काव्यालङ्कारशास्त्रैर-लङ्कृतत्वमसंभाव्यमेवासीत् । अत्र क्रियाविधेरर्थः धार्मिकसंस्काराणां विधानादेवास्ति । डॉ० राघवनमहोदयस्य कथनस्याधारस्तु ललितविस्तरः, (पृ० १५६, लेफमैन संस्करणमेवास्ति । अत्रैव क्रियाकल्पशब्दः समायाति। किञ्चात्र तस्य मतमिदं सर्वथाऽसङ्गतमेवास्ति । ललितविस्तरस्य प्रकरणे १७८-७९ पृष्ठे लिखितमस्ति (बी०आइ० संस्करणे)' **लिपिमुद्रागणना... अक्षक्रीडायां काव्यव्याकरणे ग्रन्थ-रचिते रूपे रूपकर्मणि... वीणायां वाद्यनृत्ये गीतपठिते... लास्ये नाट्ये... निघण्टौ निगमे पुराणे इतिहासे वेदे व्याकरणे निरुक्ते शिक्षायां छन्दसि यज्ञकल्पे ज्योतिषि सांख्ये योगे क्रियाकल्पे वैशेषिके वैशिके अर्थविद्यायां बार्हस्पत्ये'** इत्यादि ।'

एवंविधानां नवतितमानां वस्तूनां परिगणना कृताऽस्ति । यदि वेदाङ्गे तथा कतिपयानामन्यविद्यानां मध्ये क्रियाकल्पशब्दस्य प्रयोगो भवति तदा तस्य शब्दस्यार्थः केवलं श्राद्धकल्प एव भविष्यति । विशेषतः अस्मिन् प्रसङ्गे यदि यज्ञकल्पशब्दः अस्मात्प्रयोगात्पूर्वमागतो भवेत् । अस्मिन् प्रसङ्गे डॉ० राघवनमहोदयस्य मतानुसारेण शास्त्रस्य स्थाने किञ्चिदभिनव नामकरणं नोचितं प्रतिभाति । अत्रेदमपि विचारणीयमस्ति—भागवतपुराणस्य (१०.४५.३६) टीकाकर्तॄणां रचनासु क्रियाकल्प-शब्दस्य स्थाने क्रियाविकल्पः पाठ एव समायाति । अतः 'काव्यशास्त्रस्य प्राचीन नाम क्रियाकल्पोऽस्ति' अस्य मतस्याधारः सुदृढो नास्ति, यतो हि मूलतः क्रियाकल्पः' पाठ एव संदिग्धोऽस्ति । श्रीधरेणाऽपि स्पष्टतया प्रोक्तः अस्याः गणनायाः आधारः शैव तन्त्रमस्ति न तु कामसूत्रम् । कलानामुल्लेखः प्राचीन कालादेवानेकेषु रूपेषु प्रचलितोऽस्ति । स्वयं कामसूत्रे (१.३.१७) एवास्योल्लेखोऽस्ति । यत् कोऽपि पाञ्चाल बाभ्रव्य नामक विद्वान् चतुःषष्टिकलानामन्याऽपि सूचीमकल्पयत्। **'पाञ्चालिकी च चतुःषष्टिरपरा । तस्याः—प्रयोगाननन्तवेत्य सांप्रयोगिके वक्ष्यामः (का०सू० १, ३, १७-१८)** । अत्र कलाशब्दस्य भिन्नोऽर्थः प्रतीतो भवति । संभोगस्य विभिन्न स्थित्या सहैवास्य तात्पर्यमस्ति । कामसूत्र-द्वितीयाधिकरणस्य नाम साम्प्रयोगिकोऽस्ति । द्रष्टव्यमस्ति—**'तदान्ध्रीषु प्रायेणेति संवेशन प्रकाराः बाभ्रवीयाः ।'** (२.६.२१) काम-सूत्रस्य (१.१.१०) सप्तमाधिकरेण पाञ्चालबाभ्रव्यस्यैका रचनायारुल्लेखो भवति । कलायाः विभिन्नसूचीभ्यः द्रष्टव्यमस्ति I.H.Q. अष्टमभागस्य पृष्ठे ५४२-४८ (प्रो० चिन्ताहरणचक्रवर्ती) पुनः I.H.Q. पञ्चमभागे पृ० ८८ (डॉ० आचार्यः) J.R.A.S. १९१४ पृ० ३५५ तथा क्षेमेन्द्रलिखितस्य कलाविलासस्य चतुर्थप्रकरणे तथा दशमप्रकरणे च विभिन्न सूच्यौ स्तः । नाट्यशास्त्रस्यानुमानानुसारेण कलानां संख्या चतुःषष्टि अस्ति । (द्र० ३४,४४,३५,६०) हाल संस्करणस्य वासवदत्तायां १४० पृष्ठेऽपि चतुःषष्टिकलानामेवोल्लेखोऽस्ति ।

शास्त्रमिदं स्वजन्मसमयादेव नितरां लोकप्रियतां गतं तस्मादेतत् काव्यालङ्कार-काव्यशास्त्र-क्रियाकल्प-साहित्यविद्या-अलङ्कारशास्त्र-साहित्यशास्त्रादि कतिपय नामभिः ससम्मानं सानुरागञ्च समाहूतमभूत् । तेषु शास्त्रेषु एकादशशताब्दस्य सरस्वतीकण्ठा-भरणकारो भोजदेव अस्मै शास्त्राय मुख्यरूपेण काव्यशास्त्रस्य प्रयोगमकार्षीत् । किन्तु शास्त्रशब्दस्य व्युत्पत्तिमयं विधिप्रतिषेधपरामाह तथा चोक्तं तेन—

**यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम् ।**
**तद्ध्येयं विदुस्तेन लोकयात्रा प्रवर्त्तते ॥** इति ।

तयोर्विधिप्रतिषेधयोः साधनानि त्रीणि सन्ति काव्यम्, शास्त्रम्, इतिहासश्च । एतेषां त्रयाणां मिश्रणेन त्रीण्यपराण्यपि जायन्ते साधनानि—काव्यशास्त्रम्, काव्येति-हासः, शास्त्रेतिहासश्च । इत्थमाहत्य षट्साधनानि भवन्ति विधिप्रतिषेधबोधकानि । तथा चोक्तं भोजराजेन सरस्वतीकण्ठाभरणे—

**काव्यं शास्त्रेतिहासो काव्यशास्त्रं तथैव च ।**
**काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम् ॥** इति ।

यद्यपि भोजराजोऽपि काव्यशास्त्रस्य प्रयोजनं मुख्यतया कान्तासम्मिततयोपदेशयुजे एवेति मन्यते तथापि नायं बहुजन समादृतः पक्षः । ते तु सद्यः परनिर्वृत्तिरूपं रसास्वादनं विगलितवेद्यान्तरमेव काव्यस्य प्रयोजनं स्वीचक्रुः । वस्तुतः सद्यः परनिर्वृत्तेरेव काव्यस्य वेदादिभ्यो भेदकं प्रयोजनं भवति । अत एवास्य नाम काव्यशास्त्रमेव समुचितं प्रतिभाति ।

किञ्चानेन विवेचनेन काव्यशास्त्रस्य नामरूपेण निम्नाङ्किताः षट् शब्दाः समुपलभ्यन्ते इति स्पष्टो भवति—१ काव्यालङ्कारः, २ अलङ्कारशास्त्रम्, ३ काव्यशास्त्रम्, ४ साहित्यशास्त्रम्, ५ साहित्यविद्या, ६ क्रियाकल्पश्चेति ।

किन्त्विदं त्ववश्यं वेदवेदाङ्गादिषु केवलं साहित्यशास्त्रस्य तत्त्वानि समुपलभ्यन्ते न च तानि शास्त्राणि प्रत्यक्षतयाऽप्रत्यक्षतया वा तस्य शास्त्रीयं निरूपणं कुर्वाणानि दृष्टानि जायन्ते । तदीयं शास्त्रीयं निरूपणं तु भरतमुनिसमयादेव प्रारब्धं भवति । भरतमुनेः समयमधिकृत्य विदुषां सन्ति भिन्नभिन्नानि मतानि । तस्य भरतस्य कालो विक्रमात् प्राग्वर्त्तिशतकद्वयमारभ्य तदर्वाग्वर्त्तिशतकद्वयं यावत् यो विद्यते तस्यान्तराले सुधीभिः प्रायेण विचिन्त्यते । अतोऽस्य काव्यशास्त्रस्य निर्माणं प्रारब्धं त्वभूत् भरतसमयात् परं तन्निर्माणस्यावसानं हि ईस्वीयाष्टादशशतकेऽभवत् । काव्यशास्त्रस्येतिहासः वर्षाणां सहस्रद्वयमभिव्याप्य विततः संलक्ष्यते । तस्मात् तद्विरचनानेहातावान् महान् सुधीभिः स्वीक्रियते ।

**काव्यशास्त्रस्य विषयः**

अथ काव्यशास्त्रस्य परिधौ केषां केषां विषयाणां समावेशो भवितुमर्हति, इति विचारणीयमस्ति । सर्वप्रथमः काव्यशास्त्रस्य प्रथमो विषयः काव्यप्रयोजनमस्ति तथा काव्यस्योद्देश्यमपि तथैव महत्त्वपूर्णमस्ति । काव्यनिर्माणाय कविषु कस्य विशिष्टगुणस्यापेक्षा वर्त्तते अर्थात् यदुद्दिश्य विधेयप्रवृत्तिर्भवति तदपि विचारणीयमस्ति । यतो हि काव्यशास्त्रं शास्त्रान्तराणीव परमोपादेयं शास्त्रमस्ति । वैदिकानां लौकिकानाञ्च शास्त्राणां सर्वाङ्गीणतया ज्ञानं तावन्न भवितुमर्हति यावदस्य काव्यशास्त्रस्य ज्ञानं न वर्त्तते । वेदवेदाङ्गादिषु **'उत त्वः पश्यन् न ददर्श वाचं—'जायेव पत्ये उषती सुवासा' 'द्वासुपर्णा सयुजा सखाया'** इत्यादिकानि सन्ति सहस्राणि वाक्यानि एतादृशानि येषां भावान् न काव्यशास्त्रानभिज्ञो ज्ञातुं प्रभवति, अथ च यो जनः काव्यशास्त्रेन निष्णातोऽस्ति स व्यञ्जना प्रतिपाद्यमानानर्थान्नपि नावबोद्धुं शक्नोति । एवं स्थिते तस्य गतिस्तेषु स्थलेषु केन प्रकारेण स्यात् यानि व्यङ्ग्यार्थ विलसितानि व्यञ्जकपदावलिपेशलानि च स्थलानि विद्यन्ते तस्मात् काव्यशास्त्रस्यानिवार्यत्वेनाध्येतव्यतापेक्ष्यते । शास्त्रस्यास्यानेक स्वकीयविशिष्टताः विलोक्यैव राजशेखरः शास्त्रमिदं वेदाङ्गमिव मन्यते। स ब्रूते—**'उपकारकत्वादलङ्कारः सप्तममङ्गमिति; ऋते च तत्स्वरूपपरिज्ञानादेवानर्थानवगतिः'** । शब्दार्थ-काव्यस्वरूप-रसगुणरीतिदोषध्वनिभावालङ्कारादीनां विषयाणां निरूपणं प्रतिपादनं वा काव्यशास्त्रस्य प्रयोजनम् । 'रसास्वादनं किं वा सद्यः परनिर्वृत्तिः'—इत्येतद्धि तज्जीवनस्य प्रमुखं लक्ष्यमतः यः कोऽपि वेदादिशास्त्रीयं मर्म सर्वविधतयाधिजिगमिषति, किम्वा आत्मकल्याणाकामनया यद्वा यशोऽर्थसमवाप्तीच्छया

अथवा लोकव्यवहाराभिज्ञतावगमन्वीच्छया आहोस्वित् मनः परितोषणाकाङ्क्षया वा अमङ्गलविनाशनलालसया काव्यं चिकीर्षति, तत्र च शब्दार्थयोर्मध्ये सौन्दर्यमाधित्सति तस्य कर्त्तव्यमाद्यमिदं यदसौ काव्यशास्त्रशरणं गच्छेत् ।

काव्यस्य परिभाषालेखनकाले सामान्यतः शब्दस्य अर्थस्य चोल्लेखो भवति । तथेदमपि निर्दिष्टो भवति यत् काव्यस्यात्मा अथवा तस्य सारस्याधारः किमस्ति ? येन काव्ये काव्यत्वं समायाति । तेन काव्यस्यात्मा किमस्ति? प्रश्नोऽयं जागर्ति । अस्मिन् विषये विचारकाणां मध्ये सर्वाधिकमतभिन्नता वर्त्तते । काव्यस्यात्मतत्त्वविषये मतभेद एव तेषां सम्प्रदायानां भेदस्य कारणमास्ते । ये आचार्याः काव्यस्यात्मरूपेण रसं स्वीकुर्वन्ति वे रससम्प्रदायस्याचार्याः कथ्यन्ते । ये अलङ्कारमेव काव्यस्य मुख्यं तत्त्वं स्वीकुर्वन्ति ते अलङ्कारसम्प्रदायस्य प्रवर्त्तकाः आचार्याः सञ्जाताः। ध्वनिसम्प्रदायस्य प्रवर्त्तकाः आचार्याः ध्वनिमेव काव्यस्यात्मतत्त्वं स्वीकुर्वन्ति । वक्रोक्तिसम्प्रदायस्य प्रवर्त्तकेनाचार्येणा कुन्तकेन तु अभिहितम्—**'वक्रोक्तिरेव काव्यस्य जीवितम्'** । रीतिसम्प्रदायस्याचार्याः रीतिमेव काव्यात्मत्वेन स्वीकुर्वन्ति । औचित्यसम्प्रदायस्य प्रवर्त्तकानुसारेण औचित्यं काव्यजीवितमास्ते । यतो हि शब्दः अर्थश्च काव्यायात्या-वश्यकं तत्त्वमस्ति । अतः शब्दस्य विभन्नाः शक्तयः तथा शब्दार्थसम्बन्धस्य विस्तरेण विवेचनमावश्यकमस्ति ।

शब्दो हि महाशक्तिशाली । अर्थस्तस्मै शक्तिं प्रयच्छति । विपुल विपुलतर-शक्त्यर्थं सः सदा तमपेक्षते । परं शब्द साहाय्यन्तरेण अर्थो न नैजं गौरवं प्रकटीकर्त्तुमर्हति । सोऽपि शब्दमपेक्षते । उभावप्यन्योन्याश्रितौ । अतएवोक्तमपि—**'शब्दार्थाविव सत्कविः ।'** इति । अर्थं विना शब्दो न स्थातुं क्षमः, शब्दं विनाऽर्थोऽपि । द्वावपि परस्परं सम्पृक्तौ स्तस्तस्मादेव तु हेतोर्महाकविः कालिदासो भगवन्तं शङ्करं प्रणमन्नाह—**वागर्थाविवसम्पृक्ताविति** । शब्दे स्थितायाः शक्तेः प्रयोगं विद्वान् एवं कर्तुं क्षमते । प्रतिभावान् विपश्चिद् नैजं लेखं भाषणं कवितादिकं वा प्रति यावन्तमपि यादृशमपि गरिमाणं प्रदातुमभिलषते, सः तावन्तमेव तादृशमेव तं शब्दे प्रयोक्तुं क्षमः । न साधारणो जनः शब्दनिष्ठां शक्तिं जानाति; केन प्रकारेणा शब्दस्थितान्याः महत्याशक्तेः प्रयोगः कर्त्तव्य' इत्येतदपि न वेत्ति सः । तस्मात् तदीयं वाक्यं न लोकं प्रीणाति न तमावर्जयितुं सः स्वं प्रति क्षमते । कविर्मनीषी शब्दमुपास्ते सः शब्दज्ञो भवति, शब्दस्य शक्तिमपि सम्यगवगच्छति । एतस्मात् कारणात् समग्रमपि जगत् तद्ररचनां तद्वक्तृतां तद्वाणीं च सततं श्रोतुमुत्सुकतां दर्शयति । कुशलवक्तृप्रयुक्तः शब्दः न केवलं स्वं विश्रुतमर्थ प्रकटीकृत्य विस्मयत्यपि तु सः स्थल-समय-श्रोतृविशेष्यादि अनुरोधवशादनेकान् विविधानभिव्यनक्ति । शब्दः प्रत्यक्षमेवार्थं न निदधात्यपितु परोक्षमपि अर्थमधिकरोति । यो वक्ता परोक्षार्थद्योतनपरं शब्दं प्रयोक्तुं समर्थो यश्च शब्दः परोक्षार्थोपस्थापननिष्ठः स वक्ता स च शब्दो विदुषां समवाये परां प्रतिष्ठामश्नुते ।

सद्गुण-विद्या-कला-सत्सङ्ग-सुसंस्कार-नियत्यादिसाहाय्यमवाप्य यथा लोके पुमान् अद्भुतं सत्त्वं तेजोबलं प्रभावञ्च प्रदर्शयति तथैव शब्दोऽपि प्रतिभावन्तं शास्त्रपारदृश्यानं

लोकव्यवहाराभिज्ञं स्वाध्यायपरं जनमवाप्याद्भुताद्भुतार्थान् प्रकाशयति । शब्दस्य विलक्षणतामिमां साहित्यिकाः सुधीधौरेयाः धीरतया गम्भीरतया च चिन्तयाञ्चक्रुः । ततश्च ते वैयाकरणा-नैयायिका-मीमांसकाश्च शब्दाभ्यन्तरे यां यां शक्तिमनुसन्दधतां तां शक्तिमेव न शब्दो जुषतेऽपि तु स ततोऽपि परां शक्तिं निदधातीत्येतं निश्चयमगमत् । ते वैयाकरणाधन्विष्टाः शक्तीः साधु परीक्ष्यान्तत इदं निश्चिक्युर्यद्वैयाकरणा शब्दे यामभिधां, नैयायिकास्तत्र यां लक्षणां, मीमांसकाश्च तत्र यां तात्पर्याख्यां शक्तिं पश्यन्ति ताः सर्वास्तिस्रोऽपि शक्तयः शब्दाभ्यन्तरशोभमानया सहृदयसंवेद्यया शक्त्या सर्वथातिशीयन्ते इमां हि अभिधादिविजयिनीं शक्तिं ते 'व्यञ्जना' इत्येतेन नाम्ना व्याजह्रुः । दृढ़तापूर्वकं ते प्राहुः—

**... ... ... तत्र व्यापारो व्यञ्जनात्मकः ।**
**यस्य प्रतीतिमाधातुं लक्षणासमुपास्यते ।**
**फले शब्दैकगम्येऽत्र व्यञ्जनानापराक्रिया ॥**
**नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ।**
**लक्ष्यं न मुख्यं नाप्यत्र वाधोयोगः फलेन नो ॥**
**न प्रयोजनमेतस्मिन् न च शब्दस्खलद्गतिः ॥ इति ।**

व्यञ्जनायाः लक्षणमिदं प्रतिपाद्यते तां व्याचक्षाणावुच्यन्ते —'व्यञ्जना प्रतिपाद्योर्थो व्यङ्ग्यार्थ इति कथ्यन्ते अभिधाप्रतिपाद्यात् वाच्यादर्थाच्छब्दस्य मुख्यार्थ एव वेद्यते यथा 'गङ्गा' इत्येत्यस्य शब्दस्य मुख्योऽर्थो जलप्रवाहविशेष इत्येव वर्त्तते । एषः अर्थो अभिधाबोध्यो भवति परं 'गङ्गायां घोषः' इत्यादौ यदा गङ्गादिशब्दः प्रयुज्यते तदा सः गङ्गाशब्दस्तटरूपं लक्ष्यमर्थं लक्षयति । तटरूपलक्ष्यार्थस्य ज्ञापनं लक्षणा करोति । परं 'गङ्गायां घोष' इत्यादौ प्रयुक्ताद् 'गङ्गा' शब्दात् शीतत्वपावनत्वादिकार्थो यः प्रतीयते सोऽर्थ एव व्यङ्ग्यार्थमित्युच्यते । इमं व्यङ्ग्यार्थमभिव्यनक्ति व्यञ्जना । मीमांसकाभिमता तात्पर्याख्या वृत्तिर्न व्यञ्जनावृत्तेः कार्यं कुरुते तस्यास्तु कार्यं ततो भिन्नमेव । तदीयं कार्यं हि अर्थस्यान्विततताकरणं किंवा अन्वितस्यैवार्थस्याभिधानमास्ते । तदेवं व्यङ्ग्यार्थो व्याच्यलक्ष्यतात्पर्याख्येभ्योऽर्थेभ्यो नितान्तं भिन्नः । चेत् व्यङ्ग्यार्थस्य वाच्यादिष्वन्तर्भावः कुतः स्यात् तदा मूलक्षयकारिणी अनवस्थाऽऽपतेत् ।

अभिधा केवलं मुख्यार्थे प्रवर्त्तते, लक्षणा तत्र प्रवर्त्तते यत्र मुख्यार्थबाधो वा मुख्यार्थयोगो वा रूढिप्रयोजनयोरन्यतर वर्त्तते; तात्पर्यावृत्तिस्त्वन्ये गतिं कुरुते । व्यञ्जनायाः कार्यक्षेत्रं नैजमेव । सा तु अभिधामालम्बमानाऽपि अभिधातः पृथक् एव व्यापारमाचरति । एतावदेव न, सा लक्षणामप्याश्रयन्ती लक्षणातो विलक्षणं कार्यमनुतिष्ठति । अन्यमात्रे गतिकारिणीत्वात् तात्पर्याया वार्त्तैव का तत्पुरतः । अभिधां लक्षणाञ्चावलम्बमानाऽपि व्यञ्जना स्वतंत्रावृत्तिरस्ति । तत्कार्यस्य सर्वथैवाभिधालक्षणाकृतकार्यात् भिन्नत्वात् । व्यञ्जनाशक्तिस्तु विचित्रैवशक्तिः सा न सर्वथा अभिधाद्यधीना, सा तु कदापि स्वातन्त्र्यमपि भजते । एवंविधशब्दार्थयोः पर्यालोचनं काव्यशास्त्रस्याप्रमुखविषयोऽस्ति । अनेनैव कारणेनात्र शब्दस्याभिधालक्षणाव्यञ्जनावृत्तीनां तथा तासामुप-

भेदाः वाच्य-लक्ष्य एवं व्यंग्यार्थानां भेदत्रयाणां निरूपणमावश्यकं भवति । समालोचकैः विभिन्नदृष्टिभिः काव्यस्य भेदानां निरूपणमपि कर्त्तव्यमस्ति । यथा काव्यस्य वाह्य-स्वरूपदृष्ट्या गद्य-पद्य-मिश्राख्याः त्रयो भेदाः भवन्ति । काव्ये आवश्यकगुणानां प्रधानतया तथा गौणतायाः दृष्ट्या उत्तममध्यमाधमभेदेन काव्यं त्रिविधम् । तत्रोत्तमं काव्यं तावत्—'इदमुत्तममतिशायिनिव्यङ्ग्ये वाच्याद् ध्वनिबुधैः कथितः' अत्र प्रधानीभूत-स्फोटस्य शब्दार्थयुगलरूप काव्ये ध्वनिव्यवहार इति तात्पर्यम् । यथा—

**निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोधरो,**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'**

नायकमानेतुं प्रेषितां तमुपभुज्य प्रतिनिवृत्तां दूतीं प्रति स्नानकार्य प्रकाशनमुखेन सम्भोगं प्रकाशयन्त्या विदग्धनायिकाया उक्तिरियमस्ति ।

गुणीभूतव्यङ्ग्यस्यापरनामधेयस्य मध्यमकाव्यस्य स्वरूपमाह—

**'अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।'**

तेन हि काव्यं त्रिविधम् । वाच्यात् व्यङ्ग्येऽधिकचमत्कारिणी सति उत्तमं ध्वनि-काव्यम् । वाच्यात् व्यङ्ग्यार्थे न्यूनचमत्कारिणि तुल्यचमत्कारिणी वा मध्यमं गुणीभूत-व्यङ्ग्यं काव्यम् । अव्यङ्ग्ये अर्थात् स्फुटप्रतीयमानार्थरहिते सति चाधमं काव्यम् । तदेव चित्रमित्यभिधीयते । उक्तञ्च मम्मटेन—

**'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ।'**

अनेनैव प्रकारेण शब्दोऽपि त्रिविधः—

**'स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा'**

अभिधोपाधिको वाचकः, लक्षणोपाधिकोलक्षकः, व्यञ्जनोपाधिको व्यञ्जकः इति । एकान्यदृष्ट्याऽपि काव्यं द्विविधम्—दृश्यं श्रव्यञ्चेति । भाषादृष्ट्याऽपि संस्कृतप्राकृतप्रभृति भेदाः भवन्ति । काव्यस्य दृश्य-श्रव्यभेदेन नाट्यशास्त्रस्य विशालं विस्तृतञ्च क्षेत्रं सन्मुखे समायाति । काव्ये कतिपयगुणाः अपि आवश्यकाः भवन्ति । तत्तु रसोत्कर्षकत्वेसति रसाव्यभिचारित्वं गुणत्वम्, अव्यभिचारेण रसोपकारकत्वं वा गुणत्वम् इति । स च त्रिविधः—माधुर्यम्, ओजः, प्रसादश्चेति उक्तञ्च मम्मटे—**'माधुर्यौजः प्रसादाख्यास्त्रयस्ते न पुनर्दश'** तथा च तेनैव—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्ष हेतवस्ते स्युश्चलस्थितयोः गुणाः ॥ इति ।**

काव्यशास्त्राय विषयोऽयमपि विवेचनीयमस्ति । विभिन्नभाषाशैलीनां सम्बन्धः गुणैः सहास्ति । तेनैव कारणेन रीतीनामपि मिथो व्यावृत्या वस्तुरूपनिश्चयात्मकचिन्तन-

मावश्यकम्भवति काव्यशास्त्रे । तत्र कविकल्पितस्य मनोहरार्थस्य सौन्दर्ययुक्तं वर्णनं काव्यमिति मन्यतेस्म । समस्तेषु काव्यलक्षणेषु वाग्देवतावतारस्यमम्मटभट्टस्यैव काव्यलक्षणं समीचीनं युक्तियुक्तं चेति विद्वान्सः । अतस्तदेव प्रतिपदव्यावृत्तिपूर्वकं प्रतिपाद्यते—

**'तद्दोषौ शब्दार्थौ सगुणानमलङ्कृती पुनः क्वाऽपि ।' इति ।**

तेन हि काव्यं दोषरहितं भाव्यम् । अतः पद-वाक्यार्थरसादिभिः संबद्धैः दोषाणामपि विवेचनमावश्यकमस्ति । अन्ये काव्यसम्बन्धिनामलङ्कारादीनामपि विवेचनमप्यावश्यकमेवास्ति । अलङ्कारस्तु शब्दगतः, अर्थगतः, शब्दार्थगतश्चेति त्रिविधः । यमकानुप्रासादयः शब्दगताः उपमारूपकादयोऽर्थगताः, पुनरुक्तवदाभासः शब्दार्थोभयगतश्चेति । एतत् सर्वं काव्यशास्त्रस्य विचारणीयो विषयोऽस्ति । कतिपयेषु काव्यशास्त्रीय ग्रन्थेषु कवीनां कृते व्यावहारिक कविसमयादि नियमानां तथा भूगोलवृक्षादिवस्तुवर्णानादि विषयाणामपि ज्ञानमतनीत् ।

उपर्युक्त वर्णितविभिन्न विषयाणां काव्यशास्त्रीय सर्वेषु ग्रन्थष्वन्तर्भाव इति कथितुं न शक्यते । यतो हि काव्यशास्त्रसम्बन्धिनां ग्रन्थानां विभिन्नवर्गाः भवन्ति । (१) साहित्यदर्पण-प्रतापरुद्रयशोभूषणादिषु ग्रन्थेषु नाट्यशास्त्रसहितस्य काव्यशास्त्रस्य सर्वेषां विषयाणां समावेशोऽस्ति । (२) नाट्यशास्त्रं विहायोपर्युक्तानामवशिष्टविषयाणां विवेचनं प्रसिद्धेष्वनेकग्रन्थेष्वागतोऽस्ति । अस्मिन् वर्गे दण्डिनः काव्यादर्शः, भामह-रुद्रटवाग्भटादीनां काव्यालङ्कारः, वामनस्य काव्यालङ्कारसूत्रम्, मम्मटस्य काव्यप्रकाशः, पण्डितराज जगन्नाथस्य रसगङ्गाधर प्रभृतीनां समावेशो भवति । अस्मिन् ग्रन्थे नाट्यशास्त्रसम्बन्धिनः सर्वेषां ग्रन्थानामुल्लेखो नास्ति, केवलं रससिद्धान्तेन सम्बद्धः कतिपयानां ग्रन्थानामेव नामोल्लेखोऽस्ति । (३) नाट्यशास्त्र-दशरूपकादि कतिपयेषु ग्रन्थेषु केवलं नाट्यशास्त्रस्य तथा रससिद्धान्तस्यैव विवेचनमभवत् । (४) बहुतराः ग्रन्थाः केवलमलङ्कारैरेव सम्बद्धोऽस्ति । तद्यथा—अलङ्कारसारसंग्रहः अलङ्कारसर्वस्वम्, कुवलयानन्दः, चित्रमीमांसाप्रभृतयः । (५) कतिपयेषु काव्यशास्त्रीयग्रन्थेषु साहित्यशास्त्रस्य कस्यापि विशिष्टसिद्धान्तस्यैव, प्रतिपादनमभवत् । यथा ध्वनिसिद्धान्तस्य प्रतिपादकः ग्रन्थः ध्वन्यालोकः, वक्रोक्तिजीवितम्, व्यक्तिविवेकप्रभृतयः । (६) कतिपयेषु ग्रन्थेषु अभिधादि शब्दशक्तीनामेव विवेचनमस्ति । तद्यथा-अभिधावृत्तिमातृका, वृत्तिवार्त्तिकम्, शब्दव्यापारविचारप्रभृतयः । (७) कतिपयं नाट्यशास्त्रं परित्यज्य केवलं रससिद्धान्तस्यैव विवेचनमभवत् ! यथा श‍ृङ्गारतिलकः, रसतरंगिणीप्रभृतयः । (८) कतिपयेषु ग्रन्थेषु केवलं विशिष्टविषयाणामेव निरूपणमस्ति ! यथा रसमञ्जर्याम्, नायकस्य नायिकायाश्च भेदोपभेदानाम् तथा तत्सम्बद्धविषयाणाञ्च विवेचनमस्ति । निर्णयसागरसंस्करणस्य यशस्तिलकस्य, प्रथमभागे तृतीयाश्वासे श्लोकोऽयमायाति—

**'त्रिमूलकं द्विधोत्त्थानं पञ्चशाखं चतुश्छदम् ।**
**योगं वेत्ति नवच्छायं दशभूमिं स काव्यकृत् ॥'** (श्लो०सं० २७४)

त्रिमूलकम् = लोकोवेदोध्यात्मम् (व्यक्तिविवेके सप्तमपृष्ठे टिप्पण्या सह तुलनीयम्) द्विधोत्थानस्य संकेतः शब्दार्थाभ्यां सहैवास्ति । पञ्चशाखस्य निर्देशः—

परुषा-उपनागरिका-ग्राम्यादिभिः वृत्तिभिः सहैवास्ति । चतुश्छदस्य सङ्केतः चतसृभिर्वृत्तिभिः सहैवास्ति । अगम् -वृक्षम्, नवच्छायं = नवरसपूर्णम्, दशभूमिं = दशगुणकमित्याशयः ।

वस्तुतः काव्यकला स्पर्शमणिस्तं संस्पृश्य अयोऽपि चामीकरतां याति; अगन्धोऽपि पदार्थः सौरभयुतो भवति । तत्प्रभावात् विषमपि अमृतायते, अमृतमपि विषायते । सर्वमपि अनिर्वचनीयतां प्रपद्यते । एतादृशी विलक्षणता एतादृशी विस्मयकृत कर्मनिपुणता काव्यकलायामेवावेक्ष्यते । अस्मिन् प्रसङ्गे ध्वन्यालोकस्यैक श्लोकानुसारेण सत्कविः स्वेच्छया चेतनमचेतनमचेतनं चेतनरूपेण प्रस्तौति । तद्यथा—

**भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।**
**व्यवहारयति यथेष्टं सुकविकाव्ये स्वतंत्रतया ॥**

(ध्व०लो० पृ० २७८)

अग्निपुराणानुसारेण कविः विरलोभवति, तस्मिन्नपि शक्तियुक्तः कविः दुर्लभो भवति । तद्यथा—

**नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥**

(अग्नि०पु० अ० ३३७, ३-४)

## काव्य-प्रयोजनम्

काव्यमेका कलाऽस्ति । कविः यां कलां शरणं प्रपद्य शब्दार्थौ हि सुधामयौकृत्वाऽवतारयितुं प्रभवति कलाकलितौ भूत्वा च शब्दार्थौ तौ संसारे विचित्र विचित्रा घटनाः घटयितुं समर्थौ बोभूतः । कवेर्वाणीं तां निशम्य शूराः समराङ्गणे प्राणानपि सहर्षं जुह्वति । कृपणाः अपि तां श्रुत्वा दातारो जायन्ते; जनाः राष्ट्रं स्वं रक्षितुं स्वधर्म पातुं बद्धपरिकरः जायन्ते । किं बहुना संसारे असम्भाव्या अपि घटनाः सम्भाव्यास्तदा भवन्ति यदा कविः स्वकीयां कवित्वमयीं गिरां प्रयुनक्ति । तद्गिरया जनेषु अन्यायनिरोधनाय अपारं बलं समुत्पद्यते; सर्वमेव करुणायाः सरित्तथा प्रवहमाना भवति यत् सा तानपि जनान् परिप्लावयति ये कदापि एकमपि वाष्पविन्दुं मुञ्चन्तो न दृष्टाः पुरा बभूवुः, संयमिनां कृतब्रह्मचर्याभिमानानामपि चेतांसि विकृतानि भवन्ति । एतद्विधां विचित्रां दशां नयन्तीं कविगिरां प्राप्यैव तामधिकृत्य सुधिय एवं स्तुवन्ति—

**अपारे काव्य संसारे कविरेव प्रजापतिः ।**
**यथास्मै रोचते विश्वं तथेदं परिवर्त्तते ॥**

यथा कवेर्वाणी एवंविधं लोकोत्तरं बलमश्नुते सैव 'काव्यकला' इति कथ्यते बुधैः । एतासु पञ्चविधास्वपि ललितासु कलासु काव्यकला सा कलास्ति या चतस्रोऽपि स्वेतराकलाः सर्वथा जयति । तस्मात् काव्यकला कलासूत्तमा कला । सा कलानां साम्राज्ञी । सा स्वगुणैः स्वविशिष्टताभिः स्वोत्कर्षैश्च विजयिभिः सर्वा कलाः

अधरीकृत्य जरीजृम्भते । सा सर्वासामपि कलानां शिरांसि नमयन्ती श्रेष्ठमुन्नततममासनमधिकरोति। अत्रेदमिदानीं विमर्शनीयत्वेनापतितमास्ते यत् एवं विधस्य काव्यस्य किं प्रयोजनम् ? किञ्चोद्देश्यम् सौन्दर्यानन्दप्रदानाय भवति । काव्यशास्त्रीयाचार्याः प्रारम्भकालादेव प्रयोजनमिदं स्वीचक्रुः नाट्यशास्त्रानुसारेण भरतमुनिना नाट्यकलायाः प्रचारः कृतोऽस्ति ।

**'क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ।'**

(ना०शा० १.११, तथा ११६-११७)

**'वेदविद्येतिहासानामाख्यानपरिकल्पनम् ।**
**विनोदजननं लोके नाट्यमेतद्भविष्यति ॥'**

(ना०शा० भागः-१, पृ०९ एवं ४५.१,१११,१४३)

तथापि प्रीतिरेव प्रधानं—**प्राधान्येनानन्द एवोक्तः ।**　(लोचने पृ०१४)

तथा च—

**प्रीत्यात्मा च रसस्तदेवनाट्यं नाट्य एव च वेद इत्यस्मदुपाध्यायः ।**

(लोचनः पृ० ११४)

सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम् ।　(काव्य प्र० १)

**सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्त्तते ।**
**शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥**

इत्यभियुक्तोक्तदिशा प्रेक्षावतः प्रवृत्तिसिद्धये ग्रन्थादौ सम्बन्धः सप्रयोजनो वक्तव्यः । अतः काव्यप्रकाशस्य काव्याङ्गतया, काव्यफलैरेव फलवत्त्वम्, अतः काव्यफलान्याह—

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासम्मित तयोपदेशयुजे ॥**

तत्र यशः, अर्थः, अनर्थनिवृत्तिश्च मुख्यतया कवेरेव, व्यवहारज्ञानोपदेशयोगौ सहृदयस्यैव, कवेस्तयोः सिद्धत्वात् । परनिवृत्तिरपि सहृदयस्यैव रसास्वादनकाले कवेरपि सहृदयान्तः पतित्वात् । तदुक्तं प्रदीपे—**'काव्यास्वादन काले, कवेरपि सदृश्यान्तःपातितया रसास्वादः ।'** इति ।

तथा च काव्यं कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनाधनम्, आदित्यादेर्मयूरादीनामिवानर्थनिवारणञ्च करोति । सहृदयस्य तु काव्यश्रवण-समनन्तरमेव सकलप्रयोजनमौलिभूतं स्थायिभावास्वादनसमुद्भूतं वेद्यान्तरसम्पर्कशून्यं रसास्वादनरूपमानन्दं करोति यथा । चोक्तं साहित्यदर्पणे—

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ॥**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥**

**लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।**
**स्वाकारवदभिन्नत्वे नायमास्वाद्यते रसः ॥ इति ।** (सा०द०३।२३)

राजादिगतपृथ्वीपालनादिसमुचितादिरपरिज्ञानम्, रामादिवत् वर्त्तितव्यं न रावणादिवत्, इति उपदेशश्च निर्मिमीते । तद्यपि कवेरिव सहृदयस्याऽपि यशोऽर्थमनर्थनिवारणं च करोति काव्यम्, किन्तु मुख्यरूपेण कवेरेव तस्यैव कृतित्वात् साक्षात्सम्बन्धादिति भावः । अतएव वृत्तौ—'**यथायोगं कवेः सहृदयस्य च करोतीति प्रतिपादितम् ।**'

न चोपदेशाय वेदाः पुराणानि च सन्ति तर्हि तदर्थं काव्यस्य उपयोग इति वाच्यम् । उपदेशस्य शब्दव्यापाररूपत्वात् । शब्दस्तु त्रिविधः—प्रभुसम्मितः, सुहृत् सम्मितः, कान्तासम्मितश्चेति । तत्र शब्दप्रधानो वेदः प्रभुसम्मितमुपदिशति । अर्थप्रधानत्वं चेतिहासपुराणादीनाम् । ते हि सुहृत्सम्मिता अर्थतात्पर्यवन्तः 'एवं कृते, इष्टमिष्टं भवति, एवं कृते, इदमनिष्टं भवति । इत्येतावन्मात्रं बोधयति न तु कार्ये नियोजयति । रसप्रधानश्च काव्यलक्षणः शब्दार्थोभाभ्यां विलक्षणः कान्तासम्मितमुपदेशं करोति सरसतापादानेन सम्मुखीकृत्योपदेशं ग्राहयति । अतः काव्यं कान्तासम्मिततया युक्तोपदेशाय भवतीति सप्रयोजनता तस्य । यदाहुः—

**स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते ।**
**प्रथमालीढमधवः पिबन्ति कटुभेषजम् ॥ इति ।**
**एवं काव्यस्य सप्रयोजनत्वं स्पष्टमेवास्ति ।**

काव्यशास्त्रीयग्रन्थेष्वेतदतिरिक्तोऽपि नानाकाव्यप्रयोजनानां निरूपणमस्ति । नाट्यशास्त्रानुसारेण दुःखिनां चिन्ताग्रस्तजनानां मनसे नाट्यः सुखदानुभूतिं प्रददाति ।

**दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम् ।**
**विश्रामजननं लोके नाट्यमेतद् भविष्यति ॥**
(ना०शा० १.११९-१२)



भामहस्य मते—

**धमार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।**
**प्रीतिं करोतु कीर्त्तिश्च साधुकाव्यनिबन्धनम् ॥**

भोजरचितसरस्वतीकण्ठाभरणे—

**निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।**
**रसान्विते कविः कुर्वन् कीर्त्तिं प्रीतिञ्च विन्दति ॥** (१.२)

वामनमतानुसारेण—

**'काव्यं सद्दृष्टादृष्टार्थं प्रीतिकीर्त्तिहेतुत्वात् ।'**
(का०ल०सू० १.१.५)

धनञ्जयस्तु काव्यस्य प्रयोजकत्वेन पुरुषार्थज्ञानमथवा व्युत्पत्तिभंतृन् भामहादि-जनानुपहासास्पदं मन्यते । (दशरूपके १.६) मम्मटस्तुकाव्यश्रवणानन्तरमेवसकल-प्रयोजनेषूत्तमं स्थायिभावास्वादनसमुद्भूतं वेद्यान्तरसंपर्कशून्यं रसास्वादरूपमानन्दं राजादि-गत पृथिवीपालनादि समुचिताचारपरिज्ञानं रामादिवद्वर्त्तनमिष्टसाधनं न तु रावणादिव-दित्युपदेशं निर्मिमीते ।' अनेन कथनेन जीवनोपरि संवृत्प्रभावं प्रति संकेतितः । हेमचन्द्रस्य मते—एतेषु प्रयोजनत्रयमेव ग्राह्यम्—'**काव्यमानन्दाय यशसे कान्ता-तुल्यतयोपदेशाय**' अन्येषां प्रयोजनानामुपलब्धिस्तु अन्यैः साधनैरपि भवितुमर्हति । रुद्रटोऽपि काव्यालङ्कारे (पृ० १.४, ८.११) '**ननु काव्येन क्रियते सरसानामव-गमश्चतुर्वर्गे । लघुमृदु च नीरसेभ्यस्ते हि व्यस्यन्ति शास्त्रेभ्यः ।**' काव्यस्य प्रयोजनं तु प्रत्यक्षरूपेण धर्मनीतिदर्शनादीनामुपदेशाय नास्ति, अपि त्वप्रत्यक्षरूपेण तेषां संकेतायैव भवति । यथा मम्मटेनोक्तम्—'**कान्तेव रसतापादानेनाभिमुखीकृत्य-रामादिवद्वर्त्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदस्य च करोतीति सर्वथा तत्र यतनीयम्** ॥ (काव्य० प्र० १, पृ० ७) काव्यशास्त्रसम्बन्धिष्वधिकांश ग्रन्थेष्वेतेषां विचाराणां प्रतिध्वनिरिव मिलति । रूपगोस्वामिनः उज्ज्वलनीलमणौ पञ्च पञ्चाशत्पृष्ठे उद्धृतस्य भागवतस्य निम्नलिखित श्लोकोऽपि द्रष्टव्यमस्ति—

**वर्त्तितव्यं शमिच्छद्भिर्भक्तवन्न तु कृष्णवत् ।**
**इत्येवं भक्तिशास्त्राणां तात्पर्यस्य विनिर्णयः ॥**
**रामादिवद्वर्त्तितव्यं न क्वचिद्रावणादिवत् ॥**

भामह-वामनादिभिः प्रयुक्त प्रयोजनान्तर्गते प्रीतिशब्दस्य व्याख्या कविना सहापि कर्त्तुं शक्यते । कलात्मककाव्यसृजने कविमप्यनुपमानन्दस्यानुभूतिमवाप्नोति । मम्मटस्य 'सद्यः परनिर्वृत्तये' शब्दः अर्थात् परमानन्दस्यानुभूतेरप्यधिकमस्ति । अश्वघोष-वत्प्रारम्भिकलेखकेनाऽपि कथितम्—

**यन्मोक्षात् कृतमन्यदत्र हि मयातत्काव्यधर्मात्कृतम् ।**
**पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथंस्यादिति ॥**

(सौ०न० २८।६३)

मोक्षार्थगर्भा एषाकृतिः व्युपशान्तये न तु रतये कृतमस्ति । अन्यमनसां श्रोतॄणां ग्रहणार्थं काव्योपचारात् कृता, अत्र मोक्षात् अन्यत् यत् काव्यधर्मात् मया कृतं तत्कथमिति मधुयुतं तिक्तमौषधमिव पातुं हृद्यं स्यात् । अनेन कथनेनाऽपि काव्यस्य प्रयोजनं स्पष्टं भवति ।

### काव्यस्योद्भवे हेतुः

विश्वस्य मङ्गलं सम्पादयितुं कविः प्रयतते । अतएव कवेर्वाणीं तद्गतञ्च माधुर्यं निपीय यादृशमानन्दं जनाः विन्दन्ति न तादृशमन्ये । मानवीय जीवनोद्देशस्य जीवनोपायानां च प्रदर्शनं तेषामिष्टं भवति न च वैदुष्यस्य सम्प्रतिष्ठापनं तेषां प्रियम् । काव्येषु मानवमनोवृत्ते रागपक्ष एवाभिव्यज्यते । काव्यानुभूतिस्तु रागपक्षे । यत्र तस्मात्

तद्धरास रागपक्ष एव । काव्यं वस्तुतोऽभिव्यक्त्यनुभूत्योः प्रक्रियात्वेन गतम् । उभयोरप्येतयो प्रभावेण काव्य-पाठकयोर्मध्ये एकत्वस्य प्रतिष्ठापना सञ्जायते । इदमेकत्वमेव 'रसात्मकता' भवति । यावत् काव्यं सचेत समेतां कोटिं न प्रापयितुं शक्नोति तावत्तत्काव्यं वस्तुतः काव्यत्वं नोपैति । रसात्मकबोधाय काव्ये सौन्दर्यं तत्वस्यासीन ताभिलष्यते । तत्रैव तद्भावभूमेः अधिष्ठिततत्वात् । तद्भावे व्यंग्यं न काव्यं तत्तु शब्दाऽन्तरमेव । काव्यकलामार्गस्य दुर्गमत्वादेव कवित्वपदलाभः परम-कठिनः । अतएव कवेर्वाणीं तद्गतञ्च माधुर्यं निपीय यादृशमानन्दं रसिका विन्दन्ति न तादृशमन्ये । सत्यस्य प्रकाशनं न कठिनं न च परुष वचः प्रयोगोऽपि कठिनः कठिनं तु अस्ति सत्यस्य सुन्दरतया मधुरतया विलक्षणतया च आविर्भावनम् । अत एव कविकर्म परमगहनम् । कवेः काव्ये सत्यं शिवं सुन्दरञ्च भवद्दृष्टं भवतीत्येतत् एव वैशिष्टं काव्यं वाङ्मये मूर्द्धन्यस्थानाधिष्ठितं विदधति । एवंविधस्य काव्यस्य लोकोत्तरत्वादेवाचार्य आनन्दवर्द्धनस्तस्य प्रशंसायामेव माह—

**'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥'**

तस्मादेतादृशस्य मार्गस्यानुसरणं स्वीकरणं वातस्यापेक्षितं जायते येन सर्वे प्रयातुं प्रभवेयुः ।

एवंविधस्य लोकोत्तरवर्णानानिपुणकविकर्मकाव्यत्वस्य काव्यस्य च निर्माणे समुल्लासे च बहुशः काव्यशास्त्रीयग्रन्थकर्त्तारः प्रतिभाव्युत्पत्ति अभ्यासश्चेत्येतत्त्रितयं हेतुः मन्यन्ते ।

**नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम् ।**
**अमन्दश्चाभियोगोस्याः कारणं काव्यसंपदः ॥**

(काव्या० १.१०३)

भामहेनोक्तम्—

**काव्यं तु जायते जातु कस्यचित्प्रतिभावतः ।**
**शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनाम् ।**
**विलोक्यान्य निबन्धांश्च कार्यः काव्यक्रियादरः ॥**

(का०ल० १.५ तथा १०)

रुद्रटोऽपि—

**त्रितयमिदं व्याप्रियते शक्तिव्युत्पत्तिरभ्यासः ॥**

(का०ल० १.१४)

मम्मटभट्टेनाऽपि चोक्तम्—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाऽभ्यास इतिहेतुस्तदुद्भवे ॥**

(का०प्र० १.३)

शक्नोति पुमान् काव्यनिर्माणायास्वादाऽनुभवाय चानयेतिशक्तिः कवित्वबीजरूपः, संस्कारविशेषः, प्रतिभाऽपरपर्याया; यां विना काव्यं न प्रसरेत् प्रसृतं वोपहसनीयं स्यात् ।

यदुक्तं वाग्भटेन—

**प्रतिभाकारणं तत्र व्युत्पत्तिस्तु विभूषणम् ।**
**भृशोत्पत्तिकृदभ्यास इत्यादिकविसङ्कथा ॥ इति ।**

वाग्भटालङ्कारः १३ तथालङ्कारशेखरे चतुर्थपृष्ठेऽपि द्रष्टव्यमस्ति ।

अपि च—

एवं विशिष्टं काव्यं, अतस्तद्धेतुरुपादेयः । नन्वेवमपि अभिधेये किमायातम् ? किञ्च हेतुमज्ञात्वा तदुपादानं कथं स्यादिति अपेक्षायां काव्यशिक्षारूपतया काव्याङ्गत्वं ग्रन्थस्य प्रतिपादयन्नेवकारणान्तरमप्याह—शक्तिर्निपुणतेति । शक्तिः कवित्वबीजभूतो देवताप्रसादादिजन्मासंस्कारविशेषः प्रतिभाव्यपदेश्यः । तथा च निपुणता = व्युत्पत्तिः, लोकव्यवहारशास्त्रादिज्ञानजन्मेति भावः । तथाहि—लोकशास्त्रकाव्याद्यवेक्षणात् निपुणता लोकस्य = स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणाम् = छन्दोव्याकरणकोशकलागज-तुरगखड्गादिलक्षणग्रन्थानां तथा काव्यानां महाकविसम्बन्धिनां वाल्मीकिकालिदास-प्रभृतीनां च, अवेक्षणात् = विमर्शनात्, मुहुर्मुहुस्तत्तत्पदार्थरसादिगोचरानुसन्धानादि-त्यर्थः । व्युत्पत्तिश्च तत्तदर्थ्यरसादिगोचरो दृढ़तरः संस्कार एवेति भावः ॥

किञ्च काव्यज्ञशिक्षयाऽभ्यासः—काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे = काव्यनिष्पादने, योजने पदानामावापोद्वापे च पौनःपुण्येन प्रवृत्तिः । इति त्रयः समुदिताः = मिलिताः नतु व्यस्ताः तस्य काव्यस्य निर्माणे = रचनायाम्, समुल्लासे = उत्कृष्टतायां च हेतुर्न तु हेतवः ।

अयं भावः—शक्तिनिपुणाताऽभ्यासा इति त्रयोऽपि मिलिता एव दण्डचक्रादि-न्यायेन काव्यनिर्माणं प्रति हेतुः, न तु व्यस्ता, तृणारणिमहिणान्यायेन प्रत्येकं हेतवः । एतच्च हेतुरित्येकवचनोपादानादेव लभ्यते । यथा—जात्याकृतिव्यक्तयः पदार्थः, इति-गौतमसूत्रे 'पदार्थः' इत्येकवचनोपादानेन त्रिष्वेत्र यथाशक्त्यत्वं न तु प्रत्येकम्, तद्वदत्रापि परस्परसापेक्षत्वेनैव कारणता । अत एव इति हेतुस्तदुद्भवे' इति शब्दोऽपि चरितार्थः । सच मिलितोपस्थापनाय, अन्यथा तद्वैयर्थ्यं स्पष्टमेव ।

कतिपयानामन्यग्रन्थकर्तृणां मते प्रतिभैव मात्रैकः गुणः श्रेष्ठकवेर्भवति । राज-शेखरेणोक्तम् —'सा शक्तिः केवलं काव्ये हेतुरिति यायावरीयः ।' (का०मी० ६.११)

वाग्भटोऽपि—

**प्रतिभैव च कवीनां काव्यकरणकारणम् ॥**
**व्युत्पत्यभ्यासौ तस्या एव संस्कारकारकौ न तु काव्यहेतू ।**

(अलङ्कारतिलके द्वितीयपृष्ठे)

पण्डितराज जगन्नाथोऽपि—तस्य कारणं कविगता केवला प्रतिभा ।' (रसगङ्गाधरस्याष्टम पृष्ठे) प्रतिभा एवंविधा शक्तिरस्ति यया शक्त्या कविं काव्यविषये रमणीयताया बोधोभवति तत्र चमत्कारत्वापरपर्यायेण लोकोत्तरत्वजात्यावच्छिन्ने परिचितेऽर्थात् विशिष्टे लोकोत्तरानन्दे पुनः पुनः अनुसन्धानरूपो धारावाहिकः, भावनाविशेषः शाब्दबोधात्मिकोऽनुभव एव कारणमस्ति । सारांशोऽयं ज्ञातव्यः यत् यदा वयं कमपि काव्यवाक्यं शृणुमः तदा शक्तिः अर्थात् स्मरणादि या शब्दबोधस्य सामग्री मतस्दनुसारं प्रथमं वाच्यार्थबोधो भवति, यत् सहृदयेभ्यो रोचते, अतः सहृदयाः बारम्बारं तद्बोधाय यतन्ते, यत् प्रयोजनाय पुनः पुनः तच्छब्दान् पठन्ति । अनेन प्रकारेण प्रस्तुता सा बोधधारा सहृदयानामात्मनि पूर्वोक्तं लोकोत्तरानन्दं समुत्पादयति । तत्र व्यङ्ग्योऽर्थः न तिष्ठति, तत्र विलक्षणस्य वाच्यार्थस्य तादृशीभावना एवानन्दसृष्टिं करोति । कविस्तु भविष्यद्रष्टा-सिद्धपुरुषो भवति । सः स्वकीयादभुद्दृष्ट्याऽदृष्टपूर्वाणि वस्तून्यपि स्पष्टरूपेणैव पश्यति । सहैव नैजानुभूतानि रमणीयाणिवस्तून्यपि भाषायाः माध्यमेन वर्णनं कृत्वा सामान्य जनेभ्यः ग्राह्यं करोति । प्रतिभायाः निम्नपरिभाषया स्पष्टो भवति—**'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभामताः......वर्णानानिपुणः कविः।'** (भट्टतौतकृत काव्यकौतुकस्यैकविंशतितमे पृष्ठे द्रष्टव्य) एवमेव लोचनस्य चतुस्त्रिंशत् पृष्ठे तथा शताधिकचतुःषष्टितमे पृष्ठेऽपि द्रष्टव्यः—

**'प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा तस्याविशेषो रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वम्',**

तथा—**'शक्तिः प्रतिभानं वर्णनीयवस्तुविषयनूतनोल्लेखशालित्वम् ।**

एवम्— **'अपारे काव्यसंसारे कविरेव प्रजापतिः ।**
**यथास्मै रोचते विश्वं तथेदं परिवर्त्तते ॥'**

(ध०लो० पृ०२७८)

तथा—

**'प्रसन्ना पदमव्यार्थयुक्त्युद्बोधविधायिनी ।**
**स्फुरन्ती सत्कवेर्बुद्धि प्रतिभासर्वतोमुखी ॥**

(वाग्भटालङ्कारः १.४)

वामनेनाऽपि लिखितम्—**'कवित्वबीजं प्रतिभानम्'**-॥ १-३-१६ वृत्तौ

रुद्रटोऽपि १.१५.१६ पृष्ठे एवमेव लिखितम् । ध्वन्यालोकस्य प्राकृतोऽयं श्लोकोऽपि द्रष्टव्यः—

**अतहछिए नितछसंहिएव्व हिय अम्मि आ णिवेसेः ।**
**अत्य विक्षेसे सा जअइ विकऽकवि गोअरा वाणी ॥**

अस्यैव छाया संस्कृतभाषायाम्—

**अतथास्थितानपि तथा संस्थितानिव हृदये निवेशयति ।**

**अर्थविशेषान् सा जयति विकट विगोचरा वाणी ॥**

अस्यायं भावः—यत् वाणी प्रसादादेव कविगोचरो वर्णानीयार्थो विकटो निःसीमा संपद्यते । राजशेखरभट्टतोतौ च कविप्रतिभायाः द्विविधशक्तीनां वर्णनं कृतवन्तौ स्तः । एकेन सः सौन्दर्यसम्पन्नवस्तूनां साक्षात्कारं विदधत्यपरेणा च स्वसौन्दर्यानुभूतिं पाठकेभ्यः उपयुक्तभाषया ग्राह्यं करोति ।

संस्कृतरूपकं स्वप्रकृत्या प्रवृत्या च भाषान्तर रूपकेभ्यो भिन्नम् । तत् स्वजन्मतः एवादर्शवादि । प्रख्यातवंशानां राजर्षीणां वा धीरोदात्तप्रतावतां मानवानां चारु चरितानि चरित्राणि चाभिनीय विविधव्यापाराणां घटनाञ्च सजीवं चित्रणं विधाय तत्तत्पदार्थानां जीवनवीक्षाविधायास्तत्तद्वस्तूनां धर्मस्य च समुन्मोषणं न केवलं तस्योद्देश्यं, श्रव्यकाव्यमिव सामाजिकानां मनसि स्थितानां स्थायिभावानां रसात्मके तत्त्वे परिणमनं तदीयं प्रधानतमं लक्ष्यम् । अन्वितित्रिकालपेक्षत्वात् तदवैशिकेभ्यो रूपकेभ्यः स्वकीयामवतितरगामिनी विशिष्टतां जुषते । संस्कृतरूपकस्येष्टो रसोऽतस्तत्साधनायै तत्रान्येषां तत्वानां समावेशोविधीयते **'अवस्थानुकृतिर्नाट्यम्'** इति मन्वानेवाऽपि संस्कृतनाटककारेण कथावस्तु चरित्रचित्रणादिषु तत्त्वेषु न गौरवधीराधीयते । रसोद्रेकदिशायां संस्कृतालोचकेषु नितरामभिनिवेशोऽवाप्यते । **'काव्यानन्दोऽप्यभिनीयमानात् रसादेव समुत्पद्यते'** इत्येतदभिनवगुप्तस्य गुरोर्भट्टतौतस्य वच इह समुज्ज्वलं प्रमाणं जागर्त्ति भरतमुनिस्तु स्पष्टमेवाचष्टे—

**'नहि रसात् ऋते कश्चिदप्यनर्थः प्रवर्त्तते ।'**

भरतकृत नाट्यशास्त्रस्यानुशीलनमिदमेव सत्यमस्मत्पुरतः प्रस्तवीति—

**'एतद्रसेषु भावेषु सर्वकर्मक्रियासु च ।**
**सर्वोपदेशजननं नाट्यमेतत् भविष्यति ।।'** (भरतनाट्यशास्त्रम्)

संस्कृतनाटककारोऽसत्यस्यान्यायस्य वाऽभ्युदयं दर्शयित्वाऽपि नान्ततस्तस्यैव सत्तां समुपस्थापयति स तु अन्ते सत्यैव नायस्यैव लब्ध विजयमभ्युदयं प्रदर्शयति ॥

**अवस्था या तु लोकस्य सुखदुःख समुद्भवाः**
**नानापुरुषसञ्चारा नाटके सम्भवेदिहः ।**
**सर्वभावैः सर्वरसैः सर्वकामप्रवृत्तिभिः**
**नानावस्थान्तरोपेतं नाटकं संविधीयते ॥**

(भरतनाट्यशास्त्रम्)

संस्कृतनाटकानि प्रायशः सुखान्तान्येव भवन्ति । संस्कृतकवीनां प्रमुखभावः 'आनन्दः'—एवास्ति । अस्यानन्दस्याभिव्यक्तिः पुरुषस्त्रीणां तैः पारस्परिकैः सामान्यसम्बन्धाऽवेगानुरक्तिपक्षपातादिभिरेव माध्यमेन कृताः । तेषां मते 'प्रतिभा' एवं विधा बौद्धिकशक्तिरस्ति यया शक्त्या नवनवोन्मेषशालिनां विचारणां प्रादुर्भावो भवति । एभिरेव विचारैः वर्ण्य वस्तूनामभिनवचित्रणो भवति । रसास्वादेन सहजीवनादर्शानां समन्वयार्थं काव्यशास्त्रस्य निरूढधारणायाः पाश्चात्यालोकेन Mathew Arnold

महोदयेनाऽपि सम्पुष्टि कृता । अस्मिन् सन्दर्भे तस्योक्तिरियं स्मरणीयमस्ति—

"It is important, therefore, to hold fast to this, that poetry is at bottom a criticism of life; that the greatness of a poet lies in his powerful and beautiful application of ideas to life - to the question : How to live. Morals are often treated in an arrow and false fashion; they are bound up with systems of thought and belief which have had their days; they are fallen into hands of pedants and professional dealers; they grow tiresome to some of us. We find attraction, at times, even in poetry of revolt against them; in a poetry which might take up for its motto Omar Khayyam's words : 'Let us make up in the tavern for the time we have wasted in the mosque, or we find attractions in a poetry in different to them; in a poetry where the contents may be what they will, but where the form is studied and exausitie. We delude ourselves in either case; and the best cure for our delusion is to let our minds rest upon the great and inexhaustible word-life, until we learn to enter into its meaning. A poetry of revolt against moral ideas is a poetry of revolt against life; a poetry of indifferent towards moral idea is a poetry indifference towards life". (Essays in Criticism).

प्रतिभा (प्रतिभानः) अथवा शक्तिशब्दस्य व्याख्यार्थं प्रज्ञाशब्दस्य प्रयोगो भवति स्मृतिः, मतिस्तथा प्रज्ञायाः पारस्परिकान्तरमनेन प्रकारेण प्रदर्शितमस्ति—'त्रिधा च सा (बुद्धिः) स्मृतिः मतिः प्रज्ञेति । अतिक्रान्तस्यार्थस्य स्मर्त्री स्मृतिः, वर्तमानस्य मंत्री गतिः, अनागतस्य प्रज्ञात्री प्रज्ञा सा त्रिप्रकाराऽपि कवीनामुपकर्त्री । (का०मी० पृ० १०) त्रिवेन्द्रम-संस्करणस्य काव्यप्रकाशस्य सम्प्रदायप्रकाशिनी टीकायां श्लोकोऽयं समागतः—

**'स्मृतिर्व्यतीतविषया मतिरागाभिगोचराः ।**
**बुद्धिस्तत्कालिकी ज्ञेया प्रज्ञात्रैकालिकी मता ॥'** (पृ० १३)

I.A. Richards' Principles of Literary criticism' नामकस्य ग्रन्थानुसारेण— "the breath and finer spirit of knowledge". Richards approaches the study of poetry from two points. He uses tools provided by modern psychology to find out how poetry affects readers and what goes on in the poem. In short he tries to find out what poetry is and why it is valuable.

रुद्रटेणाऽपि प्रतिभायाः भेदत्रयं कृतम्—सहजा एवं उत्पाद्येति । हेमचन्द्रोऽपि-स्वकाव्यानुशासने (पृ ४.५) उत्पाद्या तथा औपाधिकी भेदद्वयं मन्यते । दण्डीप्रभृति प्राचीनग्रन्थकाराणां मते कविगता प्रतिभा नैसर्गिकी भवति—**'नैसर्गिकी च प्रतिभा'** (पृ० ३.४८) ।

रुद्रट (१.१६) तथा हेमचन्द्रादीनां (पृ०४) ग्रन्थकाराणां मते व्युत्पत्या एवमभ्यासेन प्रतिभासमुज्ज्वला भवति । ध्वन्यालोकस्य श्लोकोऽयं द्रष्टव्यः—

**अव्युत्पत्तिकृतो दोषः शक्त्या संह्रियते कवेः ।**
**यस्त्वशक्तिकृतो दोषः स झटित्यवभासते ॥**

अनेन सिद्धोभवति यत् व्युत्पत्त्याभावे समुत्पन्नदोषान् कविः स्वप्रतिभया गोपितुं शक्यते । किञ्च प्रतिभायाः अभावे व्युत्पत्तिजन्यदोषान् गूहितुं शक्तो न भवति । यतो हि लोचने—'शक्तिः प्रतिभानम्, वर्णानीयवस्तुविषयनूतनोल्लेखशालित्वम् । व्युत्पत्तिस्तदुपयोगि-समस्तवस्तु-पौर्वापर्य-परामर्श-कौशलम् ।'

नाट्यस्य काव्यस्य च सर्वप्रथम प्रयोजक-विचारकः भरतमुनिनोक्तः ।

**वेदविद्येतिहासानामाख्यानपरिकल्पनम् ।**
**विनोदजननं लोके मायामेतद्भविष्यति ॥'**

अन्यच्चाऽपि—

**दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम् ।**
**विश्रामजननं लोके नाट्यमेतद् भविष्यति ॥** (नाट्यशास्त्र)

भरतमुनिना प्रतिपादितमिदं प्रयोजनमेव सर्वप्रथमालङ्कारिकाचार्यस्य भामहस्य दृष्ट्यां काव्यस्य प्रयोजनरूपेणैवावगतम् । भामहमतानुसारेण काव्यस्य प्रयोजनमिदमस्ति—

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।**
**करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिबन्धनम् ॥** (काव्यालङ्कारः १.२)

आधुनिक-काव्यालोचनायां स्पष्टतः कस्याः अपि कवितायास्तस्याः रचयितृणां व्यक्तित्वस्यैव विश्लेषणं मान्यो भवति । सर्वाधिकप्राचीनालंङ्कारिकभामहस्तु कवितायाः समुद्भवे कवेर्व्यक्तित्वस्य यद्रहस्यमवलोकितस्तत्तु—

**काव्यं तु जायते जातु कस्यचित्प्रतिभावतः ।**
**शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनम् ।**
**विलोक्यान्य निबन्धांश्च कार्यः काव्यक्रियादरः ॥**

(काव्यालङ्कारः १.५)

भामहस्यास्मिन् काव्यहेतु-विवेकेऽपि काव्यस्योत्पत्तिः प्रतिभायामेव परिगुम्फिता प्रदर्शिताऽस्ति । इदमेव चिन्तनमाचार्यदण्डिनः सम्बन्धेऽपि प्रतीतो भवति । यतो हि तस्यापि कथनं तत्तुल्यमेवास्ति—

**नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम् ।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥**

(काव्यादर्शः१.१०३)

भामहस्य मतानुसारेण काव्ये तथा काव्यप्रतिभायां कार्य-कारणभावः स्पष्टतया प्रतीतो भवति किञ्च दण्डिनमतानुसारेण काव्यस्य हेतुतत्त्वेषु प्रतिभया सह व्युत्पत्ते-स्तथा अभ्यासस्यापि स्थानमस्ति । यद्यपि भामहेनाऽपि व्युतपत्तेरभ्यासस्य च निर्देशः कृतोऽस्ति । किन्त्वस्य निर्देशस्यापरोऽप्यभिप्रायोस्ति, तत्तु तदभिप्रायस्तु समसामयिक-रचनाकारेषु काव्यरचनादृष्ट्या विशेषप्रकारस्य व्युत्पत्तेस्तासु रचनासु 'आधावम्' तथा तां काव्यक्रियाम्प्रति उद्योगशीलता । अनया रीत्या चिन्तनेन स्पष्टोभवति यत्काव्यसृष्टिं प्रति भामहस्य रहस्यभावनायाः तथा दण्डिनो विश्लेषणदृष्टेः स्वः स्व अर्थोऽस्ति । यदि भामहोपरि भारतीयदर्शनास्यादर्शभावनायाः प्रभावोऽस्ति, तर्हि दण्डिनश्चोपरि यथार्थ-भावनायाः प्रभावः परिलक्ष्यते । आलङ्कारिकाणामेकः प्रबलः पक्षः भामहस्य पक्षधरोऽस्ति तदापरः पक्षः दण्डिनो विचारस्य पक्षधरोऽस्ति । यदि प्रतिभा एव काव्यस्य जननी भवति, तर्हि काव्यस्य रहस्यं स्व-संवेदनसिद्धो भवितुमर्हति, किञ्च तद्रहस्यं सर्वथा विश्लेषणगम्यं भवितुनार्हति । व्युत्पत्तिस्तथाऽभ्यासश्च प्रतिभायाः प्रवाहे वहत्येव । रससिद्धकवीनां कविता सरस्वत्यावतारोऽवगम्यते तथान्य दृष्ट्याऽपि कवि-प्रतिभायाः उन्मेषोऽथवा स्वच्छन्द प्रकाश एवास्ति । भामहस्य—**'काव्यं तु जायते जातु कस्यचित् प्रतिभावतः ।'** मान्यतेयमेव ध्वनितत्त्वदर्शी आनन्दवर्धनाचार्यस्य मान्यताऽस्ति—

**सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम् ।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥**

(ध्वन्यालोके १.६)

आचार्य आनन्दवर्द्धनदृष्टया व्युत्पत्या-अभ्यासेन च कविप्रतिभायाः प्रसारो भवितुं न शक्यते । वस्तुतः प्रतिभा तु अपूर्ववस्तुनिर्माणक्षमा प्रज्ञाऽस्ति, तस्या तदवस्तुतत्त्वं निष्यन्दमाना महतां कवीनां भारती अलोकसामान्यं प्रतिभाविशेषं परिस्फुरन्त-मभिव्यनक्ति ।

आचार्यदण्डिनः काव्यहेतुवादस्तु भामहस्य हेतुवादात् भिन्नोऽस्ति । पूर्वपक्षस्य वादोऽयं प्रतिपक्षोऽस्ति । आचार्यदण्डिनः मतानुसारेण नैसर्गिकप्रतिभया सह निर्मलः श्रुतः अर्थात् बहुज्ञतायाः व्युत्पत्तेश्च तथानन्याभियोगस्य सम्भूय कारणताऽस्य विषयस्य प्रमाणोऽस्ति यत् महाकविरपि केवलं प्रतिभाप्रेरितो भूत्वैव काव्यस्य रचना कर्त्तु समर्थो न भवति । भामहमतेन कवि प्रतिभा एवं केवलं काव्यं रचयितुं समर्था भवति । किञ्च —'इष्टार्थव्यवच्छिन्नपदावली' स्वरूपं काव्यं तु व्युत्पन्नतायाः अभ्यासस्य च साहाय्यं विना भवितुं न शक्यते । आचार्य वामनेन काव्यहेतुतत्त्वस्य निरूपणमनेन प्रकारेण कृतम्—

**लोको विद्याप्रकीर्णञ्चेति काव्याङ्गानि । लोकवृत्तं लोकः ।'शब्दस्मृति-अभिधानकोशच्छन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वा विद्या... लक्ष्यज्ञत्वम-भियोगो वृद्धसेवाऽवेक्षणं प्रतिभानमवधानञ्च प्रकीर्णम् ।'**

(काव्यालङ्कारसूत्रवृत्तिः १३,१.११)

अस्याभिप्रायोऽयमस्ति—लोकानुभवः किम्वालोकनिरीक्षणम्, व्युत्पत्तिस्तथा लक्ष्यज्ञत्वमर्थात् काव्यानुशीलन-काव्यरचनाभ्यास-काव्यज्ञसेवाऽवेक्षण-पदयोजना-कौशल-प्रतिभानाऽवधानानां साधनोपकरणसंग्रहाः यदि भवन्तु तदैव काव्यस्य सिद्धिः सम्भवति। अनेन स्पष्टो भवति यत्प्रतिभानमथवा प्रतिभामेव काव्यत्वस्य बीजं मत्वैव काव्यस्योद्भवे कारणचक्रस्य कल्पनाऽजायत—

**'कवित्वबीजं प्रतिभानम् । कवित्वस्य बीजं कवित्वबीजम् । जन्मान्तर्गतसंस्कारविशेषः कश्चित् । यस्माद्विनाकाव्यं न निष्पद्यते, निष्पन्नं वा हास्यायतनं स्यात् ।'** (काव्यालङ्कारसूत्रवृत्ति १.३.१६)

एवमेव कथनमाचार्य रुद्रटस्य मतेऽपि मान्यं स्यात् यतो हि तदनुसारेण शक्तिः अर्थात् प्रतिभा-व्युत्पत्तिरभ्यासानां त्रितयमेव काव्यक्रियायाः हेतुत्वमस्ति—**'त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः ।'** रुद्रटस्य काव्यालङ्कारः (२.१४) आचार्यभामस्येयमुक्तिं दृष्ट्वाऽनन्दवर्द्धनोऽपि मुग्धो भवति—**'काव्यं तु जायते जातु कस्यचित् प्रतिभावतः ।'** सोऽपि अस्मिन् प्रसङ्गे—

**अव्युत्पत्तिकृतो दोषः शक्त्यासंव्रियते कवेः ।**
**यत्वशक्तिकृतस्तस्य स झगित्यवभासते ॥'**

(ध्वन्यालोकः पृ० ३१६ चौ० सं०)

अनेन कथनेन संकेतो मिलति यत् काव्यरहस्यं तु कवेः प्रतिभायाः रहस्यमस्ति न तु कवेः व्युत्पन्नतायाः, अभ्यासशीलतायाश्चेति । आचार्याभिनवगुप्तस्य काव्यविधा-गुरुश्रीभट्टतौतस्तु कविम् ऋषितुल्यो वदति, यतोहि तस्मिन् प्रतिभायाः निवासोऽस्ति यस्याः प्रतिभायारुन्मेषो वर्णने भवति—

**प्रज्ञानवोन्मेषशालिनी प्रतिभामता । तदनुप्राणनाजीवद्वर्णना निपुणः कविः ॥**

काव्यकौतुक-माणिक्यचन्द्रकृत काव्यप्रकाशसङ्केतोद्धरणात् ।

प्रतिभया वर्णनायारनुप्राणनं काव्योद्भवस्य हेतुरस्ति । वस्तुतः भट्टतौतस्य मतमिदं वार्त्ताभिमामभिलक्षयति यत् कोऽपि कविः व्युत्पत्यभ्यासप्रतिभाबलेनैव कोऽपि काव्यक्रियाकर्त्तुं शक्यते, अन्यथा नैव । अतएव—**'प्रतिभा अपूर्ववस्तु निर्माणक्षमा प्रज्ञाः, तस्या विशेषो रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वम् ।'** (ध्वन्यालोकलोचने, १-६)

कविराज राजशेखरस्यापीयमुक्तिरस्मिन्प्रसङ्गे द्रष्टव्या—**'या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधि हृदयं प्रति- भासयति सा प्रतिभा । अप्रतिभस्य पदार्थसार्थः परोक्ष इव । प्रतिभावतः पुनर- पश्यतोऽपि प्रत्यक्ष इव ।'**

(काव्यमीमांसा चतुर्थोऽध्यायः)

मम्मटदृष्ट्या—**'लोकोत्तरवर्णनानिपुणकविकर्म'** त्विदमेवास्ति । अत्र कवि प्रतिभा अथवा कवित्वशक्तिरेवात्र लोकोत्तरवर्णनाऽस्ति । अस्यैव स्वरूपचिन्तनं भट्टतौतेनाऽपि कृतम्—

**नानृषिः कविरित्युक्तमृषिश्च कविदर्शनात् ।**
**विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम् ।**
**सतत्त्वदर्शनादेवशास्त्रेषु पठितः कविः ।**
**दर्शनाद्वर्णनाच्चाथरूढालोके कविश्रुतः ॥**

तथाहि—'**दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः नोदिता कवितालोके यावज्जाता न वर्णना ॥**' (हेमचन्द्रः काव्यानुशासनोद्धरणात्)

प्रतिभा एकोन्मेषोऽस्ति, सैवोल्लेखोऽप्यस्ति, सहैव दर्शनं वर्णनञ्चाप्यस्ति । काव्ये रस-ध्वनि-तत्त्वस्य द्रष्टारः आचार्याणां प्रतिभा-सम्बद्धधारणा स्वाभ्युपगमे सर्वेषां पाश्चात्यालोकानां कविकल्पना (Poetic Imagination) सम्बद्धचिन्तनमात्मसात्करोति आर० ए० रिचर्ड्स प्रभृतयः आधुनिक पाश्चात्यसमालोचकाः यत्र काव्यात्मक कल्पनायाः रूपषट्कानां विश्लेषणं कृत्वा परिच्छिन्नाः मन्यन्ते तत्रैव प्राचीनाः ध्वनिवादिनः आचार्याः अस्याः अनन्तरूपतायाः चिन्तनमुपासनञ्च कुर्वन्ति । तत्तु पाश्चात्य समालोचकमतेनरुघटकाः—

According to I. A. Richards the word imagination is still being used in six different senses. They are as under—

1. Imagination is the faculty of producing vivid images.

2. The second use of this word is figurative language, namely metaphors, Similes etc.

3. In a narrow sense, imagination reproduces the other people's state of mind.....

4. Imagination fuses together elements which are not ordinarily connected.

5. Imagination brings out a scientific connection in disparate elements. It puts elements.....

6. The six use is the common literary use of the word imagination.

Coleridge Says—"The systematic and magical powers, to which we have exclusively appropriated the name of imagination... ..... reveals itself in the balance.....novelty and freshness with old and familiar objects". also "The sense of musical delight.......with the power of reducing multitude.......one predominant thought or feeling".

ध्वनिवादिनः आचार्याणां मते—

**वाल्मीकिव्यतिरिक्तस्य यद्येकस्याऽपि कस्यचित् ।**

**इष्यते प्रतिभार्थेषु तत्तदानन्त्यमक्षयम् ॥** (ध्वन्यालोके उद्योते. ४)

अयं तु काव्यहेतुतत्त्वस्य मूलभूत प्रतिभातत्त्व विचारोऽभवत् । अस्य प्रतिभातत्त्वस्यैव स्पन्दभूतं काव्यहेतुतत्त्वमिदमस्ति । मम्मटोऽपि काव्य-हेतु-तत्त्वमेनं व्युत्पत्तिः कथ्यते । अलङ्कारवादिनः किम्वा रीतिवादिनः आचार्याः शक्त्यानन्तरं व्युत्पत्तिमेव काव्य-करण-कारणं मन्यन्ते । रीतिवाद्याचार्यः वामनोऽपि व्युत्पत्तेरेव नामान्तरं विद्यां स्वीकृत्य तां काव्याङ्गत्वेन मानयन् स्पष्टयति—

**शब्दस्मृतिअभिधानकोशच्छन्दोविचिति-**
**कलाकामशास्त्रदण्डनीतिपूर्वा विद्याः ।'**
**शब्दस्मृत्यादीनां तत्पूर्वकत्वं पूर्वं**
**काव्यबन्धेष्वपेक्षणीयत्वात् ॥'**

(काव्यालङ्कारसूत्रवृत्ति १.३, ३.१०)

काव्यमीमांसायां प्रतिभायाः कारयित्री-भावयित्री च भेदद्वयमङ्गीकृतम् (पृ० १२. १४) । पृथगेव हि कवित्वाद् भावकत्वं, भावकत्वाच्च कवित्वं स्वरूपभेदात् विषयभेदाच्च ।'—का० मी० (पृ. १४) । काव्यमीमांसायामेव शक्त्या सह व्युत्पत्तेर्भेदं कृतमस्ति तथा शक्तिमेवैकमात्रं काव्यस्य हेतुत्वेन स्वीकृतम्—'**शक्तिकृते प्रतिभा-व्युत्पत्तिकर्मणि । शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते । या 'शब्दग्राममर्थ सार्थ-मलङ्कारतत्रमुक्तिमार्गमन्यदपि तथाविधमधि हृदयं प्रतिभासयति सा प्रतिभा । अप्रतिभस्य पदार्थसार्थः परोक्ष इव । प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव ।'** (का०मी० पृ०११ द्रष्टव्यम्)

रुद्रटोऽपि—'**मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्याक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः** । (१.१५) ।

अस्ति शक्तिस्तस्य तत्त्वस्य नाम येन शान्तमनसि नव-नववर्ण्यविषयाणां तथा शब्दानांञ्च विस्फुरणं भवति ।

लोकवेदनस्य विद्यापरिज्ञानस्य च यद्यपि प्रतिभया भिन्ना स्वतन्त्रसत्ताऽस्ति तथापि तौ प्रतिभायाः उपकारकौ स्तः । अत्र रुद्रटस्याभिमतं द्रष्टव्यम्—

**छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् ।**
**युक्तायुक्तविवेकोव्युत्पत्तिरियं समासेन ॥** (काव्यालङ्कार १.१८)

रुद्रटस्तु वामनस्य 'लोकवृत्तवेदनम्' तथा 'विद्यापरिज्ञानम्' किम्वा लक्ष्यज्ञान-वृद्धसेवन-अवेक्षण-अवधानादीन् व्युत्पत्तावेव समन्वितं कृत्वा काव्यकारणतायां शक्तिव्युत्पत्योः प्रतिष्ठापनमकरोत् । अत्राभिनवगुप्तस्य कथनमपि द्रष्टव्यमेव—

**शक्तिः प्रतिमानं वर्णनीय वस्तुविषयनूतनोल्लेखशालित्वम् ।**
**व्युत्पत्तिस्तदुपयोगि समस्तवस्तुपौर्वापर्यपरामर्शकौशलम् ॥'**

(ध्वन्यालोकलोचनः तृ० ३०)

अस्मिन् प्रसङ्गे आनन्दवर्धनाचार्यस्याऽपि निर्णयः—

**'न काव्यार्थ विरामोऽस्ति यदि स्यात् प्रतिभागुणः ।'**

(ध्वन्यालोक: ४.६)

अस्मिन् विषये नाट्यशास्त्रस्येयं मर्यादाऽस्ति—

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।**
**विलोक्यान्य निबन्धाश्च कार्यः काव्यक्रियादरः ॥**

(काव्यालङ्कार १.१०)

महामहोपाध्यायकविराजगोपीनाथमहोदयस्य विद्वत्तापूर्णनिबन्धे Doctorine of Pratibha in Indian Philosophy निमित्तार्थं द्रष्टव्यं—Annals, B.O.R.I. पञ्चम भागे प्रोफेसर श्रीकण्ठय्या महोदयस्य निबन्धनाय द्रष्टव्यः—Imagination in Indian Politics I.H.Q. Part, 13 Page 58 to 84.

ध्यातव्येयं वार्त्ता यदुत्तमकाव्यस्य पाठके कल्पनायास्तथा संस्कारस्य च उपस्थितिमनिर्धार्यमस्ति । तद्यथा—**नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः** (लोचनादुद्धृतः पृ० २००) अथवा—**'न जायते तदा स्वादो विना रत्यादिवासनाम् ।'** (साहित्यदर्पण ३,९) ।

व्युत्पत्तिशब्दस्य व्याख्या नातिकठिनमस्ति । नास्त्येवंविधः कोऽपि विषयः यस्य वर्णनं कर्त्तुं कविः समर्थो न भवति । कवौ विशिष्टसंस्काराणां भावनाऽति आवश्यका भवति, येन संस्कारेण सः पाठकानां चेतः प्रसादयितुं सक्षमो भवति । लोकशास्त्र-काव्येषु तथैव निपुणता तथा व्युत्पत्तिरपेक्षिता भवति । काव्यमीमांसायाः पञ्चमोऽध्याये शास्त्रकविः, काव्यकविः, तथोभयकविः । एतेषां कवीनामुपभेदेऽपि महत्त्वपूर्ण-परिचयोऽप्यस्ति । अनेन सह कवित्वस्य दशावस्थानामपि वर्णनं मिलति ।

**शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः ।**
**काव्यं विशिष्टशब्दार्थसाहित्यसदलङ्कृतिः ।**
**शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत् ।**
**तत्र केवलशास्त्रेऽपि केचित् काव्यं प्रयुज्यते ॥**

(क्षेमेन्द्रस्य सुवृत्ततिलकम् पृ० २.४)

व्यक्तिविवेककारो महिमभट्टस्तु 'व्युत्पत्तिम्' प्रतिभायाः निष्यन्दं मन्यते ।

**रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ।**
**क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभाकवेः ॥**
**साहि चक्षुर्भगवतस्तृतीयमिति गीयते ।**
**येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्त्तिनः ॥**

(व्यक्तिविवेकः, पृ० १०८)

कवेः प्रतिभा शिवस्य तृतीय नेत्रमस्ति । यस्य शक्तिः सर्वत्राप्रतिहत प्रसराऽस्ति । यतो हि जीवनस्य न कोऽपि वस्तु एवंविधं वर्त्तते, यदस्य विषयो भवितुं न शक्यते । कवेर्व्युत्पत्तिः वस्तुतः कविप्रतिभायारुपायनमस्ति । धारणेयं पाश्चात्यकवीनां काव्यविमर्शकानाञ्चापि काव्यं प्रति अभिनवचेतनामुत्पादयति—

'Poetry is the breath and finer spirit of all knowledge'—Wordsworth.

काव्यस्य हेतुतत्त्वे 'अभ्यासस्यापि स्थानमस्ति । प्राचीनालङ्कारिकाः काव्यहेतुतत्त्वे अभ्यासाय स्थानं दत्त्वा स्वस्वाभिमतानि प्रकटीकृतानि यत् कवये स्वकीयकलानामेवं तासामुपाङ्गानां व्यावहारिकज्ञानं तथोपयोगमपि नितान्तमावश्यकमस्ति—

**शब्दाभिधेयैर्विज्ञाय कृत्वा तद्विदुपासनम् ।**
**विलोक्यान्य निबन्धां कार्यः काव्यक्रियादरः ॥**

(काव्यालङ्कारः १.१०)

आचार्य वामनेनाभ्यासमेवाभियोग-वृद्धसेवा-अवेक्षणादिस्वरूपे विश्लेषणं कृतम् । काव्यबन्धे उद्यमाभावे एव काव्यरचना भवितुमर्हति । आचार्याणां सान्निध्यं विना काव्यविद्याहृदये संक्रान्तिः असम्भवो भवति । पदानामाधानोद्धरण-न्यासापन्यासेषु पर्याप्तावेक्षणा सामर्थ्याभावे काव्यकृतिः संभवो नास्ति । उद्यमं विना, अभियोगं विना, अभ्यासं विना काव्ये शब्दपाकस्य अथवा निष्कम्पशब्दनिवेशस्य संभावना भवितुं नार्हति । अतएवाभ्यासस्यानेन प्रकरेण निरूपणं कृतं वामनेन—

**आधानोद्धरणो तावत् यावत् दोलायते मनः ।**
**पदस्य स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥**
**यत्पदानि त्यजन्त्येव परिवृत्ति सहिष्णुतात् ।**
**तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥**

(काव्यालङ्कारसूत्रवृत्तिः १.३)

अतः कविजनेभ्यः शब्दस्याभ्यासत्यावश्यकोऽस्ति । किञ्च, ध्वनिदार्शनिकालङ्कारिकाः काव्यस्योद्भवे अभ्यासस्य न किमपि महत्त्वं स्वीकृर्वन्ति । आनन्दवर्धनाचार्यस्य मतानुसारेण व्युत्पत्तिस्तथाऽभ्यासस्तु कविप्रतिभातः स्पन्दभूतोऽस्ति । अभ्यासेन तु कतिपय पदानां दृढात् आकर्षणमात्रमेव संभवोऽस्ति न तु काव्यनिर्माणम् । यच्छब्दं काव्यस्य बन्धच्छाया'-रचना-सौन्दर्यम्' कथ्यते, तस्मै अपि प्रतिभानशब्दस्यैवावश्यकता भवति न तु अभ्यासस्य—**'बन्धच्छायाप्यर्थद्वयानुरूपशब्दसन्निवेशोऽर्थप्रतिभानाभावे कथमुपपद्यते ?' अनपेक्षितार्थ विशेषाक्षररचनैव बन्धच्छायेति नेदं नेदीयः सहृदयानाम् । एवं हि सत्यर्थं निरपेक्षचतुरमधुरवचनरचनायामपि काव्यव्यपदेशः प्रवर्तेत ।'** (ध्वन्यालोकः ४-६)

ध्वनिवादस्य परमसमर्थकः आचार्यमम्मटोऽपि काव्यरचनायां 'अभ्यासम्' यत्स्थानं दत्तवान् तस्याभिप्रायः ध्वनिदर्शनस्य प्रवर्त्तकः आनन्दवर्धनाचार्यस्याभिमतस्य खण्डनं

नास्ति, अपितु मण्डनमेवाऽस्ति । मम्मटानुसारेणाभ्यासोऽस्ति—**काव्यस्य करणे योजने च पौनःपुन्येन प्रवृत्तिः ।'** अर्थात् काव्यस्य रचनायामथवा काव्यस्य भावनायां कविजनस्य किंवा रसिकजनस्य सतत् उद्योगशीलतायाः महत्त्वं वर्त्तते । प्रतिभा-व्युत्पत्ति अभ्याससंवलितत्रितयाणां काव्यसृष्टिविधौ तदेवावश्यकताऽस्ति, यत् जगत्-सृष्टिविधौ सत्व-रज-तमोगुणानां साम्यावस्थाप्रकृत्याः अथवा शाङ्करीमायायाः आवश्यकता भवति । ध्वनिकाव्यस्य तथा गुणीभूतव्यङ्ग्यकाव्यस्य विवेकेऽपि कविजनेभ्यः काव्यरचनायाः एकः अभ्यास एवाऽस्ति । काव्यसंवादः, अथवा काव्यकृतिषु परस्परं भावसाम्यं रचना-साम्यादीनां परिज्ञानोऽपि कविजनस्य काव्यकलायाः अभ्यास एवास्ति । ध्वनिदर्शनस्य प्रवर्त्तकस्तथा प्रतिष्ठापकः आनन्दवर्धनः अभिनवगुप्तश्च कवौ शक्तिरूपेणावस्थितः सहृदयभावः तथा सहृदये शक्तिरूपेणावस्थितः कविभावस्य सुष्ठुनिरूपणं द्रष्टव्यम्—

**'रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र, प्रसिद्धव्यवहारं (ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयसीभिरपि चिरन्तनकाव्यलक्षणविधायिनां बुद्धिरभिरनुन्मीलितपूर्व) लक्षयतां सहृदयानाम् ॥'** (ध्वन्यालोकलोचनः १.१)

**'येषां, काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीय तन्मयी भवनयोग्यता ते स्वहृदयसंवादभाजः सहृदयाः ।** (ध्वन्यालोकलोचनः १.१)

आचार्यमङ्गलप्रभृतयः केवलमभ्यासमेव काव्यकारणं मन्यते—**'अभ्यासः (काव्य-कर्मणि परं व्याप्रियते)** इति मङ्गलः ।**'अविच्छेदेन शीलनाभ्यासः स हि सर्वगामी सर्वत्र निरतिशयंकौशलमाधत्ते ।'** (काव्यमीमांसा ४)

आचार्यमम्मटस्य काव्यहेतुदृष्टिः पाश्चात्य पण्डितेनाऽपि स्वीकृताऽस्ति—

"An artist must be a crafts man but a crafts man need not be an artist"

## काव्य-स्वरूप-निरूपणम्

चिरपरम्परावाहिनी काव्यसंसारे लोकोत्तरवर्णनानिपुणकविकर्मकाव्यम् । अत्रै-तादृशयस्य काव्यस्य किं स्वरूपमिति स्वाभाविका जिज्ञासा समुत्पद्यते । काव्यस्वरूप-निर्माणविषयके ग्रन्थकर्तॄणां विदुषां नैकदा दर्शनानि सन्ति । एवंविधेषु विशेषलक्षणेषु कानिचिल्लक्षणानि शब्दमात्रगतानि, कानिचिच्च शब्दार्थोभयगतानि सन्ति । अथ काव्यसंज्ञितानां कविकर्मणां कोऽपि स्वतन्त्रोऽपि वर्गोऽस्ति । एषु हि काव्यवर्गेषु प्रतिपाद्यार्थापेक्षया गुणरीत्यलङ्कारादीनि बाह्यङ्गान्येव विशिष्य ग्रन्थकर्त्तारः कृतपरिश्रमा दृश्यन्ते । अपि च कविकर्मस्वमीषु कालक्रमेणोत्तरोत्तरं काव्यात्मनो निसर्गसौन्दर्यं प्रमादात्स्थगयिताया त्वर्थमनोहारिताऽऽहरणे विशेषः प्रयत्नः कृतोऽवलोक्यते । तत्र शब्दमात्रगतानि प्रायोऽष्टलक्षणानि तानि यथा—

**तैः शरीरञ्च काव्यानामलङ्काराश्च दर्शिताः ।**
**शरीरं तावदिष्टार्थं व्यवच्छिन्ना पदावली ॥**

(दण्डी—काव्यादर्शः १.१०)

**काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत्'**

(शौद्धोदनिः, अलङ्कारशे० पृ० २)

**'इष्टार्थव्यवच्छिन्नापदावली ।**
**काव्यं स्फुटदलङ्कारं गुणवद्दोषवर्जितम् ।'**

(अग्निपुराण, ३३६, ६-७)

**वाक्यं रसात्मकं काव्यम्'** (विश्वनाथः—साहित्यदर्पणे पृ० २०)

**'रमणीयार्थः प्रतिपादकः शब्दः काव्यमिति'**

(पण्डितराजगन्नाथः रसगङ्गाधरे पृ० ४)

चन्द्रालोकस्यास्मिन् संदर्भे पृ० प्रथम-सप्तम-द्रष्टव्यम् ।

**निर्दोषं गुणवत्काव्यं अलङ्कारैरलङ्कृतम् ।**
**रसान्वितै कविः कुर्वन् कीर्त्ति प्रीतिं च विन्दति ॥**

(भोजराजः सर० क०)

**निर्दोषाल्लक्षणवती सरीतिगुणभूषिता ।**
**सालङ्कारसवृत्तिर्वाक् काव्यनामभाक् ॥**

(जयदेवः—चन्द्रालोकः १.७ पृष्ठेऽपि)

केशवमिश्रस्य कन्तिचन्द्रस्य चाऽपि शब्दमात्रगतानि काव्यलक्षणानि सन्ति । अनेनैव प्रकारेण प्रायः काव्यस्य षोडशानि लक्षणानि सन्ति । तथा हि—

**'शब्दार्थौ सहितौ काव्यमिति'**

(भामहः, उदभटः, रुद्रटः, आनन्दवर्धनस्च)

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनी ।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणी ॥**

(कुन्तकः—वक्रोक्तिजीवितम्)

**साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम् ।**
**स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्त्तये ॥** इति वाग्भट्टौ ।
**तत्र निर्दोषशब्दार्थ गुणवत्वे सति स्फुटम् ।**
**गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम् ॥**

(अच्युतरायः—साहित्यसारः)

**गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ ।**
**गद्यपद्योभयमयं काव्यं काव्यविदो विदुः ॥**

(प्रतापरुद्रीयः)

**तददोषौ शब्दार्थौ सगुणावनलङ्कृतिः पुनः क्वाऽपि ।**

(मम्मटभट्टः—काव्यप्रकाशः)

**'शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ काव्यम् ।'**

(वाग्भट्टकृतकाव्यानुशासने, पृ० १४)

**'अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम् ।**

हेमचन्द्रषोडशपृष्ठे वा मनस्य वृत्तिः द्रष्टव्येति ।

**'सगुणावनलङ्कृति काव्यपदार्थौ दोषवर्जितौ ।** इति धर्मसूरिः ।

**'सहृदयहृदयाह्लादादि शब्दार्थमयत्वमेव काव्यलक्षणम् ।'**

(ध्वन्यालोकः १ पृ० ८)

**'आस्वादजीवातुः पदसन्दर्भः काव्यम् ।'**

(चण्डीदासः का० प्र० प्रदीपिका पृ० १३)

**'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोः वर्णिते'**

इति वामनः ।

**'रीतिरात्मा काव्यस्य'** —इति वामनाचार्यः

**'शब्दार्थवपुस्तावत् काव्यम्'** —इति विद्याधरः

**'काव्यं विशिष्टशब्दार्थसाहित्यसदलङ्कृतिः** —क्षेमेन्द्रः

**'गुणालङ्कारसंयुक्तौ शब्दार्थौ रसभावगौ ।**
**नित्यदोषविनिर्मुक्तौ काव्यमित्यभिधीयते ॥** —इति न्यायवागीशः

विश्वस्य साहित्यिकपदकोषस्य (Dictionary of world literary terms) द्वानवतितमे पृष्ठे शिप्ले (Shipley) महोदयो लिखति—यत्परिभाषा कस्याऽपि शब्दस्योचितं स्पष्टं निश्चितं पूर्णं निर्धारणं भवति । संक्षेपेणेदमवसीयते यत्तत्र ज्ञातेनाज्ञातं गम्यते, परिभाष्यस्य सर्वप्रधानाङ्गानां विवेचनं करणीयमीदृग्विधं येन तत्स्वरूपं सुस्पष्टं भवेत्, नोभवेत् तेषां पुनर्व्याख्यानावश्यकता च । इति प्रतीच्य विचारसारः । अव्यास्यतिरहितं लक्षणमिति प्राच्याः । अथवा समानासमानजातीयव्यवच्छेदो लक्षणार्थः इति । किन्त्वेतादृशी परिभाषा काव्यस्याद्यावधि नोपलब्धा । प्राचीनकालादद्यावधि साहित्यधुरन्धरैः काव्यपरिभाषाः कृताः, किन्तु न ताः सर्वांशतः शुद्धा । यथा चादर्शयिष्यामः ।

पूर्वोक्तेषु सर्वेषु काव्यलक्षणेषु केवलं शब्दमात्रगतं काव्यलक्षणं पूर्वपक्षत्वेनाङ्गीकृत्य शब्दार्थोभयगतं काव्यलक्षणं सिद्धान्तधिया स्वीकृत्य सर्वप्रथमं भामहकृत काव्यलक्षणमुपस्थाप्यते—

काव्यालङ्कारे भामहः कथयति —**'शब्दार्थौ सहितौ काव्यम्'** इति । एतल्लक्षणं तु सामान्यजातीयं केवलं स्वरूपाधायकञ्च, न च कमप्युत्कर्षाधायकम् । समालोचकास्त्वत्र स्वरूपाधायकमपि लक्षणं न स्पृशन्ति । शास्त्रात्मके वाङ्मयेऽपि शब्दार्थसाहित्यसम्भवात् यथा च गणपति चन्द्रगुप्तो लिखति भामहस्य परिभाषा काव्येन साकं

शास्त्रं भूगोलमितिहासं मौखिकवार्त्तालापमपि स्पृशति । अतोऽनया काव्याकाव्यनिर्णयो दूरमपेतः ।

दण्डिनोऽपि काव्यादर्शे **'इष्टार्थव्यवच्छिन्ना पदावलिः काव्यम् ।'** अस्यां परिभाषायामिष्टपद प्रयोग एव भामहलक्षणात् विशिष्टः । मुख्यतः परिभाषेयं भामहस्य व्याख्यानभूतेव । अतएव विद्वद्भिरप्राप्तसमादरेयं परिभाषेति ।

मम्मटकृतं काव्यलक्षणञ्च—**'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'** इति । प्रतापरुद्रे विद्यानाथोऽपि—**गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ'** विद्याधरोऽपि **शब्दार्थौ वपुरस्य तत्र विवुधैरात्माभिधायि ध्वनिः ।** किञ्च येषां काव्यलक्षणानां दर्शनेन ज्ञायते यदेतेषु काव्यलक्षणकर्त्तृषु कतिपयाः काव्यत्वस्य स्थितिं शब्दमात्रे कतिपयाश्च शब्दार्थयोरुभयोरपि स्वीकुर्वन्ति । नागेशः—**'काव्यत्वस्य प्रयोजकं रसास्वादव्यञ्जकत्वं शब्दार्थयोरुभयोरपि दृष्टम्'** भवतीत्येतदभिधाय पण्डितराज-जगन्नाथस्य काव्यत्वं शब्दार्थोभयनिष्ठमित्येतत्स्वीकुर्वाणानां काव्यप्रकाशकारादीनां मते श्रद्धां प्रदर्शयति । भामहवामनरुद्रटादीनां दृष्टिः शब्दार्थयोरेव स्थितावाप्यते । ते वस्तुतः काव्यत्वस्य मार्गणे न सफलप्रयासा अभूवन् । चमत्कारपूर्णौ सुललितौ शब्दार्थौ एव काव्यत्वोद्भावने सामर्थ्यं विधत्तौ तु तदुद्भावने सहायकमात्रौ प्रमुखौ । अतएव आनन्दवर्धनः काव्यस्य स्वरूपं किमित्येतदधिकृत्य प्राह—**'काव्यस्यात्मा ध्वनिरिति'** राजशेखरश्च **शब्दार्थौ शरीरं... रस आत्मा ।'** इति निजगाद् । कुन्तकश्च वक्रोक्तिजीवितकारं शब्दार्थौ काव्यमिति न प्रीणयितुं शशाक । स काव्यस्य महत्तां तदीयां सर्वातिशायिगौरवशालितां सम्यग् जानाति स्म । अतएव स आह—

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ॥**
**शब्दार्थौ सहितावेव प्रतीतौ स्फुरतः सदा ।**
**सहिताविति तावेव किमपूर्वं विधीयते ॥**
**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।**
**अन्यूनानतिरिक्तत्वं मनोहारिव्यवस्थितिः ॥**

इत्थं कुन्तकः काव्यस्य सविस्तरं लक्षणं प्रतिपाद्य तत्स्वरूपमवगमयितुं प्रयते स्म । विश्वनाथायाऽपि न भामहादीनां काव्यस्य स्वरूपमरोचत् । स तु तदेव काव्यं मेने यद्रसात्मकमतः स आह—**रसात्मकं वाक्यं काव्यम् ।** इति । क्षेमेन्द्रोऽपि काव्यत्वमभिज्ञातुं पूर्णं प्रयत्नञ्चकार । स न काव्यत्वं शब्दार्थयोः नालङ्कारेषु गुणेष्वेव प्राप्तुमशकत् । तद्विचारेण काव्यत्वमतिदूरे वसति, अतः स तत्र नैजं विचारमेव-मभिधानञ्च ।

**काव्यस्यालमलङ्कारैः किं मिथ्यागणितैर्गुणैः ।**
**यस्य जीवितमौचित्यं विचिन्त्यादि न दृश्यते ॥**
**अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा ।**
**औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ॥**

मम्मटं विहाय प्रायेण सर्वेऽपि काव्यलक्षणकाराः काव्यस्य यद् यत् स्वरूपं प्रोचुस्तत्र सर्वत्र सहृदयहृदयः कच्चिन्न कञ्चिदभावमनुभवति । किमपि लक्षणं त्वेवं विधं यत्र काव्यस्य स्वरूपं स्पष्टं भवत्येव न, कमप्येतादृशं यत्र सामान्यकाव्यस्य स्वरूपं स्पष्टं भवत्येव न, किमप्येतादृशं यत्र सामान्य काव्यस्य कृते स्थानमेव न वर्त्तते, किमपि लक्षणमेवं विधं यत्र काव्यत्वांशोऽपि न संलक्ष्यते । **'तद्दोषै शब्दार्थौ सगुणानवालङ्कृती'** मम्मटस्यैवंविधं काव्यलक्षणमेव वस्तुतः काव्यस्य यथार्थस्वरूपं प्रस्तौति । मम्मटः ध्वनिगुणीभूतव्यङ्ग्यचित्रकाव्यभेदान् त्रीन काव्यस्य विधाय सर्वविधानि साधारणासाधारणानि काव्यानि यथोचितविधिना आद्रियते स्म । तदीये काव्यलक्षणे तेषां सर्वेषामपि काव्यानामन्तर्भावो जायते, यानि विशिष्टानि सन्ति वा सन्त्यविशिष्टानि । मम्मटस्य काव्यलक्षणं प्रतिपदव्यावृत्तिपूर्वकं विचारणीयं तत् शब्दार्थौ काव्यमित्यर्थः । काव्यस्यैव प्रकृतत्वात् । अर्थात् अदोषौ, सगुणौ, सर्वत्र सालङ्कारौ क्वचिदस्फुटालङ्कारावपि शब्दार्थौ काव्यम् । ननु चमत्कारिबोधजनकं वर्णनं काव्यमिति कथं शब्दार्थौ काव्यमिति न वाच्यम् । वर्णनायाः शब्दार्थरूपत्वात् भेदाभावात् । न च कविकर्मकाव्यमिति व्युत्पत्या शब्दे एव काव्यत्वं न त्वर्थे, तस्य कविकर्माभावात् इति वाच्यम् आस्वादोद्बोधकत्वमेव काव्यत्वप्रयोजकम्, तस्य चोभयात्राऽपि तुल्यत्वात् । आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषात्, लक्ष्यतावच्छेदकस्योभय वृत्तित्वाच्च, 'काव्यं पठितं श्रुतं गीतं रचितं, 'काव्यं बुद्धम्' इत्युभयविध व्यवहारदर्शनाच्च' शब्दार्थयुगलं काव्यमित्युच्यते । अदोषावित्यादिविशेषणानाञ्चापि सार्थकत्वमस्त्येव, काव्यत्वविघटिका ये च्युतसंस्कारादयः प्रबलदोषास्तद्रहिताविति । 'अदोषौ' इत्यस्य, उत्कटदोषरहिताविति भावात् दोषे उत्कटत्वं च सर्वथा रसप्रतीतिप्रतिबन्धकत्वम् । तथा च विधेयाविमर्शदोषस्य रसप्रतीतिविलम्बकत्वेन रसापकर्षकत्वेऽपि रसप्रतिबन्धकत्वाभावात् । नरसिंहठक्कुरास्तु दोषसामान्याभावस्यैव लक्षणे प्रवेशात् । प्रविरलविषयत्वं चेष्टमेव । पदमात्रस्यापि तथा सम्भवेन निर्विषयताया अभावादित्याहुः । सगुणावित्यादौ माधुर्यौजः प्रसादाख्या ये गुणः तत्सहिता वेति । न च ये रसस्याङ्गिनो धर्मः शौर्यादय इवात्मनः इत्यादिना गुणानां रसधर्मतया कथं शब्दार्थविशेषणं सगुणाविति वाच्यम् । स्वाश्रयरसाभिव्यक्तशब्दार्थनिष्ठताऽपि गुणानामस्त्येव । अतः सगुणाविति शब्दार्थविशेषणं समीचीनमेव । 'अनलङ्कृती पुनः क्वापि' इति कथनस्यापि अर्थोयमस्ति यत् सर्वत्र सालङ्कारौ क्वचिद् स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः । 'अनलङ्कृती' इत्यत्र इषदर्थे मञ् 'सलवणा यवागूः' 'अनूदाराकन्या इत्यादिवत् । 'पुनः क्वापि' इत्यत्र 'अपि' शब्दार्थोऽनुक्त समुच्चयार्थकः । तेन सर्वत्र सालङ्काराविति विशेषणं समुच्चायति। अतः क्वचित् 'यः कौमारहरः' इत्यादौ स्फुटालङ्कारविरहेऽपि न काव्यत्व क्षतिः । अतः मम्मटस्य काव्यलक्षणं समीचीनं प्रतीतो भवति ।

साहित्यदर्पणकारेण विश्वनाथेन यदुक्तम्—**'वाक्यं रसात्मकं काव्यम्'** इति । पूर्वोक्त मम्मटलक्षणं निरस्य स्वीयं लक्षणं समुपस्थापितम् । रसपदेनात्र संलक्ष्यभेदानां सर्वेषां परिग्रहः । तथा च व्यञ्जकता सम्बन्धेन रसादिमद्वाक्यत्वं काव्यत्वमिति काव्यसामान्यलक्षणम् । एवञ्च सतिदोषगुणालङ्काराणाम् सदसद्भावयोरौदासीन्यात् **'न्यक्कारोऽह्ययमेव मे यदरयः'** इति पद्येऽसंलक्ष्यक्रमात्मकनिर्वेदाख्य सञ्चारिभावस्य विद्यमानत्वात्

**'यः कौमारहरः'** इति पद्येऽपि शृङ्गारस्य विद्यमानत्वात् 'अत्ता एत्थ' इत्यत्र तु रसभाववत्वाच्च नाव्याप्तिः । 'देवदत्तो ग्रामं याति' इति वाक्ये च रसादि अभावान्नातिव्याप्तिरिति भावः ।

किञ्च वाक्यं रसात्मकं काव्यमिति महापात्रविश्वनाथस्य काव्यलक्षणञ्चिन्त्यम् वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः । न चेष्टापत्तिः महाकविसम्प्रदायस्याकुलीभावप्रसङ्गात् । लक्ष्यानुसारेण हि लक्षणव्यवस्था, न तु वैपरीत्येन । वर्णितानि च महाकविभि जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि, कवितादि विलसितानि च । न च तत्रापि यथा कथञ्चित् परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम्, ईदृश रसस्पर्शस्य गौश्चलति' मृगो धावति इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात्, रस्यत इति योगस्य तु तदाभासादि एवाभ्युपगमात् । एवञ्च प्रकाशोक्तं काव्यलक्षणमेव न्यायः ।

एतदनन्तरमायाति पण्डितराजजगन्नाथस्य काव्यपरिभाषा—**रमणीयार्थप्रतिपादकः शब्दः काव्यम्** इति । अर्थात् स्वप्रातिभज्ञानमूलकालौकिकचमत्कारकारणेन मनोहरस्यार्थस्य वाच्यलक्ष्यव्यङ्ग्यान्तरस्य प्रतिपादकः समुद्भावकः शब्दः काव्यं काव्यपदेन व्यवह्रियमाण इति यावत् । प्रकान्तरेणेदमायातं यत् रमणीयार्थ प्रतिपादकत्वे सति शब्दत्वमिति निर्गलितलक्षणमिति । अत्र रमणीयाः लोकोत्तरानन्दजनकभावना विषयाः ये अर्थाः वाच्यलक्ष्यव्यङ्ग्यरूपास्तस्य विषयस्य बोधजनकः शब्दः सुप्तिङन्तरूपः काव्यमिति लक्षणार्थः । रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता । किन्त्वेतन्मतमपि खण्डितं सूरिभिः । ते च कथयन्ति—काव्यस्य योजनारूपत्वात् व्यासज्यवृत्तित्वकल्पनातिप्रयोजना । काव्यद्वयव्यवहारापत्तिरपि निर्मूला । विजातीयैकचमत्कृतिजनकत्वेन एकस्यैव व्यवहारात् सहकारित्वं तूभयत्राप्युभयोः । वेदादिलक्षणमपि शब्दार्थोभयनिष्ठमेवास्ति । अतएव सङ्गच्छते तत्र भवान् पतञ्जलिः तदधीते तद्वेद' इति सूत्रस्थः दोषभावगुणालङ्काराणां काव्योत्कर्षप्रयोजकत्वात् सर्वसम्मतत्त्वेनानुपहसनीय काव्यलक्षणे न दोषभाक् तन्निवेशः । सामालक्षणं तु जगन्नाथमतेऽपि अदोषादिपदा घटितमेवेति ।

बालकृष्णभट्टशास्त्रिणोऽपि कथयन्ति काव्यप्रबन्धे पूर्वपीठिकायामेकादशपृष्ठे नास्मिन् लक्षणे कश्चिदं शोथदुष्ट इति विश्वनाथजगन्नाथादीनामाक्षेपः । परमेतत् सर्वमविचारमूलम् ।

काव्यशास्त्रिणामग्रे काव्यस्यात्मा कः ? इत्येष प्रश्न उपस्थित आसीत् । एतादृशं किं तत्त्वं वस्तुतः प्रधानमस्ति येन काव्यत्वस्याधानं जायते—इत्येतस्याः समस्यायाः समाधानार्थमनेके मनीषिणः प्रचक्रमिरे । केचनालङ्कारमेव काव्यस्य जीवनं मन्यन्तेस्म, तदितरे गुणान् तदन्ये रीतिं, तदपरे च ध्वनिं काव्यस्य प्राणभूतत्त्वेन विचारयन्ति स्म । काव्यस्यात्मानमधिकृत्य सञ्जातायाः समीक्षाया विभिन्नता नवनव सम्प्रदायान् उत्पादयामास । काव्यस्वरूपबोधनायापि बह्वयो रूपककल्पना कृताः । ऋग्वेदो वृषभरूपकेण, जयदेवो लतारूपकेण, अभिनवगुप्तः प्रासादरूपकेण, दण्डीबाणश्च सागररूपकेण काव्यविश्लेषणं कुरुतः । राजशेखरश्च काव्यपुरुषं कल्पयति । तस्य काव्यपुरुषस्तु हिमालये पुत्राय तपोनिरतायाः मातुः सरस्वत्याः समीपं ब्रह्मवरदानेनावतरति, चरणौ स्पृशति, छन्दोमय्या वाण्या च वदति—

**यदेतद्वाङ्मयं विश्वम् अर्थमूर्त्या विवर्त्तते ।**
**सोऽपि काव्यपुरुषानम्ब पादौ वन्देय तावकौ ॥**

एतत् श्रुत्वा मातासरस्वती कथयति--'पुत्रक ! छन्दोमय्याः वाण्याः प्रणेतासि । वाङ्मयमाताऽहमपि त्वया जिता । पुत्रात् पराजयो द्वितीयपुत्रजन्ममहोत्सवसमः । पूर्वसूरिभिर्गद्यमेव ज्ञातं त्वया तु छन्दोमयी वाणी प्रवर्त्तिता । अतएव प्रशंसनीयोऽसि । काव्यपुरुषजन्मसंकेतोऽन्यत्रापि मिलति । अस्य काव्यपुरुषस्य शरीरं वर्णयन् वदति राजशेखरः सरस्वतीमुखेन—

**'शब्दार्थौ चास्य शरीरः, प्राकृतं बाहुः, पिशाचभाषा चरणौ, गुणाः गुणस्थानीयाः, मिश्रभाषा वक्षःस्थलम्, संस्कृतं मुखम्, छन्दांसि रोमस्थानानि, अलङ्काराश्चालङ्करणभूताः । रस आत्मा, वचनविन्यासो रीतिः, प्रवृत्तिश्च वेषविन्यास'** इत्यादि । विद्यानाथेनाऽपि काव्यपुरुषरूपकं कल्पितम् । क्षेमेन्द्र त्रिपुरहरभूपालेन तु काव्यवध्वाः कल्पनाकृताः । वामनेन रीतिरात्मा रूपेण स्वीकृता । काव्यशास्त्रस्य संक्षेपणेयं काव्यपुरुष कल्पनेति । रसध्वनिगुणालङ्काररीतिप्रभृतीनां काव्यशास्त्रस्य सिद्धान्तेषु तेषां स्थितिं ज्ञातुं विभिन्नसम्प्रदायाणां निरूपणमप्यावश्यकमेवास्ति उपलब्ध-ग्रन्थानुसारेण प्रमुखसम्प्रदायानामुल्लेखोऽनेन प्रकारेणास्ति । रसः, अलङ्कारः, रीतिः ध्वनिः वक्रोक्तिश्चेति । ध्वन्यालोके लेखकेन सम्प्रदायत्रयाणामेवोल्लेखः कृतः । एकेन ध्वनेरस्तित्वमेवास्वीकृतम् । अपरेण ध्वनेरन्तर्भावः उपचारे लक्षणायां वा कृतः । तृतीयमतानुसारेण ध्वनितत्त्वस्य वैज्ञानिकविवेचनमसंभाव्यमेवास्ति, इयं तु सहृदयहृदय-संवेद्यमेवास्ति । ध्वन्यभाववादिनः प्रथमः सम्प्रदायः पुनस्त्रयाणामुपसम्प्रदायानां चर्चा कृताऽस्ति । समुद्रबन्धेन किञ्चिद्भिन्नरूपेण पञ्चसम्प्रदायाणामुल्लेखः कृतः । यथा— **'इह विशिष्टौ शब्दार्थौ काव्यम्, तयोश्च वैशिष्ट्यं धर्ममुखेन व्यापारमुखेन व्यंग्य-मुखेन वेति त्रयः पक्षाः । आद्येऽप्यलङ्कारतो गुणतो वेति वैविध्यं द्वितीयेऽपि भणिति वैचित्र्येण भो कृत्वेन द्वैविध्यम् । इति पञ्चसु पक्षेष्वाद्य उद्भटादिभिरङ्गीकृतः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चम आनन्दवर्द्धनेन ।'** (पृ०४) किञ्च समुद्रबन्धश्चास्मिन् प्रसङ्गे भरतस्य रससिद्धान्तस्यो-ल्लेखोऽपि न कृतः । यद्यपि अस्य रसविवेचनस्य सरणिः विशिष्टैवास्ति (पृ० २२१-२२३) । अयं हि स्वकीयशब्दशक्तिविषयके विवेचने ध्वनिकारस्यानुसरणं नैव कृतम् । अनेन सह महिमभट्टोऽपि मन्यते यत् ध्वनेरन्तर्भावः अनुमाने एव भवति । अस्य मतस्य न कोऽप्यन्यः अनुयायी वर्तते । अतोऽयं पृथक् सम्प्रदायरूपेण मान्योऽस्ति । वक्रोक्तिजीवितकारस्यापि कोऽपि अनुयायी नासीत्, जयरथोऽपि वक्रोक्ति-जीवितस्य विमर्शिनीनामक स्वटीकायां श्लोकद्वयमुद्धृतम् । अस्मिन् ध्वनिसिद्धान्त-विरोधिनः द्वादशसिद्धान्तानां निरूपणमस्ति । यथा—

**'तात्पर्यशक्तिरभिधालक्षणानुमिति द्विधा ।**
**अर्थापत्तिः क्वचित्तन्त्रं समासोक्त्याद्यलङ्कृतिः ॥**
**रसस्य कार्यताभोगा व्यापारान्तरबाधनम् ।**
**द्वादशेत्थं ध्वनेरस्य स्थिता विप्रतिपत्तयः ॥'**

एतदनुसारेण ध्वनिसिद्धान्तस्य विरोधिनः सिद्धान्तत्रयमेव सन्ति ।

'For this see Prof. Swaami Ka -'Pre-Dhwani School's of Alankar'. Bhandarkar—'Commemoration book page 383'.

काव्यस्यात्मसंबन्धे विभिन्नपक्षेभ्यः सम्प्रदायशब्दस्य प्रयोगः सर्वथा उपयुक्तः प्रतीतो न भवति । तथाऽपि संस्कृतकाव्यशास्त्रस्य लेखकाः अस्य शब्दस्य बहुधा प्रयोगः अकुर्वन् तेन हि काव्यशास्त्रस्य सम्प्रदायाः प्रख्याताः सन्ति । एतेषां सम्प्रदायानां भेदस्य कारणमास्ते । काव्यस्यात्मतत्त्वविषयमधिकृत्य मतभेदाः सन्ति । ये आचार्याः काव्यस्यात्मरूपेण रसं स्वीकुर्वन्ति ते रसम्प्रदायस्याचार्याः कथ्यन्ते । ये च अलङ्कारमेव काव्यस्य मुख्यं तत्त्वं स्वीकुर्वन्ति तेऽलङ्कारसम्प्रदायस्य प्रर्वतकाः आचार्याः सञ्जाताः । ध्वनिसम्प्रदायस्य प्रवर्तकाः आचार्याः ध्वनिमेव काव्यस्य आत्मतत्त्वं स्वीकुर्वन्ति । वक्रोक्तिसम्प्रदायस्य प्रवर्त्तकेनाचार्येण कुन्तकेन तु अभिहितं वक्रोक्तिरेव काव्यजीवितम् । रीतिसम्प्रदायस्याचार्याः रीतिमेव काव्यात्मत्वेन स्वीकुर्वन्ति । औचित्यसम्प्रदायस्य प्रवर्तकानुसारेण औचित्यं काव्यजीवितमास्ते । तद्यथा क्रमशः.... ।



# रससम्प्रदायः

रससम्प्रदायस्यादि आचार्यः को वर्त्तते इति इदानीं यावन्नास्ति सर्वसम्मतरूपेण निर्णीतम् । राजशेखरमतानुसारेण नन्दिकेश्वर एवास्य सम्प्रदायस्यादिप्रवर्त्तकः आचार्यो वर्त्तते । किन्तु, साम्प्रतं न तु कश्चन ग्रन्थो नन्दिकेश्वरस्य समुपलभ्यते न वा कश्चनापि सिद्धान्तः । रसविषयकः साम्प्रतं समुपलभ्यमानः प्राचीनतमो ग्रन्थः नाट्यशास्त्रमास्ते । भरतमुनिरेव नाट्यशास्त्रस्य षष्ठसप्तमाध्याययोः विस्तरेण रसस्य वैज्ञानिकं विवेचनं समुपलभ्यते । भरतमुनिरेव नाट्यशास्त्रस्य प्रणेता वर्त्तते इति सर्वमान्यः सिद्धान्तः । अतएव साम्प्रतिकैः सर्वैरेव समालोचकैः भरतमुनिरेव काव्यशास्त्रस्य प्रवर्त्तक आचार्यः स्वीक्रियते ।

रसशब्दोऽयं वैदिकसाहित्येऽपि मिलति । यथा—**'दधानः कलशे रसम् ।'** (ऋक्० ९।६३।१३) किञ्चात्र रसशब्दस्य प्रयोगः सोमरसार्थे एवास्ति । तैत्तिरीयोपनिषदि तु आनन्दार्थे रसशब्दस्य प्रयोगोऽवलोक्यते **'रसो वै सः रस ह्येवायं लब्ध्वाऽऽनन्दी भवति'** (११।७।१), **रस आत्मा,** (का०मी० पृ०१४) भारतीयास्तिकदर्शनस्य पृष्ठभूमौ प्रस्थानत्रयीविचारे सिद्धान्तरूपेणात्मनः श्रेष्ठत्वं महत्त्वञ्च प्रतिपादितमस्ति । पञ्चमहाभूतैर्विनिर्मितशरीरे आत्मतत्त्वमेव विशुद्धः, अजरः, अमरः, नित्यः, आनन्दमयः विज्ञानमयश्चादि स्वरूपत्वेन प्रधानः मन्यते—**'एष आत्मापहतपाप्माविजये विमृत्युर्विशोक**..... (छा०उ० ८,१,५) **...आत्मानन्दमयः । ...आनन्द आत्मा** । (तै०उ० २.५) **अन्योत्तर आत्मा विज्ञानमयः** । तत्रैव (२.४)

अतः बृहदारण्यकोपनिषदि स्पष्टतया निर्दिष्टोऽस्ति आत्मनः एव केवलं दर्शनम्, श्रवणं, मननं, निदिध्यासनं कर्त्तव्यम् —**'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' यतः एकैवात्मदर्शनेन सर्वं खलु विदितो भवति । आत्मनि खलु अरे दृष्टे श्रुते मते विज्ञातमिदं सर्वं विहितम् ।'** (बृ० उ० ४,५,६ तथा ४,५,७)

अलङ्कारशास्त्रेऽस्य शब्दस्यावतारस्तु नाट्यशास्त्रकर्त्रा भरतेनैवेति विदुषां विचारः। राजशेखरानुसारेण तु रसस्य सर्वप्रथममुपदेशो दत्तो ब्रह्मणा नन्दिकेश्वराय । किन्तु सम्प्रति न मिलति तत्प्रतिपादितो रससिद्धान्तः । वाल्मीकि रामायणेऽपि रसानामुल्लेखोऽस्ति । रसैः शृङ्गारकरुणरौद्रवीरभयानकैरिति (२।९) कालिदासध्वनिकारभवभूतिप्रभृतिभिरपि रससङ्केतो दत्तः । एतेन सिद्ध्यति रसस्य प्राचीनपरम्परा । नाट्यशास्त्रस्य षष्ठाध्यायेऽपि पूर्वाचार्याणां संकेताः मिलन्ति । अतएव रसोऽस्ति स्वीकरणीयमेव ।

ननु कोऽयं रस इति जिज्ञासायामुच्यते—काव्यस्य पठनेन, श्रवणेन, नाटकस्य च दर्शनेन सहृदयानां हृदये विगलितवेद्यान्तरशून्यो यः आनन्दोऽनुभूयते स एव रस पदवाच्य इति सार्वजनीनानुभवः । रसोऽयं कथमनुभूयते इत्यत्र नाट्यशास्त्राचार्याणां भरतमहोदयानां विचार एव श्लाघ्यतरः—

**विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः** । इति ।

निकषोपलेऽस्मिन् बहुभिस्तर्कज्ञानानुभवधुरन्धरैः स्वीया नवनवोन्मेषशालिनी- नीरन्ध्रितबुद्धिधारदर्शिनी शेमुषीप्रतिभा वा परीक्षिता । समयेन संक्षेपेण तेषां परिचयः —विभावैर्विभावितोऽनुभावैरनुभावितो व्यभिचारिभिः संयुक्तो हि **स्थायीभावो** रसपदवाच्यः—

**कारणान्यथ कार्याणि सहकारिणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥**
**विभावाऽनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रस स्मृतः ॥**

(का० प्र० उ० ४)

**तत्र विभावः**—कायिक-वाचिक-सात्त्विकाभिनयानां विभावनम्, अर्थात् ज्ञानम् येनासौ विभावः । तद्यथा— **विभाव्यन्तेऽनेन वागङ्गसत्वाभिनया इति विभावः । यथा विभावितं विज्ञातार्थमित्यनर्थान्तरम्'** । (ना० शा० पृ० ३४६)

**बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः ।**
**अनेन यस्मात्तेनायं विभावः इति संज्ञितः ॥** (तत्रैव, ७.४)

लोकसमाजे रत्यादीनामनादिकालीनवासनान्तर्लीनानां रतिहासादिस्थायिभावानां उद्बोधकाः, त एव काव्यनाट्ययोर्निवेशिताः सन्तो विभावा विभावपदव्यपदेश्या उच्यन्ते। तस्य विभावस्य भेदौ द्वि प्रकारकौ स्तः । आलम्बनविभावः, उद्दीपन- विभावश्चेति । तद्यथा—

**रत्याद्युद्बोधकालोके विभावाः काव्य नाट्ययोः ।**
**आलम्बनोद्दीपनाख्यो तस्य भेदावुभौ स्मृतौ ॥**

(सा०द० ३।२९)

स्थायिनः अविच्छिन्नप्रवाहरूपस्य रत्यादेः रमणीयविषयकप्रतीत्यादेः लोके व्यवहारे यानि कारणानि ललनादीनि आलाम्बनकारणानि चन्द्रोदयादीनि उद्दीपन कारणानि । अथ च कार्याणि रत्यादिजन्यानि नायिकादिभेदेन नानाविधानि कटाक्षादीनि सहकाराणि रत्यादिकार्यस्य शीघ्रप्रतीतौ सहायकानि निर्वेदादीनि तानि नाट्यकाव्ययोः चेत् यदा निबध्यन्ते, तत् तदाक्रमेण विभावानुभावव्यभिचारिणः कथ्यन्ते । विभावाः कारण- रूपाणि, अनुभावाः कार्यरूपाणि, व्यभिचारिणः सहायकरूपाणि च स्पष्टार्थः । अतिसूक्ष्मरूपेणावस्थितान्, रत्यादीन् विभाव विभावयन्ति आस्वादयोग्यतामानयन्ति इति विभावाः । तान्येव रत्यादीनि अनुभावयन्ति अनुभवविषयतामापादयन्ति इत्यनुभावाः ।

**तत्रानुभावः**

कारणमनु यादृशं कार्यं भवति तादृश एव विभावानु अनुभावो भवति । 'अनु पश्चात् भवन्तीति अनुभावाः' । अथवा विभावेनोद्बुद्धः स्थायीभावः येनानुभूयते अर्थादनुभवस्य विषयो भवति तदेवानुभावः कथ्यते । विभावेन यदा स्थायीभावः उद्बुद्धोऽभवत्, तदासौ स्वप्रभावं बहिर्व्यक्तं कर्तुं समर्थो भवति । तस्मिन् काले रत्यादिरूपभावसंसूचनात्मको विकारः कायिक-वाचिक-सात्त्विकचेष्टाभिः व्यक्तो भवति । **'अनुभावो विकारस्तु भावसंसूचनात्मकः ।'** (दशरू० ४, ३) । विभाव इवानुभावोऽयमपि प्रत्येक-स्थायीभावस्य भिन्नो भवति । अनुभावेनैव स्थायीभावः प्रतीतियोग्यो भवति । अतएव भरतमुनिना प्रोक्तम्—**'अथानुभाव इति कस्मात् । उच्यते-अनुभाव्यतेऽनेन वागङ्गसत्त्वकृतोऽभिनय इति** । (ना०शा० पृ०३४७ गायकवा० सं०) । यतो हि वाचिकाङ्गिकादि अभिनयैः साङ्गोपाङ्गार्थमनुभूयते, अतोऽयमनुभावः कथ्यते ।

**वागङ्गसत्वाभिनयैर्यस्मादर्थो विभाव्यते ।**
**वागङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ॥** (ना०शा० ७.५)

भोजराजस्य शृङ्गारप्रकाशे निर्देशितः—**यत् विभावाद्यैः यदा नायकादेः संस्कारः प्रबुद्धोऽभवत् तदा स्मृतीच्छाद्वेषप्रयत्नजन्मानः मन-वचन-बुद्धिशरीरसम्बन्धिनो व्यापारोऽनुभूयते, अतः अनुभूयमानत्वात् रत्यादीनामनन्तर भावनाच्चानुभावाः भवन्ति ।' तत्र विभावैः प्रबुद्धसंस्कारस्य नायकादेः ये स्मृतीच्छाद्वेषप्रयत्नजन्मानः मनोवाग्बुद्धिशरीरारम्भाः तेऽनुभूयमानत्वात् रत्यादीनाम् अनन्तरभावनाच्च अनुभावाः** । (शृ०प्र० १७) । भोजराजस्यास्मिन् कथनेऽनुभावस्यानुभूयमानत्वं तथा अनुपश्चात् भवनता-उभावप्यर्थः समायाति ।

**सात्त्विकभावः**

स्तम्भः, स्वेदः, रोमाञ्चः, स्वरभङ्गः, वेपथुः, वैवर्ण्यम्, अश्रु, प्रलयाश्चेत्यपि अष्टरूपाण्यपि अनुभावस्यैव भवन्ति तथापि नाट्यादिशास्त्रेषु इमाननुभावान् गोबलीवर्दन्यायेन सात्त्विकभावाः कथ्यन्ते । यथा—

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।**
**वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥**
(नाट्यशा० ६,२२; दशरूपके ४,४-६)

अन्येषां जनानां सुखदुःखादीनां भावनासु तेषामत्यन्तानुकूलान्तःकरणे सति 'सत्व' पदेनाभिधीयते । तथा सत्वेनोत्पन्नभावमेव सात्त्विकभावो भवति । कतिचिज्जनाः सत्वमर्थात् जीवशरीरं तस्य धर्माः सात्त्विकाः प्रोच्यते । **'सत्वं जीवशरीरं तस्य धर्माः सात्त्विकाः** । (र०त० पृ० ५८, र०म०, पृ० १८९) । **'सत्त्वमयजीवच्छरीरं तस्य धर्माः सात्त्विका इत्यर्थः** । (का०पु० वामनी टी०, पृ० ८८)

किञ्च सात्त्विकशब्दस्यार्थोऽयं एतावत् व्यापकाः भवन्ति यत्कटाक्षादि सर्वेऽनुभावाः अस्यैवान्तर्गतो भवन्ति । भानुदत्तमिश्रेण जृम्भामपि नवमः सात्त्विको भावः मन्यते —

**'जृम्भा च नवमः सात्त्विको भाव इति प्रतिभाति ।**

(र० त० पृ० ६६)

सत्वोद्रेकेणैव सात्त्विकभावः समुत्पन्नो भवति । तेन हि भानुदत्तप्रकल्पित 'जृम्भा' सात्त्विकभावस्वरूपे स्वीकर्तुं नार्हति । नाट्ये मनःप्रभवं सत्त्वमित्युच्यते । मनसः समाहितावस्यायामेव सत्त्वस्य निष्पत्तिर्भवति । रोमाञ्च-अश्रु-वैवर्ण्योदयः सत्वस्वभावेनैव समुत्पन्नाः भवन्ति । असमाहितचित्तेन तद्भवितुमशक्यः । नाट्ये लोकस्वभावस्यानुकरणेन सत्त्वः अभीप्सितो भवति । अयमेव मनसः सत्वमस्ति । अनेन कारणेनैतान् सुखदुःखादिभावान् सात्त्विकभावपदेन व्यपदिश्यते—**'किमन्ये भावाः सत्त्वेन विनाऽभिनीयन्ते तस्मादुच्यन्ते एते सात्त्विका इति ।**

**अत्रोच्यते—इह हि सत्वं नाम मनःप्रभवम् । तच्च समाहितमनस्त्वादुच्यते । मनसः समाधौ सत्त्वनिष्पत्तिर्भवति । तस्य च योऽसौ स्वभावौ रोमाञ्चाश्रुवैवर्ण्यादि लक्षणो यथा भावोपगतः सन् शक्योऽन्यमनसा कर्त्तुम् इति । लोक स्वभावानुकरणात्वाच्च नाट्यस्य सत्वमीप्सितम् ॥** (ना०शा० पृ० ३७४.७५)

भोजराजोऽपि अनुपहतम् अर्थात् समाहित मन एव सत्त्वं कथ्यते । तेन सत्वमनसा समुत्पन्नः भावः उच्यते । **'अनुपहतं हि मनः सत्वमित्युच्यते ।'** (शृ०प्र० पृ० ११) भावप्रकाशने शारदातनयस्तु, सत्त्वेन समुत्पन्नाः भावाः एव सात्त्विकभावाः भवन्ति । यैर्भावैः सर्वेषां भावानां स्वकीया सत्ताः विभाविताः भवन्ति । (भा०प्र०, पृ० ३८)

आचार्यमम्मट इव विश्वनाथोऽपि सात्त्विकमपि अनुभाव एव मन्यते । सात्त्विकाः स्तम्भस्वेदादयः अनुभावरूपत्वादेव न पृथगिति स्वीकरोति (सा० द० सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्तः । परि० ३,१ वृत्तौ) पुनश्च गोबलीवर्दन्यायेन तस्य पृथक् विवेचनं कुर्वन् अकथयत् । सत्त्वेनोत्पन्नः विकारः सात्त्विकः कथ्यते । सत्त्वगुणमात्रे आत्मस्थितेः प्रकाशकः आन्तरधर्मविशेषमेव सत्त्वं कथ्यते । **'विकाराः सत्त्वसंभूताः सात्त्विकाः परिकीर्त्तिताः ।'** सा०द० ३.१४३ । सत्वं नाम स्वात्म-विश्राम-प्रकाश-कारीकश्चान्तरो धर्मः (तस्यैव वृत्तिः) । अस्मिन् प्रसङ्गे शिङ्गभूपालस्यापि व्याख्या द्रष्टव्या (रसा० मु० १, १३०) ।

**व्यभिचारीभावः**

वि एवं अभि पूर्वकात् णिजन्त चर् धातोः 'णिनि प्रत्ययात् व्यभिचारी शब्दः निष्पन्नो भवति । अतः विशेषरूपेण सर्वाङ्गेषु व्याप्तो भूत्वा रत्यादीन् शरीरे सञ्चारयन्ति अथवा मुहुर्मुहुरभिव्यञ्जयन्तीति वा वागाङ्गसत्वैर्युक्तो भूत्वा नाट्यप्रयोगे रसतामेति तदेव व्यभिचारीभावोऽस्ति —'विशेषेणाभितः (सर्वाङ्गव्यापितया) रत्यादीन् स्थायिनः काये चारयन्ति सञ्चारयन्ति मुहुर्मुहुरभिव्यञ्जयन्तीति वा व्यभिचारिणः ।'

अथवा यो हि विशेषरूपेणाभिमुखं भूत्वा, अर्थात् कार्यसम्पादनेऽनूकूलो भूत्वा, स्वयं चरणशीलो भवति तदेव व्यभिचारिणो भवन्ति । **'विशेषेणाभितः (आभिमुख्येन कार्यजनेन आनुकूल्येन) चरन्तीति व्यभिचारिणः ।'** (काव्य०प्र०, वामनीटीका पृ० ८६) ।

**विविधमामिमुख्येन रसेषु चरन्तीति व्यभिचारिणः ।**
**वागङ्गसत्त्वोपेताः प्रयोगे रसान्नयतीति व्यभिचारिणः ।।**

(ना०शा० ७)

अतएव धनञ्जयेनोक्तम्—यथा सागरे उन्मग्न-निमग्नाः कल्लोलाः इव सागर-स्वरूपे स्थायीभावे विशेषरूपेणाभिमुखो भूत्वा सञ्चारणहेतुना व्यभिचारिणः कथ्यन्ते ।

**विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।**
**स्थायिन्युन्मग्न निर्मग्ना कल्लोला इव वारिधौ ।।** (दशरू० ४,७)

अतएवोच्यते—यो हि स्थायीभावस्योपकारायागच्छति तथा तस्योपकारं कृत्वा गच्छति तदेव व्यभिचारीभावोच्यते ।।

**येतूपकर्त्तुमायान्ति स्थायिनं रसमुत्तमम् ।**
**उपकृत्य च गच्छन्ति ते मताः व्यभिचारिणः ।।**

(काव्य० प्र० प्रदीप)

एवमेव सञ्चारीभावोऽपि कथ्यते । भरतेनाऽप्यवदत-सूर्येण सह व्यवहार इवास्यापि व्यवहारोऽस्ति । व्यभिचारीभावस्तु त्रयस्त्रिंशत् प्रकारकाः भवन्ति—निर्वेद-ग्लानि-शङ्का-असूया-मद-श्रम-आलस्य-दैन्य-चिन्ता-मोह-स्मृति-धैर्य-व्रीड़ा-चपलता-हर्ष-आवेग-जड़ता-गर्व-विषाद-औत्सुक्य-निद्रा-अपस्मार-सुप्त-प्रबोध-अमर्ष-अवहित्थ-उग्रता-मति-व्याधि-उन्माद-मरण-त्रास-विमर्शाः । एतेषु तत्वज्ञानापदीर्ष्या दैन्यादिभिः यत् स्वावमाननस्य बुद्धिर्भवति तदेव निर्वेदः कथ्यते । निर्वेदे चिन्ता-अश्रु-निःश्वास- वैवर्ण्य-दैन्य-प्रभृतयो भवन्ति ।

**तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।**
**तत्र चिन्ताश्रु-निश्वास-वैवर्ण्योच्छ्वासदीनताः ।।** (दश०रू० ४,९)

तत्त्वज्ञानेनोत्पन्नः निर्वेद एव शान्तिरसस्य स्थायीभावो भवति । अपस्मारे ग्रहादीनामावेशे सति स्मृतिर्नष्टो भवति । अनेन पृथिव्यां पतनम्, शरीरे कम्पनम्, शरीरात् प्रस्वेदनिःसरणं भवितुमारयति । मुखादम्बुकफाः, डिण्डीरः मुखस्रावादिकाः परिस्रवन्ति ।

**आवेशोग्रहदुखाद्यैरपरस्मारो यथाविधिः ।**
**भूपातकम्प-प्रस्वेद लाला फेनोद्गमादयः ।।** (तत्रैव २४ २५)

लज्जादिना हर्षादिमनोभावानां अङ्गविकारस्य गोपनं अवहित्थं कथ्यते । यथा—

**'लज्जादैर्विक्रियागुप्ताववहित्थाङ्गविक्रिया ।'** (तत्रैव ४.२९)

व्यभिचारीरूपमरणास्यार्थोऽस्ति प्राणोद्गमनारम्भः । अस्मिन् संमोहः, इन्द्रियाणां निष्क्रियता तथा गात्रविक्षेपादि भवन्ति ।

**जीवस्योद्गमनारम्भो मरणं परिकीर्त्तितम् ।**
**संमोहेन्द्रिय-संग्लागिन-गात्रविक्षेपणादिकृत् ॥** (तत्रैव)

भोजराजस्तु नाट्यशास्त्रे प्रतिपादितस्य त्रयस्त्रिंशत् व्यभिचारीषु अपस्मारस्य तथा मरणस्य स्थाने ईर्ष्या तथा शमनामकस्य व्यभिचारीद्वयस्य मान्यतामङ्गीकरोति । सरस्वतीकण्ठाभरणेऽपि ईर्ष्या तथा स्नेहश्चापस्मारस्तथा मरणस्य स्थानेऽन्तर्भावोऽस्ति (सर० कण्ठा० ५.१६-१७) हेमचन्द्रस्तु काव्यानुशासने चतुर्णामभिनवव्यभिचारिणामन्तर्भावः दम्भस्यावहित्थे, उद्वेगस्य निर्वेदे, क्षुत्तृष्णादेर्ग्लानौ नियमितम् । 'संख्यावचनं नियमार्थं तेनान्येषामत्रैवान्तर्भावः । तद्यथा—दम्भस्यावहित्थे, उद्वेगस्य निर्वेदेक्षुत्तृष्णादेर्ग्लानौ ।' (काव्यानुशा० पृ० ८६) । रामचन्द्रस्तु नाट्यदर्पणे प्रसिद्धस्त्रयस्त्रिंशद् व्यभिचारिणामतिरिक्ते क्षुत्-तृष्णा-मैत्री-मुदिता-श्रद्धा-दया-उपेक्षा-अरति-संतोष-क्षमा-मार्दव-आर्जव-दाक्षिण्यादीनामभिनव व्यभिचारिणामाकलनं कृतवान् । (नाट्यदर्पणस्य १२९ कारिकामुपरि वृत्तौ पृ० १७७) । भानुदत्तमिश्रोऽपि —'**अत्र प्रतिभाति छलमधिको व्यभिचारिभाव इति** । (र०त० पृ० १०९) ।' वादिजङ्घालस्तु दण्डिनः 'रसभावनिरन्तरम्' प्रतीकमिदं नीत्वा निर्दिष्टवान्—'**सञ्चारि-व्यभिचारि-भेदाश्चतुस्त्रिंशत्**' (काव्याद० १,१८ तथा राघवन् शृ०प्र० पृ० ४५०) । रूपगोस्वामी तु प्रसिद्धास्त्रयस्त्रिंशत् व्यभिचारिणामतिरिक्ताः त्रयोदशसाधारणास्तथा रसविशेषस्य कतिपयारसाधारणाः व्यभिचारिणः प्रदर्शितः । येषु व्यभिचारिषु मात्सर्यस्य असूयायाम्, उद्वेगस्य त्रासे, दम्भस्य अवहित्थायाम्, ईर्ष्यायाः अमर्षे, निर्णय-विवेकयोः दैन्ये, क्षमा-क्लैव्ययोः धैर्ये, उत्कण्ठा-कुतकयोः औत्सुक्ये, विनयस्य लज्जायाम्, संशयस्य तर्के, धृष्टतायाश्चपलतायाम् अन्तर्भावः क्रियते । (म०र०सि० दक्षिणविभाग, ४ लहरी, ७५-७९)

शिङ्गभूपालोऽपि अतिरिक्तसञ्चारिणां प्रसिद्धसञ्चारिषु एवान्तर्भावः करोति—

**उद्वेग-स्नेह-दम्भेर्ष्या-प्रमुखाश्चित्तवृत्तयः ।**
**उक्तेष्वन्तर्भवन्तीति न पृथक्त्वेन दर्शिताः ॥**
(र०सु० २,९४ तत्रैव वृत्तिः पृ० १३९)

तथा च भावप्रकाशिकाकारः—

**अन्येऽपि यदि भावाः स्युश्चित्तवृत्तिविशेषतः ।**
**अन्तर्भावस्तु सर्वेषां द्रष्टव्यो व्यभिचारिषु ॥** (तत्रैव पृ० १३९)

यद्यप्यलङ्कारशास्त्रेषु व्यभिचारिभावानां त्रयस्त्रिंशति संख्या नियताऽस्ति, तथापि परमार्थतः सत्यमिदं कथन्नास्ति । भोजराजेनास्य विचारस्य कटु आलोचना कृता । तस्य कथनमस्ति यत्र त्वष्टौ स्थायिनः सन्ति, न त्वष्टौ सात्त्विकाः तथा नैव त्रयस्त्रिंशत् व्यभिचारिणः, यतोऽमीषूनपञ्चाशततमेषु भावेषु कोऽपि भावः कदाचित्स्थायी, कदाचित् व्यभिचारी तथा कदाचित् सात्त्विकभावाः भवितुमर्हन्ति । अतः अवस्थाविशेषे

सर्वे व्यभिचारिणो भवन्ति । **'नन्वष्टौ स्थायिनः, अष्टौ सात्त्विकाः, त्रयस्त्रिंऽशत् व्यभिचारिणः, इति ब्रुवते । न तत् साधु । यतोऽमीषामन्यतमस्यैव परस्परं निर्वत्यमानत्वात् कश्चित् कदाचित् स्थायी, कदाचित्तु व्यभिचारी । अतोऽवस्था-वशात् सर्वेऽप्यमी व्यभिचारिणः, सर्वेऽपि स्थायिनः, सात्त्विका अपि सर्व एव, मनःप्रभवत्वात् । अनुपहतं हि मनः सत्वमित्युच्यते ।'** (शृ०प्र० पृ० १,१) भोजराजस्तु इदमपि प्रमाणयितुं प्रयत्नः कृतवान् यदवस्थाविशेषे व्यभिचारिणोऽपि स्थायित्वं प्रापयित्वा रसो भवति । व्यभिचारिणोऽपि सञ्चारीभावाः भवन्ति ।

भोजराजस्य पूर्ववर्त्तिनः परवर्त्तिनश्च कतिपयानामाचार्याणां मतेनाऽपि अस्य पूर्वोक्तकथनस्य सम्पुष्टिर्भवति । अभिनवभारत्याऽपि ज्ञातो भवति यत् भट्टलोल्लटोऽपि स्थायी-सात्त्विक-व्यभिचारीभावादीनां प्रसिद्धनियत संख्यां नाङ्गीकरोति । तस्य मते परिस्थित्यानुसारेण कोऽपि भावः रसः भवितुं शक्यते । अतः स्थायीभावः व्यभिचारी-भावश्चावस्थाविशेषस्यैव नाम अस्ति । संख्यानियमस्तु परम्परयेव चलति । **'एतावन्त एव च रसाः इत्युंक्तं पूर्वम् । तेन आनन्त्येऽपि पार्षदप्रसिद्ध्या एतावतामेव प्रयोज्यत्वं इति यत् भट्टलोल्लटेन निरूपितं तदवलेपेन अपरामृश्येत्यलम् ।'** (अभि०भार० पृ० २९८)

**तेन रसान्तरसंभवेऽपि पार्षदप्रसिद्ध्या संख्यानियम इति यदन्यैः (लोल्लटादिभिः) उक्तं तत्प्रत्युक्तम् ।** (तत्रैव पृ० ३४१)

अतः रसोऽप्यनन्तो भवितुमर्हति । यदा व्यभिचारीभावः रसो भवति तदा तस्याऽपि व्यभिचारिणो भवन्ति । यथा निर्वेदस्य चिन्ताश्रमस्य निर्वेदो भवति ।

**'अन्ये तु ...व्यभिचारिणामपि व्यभिचारिणो भवन्ति । यथा निर्वेदस्य चिन्ता श्रमस्य निर्वेद इत्यादि निरूपयन्ति ।** (तत्रैव पृ० ३४५) ।

अभिनवगुप्तं तु स्थायिनः व्यभिचारित्वं मान्यमस्ति न तु व्यभिचारिणां स्थायिता। यथा पुरुरवसः उन्मादेऽपि तर्कचिन्तादिव्यभिचारिणः संभावना भवति, तत्तु वस्तुतः रति-स्थायिभावस्यैव व्यभिचार्यन्तरयोगो भवति । **'स्थायिनो हि व्यभिचारिता भवति । न तु व्यभिचारिणां स्थायिता । यत्रापि व्यभिचारिणित्यभिचार्यन्तरं संभाव्यते तद्यथा पुरुरवस उन्मादेऽपि तर्कचिन्तादि तत्रापि रतिस्थायिभावस्यैव व्यभिचार्यन्तरयोगः ।'** (अभि० भार० पृ० ३४५) ।' किन्तु, भरतमुनिना यत्र शृङ्गारस्य व्यभिचारिणं दर्शयति तत्रैवोक्तम्—**'व्यभिचारिणश्चास्य आलस्यौग्रयजुगुप्सा वर्ज्या ।'** (ना०शा० पृ० ३०६) । अर्थात् द्विविधस्य शृङ्गारस्यालस्यमुग्रताम् तथा जुगुप्सां विहाय सर्वे व्यभिचारिणो भवन्ति । तत्राभिनवेनोक्तम्—**'स्थायिनामपि व्यभि-चारित्वमनुज्ञापयति ।'** (अभि०भा० पृ० ३०६) । तत्त्वज्ञानजन्यनिर्वेदस्य स्थायित्वं तु अभिनवस्याप्यभिप्रेतोऽस्ति । स्थायि-व्यभिचारि-मध्येष्वेव निर्वेदः पठितः, यतो हि तत् व्यभिचारि सत्वेऽपि स्थायिभावोऽस्ति, अन्यथा माङ्गलिकमुनिः नैवं पठेत्। अत्राभिनवस्य कथनमस्ति यत्कतिचनजनानां मान्यताऽस्ति—सात्त्विक-व्यभिचारीण्यामिव स्थायिनः संख्याऽपि भरतमुनिना नैव प्रोक्ता । यतः स्थायिनः संख्यैव नियतत्रास्ति । अतः एते

स्थायिनः व्यभिचारिणोऽपि भवन्ति । **'स्थायि-सञ्चारिमध्ये चैतदर्थमेवायं (निर्वेदः) पठितः अन्यथा माङ्गलिको मुनिस्तथा न पठेत्** (तत्रैव पृ० ३३३) ।

**एतदर्थमेवोभय, धर्मोपजीवित्व-ख्यापनाय अमङ्गलभूतोऽप्यसौ पूर्वं निर्दिष्टः...। स्थायिषु संख्या नोक्ता इत्यपरे । अतएव स्थायिनः एते तु व्यभिचारिणोऽपि भवन्ति।** (तत्रैव पृ० २६८)

नाट्यशास्त्रस्य भावाध्यायस्य प्रारम्भे अभिनवेनोक्तम्—**'भाव'शब्देन चित्रवृत्ति-विशेषाः एव विवक्षिताः सन्ति । तथा च ते नवचत्वारिंशद्भावाः स्व-स्व योग्यता-नुसारेण यथायोगं स्थायि-सञ्चारि-विभावानुभावस्वरूपत्वं प्राप्तुं शक्नुवन्ति ।** (तत्रैव पृ० ३४२)

**'भावशब्देन तावत् चित्तवृत्तिविशेषा एव विवक्षिताः । ...तेषां तु योग्यता-वशात् यथायोगं स्थायि-सञ्चारि-विभावानुभावरूपतां संभवति ।'** (तत्रैव पृ०३४२)

शान्तरसस्य विचारे तेनैवोक्तम्—यत् शृङ्गारे जुगुप्सायाः व्यभिचारित्वस्य निषेधं कुर्वन् भरतमुनिः सर्वेषां भावानां स्व-स्वयोग्यतानुसारेण शब्दार्थयोः बलेन प्राप्तः स्थायित्वं सञ्चारित्वम्, सात्त्विकत्वम्, अनुभावत्वञ्च मन्यते । **'जुगुप्साञ्च व्यभिचारित्वेन शृङ्गारे निषेधन् मुनिः भावानां सर्वेषामेव स्थायित्व-सञ्चारित्व-चित्ततत्ताज्ञत्वानु-भावत्वानि योग्यतोपनिपतितानि शब्दार्थबलाकृष्टानि अनुजानाति ।'**(तत्रैव पृ०३३३)

अभिनवेनाऽपि एतदेव कथयति, यत् तत्त्वज्ञानमेव सर्वेषां भावानामाधारभूतोऽस्ति तथा स्थायिषु स्थायितमोऽस्ति तथा सर्वाः रत्यादिकः चित्तवृत्तीः व्यभिचारीभावयत् । **'तत्त्वज्ञानञ्च सकलभावान्तर-भित्ति-स्थानीयं सर्वस्थायिभ्यः स्थायितमं सर्वा रत्यादिकाः चित्तवृत्तीः व्यभिचारीभावयत् ।'** (तत्रैव पृ०३३६) निर्वेदादि सर्वासु व्यभिचारिण्यपि 'रसनात् रसत्वम् मानयन् रुद्रटोऽपि व्यभिचारिणां स्थायित्वं मन्यते । यथा—

> **रसनात् रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः ।**
> **निर्वेदादिष्वपि तत् निकाममस्ति इति तेऽपि रसाः ॥** (रुद्रटा०१२-४)

रुद्रभट्टोऽपि मतमिदमेव मन्यते यत् सर्वे सात्त्विकाः व्यभिचारिणश्च रसत्वनाप्नुवन्ति—

> **त्रयस्त्रिंशदिमे भावाः प्रयान्ति च रसस्थितिम् ॥** (शृ०ति० १,१४)
> **भावाः एवाति सम्पन्नाः प्रयान्ति रसतामपि ।** (तत्रैव)

महिमभट्टस्तु भरतमुनिमतानुसारेणैव विभावादेः स्वरूपस्य निर्देशं कुर्वन् अकथ-यत् स्थायिव्यभिचारिसात्त्विकभेदादेकोनपञ्चाशत् भावा उक्तास्ते सर्वे व्यभिचारिण एव । केवलमेतेषां प्रतिनियतरूपापेक्षो स्थायीप्रभृतीनां व्यपदेश एव भवन्ति । यथा व्यक्ति-विवेकस्य त्रयोदशपृष्ठे—**ये चैते स्थायिव्यभिचारि-सात्त्विकभेदात् एकोनपञ्चाशत् भाव उक्तास्ते सर्वे व्यभिचारिण एव । केवलमेषां प्रतिनियतरूपापेक्षो व्यपदेशः ।**

भोजराजस्तु रतौ गर्वस्नेहौ धृतिं मतिञ्च सर्वान् व्यभिचारिण एव मन्यते, एवमुद्धत-प्रेयः-शान्तोदात्तरसेषु क्रमशः तान् स्थायिनः मन्यते ।

**रतौ सञ्चारिणः सर्वान् गर्वस्नेहौ धृतिं मतिम् ।**
**स्थानूत्रेवोद्धतप्रेयः शान्तोदात्तेषु जायते ॥** (स०क० ५.२३)

ग्लान्यादयोऽपि भावाः श्रमादिभिः परं प्रकर्षं रसत्वं प्राप्नुवन्ति । हर्षादिष्वपि विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात्—'**ग्लान्यादयोऽपि हि श्रमादिभिः परं प्रकर्षमारोप्यन्ते ।**' (शृ०प्र० ११ प्र०)

**हर्षादिष्वपि विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात् ।** तत्रैव

रत्यादीनामेकोनपञ्चाशतोऽपि विभावानुभावादीनां संयोगात् परमप्रकर्षं प्राप्य रसव्यपदेशस्य योग्याः भवन्ति । '**रत्यादीनामेकोनपञ्चाशतोऽपि विभावानुभाव-व्यभिचारिसंयोगात् परं प्रकर्षाधिगमे रसव्यपदेशार्हता ।**' तत्रैव द्रष्ट०। अनेन कथनेन रुद्रटादीनामपि मतस्य सम्पुष्टिर्भवति ।

व्यक्तिविवेकस्य प्रसिद्धव्याख्याकारेण रुय्यकेनोक्तम् । स्थायिनामपि व्यभिचारित्वं भवति । यथा देवादिविषयकरतिभावे, हास्यस्य शृङ्गारादौ, शोकस्य विप्रलम्भशृङ्गारादौ, क्रोधस्य प्रणयकोपादौ, विस्मयस्य वीरादौ, उत्साहस्य शृङ्गारादौ, भयस्य अभिसारिकादौ, जुगुप्सायाः संसार-निन्दादौ, शमस्य क्रोधाभिहतस्य प्रसादोद्गमादौ व्यभिचारिणो भवन्ति । (व्यक्तिविवेकस्य टीकायाम्, पृष्ठे १२-१३ द्रष्टव्यम्) । मिश्र भानुदत्तेनाऽपि रसतरङ्गिण्यामलिखत् यत् स्थायिभावोऽपि व्यभिचारिभावो भवति । यथा—हासः शृङ्गारे, रतिः शान्त-करुण-हास्येषु, भयशोकौ करुणशृङ्गारयोः, क्रोधः वीरे, जुगुप्साभयानके, उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ भवतः ।' स्थायिनोऽपि व्यभिचरन्ति । हासः शृङ्गारे, रतिः शान्तकरुणहास्येषु, भय-शोकौ, करुणशृङ्गारयोः क्रोधो वीरे, जुगुप्सा भयानके, उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ । (रस०तरं० ५ पृ० ११४ तथा सा०द० ३.१८२-३) भावानां स्थायित्वस्य व्यभिचारित्वस्य च रहस्यमुद्घाटयति शार्ङ्गदेवः—यदा रत्यादयः स्थायिभावाः समुपयुक्तविभावैः समुत्पन्नाः भवन्ति, तदा त एव व्यभिचारिणो भवन्ति । यथा हासः शृङ्गारे, रतिः शान्ते, क्रोधः वीरे, भयं शोके तथा जुगुप्सा भयानके एवं उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ भवतः ।

**रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः ।**
**स्तोकैर्विभावैरुत्पन्नाः त एव व्यभिचारिणः ॥**
**रसान्तरेष्वपि तदा यथा योगं भवन्ति ते ।**
**यथा हि हासः शृङ्गारे रतिः शान्ते च दृश्यते ॥**
**वीरे क्रोधः भयं शोके जुगुप्सा च भयानके ।**
**उत्साह-विस्मयौ सर्वरसेषु व्यभिचारिणौ ॥** (सं०र०)

उपर्युक्तव्यभिचारिभावैः सम्बद्धविवेचनानां निष्कर्षोऽयं समायाति यत् व्यभिचारिणां

त्रयस्त्रिंशत् संख्या प्रतिपादिते सत्यपि, ऊनपञ्चाशत् भावेषु कोऽपि भावः परिस्थितिविशेषे व्यभिचारिणो भवितुमर्हन्ति ।

**स्थायिभावानां परिचयः**

**विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ॥**

(काव्य० प्र० ४।२८)

तथा च यः विरुद्धैः, अविरुद्धैश्च भावैर्न विच्छिद्यते, एवम्भूत आस्वाद्यङ्कुरकन्दः स्थायिभावः कथ्यते' तद्यथा—

**विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।**
**आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥**

ननु अन्तःकरणवृत्तिरूपस्य रत्यादेराशुविनाशित्वेन यावद्रसमवास्थानाऽसम्भवात् कथं स्थायित्वमिति चेत् ? उच्यते—आप्रबन्धं संस्कारात्मना स्थिरत्वात् यावद्रस प्रतीतिकालमनुसन्धीयमानत्वाच्च, अमीषां भावानां स्थायित्वम् । अयं स्थायिभावः सर्वभावेषु प्रधानम्, यथा नराणां नरपतिः, शिष्याणां गुरुः । अस्यायं भावः—यथा समानलक्षणा समानाङ्गप्रत्यङ्गाः अपि पुरुषाः कुलशीलविद्याविचक्षणत्वयुक्ताराजत्वमाप्नुवन्ति, तथैव भावेषु ये प्राधान्यं भजन्ते ते स्थायिभावाः उच्यन्ते । अपरे परिजनभूता व्यभिचारिभावाः कथ्यन्ते । स्थायिभावाश्च—

**रतिहासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**
**जुगुप्साविस्मयश्चेति निर्वेदो नवमस्तथा ॥**

(काव्य०प्र० ३०४, का०३०)

ये केचन निर्वेदं स्थायिभावं न मन्यते किन्तु शमम्—तेषामयमभिप्रायः—विषयेषु अलं प्रत्यय (हेयत्व ज्ञानरूपत्वात्) आत्मावमाननरूपत्वाद्वेति । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभावात् । न निर्वेदः स्थायिभावः, किन्तु शमः । उक्तं च भरतेन—'**क्वचिच्छमः** इति । द्वैपायनेनापि—

**यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥** इति ।

इति शमस्यैव प्राधान्यादिति चेत् । तदयुक्तम्—शम्यते यस्मादिति शमः, इति व्युत्पत्या तस्य निर्वेदपरत्वात् । अपि च तृष्णायाः क्षयो यस्मात् इति तृष्णाक्षयोऽपि निर्वेद एव । अयं निष्कर्षः—

तत्त्वज्ञानजन्यनिर्वेदस्य स्थायित्वम्, कारणान्तरजन्यस्य व्यभिचारित्वमिति ।

उक्तञ्च अन्यत्राचार्यैः—

**स्थायिस्याद्विषयेष्वेव तत्त्वज्ञानाद्भवेद्यदि ।**

**इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ** ॥ इति ।

इत्थं नवस्थायिभावास्तेषां संक्षेपेण लक्षणमेवम्—

तत्र मनोनुकूलेऽर्थे मनसः प्रेमार्द्रत्वं रतिः । वागादि विकारैश्चेतो विकासो हासः । इष्टनाशजन्मा चेतो विकारः शोकः । प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोधः । कार्यारम्भेषु स्थिर आवेश उत्साहः । रौद्रशक्तिदर्शनजन्यं चेतो वैक्लव्यं भयम् । विस्मयजनिता दोषदर्शनादिभिः पदार्थगर्हाजुगुप्सा । लोकसीमाऽतिवर्त्तिषु विभिन्नेषु पदार्थेषु चेतसो विस्तारो विस्मयः । विषयेषु तत्त्वज्ञानादुत्पन्ना हेयत्वबुद्धि निर्वेद इति ।

जन्मजन्मान्तरात्प्राप्तसंस्कारस्यैवापरनाम 'वासना' अस्ति । इयमेव वासना यदोपयुक्तोद्बोधकसामग्रीमाप्नोति तदैवोद्बुद्धो भवति । इयमुद्बोधिका सामग्री जन्मान्तरस्याऽपि संस्कारान् किम्वा वर्त्तमानजन्मस्याऽपि संस्कारान् देश-देशान्तर-कालादिभिः व्यवहितेऽपि वासनेयं प्रबुद्धं करोति । योगदर्शनस्याऽपि एष एव सिद्धान्तोऽस्ति—'**तासामनादित्वं चाशिषो नित्यत्वात्** (यो०सू० ४.१०) । जाति-देश-काल-व्यवहितानामप्यानन्तर्यस्मृतिसंस्कारयोरेकरूपत्वात् । (तत्रैव ४.१०) अमूमेन संस्कारं वा वासनां स्थायिभावः कथ्यते । स्थायिभावोऽयं लवणकार इव भवति - '**आत्मभावं नयत्यव्यान् स स्थायी लवणाकरः** ।' दशरू० ४-३४ । द्रष्टव्यः सा० द० ३.१८४ । एभिर्विभावादिभिरभिव्यक्तः स्थायिभाव एव रस उच्यते । इयमेव रसनस्यास्वादनस्य चावस्था रसो भवति । एवंविधस्य वेद्यान्तरस्पर्शशून्यस्य ब्रह्मानन्द-सहोदरस्य परमानन्दस्य रसस्य निष्पत्तिप्रकारः परमकविना भरतमुनिना—'विभावानुभाव-व्यभिचारि रसनिष्पत्ति निर्दिष्टः । यथा दुग्धं अम्लयोगेन रूपान्तरं परिणतं सद् दधीत्युच्यते तथैव रत्यादि स्थायीभावः परम प्रवीणकविना कयापि विलक्षणया वैदग्ध्य-प्रणाल्या काव्यनाट्यसमर्पितविभावानुभावसञ्चारिसंयोगेन चिदानन्दचमत्कारस्वरूपेण परिणतः सन् रसपदेन व्यवह्रियते । तदुक्तं मम्मटाचार्येण—

**कारणान्यथ कार्याणि सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥**
**विभावानुभावास्तत् कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसस्मृतः ॥**

(का०प्र० ४।२७-२८)

कथनस्यायमाशयः—विभावयन्त्यास्वादयोग्यतां नयन्ति इति विभावाः, ते च द्विविधाः, आलम्बनविभावाः, उद्दीपनविभावाश्च, तत्र शृङ्गारे नायिका आलम्बन विभावः, उद्यानादयश्चोद्दीपनविभावाः तैः रत्यादिको भावः जनितः । अनुभावयन्ति सूचयन्तीत्य-नुभावाः कटाक्षभुजाक्षेपादयः, उक्तञ्च —'**अनुभावो विकारस्तु भावसंसूचनात्मकः**' तैः सूचितः व्यभिचरितुं शीलं येषां ते व्यभिचारिणः निर्वेदादयस्ते त्रयस्त्रिंशत् तैः पुष्टिं नीतः स्थायीभावः रसतामेति । तथा चोक्तम्—

**'विभावानुभावेन व्यक्तः सञ्चारिणा तथा ।**

**रसतामेति रत्यादिस्थायीभावो रस स्मृतः ॥'**

एष निष्कर्षः—वस्तुतः वासना बीजं, आलम्बन हृदयक्षेत्रे स्थायिभावाङ्कुरः उत्पद्यते । उद्दीपनरूप जलवायुना च वर्द्धते, अनुभावरूपादयो जायते, तत्र च सञ्चारिभावरूपाणि पुष्पानि विकसन्ति, येभ्यो मकरन्दरूपो रसः निष्पद्यते । किञ्च यथा पृथिव्यां गन्धः जलसिञ्चनेन प्रकटमनुभूयते, तथैवास्माकं हृदयेषु वासनात्मकः संस्कारः विभावादिभि उद्बुध्य चमत्कृतमानन्दञ्चोत्पादयति, अत एवोक्तम्—

**'स वासनानां सभ्यानां रसस्यास्वादनं भवेत् ।**
**निर्वासनास्तु रङ्गान्तः काष्ठकुड्यादि सन्निभाः ॥'**

तात्पर्यमिदमस्ति -स्थायिनां विभावादिभिः समं संयोगात् व्यङ्ग्यव्यञ्जकभावरूप सम्बन्धात् विभावादीनामेव विभावादिभिः समं संयोगात् रसस्य निष्पत्तिरभिव्यक्तिरित्यर्थः ।

रतिकारणादीनामनुभवादसकृतानुमितारतिः सहृदयहृदयमधितिष्ठति किञ्चित् कालान्तरं सुनिपुणमनुष्ठितयोः रामादिव्यक्तिविशेषसम्बन्धिरतिकारणविभावादि प्रतिपादकयोरपि नाट्यकाव्ययोः सहृदयसहकृतभावनाविशेषसाधारणीकरणं भवति । तैश्च साधारणीकृतैः विभावादिभिः सहृदयहृदयावस्थिता सा रतिः व्यञ्जनयाऽभिव्यक्ता सामाजिकानां आस्वाद्यतामेति, एतादृशास्वादः एव रसः ।

रस्यते आस्वाद्यते इति रसः, यथा इक्षूणामाऽम्राणाञ्च रसः शृङ्गाररस इत्यत्र रसशब्दो भिन्नार्थकः तथैव तदास्वादनप्रकारोऽपि नैकविधः । यथा कामिनीनां वार्त्तासु भाषणे कथायां वा श्रोत्राभ्यां रसः आस्वाद्यते, कामिनीरूपे ज्योत्स्ना साक्षात्कारे च नेत्राभ्यां रसोऽनुभूयते, आम्र-कदली-जाम्बीर-दाडिमादीनां स्वादः रसनया रसोऽनुभूयते । यथाऽत्र रसास्वादनप्रकारः नैकविधः तथैव—**'विभावानुभाव व्यभिचारिसंयोगाद्रस निष्पत्तिः'** इति भरतसूत्रेऽपि संयोग-निष्पत्तिशब्दयोः भिन्नार्थमादाय रसनिष्पत्ति-विषये चत्वारि मतानि प्राधान्येन प्रावर्त्तन्त ।

यद्यप्यस्य सूत्रस्य कलेवरं यादृशं लघु प्रतीयते तेनैव प्रकारेणास्यातीव विस्तारेण व्याख्याकृताभूत् समालोचकैः । यद्यपि कस्यचन कमनीयस्य नाट्यस्यावलोकनेन कमनीयस्याथवा काव्यस्य श्रवणेन चेतसि यः अलौकिक आनन्द उन्मीलितो भवति स एव रसपदेनाभिधीयते । किन्त्वस्य रससूत्रस्य व्याख्यायां भरत परवर्त्तिनः अनेके आचार्याः अपरिमितं स्वबुद्धिवैभवं प्रदर्शयामासुः । तेषां व्याख्यातृणां चतुर्णां मतमेवातीव प्रख्यातानि सन्ति । तत्र भट्टलोल्लटस्य मतम्, भट्टशङ्कुकस्य मतम्, भट्टनायकस्य मतम्, अभिनवगुप्तपादाचार्यस्य मतञ्चेति ।

### (१) भट्टलोल्लटस्य मतम् : उत्पत्तिवादः

रसविषयकं भरतसूत्रमिदमित्थं विवृण्वते मीमांसकभट्टलोल्लटः—स्थायिनां विभावैः सह संयोगात् उत्पाद्योत्पादकभावरूपात् सम्बन्धात् रसस्योत्पत्तिर्भवति । अनुभावैः सह संयोगात्—गम्यगमकभावरूपात् सम्बन्धात् रसस्य प्रतीतिर्भवति । व्यभिचारिभिः सह

संयोगात्—पोष्यपोषकभावसम्बन्धात् रसस्य निष्पत्तिः पुष्टिश्च भवति । तथा हि ललनादिभिरालम्बनविभावैः स्थायीरत्यादिको जनितः, उद्यानचन्द्रिकादिभिः उद्दीपन-विभावैः उद्दीपितः, अनुभावैः कटाक्षादिभिः कार्यैः प्रतीतियोग्यः कृतः अभिव्यक्तः, व्यभिचारिभिः निर्वेदादिभिः उपचितः, पुष्टिकृतः, मुख्यया वृत्या अर्थात् साक्षात्सम्बन्धेन, अनुकार्ये = नाट्येनाभिनये रामादौ नायके, स्थितोऽपि, तद्रूपानु-सन्धानात् = रामस्येव वेशविशेषवाग्विधायिनि नर्त्तके काव्यपाठके वा तत्कालं रामत्वाभिमानात् रामत्वारोपाद् वा प्रतीयमानः = सामाजिकैरारोप्यमाणः रसो भवति ।

संक्षिप्तेनास्य मते-असत्यपि सर्पे दाम्नोऽपि भयमुत्पद्यते तथैव सीताविषयिणी-रामरतिः नर्त्तकेऽविद्यमानाऽपि नाट्यनैपुण्येन तस्मिन् स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्ती रसपदवीमधिरोहति । किन्तु, नैतद्युक्तम् यतो हि सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधात् । न च तज्ज्ञानमेव चमत्कारहेतुः । शाब्दबोधे तं ज्ञानेऽपि तदापत्तेः । अन्यथैवोपपत्या तादृशकल्पनायां मानाभावाच्च । अतः मतमिदमग्राह्यम् ।

## (२) तदनन्तरमनुमतिवादस्याविष्कर्त्ता भट्टशङ्कुकस्य मतम्

श्रीशंकुकमते 'संयोगशब्दस्य' गम्यगमकभावसम्बन्धः अथवा अनुमाप्यअनुमापक-भावसम्बन्धः निष्पत्तिरनुमितिः । ततश्चायमर्थः 'विभावानुभावव्यभिचारिसंयोगात् अनुमाप्यनुमापकभावसम्बन्धात् रसनिष्पत्तिरितिरनुमितिरित्यर्थः ।

राम एवायं, न रामोऽयं, रामः स्यान्नवा, रामसदृशोऽयमिति नटे सम्यक् मिथ्या सादृश्य-संशयप्रतीतिभ्यः विलक्षणेन चित्रतुरगन्यायेन रामोऽयमिति ज्ञानेन विषयीकृते नटे, स्वशिक्षाभ्यासपाटवेन नटेनैव प्रकाशितैः कार्यकारणसहकारिभिः कृत्रिमैरपि परं कृत्रिमत्वेनाऽनभिमन्यमानैः विभावादिशब्दव्यवहार्यैः अनुमाप्यानुमानकभाव सम्बन्धात् सामाजिकैः अनुमीयमानः, वस्तुतः नटे सन्नपि सामाजिकानां धारावाहिन्या भावनया आश्वाद्यमान रसो भवतीति ।

परस्मिन् गतेऽनुमिति विरहेऽपि रसोदयात्, रसं साक्षात्कारं करोमीत्यनु-व्यवसायाच्चैतन्मतं न क्षोदक्षमम् । किञ्चास्मिन् मते रसस्य सत्ता पाठके दर्शके वा न क्रियते, पुनरन्येषां भावैः दर्शकः कथं चमत्कृतः स्यात् । अपरञ्च तुष्यद्दुर्जन-न्यायेनान्यस्य भावैः सामाजिकः चमत्कृतः जायते इति स्वीकृतेऽपि पूज्यव्यक्तीनां विषये सीताविषयकरतिभावाः सामाजिकानां हृदयेषु असङ्गताः खलु । अन्यच्च रसानुभूतिस्तु सदानन्दमयी, चेत्सामाजिकः नायकभावाननुभवति तदा शोकत्रस्तैः नायकभावैः कथं रसानुभूतिः ? अतः एतन्नैयायिकमतमपि न क्षोदक्षममिति ।

## (३) भुक्तिवादस्याविष्कर्त्ता भट्टनायकस्य मतम्

भट्टनायकमते रसनिष्पत्तौ व्यापारद्वयं भावकत्वव्यापारः भोजकत्वव्यापारश्च । तत्र भावकत्वव्यापारेण रसः साधारणः क्रियते । अर्थात् सीतादयो विभावाः-रामसम्बन्धिनी-रतिश्च कामिनीत्वरतित्वादिनैवावस्थाप्यते । भोजकत्वव्यापारेण सा रतिः सहृदयैरास्वाद्यते । परमस्मिन् मते व्यापारद्वयकल्पनागौरवम् । व्यापारद्वयकल्पने प्रमाणाभावाच्चेति ।

### (४) अभिव्यक्तिर्वादस्याविष्कर्त्ताऽभिनवगुप्तः

अतोऽभिनवगुप्ताचार्यमतेन विभावादिभिः समं संयोगात् व्यङ्ग्य- व्यञ्जकभावरूपात् सम्बन्धात् विभावादीनामेव वा परस्परं संयोगात् रस निष्पत्तिरभिव्यक्तिः जायते रसो वै सः' 'रस एव ब्रह्म' इति स्वतः प्रमाणभूतश्रुतिवचनप्रामाण्येन विद्वद्भिः जीवनस्य परमोद्देश्यभूतमलौकिकं चिदानन्दचमत्कारात्मकं रसमास्वादयतुमेव काव्यशास्त्रं व्यरचि । 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति श्रुतिः वेद्यान्तरस्पर्शशून्यः, ब्रह्मानन्दसहोदरः, लोकोत्तराह्लादात्मकचमत्कारशाली, विलक्षणः, किमपि अनिर्वचनीयः, सहृदय-हृदय-संवेद्यः, लौकिकरसनाविषयीभूत मधुरादिरसविलक्षणः, वाणीभिः वर्णयितुमशक्यः केवलं सहृदयानां हृदयङ्गमोऽयं रसः । काव्यस्य आत्मरूपेणायमेव रसः । अलङ्कारशेखरे शौद्धोदनिरप्याह—

**'अलङ्कारस्तु शोभायां रस आत्मापरे मनः ।'**

तत्तद्स्थायीभावानां आस्वादरूपेण रसानां संख्या निर्धारिताऽस्ति । यद्यपि रसानां संख्याया विषये अलङ्कारिकाणां वैमत्यमास्ते । नाट्यशास्त्रप्रणेतुः भरतमुनेरनुसारेणाष्टावेव रसाः भवन्ति । मम्मटाचार्यमतेन शान्तोऽपि नवमो रसोऽस्ति । यथा—

**शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः ।**
**वीभत्साद्भुद्संज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥** (ना०शा० ६,१५)
**निर्वेद-स्थायि-भावोऽस्ति शान्तोऽपि नवमो रसः ॥**
(का०प्र० ४.३५)

किन्तु, धनञ्जयो दशरूपककारस्तस्य व्याख्याकारः धनिकश्च शान्ताख्यस्य रस-सत्तां नाट्ये नहि स्वीकुर्वन्ति, तस्याभिनयायोग्यत्वात् । किन्त्वभिनवगुप्तो नागानन्दनाटकस्याङ्गीरसं शान्तं स्वीकृत्य तस्याऽपि सत्तां नाट्ये संस्थापयन्ति । आचार्यो रुद्रटः प्रेयान् नामकं दशमं रसं स्वीकरोति स्वकीये काव्यालङ्कारग्रन्थे । साहित्यदर्पणकारो विश्वनाथो वात्सल्याभिख्यस्य रसस्य समर्थनं करोति । गौड़ीयानां वैष्णवानामनुसारेण मधुररस एव सर्वप्रधानः सर्वप्रथमश्च रसो वर्त्तते ।

### १. शृङ्गाररसः

नायक-नायिकारूप आलम्बनेन, ऋतु-माल्य-चन्द्रोपवनादि उद्दीपनैः, उद्बुद्धः, भ्रूविक्षेप-कटाक्षादिकायिकानुभावैः, मधुर-ललित-वचनरूपवाचिकानुभावैः तथा स्वेदरोमाञ्चादिसात्त्विाकानुभावैः प्रतीतियोग्यः, लज्जा औत्सुक्यादि व्यभिचारिभिः परिपुष्टोः रतिरूप स्थायिभावस्यास्वादः शृङ्गार-रसो भवति ।

**ऋतुमाल्यालङ्कारैः प्रियजन-गान्धर्व-काव्य-सेवाभिः ।**
**उपवनगमन-विहारैः शृङ्गाररसः समुद्भवति ॥**
(ना०शा० ६.४७)

तत्र शृङ्गारस्य द्वौ भेदौ—सम्भोगो विप्रलम्भश्च । तत्र सम्भोगः परस्परावलोकना-

लिङ्गनाधरपानचुम्बनाद्यनन्तत्वात् अपरिच्छेद्य एक एव गण्यते । स एव सम्भोगः नायिकारब्धः नायकारब्धयश्चेति द्विधा । तत्र नायिकारब्धो यथा—

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थली**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥**

अत्र नायकः आलम्बनम् । शून्यगृहनायकनिद्रादि उद्दीपनम् । मुखनिर्वर्णन-चुम्बनादि अनुभावः । लज्जा-हास-व्यङ्ग्यहर्षादि व्यभिचारिभावः । रतिः स्थायिभावः तज्ज्ञे सामाजिके नायिकानिष्ठस्यैव रसस्य निष्पत्तिः । नायकारब्धो यथा—

**त्वं मुग्धाक्षिविनैव कञ्चुलिकया धत्से मनोहारिणीम्**
**लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकां संस्पृशि ।**
**शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो**
**निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥'**

अत्र मुग्धाक्षी आलम्बनम् । नयनसौन्दर्याङ्गशोभादि उद्दीपनम् । आभाषणपिठिकास्पर्शौ अनुभावौ । उत्कण्ठादयो व्यभिचारिणः । तज्ज्ञे सामाजिके नायकनिष्ठरतिविषयक रसनिष्पत्तिरिति ।

विप्रलम्भस्तु-अभिलाषाविरहेर्ष्या-प्रवासशापहेतुकः पञ्चविधः । तत्र अभिलाषः, अप्राप्तसमागमयोः परस्परप्राप्तीच्छा । विरहः-एकदेशस्थितयोरपि एकतरस्याननुरागात् गुरुलज्जादिवशाच्चासंयोगः । ईर्ष्याभावहेतुमात्रं प्रवासः, अनुरक्तयोरपि कार्यान्तरवशात् विभिन्नदेशस्थितिः । शापः 'एतावन्तं कालं तव नायिका संयोगो मास्तु' इत्यादिरूपः ।

**२. हास्यरसः**

विकृतवेषाद्यालम्बनैस्तथा विकृताऽलङ्कारादि लौल्याद्युपनैरुद्बुद्धः, गल्वत्र फुल्लाद्यभावितः, असत्प्रलापाश्रुपातादि अनुभावैः प्रतीतियोग्यः एवं श्रमादि व्यभि-चारिभिः परिपुष्टो हास-रूप स्थायिभावस्याऽऽस्वादो हास्यरसो भवति -

**विपरीतालङ्कारैर्विकृताचाराभिधान-वेषैश्च ।**
**विकृतैरर्थविशेषैहसतीति रसः स्मृतो हास्यः ॥** (ना०शा० ६।४९)

पुनः रसोऽयं द्विविधो भवति । आत्मस्थः परस्थश्चेति । यदा स्वयं हसति तदाऽऽत्मस्थोऽयं रसस्तथा यदा अन्यजनान् हासयति तदा परस्य हास्यो भवति । पुनरुभयोः स्मित-हसित-विहसित-उपहसित-अपहसित-अतिहसितादयः षड्भेदाः भवन्ति । पुनरेतेषां उत्तममध्यमाधमभेदेनानेकभेदाः भवन्ति (ना०शा०द्र० ६.५०-६१) । अत्र विकृत वाग्वेषादिदर्शनेऽवश्यं हासोदयात् हासप्रकृतिको रसः सामाजिकेषु व्यज्यते ।

**३. करुणरसः**

धनस्वजनादिविनाशरूपालम्बनैस्तथा तेषां गुणादिरूपोद्दीपनैरुद्दीपनैरुददबुद्धः, अश्रुपातपरिदेवनवैवर्ण्यादि अनुभावैः प्रतीतियोग्यः एवं निर्वेद-ग्लानि-दैन्यादि व्यभिचारिभिः शोकरूपस्थायिभावस्याऽऽस्वादः करुणरसो भवति ।

**इष्टवधदर्शनाद्वा विप्रिय वचनस्य संश्रयाद्वापि ।**
**एभिर्भाव विशेषैः करुणरसो नाम संभवति** ।। (ना०शा० ६,६२)

अत्राभिज्ञके सामाजिके शोकः प्रकृतिकः करुणो रसो व्यज्यते ।

**४. रौद्ररसः**

क्रोधस्थायिभावको द्विषदालम्बनकस्तदपकाराद्युद्दीपितो विकत्थनादि अनुभावितो गर्वादिसञ्चारितो रौद्ररसो भवति । अत्रोपकारिणो आलम्बनम्, अस्त्राद्युदमनमुद्दीपनं, प्रतिज्ञा अनुभावः, अन्यनैरपेक्ष्यगम्यगर्वो व्यभिचारिभावः । क्रोधः स्थायिभावः तदभिज्ञे सामाजिके क्रोधप्रकृतिको रौद्रो रसो व्यज्यते ।

**सत्त्व-प्रहार-घातन-विकृतच्छेदन-विदारणैश्चैव ।**
**संग्रामसम्भ्रमोत्त्थैरेभिः सञ्जायते रौद्रः** ।। (ना०शा० ६,६४)

**५. वीररसः (युद्धवीर-दानवीर-दयावीराः)**

उत्साहस्थायिभावको द्विषद्विद्वज्जनादीनालम्बनकोऽपकारगुणाद्युद्दीपितः प्रतीकार-करणदानाद्यनुभावितो हर्षवेगचिन्तादिसञ्चारितो वीररसो भवति । तत्र शत्रुविद्वज्जन-दीनाद्यालम्बनैस्तथाऽपकार-गुण-कष्टाद्युद्दीपनैरुद्बुद्धः, शौर्यदानदयाद्यनुभावैः प्रतीतियोग्यः एवमावेग-हर्ष-चिन्तादि-सञ्चारिभिः परिपुष्टः उत्साहरूपस्थायिभावस्य आस्वादो वीररसो भवति—

**उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात् ।**
**विविधादर्थविशेषाद् वीररसो नाम संभवति** ।। (ना०शा० ६,६७)

त्रयो भेदाः भवन्त्यस्य । युद्धवीर-दानवीर-दयावीरश्चेति ।

**६. भयानकरसः**

विकट-हिंसकाद्यालम्बनैस्तथा विकट-कर्माद्युद्दीपनैरुद्बुद्धः, कम्पन-पलायन-आह्वान-वैवर्ण्याद्यनुभावैः प्रतीतियोग्यः । एवं आवेग-त्रास-अपस्मारादिव्यभिचारिभिः परिपुष्टो भयरूपस्थायिभावस्याऽऽस्वादो भयानकरसो भवति । अर्थात् भयस्य स्थायि-भावको विकटाद्यालम्बनकः, तद्विकटकर्माद्युद्दीपितः, पलायनाद्यनुभावितो जड़तादि-सञ्चारितो भयानकरसः—

**विकृतरव-सत्त्व-दर्शन-संग्रामारण्य-शून्य गृह-गमनात् ।**
**गुरुनृपयोरपराधात् कृतकाश्च भयानको ज्ञेयः** ।। (ना०शा० ६।६९)

### ७. वीभत्सरसः

अनभिमतविण्मूत्रादि आलम्बनैस्तथा दुर्गन्धादि उद्दीपनैरुद्बुद्धः, निष्ठीवन-उद्वेजन-रोमाञ्चादि अनुभावैः प्रतीतियोग्यः एवं आवेगग्लान्यादिव्याभिचारिभिः परिपुष्टः जुगुप्सारूपस्थायिभावस्याऽस्वादः वीभत्सरसो भवति । तत्तु जुगुप्सा स्थायिभावको विण्मूत्राद्यालम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसञ्चारितो वीभत्सो रसः ।

**अनभिमत दर्शनेन च रस-गन्ध-स्पर्श-शब्द-दोषैश्च ।**
**उद्वेजनैश्च बहुभिर्वीभत्स रसः समुद्भवति ॥** (ना०शा० ६।७३)

### ८. अद्भुत-रसः

दिव्य-दर्शन-माया-इन्द्रजालादिविस्मयजनककर्मरूपावलम्बनैः तथा विस्मय-कर्मरूपावलम्बनैरुद्बुद्धः, निर्निमेष-दर्शन-साधुवादप्रदान-रोमाञ्चादि व्यभिचारिभिः परिपुष्टः विस्मयरूपस्थायिभावस्याऽस्वादः अद्भुतरसो भवति । विस्मयस्थायिभावको विस्मय-जनककर्मकर्त्रालम्बनको विस्मयकर्माद्युद्दीपितश्चकिताद्यनुभावितो हर्षादि सञ्चारितोऽद्-भुतरसः तदभिज्ञे सामाजिके व्यज्यते ।

**यस्त्वतिशयार्थयुक्तं वाक्यं शीलञ्च कर्मरूपञ्च ।**
**एभिस्तत्वर्थ-विशेषैः रसोऽद्भुतो नाम विज्ञेयः ॥** (ना०शा० ६.७५)

### ९. शान्तरसः

तत्त्वज्ञान-कारणमिथ्यारूपेण ज्ञातसंसाराद्यालम्बनैस्तथा तपोवनादि उद्दीपनैरुद्-बुद्धः सुख-दुःखे समदर्शनाद्यनुभावैः प्रतीतियोग्यः, एवं मति-धैर्य-हर्षादि व्यभिचारिभिः परिपुष्टः तत्त्वज्ञानजनितनिर्वेदरूप स्थायिभावस्याऽऽस्वादः शान्तरसो भवति ।

**न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागो न कदाचिदिच्छा ।**
**रसः प्रशान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥**
(का०प्र०वा०टी० तथा सा०द० ३.२३३ करिकोपरि)

तत्र महापात्रो विश्वनाथः साहित्यदर्पणस्य तृतीयपरिच्छेदे शान्तं निरूपयन् लिखति—

**शान्तः शमस्थायिभावः उत्तम प्रकृतिको रसः ॥ २४५ ॥**
**कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ।**
**अनित्यत्वादिनाशेषवस्तुनिस्सारता तु या ॥ २४६ ॥**
**परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ।**
**पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनाश्रयः ॥ २४७ ॥**
**महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ।**
**रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ॥ २४८ ॥**
**निर्वेदहर्षस्मरणमतिभूतदयादयः ॥** (सा०दर्पण, तृ०परिच्छेदः)

अस्य स्थायिभावो शमः । प्रकृतिरुत्तमा । कुन्देन्दुवदतिधवलो वर्णः । श्रियायुक्तो नारायणोऽस्य देवताः । समस्तवस्तूनां वित्तपुत्रादिपदार्थानां निःसारता परमात्मस्वरूपं वाऽऽलम्बनम् । पुण्याश्रमः चित्रकूटादि हरिक्षेत्रं श्रीक्षेत्रं तीर्थप्रयागादि रम्यवनं नैमिषारण्यादिवैद्यनाथादयः महापुरुषप्रसङ्गः मोक्षशास्त्रश्रवणमननादयश्चोद्दीपनविभावाः रोमाञ्चः दया संन्यस्ततादयोऽनुभावाः । निर्वेदः, हर्षः, स्मरणम्, मतिः, धृतिः औत्सुक्यादयश्च व्यभिचारिणोऽयं भवन्ति ।

मम्मटमते त्वस्य स्थायिभावोऽस्ति निर्वेदः । यथोक्तम्—

**'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।'** (का०प्र० च०उ०)

यथा **'समानाङ्गप्रत्यङ्गाः'** अपि पुरुषाः कुलशीलविद्याविचक्षणत्वयुक्ताः राजत्वमाप्नुवन्ति, तथैव भावेषु ये प्राधान्यं भजन्ते ते स्थायिभावा उच्यन्ते । अपरे परिजनभूताः व्यभिचारिभावाः कथ्यन्ते । ये केचन निर्वेदं स्थायिभावं न मन्यन्ते, किन्तु शमं तेषामयमभिप्रायः—'विषयेषु अलं प्रत्ययरूपत्वात् (हेयत्वज्ञानरूपत्वात्) आत्मावमाननरूपत्वात् वा । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्र विश्रामानन्दप्रादुर्भावमयत्वानुभावात् । न निर्वेदः स्थायिभावः, किन्तु शमः । उक्तञ्च क्वचिच्छमः' इति । इति शमस्यैव प्राधान्यादिति चेत् । तदयुक्तम्—शक्यते यस्मादिति शमः, इति व्युत्पत्या तस्य निर्वेदपरत्वात् अपि च तृष्णायाः क्षयो यस्मादिति तृष्णाक्षयोऽपि निर्वेद एव । अयं निष्कर्षः—तत्त्वज्ञानजन्यनिर्वेदस्य स्थायित्वम्, कारणान्तरजन्यस्य व्यभिचारित्वमिति । किञ्च, विश्वनाथाद्यनुसारेण शान्तस्य स्थायिभावो निर्वेदः भवितुं न शक्यते, यतो हि विषयेषु हेयत्व तथा स्वतुच्छत्वबुद्ध्या निर्वेदे संसारिकपदार्थैः विशमो भवति । अतोऽभावरूप निर्वेदः स्थायिभावो भवितुं न शक्यते । अतः शान्तस्य स्थायिभावः शममेवेति । **'शान्तः शमस्थायिभावः उत्तम प्रकृतिर्मतः ।'** (सा०द० ३,२३२) किञ्चेदं कथनं नोचितम् । यतो हि यथा हर्षादौ रत्यादयः कारणं भवति तथैव शमे तत्त्वज्ञानजन्यनिर्वेदकारणं कारणं भवति । अतः निर्वेद एव स्थायिभावः भवितुमर्हति न तु शममिति । अत एव मुनिभरतेन एकोनपञ्चाशत् भावाः प्रोक्ताः । तत्राष्टौ भावाः स्थायिनः, त्रयस्त्रिंशत् व्यभिचारिणः, अष्टौ सात्त्विकभेदाः भवन्ति । यथा—**'तत्राष्टौ भावाः स्थायिनः, त्रयस्त्रिंशत् व्यभिचारिणः, अष्टौ सात्त्विकाः इति भेदाः । एवमेते काव्यरसाभिव्यक्ति-हेतवः एकोनपञ्चाशत् भावाः प्रत्यवगन्तव्याः ।'** (ना०शा० अ० ६)

यदि शमोऽपि स्थायिभावो भवति तदा स्थायिभावानां संख्या पञ्चाशत भविष्यति । अतः अधिकांश आचार्याणां मते शममेव स्थायिभावः अङ्गीकर्त्तुं समुचितो भवति ।

### १०. वात्सल्यरसः

अथ मुनीन्द्रसम्मतो वत्सलं कथितो विश्वनाथेन । अनेन कथनेन परमप्राचीनालङ्कारिकस्य भरतस्याऽभिमतो वत्सलो रसः प्रतिपाद्यत इति । अनया वचोभङ्ग्या वत्सलस्य रसत्वे नव्यानां स्वस्य च सम्मतिर्नास्तीति सूचितम् ।

उत्कटं चमत्कारजनकतया वत्सलरसं विदुः भरतादयः । अत्र वत्सलतारूपः स्थायिभावः, पुत्रः, आदिशब्दात् अनुजतनुजादिकस्यालम्बनं मतम् । तस्य पुत्रादेश्चेष्टा-खेलनकूर्दन हास्यादिः, विद्याशास्त्रादिज्ञानम्, शौर्यवीरत्वम् उदयो वित्तोपार्जनादिभिरुन्नतिः सेवादयस्योद्दीपनविभावाः । तद्यथा-पुत्रपुत्री-अनुजादितस्यालम्बनमस्ति, एवं तस्य चेष्टा विद्या-शौर्यादि उद्दीपनम् । आलिङ्गन-अङ्गस्पर्श-शिरश्चुम्बन-अवलोकन-पुत्रक-हर्षाश्रु-प्रभृतयरनुभावाः भवन्ति । अनिष्टस्याशङ्का हर्ष-गर्वादयोऽस्य व्यभिचारिणः, एभिः संयोगैः वात्सल्य-स्नेहरूपः स्थायिभावो वत्सलः रसरूपे परिणतो भवति—

**स्फुटं चमत्कारितया वत्सलं च रसं विदुः ।**
**स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम् ॥** (सा०द० ३-२३५)

यथा भगवद्विषयकः भक्तिरूपो रतिः भाव एवास्ति । न तु रसस्तथैव पुत्रादि विषयकः वत्सलता रूप रति भाव एवास्ति, न तु वत्सलरसः । अतएवाचार्यनम्मटेन कथितः यत् देवताविषयकस्तथा आदिपदेन मुनि-गुरु-नृप-पुत्रादि विषयकः रत्यादि तथा प्रधानरूपेणाभिव्यक्तः व्यभिचारी 'भावः' इति कथ्यते । अतः पुत्रादिविषयकः रत्या भाव एवाभिव्यक्तो भवति न तु रस इति ।

**रतिर्देवादिविषया व्याभिचारी तथाञ्जिता । भावः प्रोक्तः ।**
(का०प्र० ४.३५)

गोविन्दठक्कुरेणाऽपि प्रदीपे प्रोक्तः—यदि रत्यादिः निरङ्गः स्यात् अथवा देवादिविषयको भवेत् अथवा अन्याङ्गभावो भवेत् तदासौ स्थायीशब्देन व्यवहर्त्तुं न शक्यते । अतः नव रसाः एवं ।

**रत्यादिश्चेन्निरङ्गः स्यात् देवादिविषयोऽथवा ।**
**अन्याङ्ग-भाव-भावास्यान्न तदा स्थायि-शब्दभाक् ॥**
(का०प्र० ४.३५ उपरि काव्यप्रदीपः)

## ११. भक्तिरसः

भगवान् एवं तस्य वल्लभरूपालम्बनविभावैः, भगवतः गुण-चेष्टा-प्रसाधन-तुलसी-चन्दनादि उद्दीपनविभावैः, नृत्य-गीत-अश्रुपात-नेत्रनिमीलनादि अनुभावैः, रोमाञ्चादि-सात्त्विकभावैः, निर्वेदादि व्याभिचारिभिः, भगवदाकारात्मक प्रेमस्वरूपस्थायीभावेन साक्षात् परमानन्दस्वरूपभक्तिरसः अभिव्यक्तो भवति । **(आलम्बनविभावो भगवान्, उद्दीपन-विभावः तुलसीचन्दनादिः, अनुभावोनेत्रविक्रयादिः व्यभिचारिणौ निर्वेदादयः व्यक्तीभवति) भगवदकारतारूपो रत्याख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मक प्रादुर्भवति** । (भक्तिरसा० पृ०१३) अस्मिन्नालम्बना प्रोक्ताः कृष्णस्तस्य च वल्लभाः । **(उ०नी० ४) 'रसो वै सः'** अनया श्रुत्या प्रतिपादितरसस्य साक्षादनुभवः अस्मिन्नेव भक्तिरसे भवति । अतएव एवं काव्यस्यात्मेति पक्षः ।

— ❖ —

# अलङ्कार-सम्प्रदायः

**'न कान्तमपि निर्भूषं विभाति वनिताननम्'** (भामह० १।१३)

अलङ्कारसम्प्रदायस्य प्रर्वतकालङ्कारिकेषु ऐतिहासिकदृष्ट्या भामहाचार्य एव प्रथमाचार्यो वर्त्तते । यद्यपि, अलङ्कारशब्दस्य प्राचीनकालादेव प्रचलनप्रयोगश्च परिदृश्यते । अलंकृतिशब्दः ऋग्वेदे 'अरंकृतिः' रूपे मिलति । **'का ते अस्त्यरंकृतिः सूक्तैः कदा नूनं ते मघवं दाशिम'** (ऋग्वेद ७.२९.३) । रुद्रदाम्नः शिलालेखानुसारेण ख्रिष्टस्य द्वितीयशताब्दौ साहित्यिकगद्यपद्यौ अलङ्कृतकरणमत्यावश्यकमासीत् । अलङ्कारमतप्रधानप्रवर्त्तकरूपेण भामहाचार्य एवैतिहासिकदृष्ट्या प्रसिद्धः आसीत् । एतन्मतपोषकटीकाकारौ उद्भटौ रुद्रटश्चेति । काव्येऽलङ्कारस्य प्राधान्यमपि येन केनाऽपि रूपेण दण्डिनोऽपि स्वीकृतमासीदेव । एतत्सम्प्रदायानुसारेणालङ्कार एव काव्यस्य जीवनाधायकः । रुद्रट-प्रतिहारेन्दुराजावपि स्वग्रन्थेषु अलङ्कारस्यैव प्राधान्यं प्रतिपादयामासतुः । एतत्सम्प्रदायानुसारेणालङ्कारहीनं काव्यस्वीकरणं तथैवोपहासास्पदं यथोष्णतारहितमग्निस्वीकरणम् । एतदेवोक्तं पीयूषवर्षजयदेवेन—

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती ॥** (चन्द्रालोकः १।८)

रुय्यकस्तु प्रत्यषादयत् यत् प्राचीनालङ्कारिकमतानुसारेणालङ्कार एव काव्यस्य जीवातु तत्त्वम् । 'तदेवमलङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम् ।' इति । अलङ्काराणां विकासः शनैः शनैः कालक्रमेणावर्धत । नाट्यशास्त्रे (अ० १७. १-५) षट्त्रिंशल्लक्षणानां गणना कृतास्ति । नाट्ये प्रयुक्तकाव्ये एतेषां लक्षणानामियमेवस्थितिरासीत् । वैदिकसाहित्येऽपि चोपमारूपकाद्यलङ्काराणां नामानि दृश्यन्ते । तत्रोपमा यथा—

**ईयुषीरागमुपन्ना शाश्वतीनाम्** । (ऋग्वेदे १। ११३। ९५)
**'तदप्युपमास्ति ।'** (शतपथब्राह्मणम् (१५। ५। १। ५) ।

**'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो... एवमेवायं पुरुषः...** (बृहदारण्यके ३। ४। २१) **'अरा इव रथनाभौ संहता यत्र नाड्यः'** । (मुण्डकोपनिषद् २.६)

साङ्गरूपकं यथा—

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥** (कठोपनिषद् १।३।३१)

भूषणं विभूषणं वा नामकस्य प्रथमालङ्कारस्य निम्नलिखितं लक्षणमस्ति—

**अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।**
**भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम् ॥**
(ना०शा० द्वि०भा० १७।४३ पृ० ३२१) ।

अनेन स्पष्टो भवति यद्भूषणनामकलक्षणे अलङ्कारस्य गुणस्य च समावेशोऽस्ति। अलङ्काराणां विधिवन्निरूपणं सर्वप्रथमं भरतमुनिप्रणीतनाट्यशास्त्रे एव दर्शनीयमस्ति । तत्रैव—

**उपमारूपकं चैव दीपकं यमकं तथा ।**
**अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयः ॥** (ना०शा० १।७।४३१)

अनेन चतुर्णामेवोपमारूपकदीपकयमकाख्यानामलङ्काराणां नाम निर्देशं भरतमुनिः करोति एते चत्वारोऽलङ्काराः अर्थालङ्कारकोटौ समाविशन्ति । किन्तु कुवलयानन्दाभिख्ये ग्रन्थे अलङ्काराणां सङ्ख्यावृद्धिः चरमां कोटिं स्पृष्ट्वा सती पञ्चविंशत्युत्तरशत संख्यतागता । कालक्रमेणालङ्काराणां स्वरूपेऽपि महत् परिवर्त्तनं समभवत् ।

अष्टमशताब्द्यां विद्यमानेनोद्भटेन निजकाव्यालङ्कारसंग्रहे एकचत्वारिंशत् अलङ्काराणां वर्णनं कृतम् । नवशताब्दीसंभूतेन रुद्रटेन वास्तवौदार्यातिशयश्लेषाणामलङ्कारमूलत्वं निरूप्य तेषु तारतम्यस्य वर्गीकरणाय चाभिनवः प्रयासः कृतः ।

**'काव्यं ग्राह्यमलङ्कारात् । सौन्दर्यमलङ्कारः'** (काव्या०सू० १.१.१-२)

रीति सम्प्रदायस्य प्रवर्त्तको भूत्वाऽपि आचार्यवामनः सौन्दर्यरूपमलङ्कारेणैव काव्यस्योपादेयता प्रमाणितः कृतोऽस्ति । अलङ्कृतिरलङ्कारः' (भावे घञ्, पा० सू० ३,३,१०) । अनया व्युत्पत्याऽलङ्कारशब्दः सौन्दर्यस्य वाचको भवति । अस्याऽनुसारेण गुणालङ्काराभ्यां संस्कृत-शब्दार्थयोरेव काव्यशब्दस्य मुख्यव्यवहारो भवति । केवलं शब्दार्थयोः काव्यशब्दस्य प्रयोगस्तु गौणः अथवा लाक्षणिकोऽस्ति । **'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते । भक्त्या तु शब्दार्थमात्र वचनोऽत्र गृह्यते** । तत्रैव १.१ वृत्तिः ।' अनया रीत्या वामनेनालङ्कारं परमार्थिकरूपेण काव्यस्याविभाज्याङ्गमङ्गीकृतः । वामनमते काव्यं ललितकलाऽस्ति । अस्योद्देश्यः सौन्दर्याभिरेवाऽस्ति । कविकर्त्तव्यस्तु स्वकलां प्रति सत्यनिष्ठो भाव्यम् । नाटकस्य माध्यमेन परोक्षरूपे एव नीत्युपदेशः कर्त्तुं शक्यते ।

—**शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशं गृहणन्ति ।** सदाचारोपदेशरूपा हि नायकादि गोष्ठी विनेय जनहितार्थमेव मुनिभिरवतारिता' (ध्वन्या०लो० तृ०प० पृ०२२४) अस्मिन् प्रसङ्गे द्रष्टव्यः- Dr. B.L. Atre लिखितः —'Psychology of Beauty, Journal of Banaras Hindu University V. 6 Page 43-95) गाथेन तु रमणीयताया वर्णनमनेन प्रकारेण कृतः—**क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः** ॥ (४।१७) उद्भटोऽपि रसवदलङ्कारस्यानेन प्रकारेण परिभाषा प्रदत्तवान्—

**रसवद् दर्शितस्पष्टश्रृङ्गारादिरसादयम् ।**
**स्वशब्द स्थायिसञ्चारिविभावाभिनयादयम् ॥ ४ ॥**

अस्मिन्नयं स्थायि-भाव-विभाव-व्यभिचारिभावादयः पारिभाषिकशब्दानामुल्लेखः कृतवानस्ति । अग्रिमश्लोके नवरसानामपि परिगणना कृताऽस्ति । दण्डिनाऽपि रसवत् एवं ऊर्जस्वि प्रभृत्यलङ्कारपरिभाषां कुर्वन् अनेन प्रकारेण कथितः—

**मधुरं रसवत् वाचि वस्तुन्यपि रसस्थितिः ।** (१-५१)

अयं हि अष्टाभिः रसैस्तथा स्थायिभावैः सह पूर्णतः परिचितोऽस्ति ।

**इह त्वष्टरसायत्ता रसवत्ता स्मृतागिराम् ।'** (२.२९२)
**प्राक् प्रीतिर्दर्शिता सेयं रतिः श्रृङ्गारतां गताम् ॥** (२.२८१)

काव्य २.२८३,२८५,२८७ इत्यपि द्रष्टव्यम् ।

यद्यपि दण्डिनः काव्यशोभाकरो धर्मरूपालङ्कारो वामनस्य मते काव्यशोभायाः सम्पादकः गुणः सम्पद्यते । **काव्यशोभायाः कर्त्तारो धर्माः गुणाः** तत्रैव ३.१.१ । तथा काव्यत्वस्य सम्पादक गुणास्योत्कर्षकत्वेनोपमाद्यलङ्कारेष्वलङ्कारत्वं भवति । तदतिशय हेतवस्त्वलङ्कराः ।' तत्रैव ३.१.२ । तथापि सौन्दर्यरूपासाधारणालङ्कारस्य प्राधान्यमक्षुण्णरूपेणैव विद्यमानोऽस्ति । यतो हि काव्यस्योपादेयता तस्य सौन्दर्यरूपालङ्कारोपरि निर्भरं करोति ।

एतत् सम्प्रदायस्य प्रथमप्रवर्त्तकः पूर्वोक्तः आंचार्यो हि'वक्रोक्ति'नामालङ्कारं यादृशं निरूपितवान्, एतत् परवर्त्याचार्यो वामनस्तु तमेव किञ्चित् परिवर्त्य स्वीकृतवान् । अलङ्कारविभाजनाय कतिपयसिद्धान्ता अपि मूलरूपेण निर्णीताः कृताः सन्ति । विषयेऽस्मिन्नेकावलीकर्त्तुर्विद्याधरस्यातियुक्तियुक्तं वैज्ञानिकं निरूपणमस्ति । अस्यापि चर्चापूर्वमेव कृता । एतेन महानुभावेन हि औपम्य-विरोध-तर्कान् अलङ्कार मूलविभेदकान् मत्वाऽस्मिन्नेव विषयेऽतिसुन्दररूपेण समीक्षा कृताऽस्ति । अलङ्कार- विकासानुसन्धानाय स्वतन्त्ररूपेणाद्यापि अनुशीलनस्य महत्यावश्यकता विद्यते ।

अलङ्कारा अपि शैल्या उत्कृष्टतायां सहायकाः भवन्ति । लौकिक कटककुण्डलादयोऽलङ्कारा यथा शरीरादिकं भूषयन्ति तथा काव्यगतानुप्रासादिकं शब्दार्थ-रूपं बाह्यकाव्यशरीरमेवालङ्कुर्वन्तीति न भ्रमितव्यम्, ते खलु काव्यात्मभूतरस मप्युपकुर्वन्तीति अवश्यमस्ति तेन सम्बन्धः । भामहदण्डिनौ उभावप्याचार्यौ अलङ्कार गुणयोर्मध्ये न कोऽपि विशेषान्तरं मन्येते । उभावप्याचार्यौ भाविकत्वमपि गुण एव स्वीकुर्वतः । **'भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।'** ३-५२ एवं काव्यादर्शे २.२६४ द्रष्टव्यम् ।

आचार्य उद्भटोऽपि अलङ्कारस्यांगित्वं प्रकारान्तरेण प्रमाणीकृतवान् । तद्यथा—

रसवत्—**रसवत् दर्शितस्पष्ट-श्रृङ्गारादिरसोदयम् ।**
**स्वशब्दस्थायिसञ्चारि-विभावाभिनयास्पदम् ॥**

(काव्या० सा० सं० ४।३)

प्रेयस्वत्—**रत्यादिकानां भावानां अनुभावादिसूचनैः।**
**यत्काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम्।** तत्रैव, ४,२।

ऊर्जस्वी—**अनौचित्यप्रवृत्तानां काम-क्रोधादि-कारणात्।**
**भावानां च रसानां च तच्च ऊर्जस्वि कथ्यते॥** तत्रैव, ४,५।

समाहित—**रसभाव-तदाभासवृत्तेः प्रशमनस्वनम्।**
**अन्यानुभाव-निःशून्यरूपं यत् तत् समाहितम्॥** तत्रैव ४।७।

एतेष्वलङ्कारेषु समस्तरसप्रपञ्चस्यान्तर्भावः कृतवानस्ति। आक्षेपः (तत्रैव २,२.३) तथा समासोक्ति (तत्रैव २.१०) प्रभृतिष्वलङ्कारेषु वस्तुरूपव्यङ्ग्यं वाच्यार्थस्योपकारकं मत्वा अलङ्कारान् प्राधान्यं प्रचक्षते। पर्यायोक्तालङ्कारे—

**पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते।**
**वाच्य-वाचकवृत्तिभ्यां शून्येनावगमात्मना।** (तत्रैव ४।६)

गम्यमानार्थवाच्यार्थस्यैवोपकारकं मन्यते। अनेन प्रकारेण तेन रस-वस्तु-अलङ्कारान् त्रिविधान् व्यङ्ग्यान्, ये पश्चात्, काव्यस्यात्मरूपेण मान्यता प्राप्तवन्तः वाच्यालङ्कारेषु तान् अन्तर्भूतं कृत्वा अलङ्कारस्यांगित्वमथवाऽत्मत्वं प्रमाणीकृतः।

आचार्यरुद्रटस्तु अलङ्कारस्यांगित्वप्रदर्शनायैव स्वकीयग्रन्थस्य नाम काव्यालङ्कारः कृतवान्।

**काव्यालङ्कारोऽयं ग्रन्थः क्रियते यथायुक्तिः॥** रुद्रट० १,२॥

काव्यालङ्कारस्यातिप्राचीनटीकाकारः नमिसाधु स्पष्टशब्देषु अलिखत् यत् वक्रोक्ति-वास्तवाद्यलङ्काराः अस्य ग्रन्थस्य मुख्यतः अभिधेयाः सन्ति, दोषरसादयस्त्वानुषंगिका एव सन्ति—'**तत्र काव्यालङ्कारा वक्रोक्तिवास्तवादयोऽस्य ग्रन्थस्य प्राधान्यतोऽभिधेयाः। अभिधेयव्यपदेशेन हि शास्त्रं व्यपदिशन्ति स्म पूर्वकवयः। दोषा रसांश्चेह प्रासङ्गिकाः न तु प्रधानाः।** (तत्रैव १,२ उपरि व्याख्या पृ० २)

रुद्रटोऽपि रसभावादेः रसवत्-प्रेयाद्यलङ्कारेषु अन्तर्भावाः अर्कुवन्नपि भावः अलङ्कारे प्रतीयमानार्थस्य ग्रहणं कृत्वाऽलङ्कारस्यांगित्वं स्वीकरोति। सः भावालङ्कारस्य प्रथमभेदस्योदाहरणस्वरूपेण निम्नलिखितपद्यं प्रस्तौति—

**ग्राम-तरुणं तरुण्या नव-वञ्जुल-मञ्जरी-सनाथकरम्।**
**पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥** (तत्रैव ७,२९)

मम्मटादिध्वनिवादयः आचार्याः पद्यमिदं गुणीभूतव्यङ्ग्यस्योदाहरणमङ्गीकुर्वन्ति। (काव्य० प्र० १,३) रुद्रटस्य भावालङ्कारस्य द्वितीयभेदस्यानेन प्रकारेणोदाहरणमस्ति।

**एकाकिनी यदबला तरुणी तथाह-**
**मस्मिन् गृहे गृहपतिश्च गतो विदेशम्।**

**किं याचसे तदिह वासमियं वराकी**
**श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥** (रुद्रट० ७।४१)

दण्डीमहोदयोऽपि 'रसवत्' एवं 'ऊर्जास्वि' अलङ्कारस्य परिभाषां कुर्वन् प्रोक्तवान्—

**'मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।'** (१-५१ तत्रैव)

अयं हि अष्टाभिः रसैरेवं तेषां स्थायि-भावैः पूर्णपरिचितो वर्त्तते ।

**इह त्वष्टरसायत्ता रसवत्तास्मृता गिराम् ।** (२.२८२)
**प्राक् प्रीतिर्दर्शिता सेयं रतिशृङ्गारतां गताः ॥** २.२८१)
(काव्यादर्शेऽपि २.२८३,२८५,२८७ द्रष्टव्यम्)

रुद्रटोऽपि प्रोक्तवान्—**'तस्मात् तत्कर्त्तव्यत्वेन महीयसा रसैर्युक्तम्'** (१२.२)।

एते ग्रन्थकर्त्तारः रसस्यास्तित्वेन पूर्णपरिचिता आसन् । अलङ्कारस्य व्यापकार्थं नीत्वा दण्डी दशगुणान् अलङ्कारः मन्यते ।

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।**
**काश्चिन् मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः ।'** (२.१ एवं ३)

काव्यादर्शे दण्डिना प्रोक्तम्—(२.३६७) नाटकगतानि सन्ध्यङ्गानि चतुः-षष्टि-संख्यकानि सन्ति, वृत्याः षोडशाङ्गानि तथाऽन्य परम्परागत षट्त्रिंशल्लक्षणानि नाट्यशास्त्रगतं रङ्गमञ्चेन सम्बद्धाः अलङ्काराः भवन्ति ।

**'यच्च सन्ध्यङ्ग वृत्यङ्ग लक्षणाद्यागमान्तरे ।**
**व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः ॥**

अलङ्कारसर्वस्वे ३, ९ पृष्ठे कथितमस्ति —**'इह तावत् भामहोद्भट्टप्रभृत-यश्चिरन्तनालङ्कारकाराः प्रतीयमानमर्थवाच्योपस्कारकतयालङ्कारपदानिक्षिप्तं मन्यन्ते । ....उद्भटादिभिस्तु गुणालङ्काराणां प्रायशः साम्यमेव सूचितम् । ....तदेवमलङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम् । तरले—'अभाव एव ध्वनेरिति भामह-प्रभृतयो मन्यन्ते चतुर्विंशतिपृष्ठे एवंविधा उक्तिः समागताः** । अनेन विचारोऽयं समुत्पन्नो भवति यत् 'भामहः ध्वनिन्यभाववादी आसीत् । किन्तु, कथनमिदं नोपयुक्त-मस्ति । असंदिग्धेयं वार्त्ता यत् भामहदण्डीप्रभृतयः अन्य लेखकारैभिस्तथ्यैरपरिचिताः आसन् यत्काव्यस्यात्मा प्रतीयमानार्थ एवास्ति तथा ते स्वरचनायां ध्वनेस्तथा गुणीभूत-व्यङ्ग्यशब्दानां प्रयोगोऽपि नैव कृतवन्तः । ते तु अप्रस्तुतप्रशंसासमासोक्ति-आक्षेपादीनां परिभाषायां प्रतीयमानार्थस्य पर्याप्तान्तर्भावाः कृताः सन्ति । ध्वन्यालोकस्य गुणीभूतव्यङ्ग्योऽस्ति । उदाहरणार्थः—'यत्रोक्ते गम्यतेऽन्योर्थस्तत्समानविशेषणः । सा समासोक्तिः (भामह ३.७९) पर्यायोक्तालङ्कारे ध्वन्याः सर्वान् तत्त्वान् समावेशितुं शक्यते । जगन्नाथस्तु बलपूर्वकेनाकथयत् सत्यम्ध्वनिकारात्प्राचीनैर्भामहोद्भटप्रभृतिभिः

स्वग्रन्थेषु कुत्राऽपि ध्वनिगुणीभूतव्यङ्ग्यादिशब्दा न प्रयुक्ता इत्येतावत्रैव तैर्ध्वन्यादयो न स्वीक्रियन्त इत्याधुनिकानां वाचो युक्तिरयुक्तैव । यतः समासोक्तिव्याजस्तुत्यप्रस्तुत-प्रशंसाद्यलङ्कारनिरूपणेन क्रियन्तोऽपि गुणीभूतं व्यङ्गभेदास्तैरपि निरूपिताः । अपरश्च सर्वोऽपि व्यङ्गप्रपञ्चः पर्यायोक्तकुक्षौ निक्षिप्तः । न ह्यनुभावसिद्धोर्थो बालेह्येनाप्यपह्नोतुं शक्यते । ध्वन्यादिशब्दैः परं व्यवहारो न कृतः । न ह्येतावतामङ्गीकारो भवति । (रसगङ्गाधरस्य ४१४-४१५ पृष्ठे द्रष्टव्यम्) यद्यपि भामह-दण्डिनौ ध्वनिम् अथवा व्यङ्ग्यं काव्ये व्याप्ततत्वं न मन्येते । तथाऽपि तौ वक्रोक्तिम् अथवातिशयोक्तिमप्यधिकं महत्त्वमदत्ताम् तथा सर्वेषामलङ्काराणां मूले निहितं मन्येते । अस्मिन् प्रसङ्गे द्रष्टव्यः भामहः २८५, सैषा स वैव सः, तथा—

**अलङ्कारान्वक्षामप्येकमाहुः परायणम् ।**
**वागीशमहतामुक्तिनिर्गमतिशयाद्वयाम्** ।। (काव्या० २,२२०)

अलङ्काराणां विषये विशिष्ट अध्ययनार्थं द्रष्टव्यम्—

I. A., Part - 41, 1912, Page -204 to 208, Written by Prof. Sowani - "History and Significance of Alankaras", See - Anals B.O.R.I. Part -1. Page - 87 to 98; Anals B.O.R.I. Part -II Page -69 to 72; related with Prof. P.K. Gour -"Alankar classification", for Psychological basis of Alankaras -Mukherjee's Silver Jubilee Journal -Part III Page -661 and Dr. Dey's "History of Sanskrit Poetics Part - II Page - 41 to 94; Prof. H.R. Diwekar's - Le Flaz De Retarike Da Le End" -1930, Dr. Raghavan's "Indian Culture"-Part III Page- 675 to 705 and some concepts etc. Page - 48 to 91 and "Use and abuse of Alankaras in Sanskrit Literature", Shringar Prakash Part I Page -361 to 417; "Bhoja's Conception of Alankaras"

एतेषामुद्धरणग्रन्थानामध्ययनेनालङ्काराणां विषयेऽनेकप्रश्नाः समुद्भूताः भवन्ति । यथा—अलङ्काराणां वर्गीकरणम्, गुणालङ्कारयोः भेदस्तथाऽलङ्काराणां संख्या एवं रसध्वनिसिद्धान्ते तेषां स्थानानि प्रभृतयः । मम्मटादि परवर्त्तिनः ग्रन्थकर्त्तारः गुणत्रयमेव मन्यन्ते । यथा—'वीरता' आत्मनः विशिष्टगुण एवास्ति—

**एवमेते ह्यलङ्काराः गुणा दोषाश्च कीर्त्तिताः ।**
**प्रयोगमेषां च पुनर्वक्ष्यामि रससंश्रयम्** ।। (नाट्य०शा० १७.१०८)

तथैव माधुर्यादयः आत्मनः गुणत्रयमेव भवन्ति । गुणस्य रसैः सह स्थायि-सम्बन्धोऽस्ति । अलङ्कारस्तु अलङ्कार इवैव । यथा—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्ष हेतवस्ते स्युरचलस्थितयो गुणाः ।।**
**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः** ।। (का०प्र० ८.१.२)

अधिकांशालङ्कारिकाः मतस्यास्यैवानुकरणं कृतवन्तः ।

संक्षेपेणालङ्कारा अपि शैल्या उत्कृष्टतायां सहायकाः भवन्ति । लौकिककटक-कुण्डलादयोऽलङ्कारा यथा शरीरादिकं भूषयन्ति तथा काव्यगतानुप्रासादयः शब्दार्थरूपं वाह्य काव्यशरीरमेवालङ्कुर्वन्तीति न भ्रमितव्यम्, ते खलु काव्यात्मभूतरसमप्युप-कुर्वन्तीति अवश्यमेवास्ति तेन सम्बन्धः ।

यस्माद् हृदयप्रदेशात् काव्यमात्रस्योत्पत्तिर्भवति, तद् हृदयोल्लासात् एवालङ्काराणामप्युत्पत्तिर्भवति (स्त्रीणामपि भौतिकालङ्कारधारणे मानसिक एव उल्लास-स्तिष्ठति, तदुल्लासाभाव एवंविधवानार्योऽलङ्कारधारणं न कुर्वन्ति) । अतएव हृदयस्यौज उल्लासो वा अलङ्काराणां मूले माननीयो भविष्यति । रसानुभूतावप्यलङ्काराः सहायकाः भवन्ति । उपमारूपकादयो हि मानसिकचित्रद्वारा स्पष्टताप्रदानमेव न कुर्वन्ति प्रत्युत-अर्थान्तरन्यास-दृष्टान्त-प्रतिवस्तूपमा-उदाहरणाद्यलङ्कारद्वारा विचाराणां पुष्टिमपि कुर्वन्ति, भ्रान्ति-सन्देह-स्मरणोत्प्रेक्षाद्यलङ्कारद्वारा नानारूपैः सादृश्यस्योपस्थापनं क्रियमाणं भवति । एवमेव क्रमालङ्कारेण यथासंख्यालङ्कारेण वा रचनायां क्रमोपस्थितिर्भवति, व्यतिरेक-विभावना-सङ्गति-विषम-व्याघातद्वारा विरोधस्य चमत्कारा उत्पन्नीकृता भवन्ति तथा दर्शिता भवन्ति यद् ब्रह्मणः सृष्टेः कविसृष्टौ विलक्षणता वर्त्तत इति । अन्योक्ति-समासोक्ति-सूक्ष्मातिशयोक्तिद्वारा उक्तिवैचित्र्यवचनचातुर्ययोश्चमत्काराः प्रदर्शितो भवति । कारणमाला-एकावली-मालादीपकसारादिकशृङ्खलामूलकालङ्कारद्वारा प्रभावस्य वर्द्धनं कृतं भवति । लोकोक्तिद्वारा भाषायां सञ्जीविता प्रापिता भवति । शब्दालङ्कारद्वारा शब्दमाधुर्यस्य सृष्टिकृता भवति । एतेन रसादिभिरालङ्कारिकाःपूर्णपरिचिता एव भवन्ति, ते हि प्रतीयमानार्थस्यापि ज्ञाताः सन्ति इति विज्ञायते ।

अत्रेदं विचार्यते—रसाद्यलङ्कारमध्ये आलङ्कारिकाः केषां प्राधान्यं स्वीकुर्वन्ति इति । तत्र पूर्वोक्तं मया भामहाचार्यो रसवत्प्रेय-ऊर्जस्वि-समाहिताभिध चतुर्ष्वलङ्कारेषु मध्य एव रसभावानां समग्रविषयान्तर्भावयति । रसवदलङ्कारेण दण्ड्याचार्योऽपि पूर्णपरिचितो वर्त्तते। इत्थञ्चालङ्कारिकाचार्यो रसतत्त्वं सम्यग्रूपेणावजानन्ति किन्तु सत्यप्येवमेकं प्राधान्यमलङ्कारस्यैवेति समुद्घोषयति । ये च ध्वनिवादिनः आचार्याः प्रतीयमानमर्थमेव महत्त्वरूपमङ्गीकुर्वन्ति तेषां मतादप्यालङ्कारिकाः पूर्णपरिचिताः सन्ति, ते हि प्रतीयमानार्थ समासोक्त्याक्षेपादि अलङ्कारेष्वेवान्तर्भावयन्ति । अलङ्काराणां विशिष्टानु-शीलनेन व्याख्याकरणेन च वक्रोक्तेर्ध्वनेः कल्पना प्रादुर्भूता । अलङ्कारमतस्यैतत् शास्त्रेतिहासे महती विशेषता विद्यते । अत्रालङ्कारस्यात्मत्वस्यांगित्वस्य वा विशेषेण विवेचनं कृतमस्ति तथैतिहासिकक्रमेण तस्योद्भवस्य विकासस्य च प्रतिपादनमभूत् ।



## रीति-सम्प्रदायः

रीतिमतस्य प्रमुखप्रतिपादकः प्रधानाचार्यो वामनः । एतन्मते रीतिरेव काव्यस्यात्मा —**'रीतिरात्मा काव्यस्य'** (काव्यालङ्कारसूत्रम् १।२।६) का च सा रीति- रिति जिज्ञासायां 'विशिष्टापदरचना रीतिः ।' (का०ल०सू० १।२।७) इति हि लक्षणं प्रतिपादितम् । इयमेव शैलीत्युच्यते । रचनायां चेयं विशिष्टिता गुणानामवस्थित्या उत्पन्ना भवति, अतएव गुणोपरि रीतिरवलम्बिता तिष्ठतीति । इदं रीतिमतं गुणसम्प्रदायनाम्ना व्यवहृतं भवति । **'ओजः कान्तिमती गौड़ीयाः'** (काव्या० सूत्र० १।२।१२), **समग्रगुणा वैदर्भी** (काव्या०सू० १।२।१२), **'माधुर्यसौकुमार्योपपन्ना पाञ्चाली'** (का०सू० १।२।१३) । वैदर्भी-गौड़ीरीत्योः स्पष्टरूपेण विभेदप्रतिपादनस्य श्रेय आचार्यदण्डिनः एवोपरि वर्त्तते । प्रारंभकाले रीतीनां सम्बन्धो देशविशेषेणैवासीत् । यत्प्रान्तिनो यादृश्यां शैल्यां विशिष्टतां प्राप्तवन्तस्तत्प्रान्त (देश) नाम्ना तादृशशैल्याः प्रसिद्धिरभूत् । तत्र वैदर्भ्या विदर्भदेशेन वशराभिधेन गौड्या वङ्गप्रदेशेन, पाञ्चाल्याः पञ्चाल (पञ्जाब) प्रदेशेन, लाट्या लाट (गुजरात) प्रदेशेनाभिधेयेन सम्बन्ध आसीत् । गुणालङ्कारयोः परस्परं स्फुटं भेद इत्यस्य सर्वप्राथम्येन प्रतिपादनं वामनेनैव कृतम् ।

> **श्लेषः प्रसादः समता माधुर्य सुकुमारता ।**
> **अर्थव्यक्तिरुदारत्वमोजः कान्ति समाधयः** ॥ (रसगङ्गाधरः) ।

काव्यस्यात्मभूतायारीतेः स्वरूपं किमास्ते इत्यनुयोगे यदाचार्यो वामनः प्राह— 'विशिष्टपदरचनारीतिः ।' विशेषोगुणात्मा । एतस्मादेव कारणात् रीतिसम्प्रदायस्यापरं नाम गुणसम्प्रदायोऽपि भवति । सर्वप्रथमं गुणानां वर्णनं भरतमुनिरेवाकरोत् । स दशप्रकारकाणां काव्यार्थगुणानां वर्णनं नाट्यशास्त्रेऽकार्षीत् । ते च गुणाः सन्ति श्लेषः, प्रसादः, समता, समाधिः, माधुर्यम्, ओजः, सुकुमारता, अर्थव्यक्तिः, औदार्यं, कान्तिश्च । तथा चोक्तमपि भरतमुनिना—

> **श्लेषः प्रसादः समता समाधिः माधुर्यमोजः पदसौकुमार्यम् ।**
> **अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यार्थगुणा दशैते ॥**
> (ना०शा०)

रीतेरुद्भवः एवं विकासोपरिध्यानेन स्पष्टतया प्रतीतो भवति यद्रसालङ्कारयोरिव रीतेरपि, उद्गमस्थानं वेद एवास्ति । ऋग्वेदे रीतिशब्दस्य प्रयोगः कतिपयेषु स्थानेष्व-

भवत् । तद्यथा—

**महीवरीतिः शवसासरत् पृथक्** । (ऋ०वे० २।२८।१४)

अत्रायमर्थो भवति यत् धारेव गावः विभक्तो भूत्वा देवगृहे प्रविशन्ति । अत्र रीङ् स्रवणे धातोः निष्पन्नः रीतिशब्दः धारार्थे प्रयुक्तोऽभवत् ।

**वातेवाजुर्यानद्येव रीतिः** (ऋ०वे० २-३९.५)

अत्र गमनार्थकरीङ्धातोः निष्पन्नः रीतिशब्दः मार्गार्थे गमनार्थे च प्रयुक्तोऽभवत् ।

**'तामस्य रीति-परशोरिव'** (ऋ०वे० ५।४८।४)

अस्मिन् मन्त्रे सायणाचार्यः रीतेरर्थः स्वभावः गतिश्च निर्दिष्टः । रीतिरपाम्' इत्यादि प्रयोगे एकस्मिन् स्थाने रीतेरर्थः गमयिता कृतवानस्ति । तथैकस्मिन् स्थाने गतिः (द्र०ऋ०वे० ६।१३।१) । अनेन प्रकारेण काव्यशास्त्रे रीत्यर्थे प्रयुक्तः पथः, मार्गः, प्रस्थानप्रभृतयः शब्दाः वेदे व्यवहृता रीति-शब्दस्यार्थेनैव सम्बद्धोऽस्ति । राजशेखरेण निर्देशितः यत् सुवर्णनाभः रीतिविषयकस्य ग्रन्थस्य निर्माणमकरोत् । तस्य नाम रीतिनिर्णयः अस्ति । 'रीतिनिर्णयं सुवर्णनाभः (का० मी० पृ० ३) । काव्य-मीमांसायाः साक्ष्यत्वेनाऽपि अलङ्कारशास्त्रस्य तया सहाद्यापि परिचयो भवतुं न शक्यते। अतः काव्यशास्त्रीयरीतितत्त्वस्य मूलं नाट्यशास्त्रस्य प्रवृत्तिमेवाङ्गीकरणं सूपयुक्तो भवति ।

यथा प्रवृत्तेः सम्बन्धं स्पष्टतः नानादेशैः अथवा भूभागैः सह वर्त्तते । तथैव रीत्याः विकासस्य प्रथमयुगे रीतेरपि सम्बन्धं भूभागैः सहैव दृश्यते । आबाणभट्टात् देशविशेषेण सहैव रीत्याः सम्वन्धमपि दृष्टिपथे समायाति ।

भामहस्तु अश्मकादि देशविशेषेण सह वैदर्भमार्गस्य सम्बन्धं सर्वथाऽनुचितमेव घोषितवान् । यतो हि वैदर्भाद्यभिधानानि स्वेच्छयैव कृतानि सन्ति । (द्र० काव्याल० अ० ४, अधि०१) भामहस्यास्य कथनस्य वामनेनाऽपि समर्थितः । तदनुसारेण देश-विशेषेण सह काव्यस्य न किमपि सम्बन्धमस्ति—

**विदर्भादिषु दृष्टत्वात् तत् समाख्या** । (काव्या०सू० पृ० १,२,११)
**न पुनर्देशैः किञ्चिदुपक्रियते काव्यानाम्** । (तत्रैव वृत्तिः)

वार्त्तेयं सर्वथा युक्तियुक्तमेव प्रतीयते, यतो हि गौडदेशीय कविरपि वैदर्भीरीत्यां लिखत्येव । अतो हि रीतिविकासस्य द्वितीययुगे रीतेरथवा मार्गस्य सम्बन्धं देशविशेषेण सहासङ्गतमेव प्रतिभाति । (अस्मिन् प्रसङ्गे बलदेव उपाध्यायस्य भा० सा०शा० पृ० १४१ द्रष्टव्यम्) । रीतिविकासस्य तृतीययुगस्य प्रारम्भः आकुन्तकाद्य-मान्यं कृत्वा रुद्रट-आनन्दवर्धनादि समयादेव स्वीकरणमधिकः तर्कसङ्गतः प्रतीतो-भवति । यावत् पदानां समस्ततामसमस्तताभेव मुख्यतः रीतेराधारममंसत । वामन-समये स्वाभ्युपगमे 'सिद्धिः' स्वरूपं रीतिं पदसङ्घटनास्वरूपे रसादेरुपकारिणीं मत्वा साधन-

स्वरूपमेव मन्यते । उद्भटस्तु अनुप्रासस्य प्रसङ्गे परुषा उपनागरिका तथा ग्राम्या वा कोमला, एतासां तिसृणां वृत्तीनामेवोल्लेखः कृतवान् । यथा—

**शषाभ्यां रेफसंयोगैष्टवर्गेण च योजितां ।**
**परुषानामवृत्तिः स्यात् ह्यात्माद्यैश्च संयुता ॥**
**सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोभिः ।**
**स्पर्शैर्युतां च मन्यन्ते उपनागरिकां बुधाः ॥**
**शेषैर्वर्णैर्यथायोगं कथितां कोमलाख्यया ।**
**ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥** (काव्या०सा सं ४-६)

पूर्वमेव मया प्रोक्तं रीतेः अथवा वृत्तेः प्राच्याभिधानं मार्गोऽपि वर्त्तते । भामहात्पूर्वं वैदर्भमार्गः सर्वगुणाश्रयत्वेन स्वीक्रियते स्म तथा गौड़ीयमार्गश्च निन्दनीयमासीत् । अस्याः विचारधारायाः खण्डनमकार्षीत् अचार्यो भामहः काव्यालङ्कारग्रन्थे । तेनाभिहितं यत्—'न तु वैदर्भमार्गस्य प्रशंसा करणीया न वा गौड़ीयमार्गस्य निन्दा करणीया । सर्वापेक्षया गुणेषु ध्यानं देयम् । ते च गुणाः सन्ति-काव्यस्य वक्रोक्तियुक्तता, पुष्टार्थता, अग्राम्यता, अर्थसम्पन्नता प्रभृतयः ।' इमे गुणाः यत्र भविष्यन्ति तत्रैव काव्यता स्यात्, न तु मार्गभेदेन कमनीयकाव्यता भवति । तथाहि—

**वैदर्भमन्यदस्तीति मन्यन्ते सुधयोपरे ।**
**तदेव च किल ज्यांयः सदर्थमपि नापरम् ॥**
**गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।**
**गतानुगतिकन्यायान्नानाख्येयममेधसाम् ॥**
**न चाश्मकवंशादि वैदर्भमिति कथ्यते ।**
**कामं तथास्तु प्रायेण संज्ञेच्छातो विधीयते ॥**
**अपुष्टार्थमवक्रोक्तिप्रसन्नमृजुकोमलम् ।**
**भिन्नं गेयमिवेदं तु केवलं श्रुतिपेशलम् ॥**
**अलङ्कारवदग्राम्यमर्थं न्याय्यमनाकुलम् ।**
**गौडीयमपि साधीयो वैदर्भमिति नान्यथा ॥**

वैदर्भी, गौड़ीया, लाटीति तिस्रो रीतयः स्वीक्रियन्ते । इमानि, नामानि नूनं तान् तान् देशभेदानाश्रित्य सञ्जातानि । देशभेदेन रीतिभेदस्वीकारे रीतिनामानन्तरं स्यादिति प्राहाचार्यः कुन्तको वक्रोक्तिजीविताभिधाने काव्यशास्त्रीयग्रन्थे । मम्मटेन तु स्पष्टशब्देषु प्रोक्तम्—यत् उपनागरिका, परुषा एवं कोमला-एतत्त्रयमेव वृत्तिं केषांचिन्मते क्रमशः वैदर्भी, गौड़ी तथा पाञ्चाली नाम्नाभिहितमस्ति । तथाहि-

**'केषांचिदेता वैदर्भीप्रमुखा रीतियो मताः'** (काव्य प्र० ८१)

रुद्रटेण पदानां समस्तता-असमस्ततयोराधारोपरि रीतेर्निरूपणं कृत्वा रीतिशास्त्रस्येतिहासे एकः नवीनोल्लेखनीयो विचारः समुपस्थापितः । सः समासरूप

सर्वथाऽभावे वैदर्भी, द्वि-त्रिपदानां लघुसमासे पाञ्चाली, पञ्च-सप्तपदानां मध्यमसमासे लाटीया तथा यथाशक्ति दीर्घसमासे गौडीया रीतिः मन्यते । अनेन प्रकारेणासौ दण्डि-वामनादिभिः प्रतिपादितरूपस्य गुणरूपरीतेः प्रत्याख्यानमकरोत् । तथाहि—

**वृत्तैः समासतव्यास्तत्र स्यू रीतयस्तिस्त्रः ।**
**पाञ्चाली लाटीयागौडीयाचेति नामतोऽभिहिताः ।**
**लघुमध्यायत विरचनसमासभेदादिमास्तत्र ।**
**द्वित्रिपदा पाञ्चालीलाटीया पञ्च सप्त वा यावत् ।**
**शब्दाः समासमन्तो भवति यथाशक्तिगौडीयाः:** ॥ (रुद्रट० २३-५०)

तथा—**वृत्तेरसमासायाः वैदर्भीरीतिरेकैव** (तत्रैव-२,६)

रसविशेषेण सह रीतिविशेषस्य सम्बन्धं दार्शयित्वा, रुद्रटेणैकाऽन्याऽपि यद्भावना कृताऽस्ति । तदनुसारेण वैदर्भी-पाञ्चाल्योः रचना यस्यां माधुर्य-सौकुमार्ययोरभिव्यक्ति-र्भवति शृङ्गार-प्रेय-करुण-भयानकाद्भुदुरसैः सह एवं गौड़ी-लाटयोः रचना यत्रौजगुणः प्राप्तो भवति, रौद्ररसेनैव भाव्यम् ।

**इह वैदर्भी रीतिः पाञ्चाली या विचार्य रचनीया ।**
**मधुराललिते कविना कार्ये वृत्ती शृङ्गारे** ॥ (तत्रैव १४.३७)
**वैदर्भी पाञ्चाल्यौ प्रेयसि करुणे भयानकाद्भुतयोः ।**
**लाटीयागौडीये रौद्रे कुर्यात् यथौचित्यम्** ॥ (तत्रैव १६,२०)

भोजराजस्तु देशभेदामेवाश्रित्य रीतिनां षाड्विध्यं प्रतिपादयामास । भोजानुसारेण-रीतयो निम्नाङ्किता भवन्ति—वैदर्भी, गौड़ी, पाञ्चाली, लाटी, श्रावन्ती, मागधी चेति । भोजराजः षण्णां रीतीनां नाम निर्देशमकार्षीत्, किञ्च तेषामन्तरं न हि स्पष्टीचकार सः । वामनस्तु अलङ्कराणां गुणेभ्यः पार्थक्यं स्वीकृत्य तेषां विशदं विवेचनं चकार ।

अग्निपुराणस्य काव्यशास्त्रीय भागस्याद्यापि समयं सुनिश्चितं नास्ति तेन लाटीरीतेरप्युद्भावनायाः प्रथमः श्रेयोऽपि रुद्रटस्यैव भवति । अग्निपुराणे रीतेराधारं न तु गुणं मन्यते, नैव हि गुणाधारे रीतौ कस्यपि प्रकारकस्य तारतम्यमेवास्ति । तत्राऽपि समस्त-असमस्तपदान्येव रीतेराधारममन्यत । तथाहि—

**वाग्विद्यासंप्रतिज्ञाने रीतिः साऽपि चतुर्विधा ।**
**पाञ्चाली गौड़देशीया वैदर्भी लाटजा तथा ॥**
(अ०पु० ३०४,१ द्रष्टव्य—तत्रैव ३४०, २-४)

आनन्दवर्धनः रीतये सङ्घटनाशब्दप्रयोगः कृतवान् । पदानां सम्यक् अर्थात् रसानुकूलां रचनां सङ्घटना तेन कथिता ।

**गुणानाश्रित्य तिष्ठन्ति माधुर्यादीन् व्यनक्ति सा रसान्...**
(ध्वन्या० ३.६)

मधुर्यादि गुणोपरि आश्रितो भूत्वा रसाभिव्यक्तं कर्त्री सङ्घटना, असमासा-मध्यम-समासा-दीर्घसमासेति नाम्ना त्रिधा भवति ।

**असमासा समासेन मध्यमेन च भूषिता ।**
**तथा दीर्घ समासेति त्रिधा सङ्घटनोदिता ॥** (तत्रैव ३,५)

रीतिरथवा सङ्घटना गुणाश्रितैवास्ति अर्थात् रीतिरेवाधारः गुणो भवति । तद्यथा— द्रष्ट० ध्वन्यालोकस्य पृ० १६५-६६ तथा अ० प्र० अष्टम अ० द्वि० अधि० ।

यस्मात् आनन्दवर्धनस्य रीतिः रसोपकारिणी अस्ति, अतः रीतेः नियामकं वक्त्रौचित्यं, वाच्यौचित्यं, विषयौचित्यं तथा रसौचित्यञ्च मन्यते । तथाहि—

**तन्नियमे हेतुरौचित्यं....... वक्तृवाच्ययोः ।**
**विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति ॥**
**काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा ।**
**रसबन्धोक्तमौचित्यं भवति सर्वत्र संस्थिता**
**रचना विषयापेक्षं तत्तु किञ्चित् विभेदवत् ॥** (तत्रैव ३,६,७,९)

रीतेरात्मत्वस्यासङ्गतिं प्रदर्शयन् आनन्दवर्धनेन निर्देशितः यदस्फुटरूपेण प्रतीतः ध्वनिरूपकाव्यतत्त्वस्य व्याख्याकरणेऽसमर्थाः वामनादिभिराचार्यैः रीतयः प्रचारिताः । अनेन सिद्धो भवति यदलङ्कारसम्प्रदायापेक्षया रीतिसम्प्रदाये काव्यसिद्धान्तानामधिको विकासः समभवत् आचार्य आनन्दवर्धनः प्रावोचत् काव्यतत्त्व यथात्म्यवर्णनेऽसमर्थाः सन्तो रीतिसम्प्रदायस्याचार्याः रीतीनां प्रवर्त्तनमकार्षुः । तथाहि—

**अस्फुटं स्फुरितं काव्यतत्त्वमेतत् यथोदितम् ।**
**अशक्नुवद्भिर्व्याकर्त्तुं रीतयः सम्प्रवर्त्तिताः ॥** इति ।(ध्व० ३,४७)

यद्यपि श्लोकोऽयं रीतिसम्प्रदायस्य निन्दारूप आभाति किन्तु अत्र रीति सम्प्रदायस्य प्रशंसैव कृता वर्त्तते । आनन्दवर्धनस्याभिप्रायो वर्त्तते यत् रीति सम्प्रदायस्य निरूपणे काव्यतत्त्वं स्फुरितं तु किन्तु तथाविधं स्फुटं नाभूत् यादृशं ध्वनिसम्प्रदाये ।

वामनेन प्रतिपादितं रीतेः काव्यात्मत्वं यद्यपि परवर्त्तिनः आचार्याः न हि स्वीचक्रुः, किन्तु ते रीतिं काव्यस्योपादेयाङ्गरूपेण स्वीकृतवन्तः इति नास्ति तिरोहितं विपश्चिदपश्चिमेभ्यः । ध्वनिवादिनः अपि आचार्याः रीतेः सिद्धान्तं मान्यं कृत्वा ध्वनिना साकं रीतेः सामञ्जस्यं संस्थापयामासुः ।

राजशेखरेण पदानां समस्तता-असमस्ततयोरेवाधारोपरि रीतीनां विचारः क्रेनाप्यन्य प्रकारेणैव कृतमस्ति । वचनविन्यासक्रममेव रीतिः प्रदर्शयन् सः प्रोक्तवान् यत् काव्य **'वचनविन्यासक्रमो रीतिः ।'** (का० मी० पृ० २१) पुरुषेण साहित्यविद्यावधू अवशंवदीकृतस्तथा स्वात्मबलेन समासयुक्तः अनुप्रासयुक्तस्तथा योगवृत्ति-परम्परागर्भ-वचनानां समुच्चारणं कृत्वा तां वशमानीतस्तदा गौड़ी रीतेः प्रादुर्भावोऽभवत्, तथा

यदीषत् वशंवदीकृत ईषदसमासम्, ईषदनुप्रासमुपचारगर्भञ्च जगाद सा पाञ्चाली रीतिः। यथा—'**तथाविधा कल्पनाऽपि तया यद् अवशंवदीकृतः समासवदनुप्रासवद् योगवृत्तिपरम्परागर्भं जगाद सा गौडीया रीतिः। तथाविधा कल्पनाऽपि तया यदीषद्वशंवदीकृतः ईषदसमासम्, ईषदनुप्रासमुपचारगर्भञ्च जगाद सा पाञ्चालीरीतिः।**'
(काव्यमीमांसा तत्रैव)

एवञ्च सः यदत्यर्थं च तया वशंवदीकृतः स्थानानुप्रासवद् असमासं योगवृत्तिगर्भवचनस्य व्यवहारकृतं तदा वैदर्भी रीतेः प्रादुर्भावोऽभवत्।

यदत्यर्थञ्च स तया वशंवदीकृतः स्थानानुप्रासवद् असमासं योगवृत्तिगर्भञ्च जगाद सा वैदर्भीरीतिः। (तत्रैव पृ० १९.२०)

उपर्युक्तकथनेन गौडीरीत्यां दीर्घसमासः, पाञ्चाल्यामल्पसमासः, तथा वैदर्भ्यामसमासत्वं विदितो भवति। राजशेखरेण एतत्तिसृणां रीतीनां अतिरिक्तः कर्पूरमञ्जर्यां मागधीरीतिरपि चर्चा कृताऽस्ति।

वैदर्भी तथा मागधी स्फुरतु नः सा किञ्च पाञ्चालिका। रीतिका विनिहन्तु काव्यकुशला ज्योत्स्नां चकोरा इव। (क० म० प्रस्तावना)।

एतया रीत्या वैदर्भी-गौड़ी-पाञ्चाली-तिसृषु रीतिषु सरस्वत्याः निवासो वर्त्तते।

**वैदर्भी-गौडीया-पाञ्चाली चेति रीतयस्तिस्रः।**
**आसु च साक्षान्निवसति सरस्वती तेन लक्ष्यन्ते॥** (का०मी० पृ०७५)

किञ्च विदर्भस्य वत्सगुल्मनगरे साहित्यविद्यया सह काव्यपुरुषस्य पाणिग्रहणं कारयित्वा वैदर्भीम्प्रति अधिकं समादरं प्रकटीकृतमस्ति।

**'तत्रास्ति मनोजन्मनो देवस्य क्रीडा-**
**वासो विदर्भेषु वत्सगुल्म नामनगरम्।**
**तत्र सारस्वतेयस्ताम् औमेयीं**
**गन्धर्ववत् परिणिनाय॥** (का०मी० पृ०२२)

वैदर्भ्याः जन्मस्थानं कुण्डिननगरं तस्या जननी, वाग्देवतायाः निवासः, तथा कामदेवस्य लीलाभूमिं कथ्यते॥

**वाग्देवता वसति यत्र रसप्रसूतिः,**
**लीलापदं भगवतो मदनस्य यच्च।**
**प्रेङ्खद् विदग्धवनिताञ्चित राजमार्ग**
**तत्कुण्डिनं नगरमेष विभुर्बिभर्त्ति॥** (वा०रा० ३.५०)

आचार्यकुन्तको रीतेरन्यानि नामानि स्वीकरोति। कुन्तकमतानुसारेण रीतिशब्दवाच्या मार्गाः, त्रयः सन्ति-सुकुमारमार्गः, अयं मार्गः वैदर्भ्याः अपरपर्यायभूतो वर्त्तते। विचित्रमार्गः, अयं मार्गः गौडीरीतेरपरपर्यायभूतः। मध्यममार्गः, अयं मार्गः पञ्चाल्या

अपरपर्यायभूतो वर्त्तते । एतेषु त्रिषु मार्गेषु सः नवीनानां चतुर्णां गुणानां कल्पनामकरोत् । ते च गुणा सन्ति-माधुर्यगुणः, प्रसादगुणः, लावण्यगुणः, आभिजात्यगुणश्चेति । अनेन विवेचनेनाचार्य कुन्तकः रीतिस्थाने मार्गस्य प्रयोगं कृत्वा रीतिशास्त्रस्येतिहासे काऽपि नवीनता नेतुं प्रयत्नः कृतवानस्ति । तथाहि—

**सम्प्रति तत्र ये मार्गाः कविप्रस्थानहेतवः ।**
**सुकुमारो विचित्रश्च मध्यमश्चोभयात्मकः ॥** (व०जी० १.२४)

वक्रोक्तिवैचित्र्यमस्य मार्गस्य जीवनं मन्यते—

**विचित्रो यत्र वक्रोक्ति वैचित्र्यं जीवितायते ॥** (व०जी० १.४२)

आचार्यकुन्तकस्तु रीतिषु उत्तमाधममध्यमानामाधारोपरि त्रैविध्यरूप—

**'न च रीतीनामुत्तमाधम-मध्यमत्वेन त्रैविध्यं व्यवस्थापयितुं न्याय्यम् । यस्मात् सहृदयाह्लादकारि-काव्यलक्षणप्रस्तावे वैदर्भीसदृशसौन्दर्यासम्भवात् मध्यमाधमयो-रूपदेश वैयर्थमायाति ।'** (तत्रैव १.२४ का०वृत्तिः)

कुन्तकस्तु देशानामाधारोपरि रीतेर्नामकरणमनुचितं मन्यते । तथाहि—

**'तदेवं निर्वचनसमाख्यामात्रकरण-कारणत्वे देशविशेषाश्रयणस्य वयं न विवदामहे ।'** (का.मी० १,२४ अस्यैव वृत्तिः)

स तु कविस्वभावस्याधारोपर्येव मार्गेषु त्रैविध्यमकथयत् । यथा—

**'यद्यपि कविस्वभाव-भेद-निबन्धनत्वादनन्तभेदभिन्नत्वमनिवार्यम्, तथापि परिसंख्यातुमशक्यत्वात् सामान्येन त्रैविध्यमेवोपपद्यते ।'** (का०मी० १,२४ अस्यैव वृत्तिः)

महिमभट्टस्य मते पदार्थानामुत्कर्षापकर्षाभ्यां विना रसस्य समुत्पादको न भवति । अनयोरेवोत्कर्षापकर्षाभ्यां कविरलङ्काराणां विधानं करोति । अनयोरुत्कर्षापकर्षयो प्रधानभावस्य विवक्षैवैकं प्रमुख-कारणं भवति । प्रधानेतरभावस्य विवक्षा समस्तपदेषु न भवति, यतः समासस्तु पदार्थानां सम्बन्धमात्रस्यैव निर्देशं करोति न तु तेषामुत्कर्षाप-कर्षयोः । समासस्य सर्वथाऽभावः वैदर्भीरीतौ एव भवति, अतः वैदर्भी एवैका प्रशस्ता रीतिरस्ति । यथा—

**विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित् ।**
**तदर्थमेव कवयोऽलङ्कारान् पर्युपासते ।**
**तौ विधेयानुवाद्यत्व-विवक्षैक-निबन्धनौ ।**
**सा समासेऽस्तमायातीत्यसकृत् प्रतिपादितम् ॥**
**अतएव च वैदर्भी रीतिरेकैव शस्यते ।**
**यतः समाससंस्पर्शस्तत्र नैवोपपद्यते ॥**
**सम्बन्धमात्रमर्थानां समासोक्त्याऽवबोधयेत् ॥**

**नोत्कर्षमपकर्षं वा ............** ॥ (व्यक्तिविवेक: २,१४-१७) ।

भोजराजस्तु रीतिप्रसङ्गे एकत्रैव पन्थ-मार्ग-रीतिशब्दानां प्रयोगः कुर्वन् अकथयत् यत् विदर्भादिदेशानां कविभिः प्रचालिते पन्थानं काव्ये मार्गः कथ्यन्ते । तत्रैव रीङ्गताविति धातोः 'रीयन्ते अनया' इति व्युत्पत्या रीतिशब्दस्य निष्पादनं भवति ।

**वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।**
**रीङ्गताविति धातोः सा व्युत्पत्या रीतिरुच्यते ॥**

(सरस्वतीकण्ठाभरणं २.५१)

स हि 'आवन्तिकां' संयोज्य रीतेः संख्या षोढा कृतवान् । तद्यथा—

**वैदर्भी साथ पाञ्चाली गौडीयावन्तिका तथा ।**
**लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥** (तत्रैव २,५२)

सः वामन इव गुणान्, रुद्रट इव समासान् आधारं मत्वा रीत्याः स्वरूपनिर्माणमकरोत् । यथा—

**तत्रासमासा निःशेषश्लेषादिगुणगुम्फिता ।**
**विपञ्चीस्वरसौभाग्या वैदर्भीरीतिरिष्यते ॥**
**समस्तपञ्चषपदाभोजः कान्तिविवर्जिताम् ।**
**मधुरां सुकुमाराञ्च पाञ्चालीं कवयोः विदुः ॥**
**समस्तात्युद्भटपदाभोजः कान्तिगुणान्विताम् ।**
**गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः ॥** (तत्रैव २,५३-५५)

भोजराजस्य मते पाञ्चालीवैदर्भ्योरन्तरालवर्त्तिनी आवन्तिकाऽस्ति । सर्वासां रीतीनां संमिश्रणेन लाटी तथा पूर्वरीतेरनिर्वाहे खण्डरीतिः मागधी भवति । तद्यथा—

**अन्तराले तु पाञ्चाली वैदर्भ्योर्यावतिष्ठते ।**
**सावन्तिका समस्तैः स्याद् द्वित्रैस्त्रिचतुरैः पदैः ॥**
**समस्त-रीतिव्यामिश्रा लाटीया रीतिरिष्यते ।**
**पूर्वरीतेरनिर्वाहे खण्डरीतिस्तु मागधी ॥** (तत्रैव २,५६-५७)

आचार्यमम्मटस्तु माधुर्याभिव्यञ्जकैर्वर्णैरुपनागरिकोच्यते । ओजः प्रकाशकैर्वर्णैः परुषा कथ्यते, तथा प्रसादस्य प्रत्यायकैः वर्णैः कोमलावृत्तिं मत्वा प्रोक्तवानस्ति यत् वामनाद्याचार्याः एता एव क्रमशः वैदर्भी-गौड़ी-पाञ्चाली कथितः । तद्यथा—

**माधुर्यं व्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।**
**ओजः प्रकाशकैस्तैस्तु परुषाकोमलापरैः ॥**
**केषांचिदेता वैदर्भी-प्रमुखा रीतयो मता ॥** (का०प्र० उ० ८१)

रुय्यकस्तु स्वकीयाऽलङ्कारसर्वस्वे सङ्घटनाधर्मत्वेन गुणमेव मन्यते ॥ यथा—

(अ०स० पृ०७) तथा साहित्यमीमासायां वैदर्भी आवन्ती, पाञ्चालीगौडयाः स्वरूपान् निर्दिष्ट रसविशेषेण सह तेषां सम्बन्धोऽपि दर्शितः । (का०मी० प्रकरणः ६)

प्रथमवाग्भटस्तु रुद्रटानुसारेण—

**द्वे एव रीती गौडीया वैदर्भी चेति सान्तरे ।**
**एकाभूयः समासास्यादसमस्तपदाऽपरा ॥** (वाग्भटालङ्कार ४,१४९)

तथा हेमचन्द्रस्तु मम्मटानुसारेण—

माधुर्यौजः प्रसाद-व्यञ्जकाश्च वर्णाः उपनागरिका परुषा कोमला च वृत्तिराचक्षते । वैदर्भी गौडीया पाञ्चाली चेति रीतय इत्यन्ये । (काव्या नु० अ० ४) ।

रीतेः विचारः कृतवान् । अवशेषां पृथक् निर्देशो व्यर्थमेवेति ।

नरेन्द्रप्रभसूरि वृत्यनुप्रासस्य प्रसङ्गे उपनागरिका-परुषा तथा कोमलावृत्तिभिस्त्रिविधानुप्रासस्य वर्णानमकरोत् । तस्मिन्नेव प्रसङ्गे सः अकथयत् यत् कवर्णादि-वर्गाक्षराणां यदा स्व-स्व वर्गाक्षरैः सह्यवर्त्तनं भवति, तदा कर्णाटी प्रभृतयः द्वादशवृत्तयो भवन्ति तथैताभिर्वृत्तिभिः यदनुप्रासो भवति तदेव काव्यस्य जीवितस्वरूपं भवति । एतासु वृत्तिषु—कवर्गस्यावृत्या कर्णाटी, चवर्गस्यावृत्या कौन्तली, तवर्गस्यावर्त्तनैः कौंकणी, पवर्गस्यावृत्या वनवासिका, अन्तःस्थवर्णानां आवर्त्तनैः, त्रावणी, उष्म वर्णानामावृत्या माधुरी, द्वि-त्रिवर्गाणामावृत्या मात्सी, एकवर्गोक्त्या वर्गद्वयस्यावृत्या मागधी, स्वान्त्र्यसंयोगिवर्ग्यस्यावर्त्तनैस्ताम्रलिप्तिका, सरूपसंयुक्तवर्णानामावर्त्तनैः ऊण्ड्री, असरूपसंयुक्तवर्णानामावृत्या पौण्ड्री नाम्नां द्वादशवृत्तयो भवन्ति । (अ०म० ७,१५, का०वृत्तिः पृ० २१२-१३)

शारदातनयस्तु राजशेखरानुसारेण वचनविन्यासक्रममेव रीतिं मत्वा रीतेः चतुर्षु भेदेषु सौराष्ट्री-द्राविण्यावपि संयोजितान् ।

**बुद्ध्यारम्भानुभावेषु रीतिः प्रथममुच्यते ।**
**रीतिर्वर्त्तनविन्यासक्रमः सापि चतुर्विधा ।**
**तत्र वैदर्भ-पाञ्चाल-लाट-गौड़विभागतः ॥** (भावप्रकाशः पृ० २१)
**सौराष्ट्री द्राविड़ी चेति रीति-द्वयमुदाहृतम् ॥** (तत्रैव पृ० ११)

स तु देश विशेषेण सह रीति विशेषस्य संबन्धं प्रदर्शितवानस्ति । तद्यथा—

**तत्तद्देशीयरचना रीतिस्तद् देशनामभाक् ॥** (तत्रैव पृ० ११)

अस्य मतमस्ति यत्प्रतिपुरुषस्य प्रतिवचनभेदेन रीतौ आनन्त्यमस्ति । किञ्च कविभिरानन्त्यात्संक्षिप्यैषा चतुर्विधा एव प्रोक्ताः ।

**प्रतिवचनं प्रतिपुरुषं तदवान्तरजातिप्रतिप्रीति ।**
**आनन्त्यात् संक्षिप्य प्रोक्ता कविभिश्चतुर्विधेत्येषा ॥**
(भावप्रकाशः पृ० ११)

तं तु प्राचीनमनीषिभिः प्रोक्ताः रीतीनां पञ्चोत्तरशतं विधा ज्ञातमासीत् । किञ्च ग्रन्थविस्तरभयेन तेन ताभ्यः उल्लेखो न कृतः । तद्यथा—

**तासु पञ्चोत्तरशतं विधाः प्रोक्ता मनीषिभिः ।**
**ग्रन्थविस्तरभीतेन मया ताभ्यो विरम्यते ।।** (तत्रैव)

अतः सत्यऽपि रीतेरनन्तभेदास्तथाऽपि चतुर्णां भेदानामेव कल्पना कृताऽस्ति । यथा—

**त एवाक्षरविन्यासास्ता एवाक्षरपङ्क्तयः ।**
**पुंसि पुंसि विशेषेण काऽपि काऽपि सरस्वती ।।**
**तस्माच्चतुर्धा बोद्धव्या रीतिभेदप्रकल्पना ।।** (तत्रैव पृ० १२)

आत्मानन्दयोगी पुनः काव्ये रीतेरात्मतत्त्वं प्रदर्शयन् अकथयत्—

**'रीतिरात्मात्र काव्यस्य कथ्यते सा चतुर्विधा ।'** (अ०सं० ५,१)

अयं हि वामनानुसारेण श्लेषादिगुणान्, तथा रुद्रटानुसारेण समस्तपदान्, एवं मम्मटानुसारेण माधुर्यादेरभिव्यञ्जकान् वर्णान् आधारं मानयन् रीतीनां स्वरूपं प्रदर्शितोऽस्ति अस्य वैदर्भीरीत्यां श्लेषादि दशभिर्गुणैः असमस्ता-द्वित्रिपदसमस्ता वा, वर्गस्य द्वितीय अक्षराणां प्राचुर्यः । एवं घोषाक्षराणामल्पत्वं भवति । यथा—

**एतैः समग्रा वैदर्भी वर्ण्यते दशभिर्गुणैः ।**
**असमस्ता द्वित्रिपदसमस्ता वा मनोहरा ।**
**वर्गद्वितीयप्रचुरा स्वल्पघोषाक्षरा यथा ।।** (तत्रैव ५,८-९)

गौडीरीतिस्तु समस्तपदां, ओज-कान्तिगुणान्विताम्, महाप्राणाक्षरवर्ती भवति । तद्यथा—

**समस्तात्युद्भटपदाभोजः कान्तिसमन्विताम् ।**
**महाप्राणाक्षरवर्तीं गौडीमाहुर्बुधा यथा ।।** (तत्रैव ५,१०)

माधुर्य-सौकुमार्य-ओजकान्तिगुणान्विताम् तथा समस्त पञ्चषट्पदा पाञ्चाली रीतिर्भवति । तद्यथा—

**माधुर्यसौकुमार्योजः कान्तिभिः सहिता गुणैः ।**
**समस्तपञ्चषट्पदा पाञ्चाली कीर्त्यते यथा ।।** (तत्रैव ५,११) ।

लाटीरीत्यां सर्वासां पूर्वोक्तरीतीनां संमिश्रणम्, अल्पसमासः, संयुक्त-वर्णानामाधिक्यम्, तथा घोषाक्षराणां स्वल्पत्वं भवति । तद्यथा—

**समस्तरीतिसंमिश्रा लाटी मृदुसमासिनी ।**
**संयुक्तवर्णभूयिष्ठा स्वल्पघोषाक्षरा यथा ।।** (तत्रैव ५,१२) ।

जयदेवस्य रीतिविचारे रुद्रटस्य पूर्णप्रभावः परिलक्ष्यते । यथा—

**आचतुष्टयमासप्त यथेष्टैरष्टमादिभिः ।**
**समासः स्यात् पदैर्न स्यात् समासः सर्वथाऽपि च ॥**
**पाञ्चाली किञ्च लाटीया गौडीया च यथा रसम् ।**
**वैदर्भी च यथासंख्यं चतस्रो रीतयः स्मृताः ॥**

(चन्द्रालोकः ६,२१.२२)

विद्याधरस्तु वामनस्य 'काव्यालङ्कारसूत्रवृत्ति' नामकग्रन्थगतान् शब्दान् किमपि व्यत्यासं कृत्वा त्रिसृणां रीतीनां स्वरूपमेव शशास । अस्मिन्मते वैदर्भी-पाञ्चाली-गौडीति त्रिसृणां रीतीनां साङ्कर्येण आवन्तिका, लाटीया तथा मागधी रीतयो भवन्ति ।

**—वयमधुनारीतिः प्रचक्ष्महे तिस्रः ।**
**वैदर्भी पाञ्चालीगौडीयेत्यत्र संक्षेपात् ॥** (एकावली ४,९)
**अकृतसमासस्पर्शा समग्रगुणगुम्फितादि सा तत्रः ।**
**एकैकजयति रीतिर्विदलितवीणाभिमानसर्वस्वा ॥**
**ओजः कान्तिविहीनामाहुः श्लथसन्धिवन्धुरां कवयः ।**
**पञ्चषट्पदसमुदञ्चल्ललितसमासां च पाञ्चालीम् ॥**
**ओजः कान्तिकरन्वितसकलोद्धतपदविराजितां वृत्तिम् ।**
**बिभ्राणारीतिज्ञै गौडीया रीतिनाम्नाता ॥**
**एतासामेव साङ्कर्याद् भवन्त्यावन्तिकादयः ॥**
**पार्थक्येन ततोऽस्माभिर्नाभ्यधीयन्त ताः पुनः ।** (तत्रैव ५.१०-१३)

शिङ्गभूपालस्य 'रसार्णवसुधाकरो'परि प्राचीनानेकग्रन्थानां प्रभावः परिलक्ष्यते । अयं हि 'अग्निपुराणम्' तथा 'काव्यमीमांसा' इव रीतिं बुद्ध्यारम्भं मत्वा पदविन्यासभङ्गीरूप एवाकथयत् ।

**बुद्ध्यारम्भास्तथा प्रोक्ता रीति-वृत्ति-प्रवृत्तयः ।** (रसा०सु० १,२२७)

तथा कोमला-कठिना-मिश्रेति त्रिधा भेदोऽपि स्वीक्रियते ।

**रीतिः स्याद् पदविन्यासभङ्गी सा तु त्रिधा मता ।**
**कोमला कठिना मिश्रा चेति स्यात् तत्र कोमला ॥** (तत्रैव, १,२२८)

विश्वनाथमते यथा सुसङ्गठिताङ्ग-विन्यास-विशेष-सौन्दर्याधायकत्वे सति आत्मनः उपकारको भवति, तथैव पदसङ्घटनारूपारीतिः काव्यसौन्दर्यस्य जननी एवमात्मभूत-रसादेरुपकारिणी भवति ।

**पदसङ्घटनारीतिरङ्गसंस्था विशेषवत्,उपकर्त्री रसादीनाम् ।**

(सा०द०९.१)

मम्मटानुसारेणैवास्याऽपि मते माधुर्यादिगुणानामभिव्यञ्जकैर्वर्णैः पदानां समस्तता-असमस्ततयोराधारोपरि वैदर्भ्यादि चतुर्विधानां रीतीनां रचना भवति ।

**सा पुनः स्याच्चतुर्विधा ।**
**वैदर्भी चाथ गौडी च पाञ्चाली लाटिका मता ।** इत्यादि
(सा० द० ९.८.६)

केशवमिश्रस्तु 'अलङ्कारशेखरः' नामकग्रन्थे गौड़ी-वैदर्भी-मागधीरीतीनां उल्लेखः कृतवानस्ति । यथा—

**तत्तद्रसोपकारिण्यस्तत्तद्देशसमुद्भवाः ।**
**पद्येषु रीतयो गौडीवैदर्भीमागधी तथा ॥** (अ०शे० १,२,२)

शौद्धोदनि स्वकीयकारिकायां उक्तिः, मुद्रा एवं वृत्या सह रीतिं काव्यजीवितं कथ्यते ।, तथाहि—

**रीतिरुक्तिस्तथा मुद्रावृत्ति काव्यस्य जीवितम् ॥** (तत्रैव १,२,१)

केशवमिश्रस्तु श्रीपादस्य कतिपय श्लोकानुद्धृत्य प्रोक्तवान् यत् समासाधि पत्येन गौड़ी, तदल्पेन वैदर्भी, उभयोः साङ्कर्येण मागधीरीतिर्भवति । इयमेव मैथिलीरीतिरप्युच्यते । तथा—

**गौड़ी समासभूयस्त्वात् वैदर्भी च तदल्पतः ।**
**अनयो सङ्करीयस्तु मागधी सातिविस्तरा ।**
**गौडीयैः प्रथमा मध्या वैदर्भैर्मैथिलैस्तथा ।**
**अन्यैस्तु चरमा रीतिः स्वभादेव सेष्यते ॥** (तत्रैव १,२,२)

काव्यशास्त्राकारास्यान्तिम देदीप्यमाननक्षत्रं पण्डितराजजगन्नाथस्य रीतिविषयक संक्षिप्तविचारेण स्पष्टोभवति यद्रीतिविषयक विचारे उत्तरोत्तर ह्रास एवाऽभवत् । जगन्नाथस्तु मम्मट इव वैदर्भ्यादिरीतौ तथोपनागरिकादिवृत्त्यां अभेद इव मन्यते । पण्डितराजः केवलं वैदर्भ्याः स्वरूपं निर्दिशन् अलिखत् यत् रचना विशेषमेव वैदर्भी कथ्यते । तद्रीतिस्तु सामान्य-विशेषविषयैः दूषणै रहिता, माधुर्यप्रसादगुणैर्युक्ता भवति, कवेर्व्युत्पत्तिमुद्गिरन्ती । तथा यत्र रसस्य पूर्णा परिपाको भवति तत्तु वैदर्भी कथ्यते । यथा—

**एभिर्विशेषविषयैः सामान्यैरपि च दूषणै रहिता ।**
**माधुर्यभारभङ्गुर-सुन्दर-पदवर्ण-विन्यासा ॥**
**व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता ।**
**तां विवुधां वैदर्भी वदन्ति वृत्तिं गृहीतपरिपाकाम् ॥** (र०अ०)

अस्याश्च रीतिनिर्माणे कविना सावधानतया वर्त्तितव्यम् । तथा हि—

**अस्याश्च रीतेर्निर्माणो कविना नितरामवहितेन भाव्यम्, अन्यथा तु परिपाकभङ्गः स्यात् ।** (तत्रैव पृ० ११७)

तत्रासावेकैव वैदर्भ्यै वृत्तिस्तथा रीतिशब्दानां व्यवहारो विहितः । यथा—

**तां विबुधा वैदर्भी वदन्ति वृत्तिम् ।'** (तत्रैव पृ० ११७) ।

राजशेखर-शारदातनयादेरनुकरणं कुर्वन् बहुरूपमिश्रोऽपि दशरूपकवाक्यम्—

समासतारतम्यात्, उपचारतारतम्यात्, बन्धसौकुमार्यादितारतम्यात्, अनुप्रासभेदेन तथा योगादिभेदैश्चतसृषु रीतिषु परस्परं भेदं मन्यते । तद्यथा—

**एतासां चतसृणां च रीतीनां समासतारतम्यात् । उपचारतारतम्यात्, बन्धसौकुमार्यादितारतम्यात् योगादिभेदाच्च परस्परं भेद इत्यनुसंधातव्यम् ॥ इति ।**

(डॉ० राघ०भो०शृ० पृ०२००१)

अच्युतरायस्तु स्वसाहित्यसारे पूर्वाचार्यानुसारेण रसोपकारिणीं पदसङ्घटनां रीतिं मत्वा वैदर्भी-गौड़ी-पाञ्चालीभेदेन तेषु त्र्यैविध्यं दर्शितवान् । तथा हि—

**तत्तद्रसार्हपदसङ्घटना रीतिरीरिता ।**
**वैदर्भी च तथा गौडी पाञ्चाली चेति तत्क्रमात् ॥**

(सा०सा० ७,१३६)

स तु वैदर्भ्यामसमासम्, गौड्यां चतुराधिकपदानां समासं तथा पाञ्चाल्यां आचतुष्पदं समासमेवाधारं मन्यते ।

**असमासा तुरीयोर्ध्वसमासा च यथेप्सितम् ।**
**तदेकान्तसमासा च विज्ञेया सा यथाक्रमम् ॥** (तत्रैव ७, १३७ ।)
**अयं हि रीति-वृत्योर्भेदं स्वीक्रियते ।** (तत्रैव)

अत्रेदं विचार्यते—अलङ्कारसम्प्रदायापेक्षया रीतिसम्प्रदायस्यालोचनादृष्टिः सूक्ष्मातिगहना च प्रतीता भवति । भामहादयो हि रसमलङ्कारं मत्वा तं काव्यस्य वहिरङ्ग साधनमेव स्वीकृतवन्तः, किन्तु वामनेन तु कान्तिगुणान्तर्गतं—'दीप्ति रसत्वं कान्तिः' (काव्यालं ३,२,११७) रसं मत्वा काव्ये रसस्य महत्ता समधिका वर्त्तते इत्यत्र विशेषाग्रहो दर्शितः । ध्वनिश्च वक्रोक्तावेवान्तर्भावितः । इत्थञ्च कार्यद्वयं सम्पादितम्—(१) काव्यपरिभाषायामात्मनो मुख्यत्वम् (२) गुणानामुख्यत्वं प्रयच्छताऽलङ्काराणां गौणत्वम् ।

शब्दार्थौ शरीरं रसश्च तदात्मा, इति स्वीकारादेव वैदर्भ्यादि रीतीनां गुणाश्रितत्वमङ्गीकृतम् । गुणानामपि रसधर्मत्वमङ्गीकृत्य तेषां काव्यात्मनः सम्बन्धः स्थापितः आचार्यैः । मम्मटाचार्यस्तु वृत्तिं रीतिञ्चैकमेव स्वीकरोति । तथाहि **'एतास्तिस्रो वृत्तयः वामनादीनां वैदर्भीगौडीपाञ्चालाख्या रीतयोः मताः'** (काव्यप्रकाशः ९।८१ पूर्वार्द्धवृत्तिः) । साधारणातया वृत्ति रीतिषु भेदः कर्त्तुं न शक्यते तथापि सूक्ष्मेक्षिकया किञ्चित्पार्थक्यमस्त्येव । तथा हि वृत्तीनां विभाजनं रचनायाः गुणोपरि वर्त्तते । रीतीनां वर्गीकरणं देशस्य प्रान्तस्य वाधारेण भवति । यद्यपि गुणैः सह रीतीनां सम्बन्धोऽस्ति तथापि तासु रचनाया वाह्यरूपोपर्येवाधिकाग्रहो दत्तो वर्त्तते । रुय्यकेन भेदमेनमधिकस्पष्टतया प्रदर्शितम् ।

आचार्यराजशेखरेण त्वित्थमत्र निर्दिष्टम्—'तत्र वेशविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः । इति । भोजदेवेन तु सरस्वती-कण्ठाभरणे रीतीनां साहित्यमार्गेण-अर्थात् रचनायाः क्रमेण वा सम्बन्धः प्रदर्शितः । रीतिशब्देनैव वृत्तेः सम्बन्धः विकास-विक्षेप-सङ्कोच-विस्तार-मनोदशाभिः अर्थात् चित्तोपरि पतितप्रभावैः रीतीनां सम्बन्धो वाह्यवर्णविन्यासैरधिको वर्त्तते इति प्रदर्शितः । एतन्मते चतुर्विंशति गुणाः सन्ति ।

भरतवामनादिभिः शब्दार्थयोः ये दशगुणाः उक्ताः, मम्मटादिभिस्तु माधुर्यौजः प्रसादेष्वेव तानन्तर्भाव्यगुणानां त्रैविध्यमेव स्थापितम् । यथायथमन्तर्भावस्त्वेतद् ग्रन्थस्याप्यष्टम परिच्छेदतोऽवगन्तव्यः । गुणाश्च शौर्यादिवत् काव्यात्मभूतरसस्योत्कर्ष-हेतुभूताः सन्तःस्थायिधर्मा इत्युच्यते । अलङ्कारा अपि तदुकर्षहेतवः सन्ति । किन्त्वस्थायिरूपेणेति तत्र तत्र भूरिशः प्रदर्शिता एव विद्यन्ते । इति ।।



## वक्रोक्तिसम्प्रदायः

संस्कृतवाङ्मये वक्रोक्तिशब्दस्य प्रयोगोऽतिप्राचीनादेव कालात् प्रवृत्तो वर्त्तते इत्यवलोक्यते । शास्त्रे लोकव्यवहारे च शब्दार्थयोः प्रसिद्धकथनप्रकाशाद्विलक्षणा-पूर्वचमत्कारोत्पादकपद्धत्या प्रतिपादनप्रकारमेव वक्रोक्तिः कथ्यते ।

अथर्ववेदे वक्रस्तथावक्रा शब्दस्य प्रयोगः कुटिलार्थे एवाकार्षित्—

**'अयं यो वक्रोक्तिपरूर्व्यङ्गे मुखानि वक्रा वृजिना कृणोषि ।'**

—अथर्ववेदः ७,५८,४।७ कालिदासस्य 'वक्रः पन्थाः' अस्मिन्प्रयोगे वक्रस्यार्थः कुटिलो भवति । यथा—

**वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशाम् ।**

(मेघदूत पूर्व० मे० २९)

अनेन प्रकारेण वक्रा = जनसामान्यकथनभिन्ना लोकोत्तरचमात्कारशालिनी उक्तिः = भणितिः कथनं वा । इत्थञ्च लोकोत्तरचमत्कारपूर्णं कथनमेव वक्रोक्तिः न च सामान्यजनाभिव्यञ्जिता साधारणा वाक् । एतेषामर्थानामतिरिक्ते चमत्कारपूर्णाशैली-वचनविदग्धताद्यर्थेषु बाणभट्टस्य वक्रोक्तिप्रयोगो मिलति । अयं हि निम्नाङ्कितवाक्ययोः परिहासकथाया अर्थे वक्रोक्तिशब्दस्य प्रयोगमकरोत् । तथाहि—

**'वक्रोक्तिनिपुणेन विलासि जनने'** (कादम्बरी पूर्वभागः)

**'एषाऽपि बुध्यते एव एतावतीर्वक्रोक्तिः ।'**

(कादम्बरी पूर्वभागः पृ० २९६)

अयं हि वक्रोक्तेः प्रयोगः वाक्छल-क्रीडालाप-परिहासजल्पित-चमत्कारपूर्णशैली-वचन-विदग्धताद्यर्थेषु कृतवानस्ति । अमरुकोऽपि परिहासकथनार्थे एवास्य प्रयोगः कृतवानस्ति । यथा—

**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना ।**<br>
**नो जानाति सविभ्रमाङ्गवलना वक्रोक्ति संसूचनम् ॥** (अमरु० २३)

एतानेव पूर्ववर्णितानर्थान् सुस्पष्टीकुर्वन् वक्रोक्तिवादस्य प्रतिष्ठापकः आचार्य-कुन्तकेन प्रोक्तम्—**'वैदग्ध्य-भङ्गी-भणिति एव वक्रोक्तिर्भवति ।'** तद्यथा—

**'वक्रोक्तिरेव वैदग्ध्यभङ्गी-भणितिरुच्यते ।'** (व० जी० १.१०)

कादम्बरीकारो वाणभट्टस्तु—**वक्रोक्तिनिपुणेन आख्यायिकाख्यानपरिचय-चतुरेण'**—(कादम्बरी पू०भा० पृ० ८७)

प्राचीनादेव कालादालङ्कारिकाः कस्यचनातिशय कथनस्य सत्तां स्वीकृतवन्तः सामान्यजनकथनप्रकारात् । भिन्नेन प्रकारेण कथनमेव वक्रोक्तिशब्देनाभिधीयते । ऐतिहासिक्याद् दृष्ट्या अलङ्कारशास्त्रे सर्वप्रथमं वक्रोक्तेः कल्पनां भामहः अकरोत् । भामहानुसारेण वक्रोक्तिरतिशयोक्तेर्नामान्तरमात्रमास्ते । सः वक्रोक्तिमेव काव्यस्य मूलतत्त्वरूपेण स्वीकरोति । अत्राहाचार्यो भामहः—

**सैषा सर्वत्र वक्रोक्ति रचनयार्थो विभाव्यते ।**
**यत्नोऽस्यां कविना कार्यः कोलङ्कारोऽनया विना ॥** (काव्यालङ्कार०)

काव्यं वक्रोक्तेरेवोपादेयतामङ्गीकृत्य भामहो हेतुसूक्ष्मलेशाख्यानलङ्कारान् न हि स्वीकरोति । तथाहि—

**'हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः ।**
**समुदायाभिधानस्य वक्रोक्त्यनभिधानतः ॥** (तत्रैव)

भामहानुसारेणालङ्कारत्वाय वक्रोक्तेः स्थितिरनिवार्या भवति । नहि भवति कश्चनाप्यलङ्कारो वक्तोक्तिं विना—

**'वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते ।'** (तत्रैव)

भामहेनालङ्काराणां मूलोत्सरूपेणेयं स्वीकृता, वामनेन सादृश्यमूललक्षणाऽर्थालङ्काररूपेण, रुद्रटेन शब्दालङ्काररूपेण चाभिमता वक्रोक्तिः कुन्तकेन काव्यस्यात्मा कथिता । तन्मते वैदग्ध्यभङ्गी भणितिरेव वक्रोक्तिः । इयं हि वक्रोक्तिः षड्विधा वर्णविन्यासवक्रता, पदपूर्वार्द्धवक्रता, प्रत्ययाश्रितवक्रता, वाक्यवक्रता, प्रकरण- वक्रता, प्रबन्ध-वक्रता चेति । शब्दार्थवक्रताभिः समन्विता वक्रोक्तिरेवालङ्काराणां जननी भवति । अर्थात् वक्राभिधेयशब्दोक्तिरथवा वक्रशब्दोक्तिरूप वक्रोक्तित्वे सति एव कोऽप्यलङ्कारः भवितुमर्हति नान्यथेति । इमामेव वक्रोक्तिम् अतिशयोक्तिरपि कथ्यते । इयमेव लोचनकारानुसारेण काव्यस्य जीवितत्त्वेनोक्ता । यथा—**'अथ सा काव्यजीवितत्त्वेन तु उक्ता ।'** (द्र०का०मी०अ० ३, अधि० १) । लोक-साधारण-कथनस्यातिक्रमणकर्त्तारं वचनमेवातिशयोक्तिर्भवति । अस्यामतिशयोक्त्यां लोकोत्तरलोकातिक्रान्तगोचरता, अर्थात्, लोकोत्तरत्ता किम्वा पण्डितराजजगन्नाथानुसारेण लोकत्तराह्लादगोचरतारूप-रमणीयता तत्र प्राप्यते । तथाहि—**'रमणीयता च लोकोत्तराह्लाद-गोचरता'**—(रसगङ्गाधर) इयमतिशयोक्तिरेव वक्रोक्तिरस्ति । यथाऽर्थानां विभावनमर्थात् अभिनवानुसारेण रसमयी करणं भवति (द्र० काव्यात्म मी० अ० ३, अ० १) ।

एभिरूपर्युक्तविवेचनैः भामहानुसारेण वक्रोक्तेर्मूलतत्त्वमस्ति शब्दार्थयोः चमत्कारः । अस्य प्रयोजनमस्ति, अर्थस्य विचित्ररूपेण भावनं तथास्य व्यापकं महत्त्वमस्ति

अलङ्कारेषु अलङ्कारत्वस्य सम्पादनम् । अस्याभावे काव्यं काव्यं न भूत्वा 'वार्त्ता मात्रैव भवति ।

आचार्यो दण्डी सम्पूर्णमिव वाङ्मयं भागद्वये विभाजयति—स्वभावोक्तिरूपेण वक्रोक्तिरूपेण च । स्वभावोक्तौ तेषां काव्यानामन्तर्भावो भवति येषु वस्तूनां स्वरूपयाथात्म्यं भवति वर्णितम् । काव्यादर्शे आचार्यो दण्डी स्वभावोक्तिमेव जातेरपरपर्यायभूतेनाद्येनालङ्कारनाम्नाभिधीयते । तथाहि—

**नानावस्थं पदार्थानां रूपं साक्षात् विवृण्वती ।**
**स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा ॥** (काव्य०द०२,१०)

तेन तदतिरिक्तरुपमादि स तानलङ्कारान् वक्रोक्तिशब्देन प्रतिपादनं कृताऽस्ति । तथाहि—'**वक्रोक्तिशब्देन उपमादयः सङ्कीर्णपर्यन्त । अलङ्कारा उच्यन्ते ।**' तत्रैव हृदयङ्गमा टीका स्वभावकथनाद् भिन्नादेव वक्रोक्तौ अतिशयकथनस्य समावेशः क्रियते । इत्यमुपमादिकाऽर्थालङ्कारा रसवदादिका रससम्बद्धा अलङ्काराः वक्रोक्तावेव समाविशन्ति । दण्ड्यनुसारेण श्लेषस्य सत्ताया वक्रोक्तिरत्यधिकं परिपुष्टा भवति । तथा च—

**श्लेषः सर्वासु पुष्णाति प्रायोवक्रोक्तिषु श्रियम् ।**
**भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥**(का०द० २,३६३)

भामह इव दण्ड्योऽपि वक्रोक्तिअतिशयक्त्योर्मध्येऽभेदं मन्यते । लोकसीमाया-रतिक्रमयित्री उक्तिरेवातिशयोक्तिरस्ति । यालङ्कारेषु सर्वोत्तमालङ्कारो भवति । यथा—

**विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी ।**
**असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा ॥** (२,२१४ काव्याद०)

स्पष्टतः दण्डी वक्रोक्तिं स्वभावोक्तिक्षेत्रात् पृथक् चकार, प्रस्तुतविषयस्योत्कर्ष-प्रदर्शिनीम् एवं बृहस्पत्यादिकैरपि समादृतै यमतिशयोक्तिमाचार्याः अलङ्काराणां मुख्यावलम्बनं मन्यन्ते । तथाहि—

**अलङ्कारान्तराणामप्येकमाहुः परायणम् ।**
**वागीशमहतामुक्तिमिमामतिशयाह्वयाम् ॥** (काव्यादर्शः २,२२०)

अत्र लोकसीमातिवर्त्तिनिस्वरूपातिशयक्तौ तथा स्वभावोक्त्या भिन्न चमत्कृतोक्ति-रूपवक्रोक्तौ न किमप्यन्तरं प्रतिभाति ।

अस्य विवेचनस्यायमाशयः—दण्डिना वक्रोक्तिं व्यापकार्थे गृहीत्वा तामलङ्कार-सामान्यमेव तथा सर्वेषामलङ्काराणामाधारं मन्यते । अस्मिन्मते वक्रोक्तिः अतिशयोक्त्या भिन्नं नास्ति किञ्च स्वभावोक्त्या भिन्नमस्ति । स्वभावोक्त्याः साम्राज्यं शास्त्रेष्वेवावाप्नोति, यद्यपि तत् काव्येऽपि अवाञ्छनीयं नास्ति । 'शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येत-दीप्सितम् । (तत्रैव २.१३)

वामनेन स्वीकृतायाः वक्रोक्तेः रूपं भामहप्रदर्शितान् वक्रोक्तेरूपान्नितरां भिद्यते । भामहो वक्रोक्तिं सर्वेषामलङ्काराणां मूलरूपेणाभ्युपगच्छतिस्म किन्तु वामनः तामर्थालङ्कार विशेषरूपेण वक्रोक्तिमप्युपैति । वामनानुसारेण वक्रोक्तिः सादृश्यमूला लक्षणैवास्ते । आचार्य वामनः सादृश्यमूलकलक्षणास्थले वक्रोक्ति-अलङ्कारंत्वा क्षेत्र मिदमत्यन्तसीमितं कृतवान् ।

**'सादृश्याल्लक्षणा वक्रोक्तिः'** (काव्या०सु० वृ० ४,३,८)

यथोदिते सूर्ये कमलं सरोवरेऽविकसत् तथा कैरवं निमीलितम् । यथा—

**उन्मीलकमलं सरसीनां कैरवञ्च निमीलितं पुरस्तात्** (तत्रैव)

अत्रोन्मीलनं निमीलनञ्च नेत्रधर्म एवास्ति । क्रमशः कमलस्य विकासः एवं कुमुदस्य सङ्कोचं सूचयति । एवं सादृश्यमूलकं लक्षणं वक्रोक्तिः कथ्यते । सादृश्य-मूलकलक्षणेयं वक्रोक्तिरुच्यते । वामनस्येयं वक्रोक्तिकल्पना स्वस्मिन्नेव परिसीमितो-ऽस्ति। न कोऽप्यन्यः अस्या कल्पनायाः अनुयायी परिदृश्यते ।

यद्यपि वामनस्य 'विशिष्टपदरचना रीतिः' इत्यस्मिन् लक्षणे गुणैरूत्पन्ना विशिष्टता क्वचित्—क्वचित् 'वक्रतारूपैव भवति, यथा—'विकटत्वमुदारता' (तत्रैव ३,१,२३) । अस्य लक्षणस्यानुसारेण पदं यत्र नृत्यं कुर्वन् प्रतीतो भवति तत्रौदार्थगुणो भवति एवं **'औजव्यं कान्तिः'** (तत्रैव ३,१,२५) अस्य लक्षणस्यानुसारेण पदरचना यत्रोज्ज्वला-भवति, तत्र कान्तिगुणः सम्पन्नो भवति । यः कुन्तकस्य वर्ण विन्यास वक्रता रूप एवास्ति तथापि स्पष्टरूपेण तत्र वक्त्रोक्तेश्चर्चा वामनो नैवकृतवान् ।

रुद्रटो वक्रोक्तिं शब्दालङ्कारविशेषरूपेणाभ्युपगच्छति । यदा कस्यचन भिन्नार्थकं शब्दं श्रुत्वा श्रोतस्यावाञ्छितमकल्पितं चोत्तरं ददाति तदा रुद्रटानुसारेण वक्रोक्तिर्भवति। यथा—**'अहो केनेदृशी बुद्धिर्दारुणा तवनिर्मिता ।'** इति कस्यचन वाक्यं श्रुत्वा—त्रिविधा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्' । इत्युत्तर प्रदानं वक्रोक्तिरेवास्ति । रुद्रटः वक्रोक्तिं वाक्छसोपरि आश्रित शब्दालङ्काररूपं मत्वा तां काकुवक्रोक्तिं एवं श्लेष वक्रोक्तिनामक भेदद्वयं स्वीकृतवानस्ति । तद्यथा—

**वक्त्रा तदन्यथोक्तं व्याचष्टे चान्यथा तदुत्तरतः ।**
**वचनं यत्पद-भङ्गैः ज्ञेया सा श्लेषवक्रोक्तिः ॥** (रुद्रट० २.१४)
**विस्पष्टं क्रियमाणादक्लिष्टा स्वरविशषतो भवति ।**
**अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिः ॥** (तत्रैव २.१६)

अग्निपुराणे ऋजु-वक्रोत्योर्भेदेन द्विविधो काको वाक्य-नामकस्य शब्दालङ्कारे काकुकाकु तथा भङ्गश्लेषयोर्भेदेन द्विप्रकारकं वक्रोक्तिं मन्यते । अत्रापि वक्रोक्ति वाक्छलस्य रूपेणैव प्रयुक्तास्ति—

**'उक्तिः प्रत्युक्तिमद्वाक्यं वाकोवाक्यं द्विधैव तत् ।'**
**ऋजुवक्रोक्तिभेदेन तत्राद्यं सहजं वचः ।**

**वक्रोक्तिस्तु भवेद् भङ्ग्या काकुस्तेन कृता द्विधा ॥**

(अ०पु० ३४२,३२-३३)

मनोरथकवेरनुसारेण वक्रोक्तिस्तु अलङ्कार-सामान्यरूप एवास्ति । ध्वन्यालोके निम्नलिखितास्य श्लोकस्य—

**यस्मिन्नास्ति न वस्तु किञ्चिन्मनःप्रह्लादिसालङ्कृतिः,**
**व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यञ्च यत् ।**
**काव्यं तत् ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो,**
**नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः ॥**

(ध्वन्या० पृ० १०)

अस्मिन् श्लोके 'वक्रोक्ति शून्यं च यत्' अस्यांशस्य व्याख्यां कुर्वन् अभिनवगुप्तोऽलिखत् वक्रोक्तिरर्थोऽत्र भवति—'उत्कृष्टसङ्घटना' । अनेन प्रकारेण 'वक्रोक्तिशून्यस्य' अर्थो भवति—शब्दार्थगुणानां सङ्घटना शून्य एव । कतिपय जनाः वक्रोक्तिशून्यशब्दस्यार्थः कृतवन्तः 'अलङ्कारसामान्यस्याभावः' । तथाहि—

**'वक्रोक्तिरुत्कृष्टसङ्घटना । तच्छून्यमिति शब्दार्थगुणानाम् । वक्रोक्तिशून्य-शब्देन सामान्यलक्षणाभावेन सर्वालङ्काराभाव उक्त इति केचित् ।'**—तत्रैव लोचन पृ० १० । अतः मनोरथस्य मते वक्रोक्तिः अलङ्कारसामान्यरूप एवास्ति ।

ध्वनिसिद्धान्तस्य संस्थापक आचार्य आनन्दवर्धनः स्वकीय ध्वन्यालोके वक्रोक्तेः सर्वत्र नाम्ना निर्देशः अकुर्वन् अपि वक्रोक्तितत्त्वस्य मार्मिकविवेचनं कृतवानस्ति—**'तत्र वक्रोक्त्यादि वाच्यालङ्कारव्यवहारः'** (ध्वन्या० २.२२ वृत्तिः) । अनेनानन्दवर्द्धना-चार्येण भामहस्य वक्रोक्तिरूपातिशयोक्तेः पूर्णविवेचनं कृतमस्ति । अतिशयोक्तिं सर्वालङ्काररूपं मानयन् प्रथमस्तु सर्वेष्वलङ्कारेष्वतिशयोक्तिगर्भतां मन्यते तथा कवि भिर्विरचितैस्तयातिशयोक्तिगर्भतया काव्येऽपूर्वशोभायाः वृद्धिं स्वीकृतः । अनेन कथितः यत् प्रस्तुत विषयस्यौचित्येन संयुक्तातिशयोक्तेः सम्बन्धः काव्ये उत्कर्षं वर्द्धयति अस्मिन्नेव प्रसङ्गे भामहस्य प्रसिद्धकारिका —**'सैषा सर्वत्र वक्रोक्तिः'** उद्धृतं कुर्वन्नानन्देन जगाद-कविप्रतिभया समुत्पन्नोऽतिशयोक्तिर्समलङ्कारं प्रभावयति, तस्मिन्नेवा-लङ्कारे शोभातिशयस्य योगो भवति । यस्मिन्नलङ्कारेऽतिशयोक्तेः सम्बन्धो न भवति तत्तु अलङ्कारमात्र एवावशिष्यते । अतः अतिशयोक्तौ सर्वेषामलङ्काराणां स्वरूपधारणस्य योग्यता भवति तदेव सर्वालङ्कारस्वरूपं कथ्यते । तथाहि—'यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया कृतैर्वचसा महाकविभिः कामपि काव्यच्छविं पुष्यतीति कथं हि अतिशयोगिता स्वविषयौचित्येन क्रियमाणा सती काव्येनोत्कर्षमावहेत् । तत्रातिशयोक्तिः यमलङ्कारमधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगोऽन्यस्यत्वलङ्कारमात्रतैवेति सर्वालङ्कार-शरीर-स्वीकरण योग्यत्वेनाभेदो-पचारात् सैव सर्वालङ्काररूपा इत्ययमेवार्थोऽवगन्तव्यः ।' (तत्रैव ३.३७ वृत्तिः)

यथा भामहः—अतिशयोक्तिवक्रोक्त्योर्मध्येऽभेदं मन्यते, तथैवानन्दोऽपि उभयो-र्मध्येऽभेद एव मन्यते—

(१) अतः आनन्दस्य मते अतिशयोक्तिः वक्रोक्तिश्चोभयोरपि एकरूपैवास्ति ।
(२) इयमतिशयोक्तिः सर्वालङ्काररूपैवास्ति ।
(३) अस्मिन्नलङ्कारे कविप्रतिभाजन्य चमत्कारो भवति ।
(४) तथा विषयगतौचित्य अस्य नियामकोऽस्ति ।

ध्वनिना सह वक्रोक्तेः साम्य-वैषम्यञ्च स्पष्टं करणीयमेवाग्रे । (काव्यात्म मीमांसायाः षष्ठाध्यायस्य चतुर्थाधिकरणे द्रष्टव्यः ।)

वक्रोक्तेर्महनीयभावनाया बीजरूपेण सूचनकरणस्य श्रेयोभागी आचार्य भामह तमेव बीजमादाय पूर्णरूपेणाङ्कुरित-पल्लवितकरणस्य सम्मानमाचार्यकुन्तकस्यैव वर्त्तते। यद्यपि भामहग्रन्थपर्यालोचनयाऽलङ्काराणामेव भामहेन प्राधान्यं दत्तम् । तथापि रसवक्रोक्तिरीतिसम्प्रदायानां बीजमपि प्रदर्शितं मिलति । अनेन महात्मना हि वक्रोक्ते व्यापकत्वं प्रदर्श्य काव्यार्थमावश्यकत्वमेतस्या इति प्रदर्शितम् । तथाहि—

**'युक्तं स्वभावोक्त्या सर्वमेवादिष्यते ।'** (का०ल० २.३०)

अयमेवातिशयोक्ति च वक्रोक्ति नाम्ना व्यवहरति, ताञ्च सर्वालङ्काराणां जीवनाधायकत्वं व्यवस्थापितवान् । तथा च स्पष्टमेवोक्तिः—

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ।।** (काव्यादर्शः)

अभिनवगुप्तोऽपि ध्वन्यालोकलोचने उपर्युक्तप्रसङ्गे एवालिखत् यत् यस्यातिशयोक्ते लक्षणं भामहेन कृतम्, सैव वक्रोक्तिरस्ति, यो हि सर्वालङ्काररूप एवाऽस्ति यतो हि शब्दार्थप्रतिपादकः शब्दोक्तिरूपः वक्रोक्तिरेवालङ्कारो भवति । वक्रतायाः अर्थो भवति—लोकोत्तररूपेणावस्थानम् । अनेन प्रकारेण शब्दस्य हि वक्रता अभिधेयार्थस्य हि वक्रता लोकोत्तीर्णेन रूपेणावस्थानम् । तथा वक्रोक्तिशब्दस्यार्थः—वक्रा = सर्वसाधारण-कथनभिन्नालौकिकचमत्कारयुक्ता उक्तिः कथनम् । साधारणजनो हि भावाभिव्यक्तये साधारणरूपेणैव शब्दप्रयोगं करोति, किन्तु पृथक् चमत्कारिकथनस्य प्रकार एव 'वक्रोक्ति' नाम्नाभिहितो भवति । तथा चोक्तम्—**'वक्रोक्तिरेव वैदग्ध्यभङ्गी भाणति-रुच्यते ।'** वक्रोक्तिप्रसिद्धाभिधानव्यतिरेकिणो विचित्रैवाभिधा वैदग्ध्यं कवि कौशलं तस्य भङ्गी विच्छित्तिः (वक्रोक्तिजीवितम् १.११) संक्षेपतया वक्रोक्तेरेकप्रकारेण सौन्दर्यमर्थः । अतः यदास्यातिशयोक्तेः संयोगो भवति तदा काव्ये मानवसमुदायेनोपभुक्तोभवम्, प्राचीनोऽप्यर्थः चमत्कृतो भूत्वा उद्भासितो भवति तथा प्रमदोद्यानादिभिः विभावतां नीयते विशेषेण च भाव्यते, रसमयी च क्रियते । अत्रापि वक्रोक्तिः व्यापकार्थे एव गृहीता भवति । तथा चोक्तम्—

यातिशयोक्तिर्लक्षिता सैव सर्वा वक्रोक्तिरलङ्कारप्रकारः सर्वः । वक्राभिधेय शब्दोक्तिरिष्टावाचामलङ्कृतिः, इति वचनात् शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेण अवस्थानम् इत्ययमेवासौ अलङ्कारस्यालङ्कारान्तरभावः । लोकोत्तरेणैव चातिशयः । तेनातिशयोक्तिः सर्वालङ्कारसामान्यम् । तथाहि अनयाति शयोक्त्या अर्थः सकलजनोपभोगपुराणीकृतोऽपि विचित्रतया भाव्यते । तथा प्रमदोद्यानादिभिः

विभावतां नीयते विशेषेण च भाव्यते रसमयी क्रियते । (तत्रैव लोचन, पृ० २५९-६०)

आचार्यभोजराजः सरस्वतीकण्ठाभरणे तथा शृङ्गारप्रकाशे च स्वपूर्ववर्त्तिभिराचार्यैः प्रतिपादितस्य वक्रोक्तेर्विभिन्नस्वरूपाणामुल्लेखः कृतवान् । वचनकाव्ययोर्भेदं प्रदर्शयन् भोजराजेनोच्यते—शास्त्रे लोके च यदवक्रवचनमस्ति तस्य नाम 'वचनम्' अस्ति तथा अर्थवादादौ यत् वक्रताऽस्ति तस्य नाम काव्यमस्ति । तथा हि—**कः पुनरनयोः काव्यवचसोः ध्वनि-तात्पर्ययोर्विशेषः ? उच्यते—**

**यदवक्रं वचः शास्त्रे लोके च वच एव तत् ।**
**वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः ॥** (शृ०प्र० ९,६०)

अतिशयरूप-वक्रतयायुक्तः काव्यवचने यत्तात्पर्यं भवति तदेव ध्वनिरुच्यते—**'तात्पर्यं यस्य काव्येषु ध्वनिरिति प्रसिद्धिः । तदुक्तम् —'तात्पर्यमेव वचसि ध्वनिरेव काव्ये ।'** (शृ० प्र० तत्रैव)

अलङ्कारेषु अस्य वक्रोक्तिमूलकस्य सामान्यलक्षणस्यानुसरणं कर्त्तव्यम् । यतः सत्यपि वक्रत्वेऽलङ्कारसमुदायः वक्रोक्ति-शब्दवाच्यो भवति । भामहेनाप्युच्यते- यत वक्रतैव काव्यस्योत्कृष्टशोभा भवति । तथाहि—'इत्येतदपि सर्वालङ्कारसाधारणं लक्षण-मनुसर्त्तव्यम् । अस्मिन् सति सर्वालङ्कारजातयो वक्रोक्त्यभिधानवाच्या भवन्ति । तदुक्तम् **—वक्रत्वमेव काव्यानपराभूषेति भामहः ।** (तत्रैव द्रष्टव्यम्)

दण्डिनः स्वभावोक्त्यातिरिक्तः वक्रोक्तेः उपमा-रसवदादि समस्तालङ्काराणां क्षेत्रे स्वल्प-सङ्कोचं कुर्वन् भोजराजः समस्तवाङ्मयमेव वक्रोक्तिः रसोक्तिश्च तथा स्वभावोक्तौ च विभक्तं कृतवान् । तथाहि—**'वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्'** स० क० ५.९ इमं स्पष्टतरं कुर्वन् तेन प्रोक्तः यत् अलङ्कारः अर्थात् काव्य- सौन्दर्यस्य रूपत्रयं भवति सत्यपि उपमाद्यलङ्काराणां प्रधानता वक्रोक्तिर्भवति, गुण-प्राधान्येन स्वभावोक्तिस्तथा यत्र विभावादिसंयोगैः रसनिष्पत्तिर्भवति तत्र रसोक्तिर्भवति । (काव्यात्ममीमांसा ३,१) भोजेन शृङ्गारप्रकाशस्य शब्दशक्तिप्रसङ्गे वामनस्य—**'सादृश्याल्लक्षणा वक्रोक्तिः ।'**

इयमपि रूपान्तरेण परिगृहीताऽस्ति । तथाहि—

**अभिधेयाविनाभूत-प्रतीतिर्लक्षणोच्यते ।**
**सैषा विदग्धवक्रोक्तिजीवितं वृत्तिरिष्यते ॥**

(शृ० प्र० शब्दशक्तिप्रकाश)

रुद्रटस्य वाक्छलरूप वक्रोक्तिरपि भोजराजेनादृष्टो नैवास्ति । (द्र० स० कण्ठाभरणस्य वाकोवाक्य' शब्दा०) आचार्यमम्मटस्तु वक्रोक्तेर्महत्त्वं न्यूनं कुर्वन् इमं शब्दालङ्कारविशेष एव मन्यते । अन्याभिप्रायेण तथोक्तवाक्यं यदि श्लेषः अथवा काक्वा श्रोतृभिरन्यार्थकं मन्यते तदा वक्रोक्तिरलङ्कारो भवति ।

**यदुक्तमन्यथावाक्यं अन्ययान्येन योज्यते ।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥**

(का०प्र० ९८)

श्लेषेण अथवा काक्वाऽर्थस्यान्यथा योजने सति काकुवक्रोक्तिः श्लेषवक्रोक्तिश्चेति भेदद्वयं भवति । अस्मिन् प्रसङ्गे परवर्त्तिनां आचार्याणामपि विचारो पृथक् पृथक् द्रष्टव्यः—तद्यथा हेमचन्द्रः—'**उक्तस्यान्येनान्यथाश्लेषादुक्तिर्वक्रोक्तिः**' काव्यानु० पृ० २३४ । आचार्य नरेन्द्रप्रभसूरिः—

**वाक्यं यत्रान्यथैवोक्तमन्योन्या कुरुतेऽन्यथा ।**
**काक्वा श्लेषेण वा तस्मात् सा न वक्रोक्तिर्द्विधा मता ॥** अ०म० ९

आचार्य जयदेवः—

**वक्रोक्तिः श्लेषकाकुभ्यां (अपरार्थ) वाच्यार्थान्तरकल्पनम् ।**

चन्द्रा० ५.१६२

श्रीविद्याधरः—

**वाक्यं यदन्यथोक्तं केनाप्यन्येन योज्यतेऽपरथा ।**
**सत् काकुश्लेषाभ्यां यदि वक्रोक्तिस्तदा स्फुरति ॥**

एकावली, ८.७१ ।

श्रीविद्यानाथस्यापि—

**अन्यथोक्तस्य वाक्यस्य काक्वा-श्लेषेण वा भवेत् ।**
**अन्यथायोजनं यत्र सा वक्रोक्तिर्निगद्यते ॥**

प्र०रु० य० पृ० ४१० ।

वाग्भटाचार्यः—

(क) **परोक्षस्य श्लेषेण काक्वा वान्यथोक्ति वक्रोक्तिः ।** (काव्या० पृ०४९)
(ख) **प्रस्तुतादपरं वाच्यमुपादायोत्तरप्रदः ।**
**भङ्गश्लेषमुखेनाह यत्र वक्रोक्तिरेव सा ॥** (वाग्भट० ४,१४)

महापात्रविश्वनाथः—

**अन्यस्यान्यर्थकं वाक्यमन्यथा योजयेद् यदि ।**
**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधेति ॥**

(सा०द०१०.११)

श्रीकेशवमिश्रः—

**अन्याभिप्रायेणोक्तं वाक्यमन्येन्यार्थकतया यद्योज्यते-सा वक्रोक्तिः । एतदेव वाकोवाक्यमुच्यते ॥** (अ०शे० पृ० ३९)

श्रीअच्युतरायः—

**श्लेषेण काक्वावाक्यार्थः क्लृप्तिर्वक्रोक्तिरीर्यते ।**

(सा०सा० ८.२८८)

एते आचार्याः मम्मटस्याविकलमनुकृतिं कृत्वा वक्रोक्तिं शब्दालङ्कार एव मन्यते । तदनन्तरेऽपि यथा **रुय्यकः** वक्रोक्तिमर्थालङ्कार एव मन्यते । तथाहि—**अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्याम् अन्यथा योजनं वक्रोक्तिः ।** (अ०स० ७७)

तथैव अमृतानन्दयोगी स्वकीयालङ्कारसंग्रहे इममर्थालङ्कार एव मन्यते । अस्य वक्रोक्तिकल्पना विचित्रैव प्रतीतो भवति । यथा—

**साधुदूतिपुनः साधु कर्त्तव्यं किमतः परम् ।**
**यन्मदर्थे विभिन्नासि दन्तैरपि नखैरपि ॥** (तत्रैव पृ० ५७)

अत्र—'**उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।**' इत्यादिवत् (का० प्र०४.८३)

मम्मटादिमतेन विपरीतलक्षणयाऽत्यन्ततिरस्कृत-वाच्यध्वनेर्विषयोऽस्ति ।

आचार्य कुन्तको वक्रोक्तिमेव काव्यात्मरूपेण स्वीकरोति । अतएव तस्य ग्रन्थस्य नाम, वक्रोक्तिजीवितं सञ्जातम् । कुन्तक एव वक्रोक्तिसम्प्रदायस्य संस्थापको वर्त्तते । स्ववैशिष्ट्यविशेषादेव कुन्तकः आनन्दाभिनवगुप्तयोः कोटावाटीकते । कुन्तको रसध्वनिभ्यां पूर्णतया परिचित आसीत् किन्तु सः तयोरन्तर्भावं वक्रोक्तावेवाकरोत् । अयं हि गुणरीत्यलङ्काराणां सर्वेषामपि वक्रोक्तावेवान्तर्भावो दर्शितः । अनेन महानुभावेन हि शब्दार्थयोः शब्दशब्दयोः, अर्थार्थयोः सामञ्जस्योपरि समधिकं बलं प्रकटितम् । सहितयोर्भाव एव साहित्यमित्यस्य समन्वयो दर्शितः ।

इत्थमेव शैल्या मार्गा अपि त्रयः प्रदर्शिताः । तत्र प्रथमः सुकुमारो द्वितीयो विचित्रस्तथा तृतीयो मध्यममार्गी योहि पूर्वोक्तयोर्मध्यवर्ती । सुकुमारमार्गे रसभावयोः प्राधान्यं तिष्ठति । विचित्रमार्गे—उक्त्यलङ्कारयोर्मुख्यता तिष्ठति, तत्र सुकुमारमार्गे स्वल्पानि मनोहराणि च विभूषणानि भवन्ति । एवं तानि यत्नपूर्वकं नानीतानि भवन्ति। सहजमेतत् सौन्दर्यम् । अत्र माधुर्यगुणानां प्राधान्यं तिष्ठति यत्समासरहित पदद्वारा व्यञ्जितानि भवन्ति । समासाधिक्यकरण एव प्रसादगुणानां बाधा समापतति एतन्मार्गस्य द्वितीयो गुणः प्रसादाख्यः, एतद्द्वारार्थावबोधोऽनायासेनैव सम्पन्नो भवति तदर्थावगमेनैव रसाऽप्यभिव्यञ्जिता भवन्ति । प्रसादने सहवक्रता तावन्मात्रेणैव स्थातुं शक्नोति यावत्सार्थावबोधे बाधिका न स्यात् । तृतीयो गुणो लावण्यम्, अस्य सम्बन्धः शब्दार्थैः सह । अनुप्रासाद्यलङ्कारा ह्येतत् गुणानयने सहायको भवन्ति । एतन्मार्गस्य चतुर्थो गुणः आभिजात्यम्, अत्र शब्दानां सुकुमारत्वशालीनत्वाभ्यां सह सम्यग् योजनास्यापि सौष्ठवं तिष्ठति ।

विचित्रमार्गे-अलङ्काराणां प्राधान्यं भवति । एकोलङ्कारो द्वितीय गुम्फितस्तिष्ठति । सुकुमारशैल्यां स्वकीया नायिकावत् सहजमलङ्करणं भवति, विचित्रशैल्यां, गणिका वा

परकीया नायिकावत् कृत्रिमसज्जित शृङ्गाराणां तथा लङ्काराणां प्रदर्शनं प्राप्तं भवति उपरोक्तयोर्द्वयोर्मध्ये द्वाभ्यामपि सादृश्यमनुभवन् मार्गो मध्यममार्ग इति व्यपदेश्यो भवति ।

त्रिविधशैलीनामुदाहरणेषु कालिदासस्य रचना सुकुमारमार्गे कथयितुं शक्यते बाणभट्ट-भवभूति-राजशेखरादीनां रचना विचित्रमार्गे सञ्जातेति भणितुं शक्यते । मातृगुप्तमायूराजादि आचार्याणां मध्यमार्गोऽस्तीति वक्तुं शक्यते ।

विभाजनमेतदधिकं सुन्दरं तु वरीवर्त्ति किन्तु पूर्णमिदमिति प्रतिपादयितुं न शक्यते । विभागेनानेन द्विविधमनोवृत्तीनामाभिव्यञ्जनं भवति । यद्यपि सुकुमारमार्गो वैदर्भ्याः समानतां विचित्रमार्गश्च गौड्या आनुकूल्यं धारयतस्तथापि नैतानि सादृश्यानि पूर्णपूर्णरूपाणि सन्ति । गौड्यामोजोगुणस्य मात्रा तिष्ठति तस्या विचित्रमार्गे आवश्यकता नास्ति । ध्वनिमतादप्ययं कुन्तकः पूर्णपरिचितः । स्वग्रन्थे ध्वन्यालोक-पद्यान्यपि सञ्जग्राह, किन्तु ध्वनेः समस्तप्रपञ्चस्यान्तर्भावः वक्रोक्तेः कल्पनायाः उदात्तत्वम् व्यापकत्वम्, बहुमुखीत्वञ्चाभिधाय तत्रैव कृतवान् । वक्रोक्तेर्व्यापकत्वाय षड्विधा वक्रोक्तिरुच्यते । आसु मध्ये वाक्यवक्रतायां सर्वेषामेवालङ्काराणामन्तर्भावं दर्शयामास । तथा चोक्तं तत्र—

**वाक्यस्य वक्रभावोऽन्योभिद्यते यः सहस्रधा ।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति ।'** (वक्रोक्तिजीवितम् १।२१)

१. तत्र प्रथमो भेदस्तु वर्णविन्यासवक्रता—वर्णानां विन्यासो वर्णविन्यासः । अक्षराणां विशिष्टन्यसनं तस्य वक्रत्वं प्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येणोपनिबद्धः सन्निवेशविशेषविहितस्तद्वदाऽह्लादकारीशब्दशोभातिशयः । यथा—

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभवस्-**
**तदनुविरहोताम्यत्तन्वी कपोलतलद्युतिः ।**
**प्रसरति ततो ध्वान्तक्षोदक्षमः क्षणदामुखे**
**सरस विसनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥**

एतदेव चिरन्तनेष्वनुप्रास इति प्रसिद्धं त्रैविध्यमस्याः स्वीकृतद्वितीयोन्मेषे ।

२. पदपूर्वार्द्धवक्रता-पदस्य सुबन्तस्य तिङन्तस्य वा यत् पूर्वार्द्धप्रातिपदिकलक्षणं धातु- लक्षणं वा तस्य वक्रता विन्यासजन्य विचित्रता । यथा—**'रामोऽस्मि सर्वंसहे ।'** अत्र रूढिशब्दस्यैव प्रस्तावसमुचितत्त्वेन वाच्यप्रसिद्धधर्मान्तराध्यारोपगर्भत्वेन निबन्धः ।

३. प्रत्ययाश्रितवक्रताप्रत्यय सुप्तिङ् च यस्याश्रयस्तस्य संख्याकारकपुरुषादि-वैचित्र्यविहितः यस्मिन् वचनवैचित्र्यं काव्यबन्धशोभायै निबध्यते । यथा—**'मैथिली तस्य दारा'** ।

४. वाक्यवक्रता—पदसमुदायभूतवाक्यस्याऽपि भवति वक्रता सहस्रधा । यथोक्तम्—

**वाक्यस्य' वक्रभावोऽन्योभिद्यते यः सहस्रधा ।**
**यत्रालङ्कारवर्गोसौ सर्वोप्यन्तर्भविष्यति ।**
**कवि प्रतिभानामानन्त्यात् अनन्त्वमस्य भेदस्येति ।**

५. प्रकरणवक्रता—प्रबन्धैकदेशे प्रकरणे यादृशोऽस्ति वक्रभावः स सहजाहार्य सौकुमार्य मनोहरः । यथा—'रामायणेमारीचमायामय माणिक्यमृगानुसारिणो रामस्य करुणाक्रन्दकर्णनकान्तरान्तःकरणया जनकराजपुत्र्यास्तत् प्राणपरित्राणाय स्वजीवित-परिरक्षा निरपेक्षया लक्ष्मणो निर्मर्ल्स्य प्रेषितः ।'

६. प्रबन्धवक्रता—प्रबन्धे वक्रभावः प्रबन्धवक्रता-यथाकुत्रचित् महाकविविरचिते रामकथोपनिबन्धे—'नाटकादौ पञ्चविध वक्रतासामग्रीसमुदायसुन्दरं सहृदयहारि महापुरुषवर्णनमुपक्रमे, प्रतिभासते परमार्थवस्तु विधिनिषेधात्मकधर्मोपदेशः पर्यवस्यति रामवत् प्रवर्त्तितव्यं न रावणादिवत् ।' अनेन प्रकारेणास्याः वक्रोक्त्यारनन्तभेद-प्रभेदाः भवन्ति । यद्यपि रसानां प्रेयऊर्जस्विन्नलङ्कारयोर्मध्येऽन्तर्भावं दर्शितवान् 'तथापि तेषां प्राधान्यमदत्वाऽपि नितान्त गौणत्वमपि नाङ्गीकृतवान् ।

उपचारवक्रतायाश्च ध्वनितत्प्रचुरभेदांश्चान्तर्भावयामास । यादृशीभावनासीत् कुन्तकस्य तादृश्येव यद्युत्तरवर्त्याचार्याणां समभविष्यत् तदैतत्पराकाष्ठां नूनमेवाव-गमिष्यत् । परवर्त्तिन आचार्या हि रुद्रटप्रदर्शितदिशावक्रोक्तिमेकं सामान्यं शब्दालङ्कार-मात्रेव स्वीचक्रुः ।



## ध्वनिसम्प्रदायः

ध्वनिसम्प्रदायस्य संस्थापकः आचार्यः आनन्दवर्धनोऽस्ति । काव्यशास्त्रस्येतिहासे ध्वनिसम्प्रदायस्य स्थानं गौरवपूर्णमास्ते । अस्य सम्प्रदायस्याचार्याः ध्वनितत्त्वस्योद्-भावनां कृत्वा काव्यस्यातिमहत्त्वपूर्णस्य तत्त्वस्य विवेचनमकार्षुः । एतस्मात् पूर्वं यावत् येषां काव्यसिद्धान्तानां विकासः समभवत् तेषां समेषां सिद्धान्तानां ध्वनिना साकं सामञ्जस्य संस्थापनमस्याचार्याणामतिमहत्त्वपूर्णकार्यमासीत् । ध्वनिसिद्धान्तसंस्थापकः आचार्यः आनन्दवर्द्धनः काव्यस्य आत्मस्थाने ध्वनिं निर्दिशति । तद्यथा—

**'काव्यस्यात्माध्वनिरितिबुधैर्यः समाम्नात-पूर्वः**
**तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।**
**केचिद्वाचां स्थितमविषये तत्त्वमुचूस्तदीयं**
**तेन ब्रूमः सहृदय मनः प्रीतये तत्स्वरूपम् ॥'**

आनन्दवर्धनाचार्यस्य वैक्रमाब्दस्य नवमात् शताब्दादारभ्येदानीं यावत् सहस्रवर्षपर्यन्तं ध्वनिसिद्धान्तस्यैव वर्चस्वमास्ते । यद्यपि-प्रतीहारेन्दुराज-कुन्तक-भट्टनायक-महिमभट्ट-प्रभृतयः अनेके प्रकाण्डाः पण्डिता अस्य सिद्धान्तस्य विरोधम-कार्षुः किन्तु तेन कृतेन विरोधेन नापहीयतेस्म किमपि ध्वनिसिद्धान्तस्य, अपितु अस्य वर्चस्वं वर्द्धतेस्म ।

ध्वनिमतं रसमतस्यैव विस्तृतीकरणमस्ति । रससिद्धान्तस्याध्ययनं मुख्यतया नाटकस्य सम्बन्ध एव सर्वप्रथमं भवति । अयं रसो न कदापि वाच्या किन्तु व्यङ्ग एव सर्वदा भवति । एतत् स्वरूपादिकं प्रथम् प्रघट्टक एव प्रदर्शितम् । रसस्य व्यङ्ग्यत्वमेव मनसि निधाय काव्ये व्यङ्ग्यस्यैव प्राधान्यं प्रदर्शितवानानन्दवर्धनः । इत्थञ्च यदि काव्यस्यात्मा रसस्तदा ध्वनिः काव्यशरीरस्य बलप्रदायकप्राणशक्तिः । रसस्तु सदैव ध्वनितो भवति, वाच्यं भवितुं न शक्यते । अतोऽस्य तर्कस्याधारं गृहीत्वा ध्वन्यालोके तदेव काव्यं श्रेष्ठं मन्यते यस्मिन् काव्ये सुष्ठु व्यङ्ग्यर्थो भवति ।

यथा—**'अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्ति अनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम् । एतच्च रसादि तात्पर्येण काव्यनिबन्धनेन रसादावपि सुप्रसिद्धमेवेति । —रसादयो हि द्वयोरपि तयोः (काव्य-नाट्ययोः) जीवभूताः ।** (ध्वन्यालोकः २२५-२६) **सारभूतो ह्यर्थः स्वशब्दानुभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति । प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तुव्यङ्ग्यत्वेन प्रकाश्यते न साक्षादवाच्यत्वेनैव ।**

(ध्वन्यालोकः, पृ० २००)

ध्वनिशब्दस्यार्थः अनुरणनम् (घण्टानादेजाते सति प्रथमाघातानन्तरं बहुकाल पर्यन्तं भूयमानझङ्कारशब्दः) तथाहि—एवं घण्टानाद्स्थानीयः अनुरणनमात्मोपलक्षितो व्यङ्ग्योप्यर्थो ध्वनिरिति व्यवहृतः। (ध्वन्यालोक ४.६७ लोचनटीका)। एकप्रकारेण ध्वनिरयमर्थस्याप्यर्थः, अत एवैनं शरीरमात्रात्किञ्चित् प्रधान्यं दीयते। वैदर्भ्यादि रीतिद्वारा वाक्यानां परस्परं सुसंबद्धत्वे जातेऽपि काव्ये किञ्चिदेकं विशेषवस्तु भवति, तदेव मुक्तायाः कान्त्येव सौन्दर्यस्य प्रतीतिमुत्पादयति। एतच्च प्रतीयमानमिति व्यपदिष्टं भवति। महाकवीनां वाणीष्वेवेदभङ्गमायाः प्रसिद्धावयवातिरिक्तं लावण्यमिव तिष्ठति। तथा चोक्तम्—

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभातिलावण्यमिवाङ्गनासु॥**

(ध्वन्यालोकः १।४९)

इदञ्च लावण्यं व्यञ्जनावृत्तिद्वारा समधिगतं भवति। यत्र व्यङ्ग्यार्थो वाच्यार्थपेक्षया प्रधानमधिकचमत्कारि भवति, तत्रैव स (व्यङ्ग्यार्थः) ध्वनेः स्वरूपधारणं करोति। साधारणव्यङ्ग्यार्थे ध्वनौ चेयमेव विशेषता भवति। सर्व च व्यङ्ग्यार्था वाच्यार्थपेक्षया प्रधानभूता न भवन्ति। अत्र हि वाच्यार्थो गौणो भूत्वा पश्चादेव तिष्ठति। अर्थः अथवा शब्दः स्वस्यार्थं (अभिधार्थम्) परित्यज्य च विशेषार्थम् (व्यङ्ग्यार्थम्) प्रकटयति तमेव विद्वांसो ध्वनिमिति व्यपदिशन्ति। एतदेवोक्तम्—

**'यत्रार्थ शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥'**

(ध्वन्यालोक १।१३)

रसादीनां प्रतीतिर्नाभिधया नापि शृङ्गारादीनां नापि लक्षणानुमानतात्पर्यमिति स्मृतिभिः किन्तु, व्यञ्जनया, अभिधादिषु मुख्यार्थाभावात्।

यद्यपि केनाऽपि वाक्येन शब्देन च व्यङ्ग्यार्थं निसृतुं शक्यते; पुनरपि सर्वान् शब्दान् वाक्यान् च काव्यं कथयितुं न शक्यते, किञ्च ते एव शब्दाः वाक्यानि च काव्यं भवितुं शक्यते यदितेषु विशिष्टगुणाः भवन्तु, यस्य रचनापद्धति विशिष्टा भवतु तथा येषु पृ० ३२ द्रष्टव्यः) 'तेन सर्वत्राऽपि न ध्वननसद्भावेऽपि तथा व्यवहारः। आत्मसद्भावेऽपि क्वचिदेव जीवव्यवहार इत्युक्तं प्रागेव। ध्वन्यालोके ध्वनिम्, गुण-वृत्तिर्वालक्षणा स्वीकर्तृणां मतस्य खण्डनं कृतम्—

**भक्त्या विभर्त्ति नैकत्वं रूपभेदादयं ध्वनिः।**
**अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तथा॥** (ध्व० १,१७)

धन्यालोकस्याष्टादशपृष्ठे व्यङ्ग्यार्थं रसादिः, अलङ्कारस्तथावस्तुनाम्ना भेदत्रयं कृतम्। तत्र वस्तुध्वनेरर्थो भवति—येषु ध्वन्यर्थकशब्देषु किमपि वस्तु 'ध्वनितो भवति। यथा—

**पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तर स्थले ग्रामे।**

**उन्नतपयोधरं प्रेक्ष्यं यदि वससि तदा वस ।**

स्रस्तरं कटाद्यास्तरणं पाषाणमयेऽस्मिन् ग्रामे नास्ति किन्तु मेघोवर्षणाय उन्नमतीति दृष्ट्वा यदि वससि तदा वस । अत्र पयोधरस्यार्थः स्तनोऽपि भवति । अस्मिन् वस्तु ध्वनिरियमस्ति 'यद्यपि उपभोगक्षमोऽसि तदा आस्व ।' तथाऽलङ्कारध्वनेः तात्पर्यमिदमस्ति यत् अत्र यत् ध्वनित वस्तु भवति, तत्तु काल्पनिको भवति न तु वास्तविको भवति । तद्यथा—

**निरुपादानसंभारमभित्तावेव तन्वते ।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'**

शङ्करस्य पार्श्वे काऽपि सामग्रीनास्ति तथाप्ययं आश्चर्यपूर्णाः जगद्रचनाकरोति । अतोऽयं सर्वश्रेष्ठोऽस्ति । अत्रानेन कारणेन व्यतिरेकालङ्कारो भवति । रसादिध्वनौ न केवलं नवरसानामन्तर्भावो भवति अपितु एतेषां आभासानामपि अस्मिन्नेवान्तर्भावो भवति । अतः रसध्वनेस्तथा तस्याः अन्यभेदानां व्याख्याऽत्रानावश्यका भवति ।

फलतः यत्र वाच्यादर्थादधिकचमत्कारकारी अर्थविशेषकोऽभिव्यज्यते तत्र ध्वनि-काव्यम् भवति—

**'इदमुत्तमशायिनि व्यङ्ग्ये वाच्यात् ध्वनिबुधैः कथितः ।'** इति

(काव्यप्रकाशः)

मुख्यतयार्थस्य द्वौ भेदौ भवतः—वाच्यार्थः प्रतीयमानार्थश्चेति । तत्र वाच्यार्थे-ऽलङ्कारादिकाः समाविशन्ति, प्रतीयमानार्थे च ध्वनिनां भेदाः आयान्ति । प्रतीयमान-स्यार्थस्य सिद्धिःकाले वस्तुस्थितेः अवलोकयितृभ्यः सर्वेभ्यो भवति सहृदयेभ्यः ।

ध्वनि शब्दायालङ्कारिकाः वैयाकरणानामृणिनः सन्ति । वैयाकरणैर्हि स्फोटरूप-मुख्यार्थाभिव्यक्तिविधायकशब्दाय ध्वनेः प्रयोगः कृतः । अलङ्कारिकैस्तु अस्मिन्नेव साम्ये ध्वनिशब्दं गृहीत्वा एतस्य विस्तृतो व्यापकश्चार्थो विहितः । वैयाकरणाः आलङ्कारिकेभ्यः प्रागेव स्फोटतत्त्वस्य कल्पनां कृतवन्तः । तस्मात् स्फोटादेव प्रेरणां प्राप्यालङ्कारिकाः ध्वनेकल्पनां कृतवन्तः ।

तत्रवैयाकरणैर्हि 'परा, पश्यन्ती, मध्यमा, वैखरी' इति चतुर्विधां वाणीमभिधाय तिसृणां नित्यत्वमखण्डत्वञ्च व्यवस्थाप्य तुरीयां वाचां मनुष्याः वदन्ति, इति प्रतिपादितं स्वशास्त्रे । या वागस्माभिश्रूयते सा वैखरीति व्यपदिश्यते । वैखरीशब्द एव व्यक्त-शब्दः । स खलु व्यक्तशब्दो यं वयं श‍ृणुमस्तस्य योऽर्थस्तन्मध्ये चैकस्फोटस्य कल्पना क्रियते । यस्यार्थेन सह सम्बन्धस्तिष्ठति, अयञ्च सहैव प्रस्फुटितो भवत्यतः 'स्फुटति अ़र्थः अभिव्यक्तिर्भवत्यस्मादिति' व्युत्पत्या स्फोटपदव्यपदेश्यो भवति । अर्थव्यक्तिश्च स्फोटेन भवन्ति । तथा चोक्तम्—**पूर्वपूर्ववर्णानुभवाहितसंस्कारसचिवेनान्त्यवर्णानु-भवेनाभिव्यज्यते स्फोट इति ।**

यथा वर्णैः शब्दस्यार्थः प्रस्फुटितो भवति, तथैवेकेनार्थेनान्यार्थोऽपि प्रस्फुटो भवति । यथा भेरीदण्ड संयोगवियोगाभ्यां मुहुर्मुहुराघाते जनिते शब्द उत्पद्यते, एवं

क्रमागत तरङ्गैः स शब्दोऽस्मात्कर्णगोचरो भवति तथैव शब्दस्य चरमेण ध्वनिना शब्दस्यार्थव्यक्तिकारकः स्फोटो भवति एवं काव्ये अर्थस्यार्थ व्यक्तिकारको ध्वनिर्भवति । स हि घण्टानादे जातेऽन्तिमः कर्णे गुञ्जायमानो झङ्कारवद्भवति । यथाव्यक्तशब्दो-ऽव्यक्तस्फोटं व्यक्तिकरोति तथैव शब्दार्थौ व्यञ्जनाद्वाराऽभ्यान्तरिक व्यङ्ग्यार्थ वहिर्भाव-मानयति । तथा चोक्तं भर्तृहरिणा—

**यः संयोगवियोगाभ्यां करणैरुपजन्यते ।**
**स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः ।। इति ।**

लक्ष्यग्रन्थेषु तु ध्वनिरवर्त्तत एव किन्तु आनन्दवर्धनात्पूर्वं केनापि आलङ्कारिकेन वा समालोचकेन ध्वनिं काव्यस्यात्मतत्त्वेन वा महनीयतत्त्व स्वरूपेण न हि कल्पयामास। अलङ्कारशास्त्रस्याथवा काव्यशास्त्रस्येतिहासे ध्वनेः कल्पना आनन्द-वर्द्धनस्य सूक्ष्मेक्षिकाया एव परिणामस्वरूपाऽभूत् ।

आनन्द वर्धनस्येयं महती मनीषा वर्त्तते यत् सः ध्वनिनामकं काव्य-तत्वमन्येभ्यः काव्यतत्त्वेभ्यः पृथक् कृत्य तस्य स्वतंत्रां सत्तां संस्थापयामास । यद्यपि व्यास-वाल्मीकि-कालिदास प्रभृतीनां महतां कवीनां काव्येषु ध्वनेस्तु साम्राज्यमेवास्ति, किन्तु तेभ्यः सर्वेभ्यः पृथक्कृत्य तस्य काव्यस्य पृथक् तत्त्वरूपेण स्वीकरणम् आनन्दवर्धनस्यैव प्रतिभायाः कार्यं भवितुमर्हति । अतएव समालोचनाया इतिहासे ध्वनिसम्प्रदायस्याति गौरवात्मकं स्थानमास्ते ।

आनन्दवर्धनाचार्यस्य शतवर्षाणामनन्तरं ध्वन्यालोकलोचनस्य प्रणेता ध्वनितत्त्वस्य दृढं समर्थनं कृत्वां अस्मिन् सञ्जातानां सर्वेषामाक्षेपाणां समाधानमकरोत् । आचार्यो मम्मटः अभिनवगुप्तपादाचार्यस्यानन्तरं स्वकीये काव्यप्रकाशे ध्वनिसिद्धान्तस्य पूर्णातया व्यवस्थितं रूपं संस्थापयामास । आनन्दवर्धनसमयपर्यन्तं 'अमरुकशतक'—आर्यासप्तशत्यादि मुक्तकादि ग्रन्थानामेव वृद्धिरासीत्सर्वत्र राजसभादिषु । समयेस्मिन् ध्वनिविचारस्यावश्यकतामनुभूयानन्दवर्धनो वाच्यात्पृथक् व्यङ्ग्यसत्ताया व्यवस्थापनाय युक्तियुक्तपूर्वकं ध्वन्यालोकं प्रणिनाय । ध्वनेः प्रवर्त्तको ह्ययमेवाचार्य इति कदापि न मन्तव्यम् । स्वग्रन्थे प्रथमश्लोक एव प्रबलमतत्रयस्योपनिबन्धनं चकारायं ग्रन्थकारः । तेनैतत्पूर्वं केचित् ध्वनेरभावं ब्रुवते केचिच्च लक्षणायामन्तर्भावयन्ति, अपरे चानिर्वचनीयमेव प्रतिपादयन्ति । तत्रायमाचार्यो हि मतत्रयं खण्डयित्वा ध्वनिस्थापनां युक्तियुक्तञ्चकार ।

आनन्दवर्धनस्य मतप्रचारे विरोधिनः समर्थकाश्चोभयरूपेणासन् । तत्र विरोधिषु मुख्यतमा आचार्याः वक्रोक्तिजीवितकारः कुन्तकः, व्यक्तिविवेककारो महिमभट्टः, दशरूपककारो धनञ्जयः । एते हि मुख्यतया ध्वनिखण्डनायैव स्वस्वग्रन्थ रचयामासुः । तत्र यथायथमेतेषां मतं तत्तत् प्रकरण एव प्रदर्शितम् । ध्वनिसमर्थकेषु प्रधानाचार्याः ध्वन्यालोकस्य 'काव्यालोकलोचन' नाम टीकाकर्त्ता—अभिनवगुप्तपादाचार्यः काव्य-प्रकाशकारो मम्मटः, साहित्यदर्पणाद्यनेक ग्रन्थकर्त्ता—श्रीविश्वनाथकविराजः । ध्वनिकारो यद्यपि ध्वन्यतर्गतमेव रसं स्वीकृतवान्, तथापि रसध्वनेः प्रधानतां प्रदत्तवानेव ।

इत्थञ्चालङ्कारभारेण भाराकुलं रससम्प्रदायं ध्वनिसम्प्रदायेनोमुच्य रस- सिद्धान्तोद्धारे समुचितं साहाय्यं प्रदत्तवानिति ।

काव्यशास्त्रास्येतिहासे ध्वनिकल्पना ह्यतिसूक्ष्मबुद्धिपरिचायिकास्ति ध्वनिचमत्कारं पाश्चात्यलङ्कारिका अपि मन्यन्ते । ध्वनिवादिनः सिद्धान्तानां व्यवस्थापकः सन्तीति अवधार्यते, यतस्तैः स्वपद्धत्यनुसारेण रसदोषगुणा-रीतीनां समस्त काव्यतत्त्वानां सम्यक् संतुलितव्यवस्था विहिताः । एतन्मतास्वीकारे परवर्त्ति दिग्गज विदुषामपि न काचन विप्रतिपतिरद्याप्यवलोक्यते ।

अयं हि ध्वनिसिद्धान्तो रससिद्धान्तस्यैव विशदीकरणमाभाति । अस्य प्रसङ्गस्य चर्चा पूर्वं कृता मया । तथाप्यत्र कथनमिदमावश्यकं परिज्ञायैव पुनः स्मारितमस्ति । येन प्रकारेण रसः सर्वदा व्यङ्ग्य एव भवति न जातु वाच्यतां याति, तेनैव प्रकारेण ध्वनिरपि व्यङ्ग्य एव भवति, न तु कदाचिदपि अस्य वाच्यता भवति । आनन्द- वर्धनाचार्येण तु स्पष्टतयैवाभिहितम् । तद्यथा—

**'अयमेव हि महाकवेर्मुख्यो व्यापारो यत् रसादीनेव मुखतया काव्यार्थीकृता तद्व्यक्ति अनुगुणत्वेन शब्दानामर्थो नाञ्चोपनिबन्धनम् । एवच्च रसादि तात्पर्येण काव्यनिबन्धं भरतादावपि प्रसिद्धमेवेति । —रसादयो हि द्वयोरपि तयोः** (काव्य नाट्‌ययोः) **जीवितभूता ।'** (ध्वन्यालोके)

अयं हि ध्वनिं त्रेधा विभाजयति-रसध्वनिः, अलङ्कारध्वनिः, रसध्वनिश्चेति तत्र रसध्वनौ केवलं रसानामेव गणना न हि क्रियते अपितु तत्र भावानां तदा भासानां भावोदयस्य, भावशबलतायाः, भावसन्धेश्च, गणना कृता भवति । एतेषु त्रिषु रसध्वनिरेव शेखरायते ।

'कविता सबलमनोवेगानामुच्छलनस्य नाम अस्ति ।' इदं तु वर्ड्सवर्थ महोदयस्य मतमति । आनन्दवर्धनस्यापि मतमिदमेवास्ति । **क्रौञ्च द्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।'** (पृ० ३१) एतेषु त्रिषु ध्वनिभेदेषु रसध्वनेरेव प्राधान्यमस्ति । क्रौञ्चवधादेवहेतोः क्रोञ्च्याः करुणं क्रन्दनं निशम्य महाकवेर्वाल्मीकेः हृदये यः शोकस्य प्रवलो भावो जागृतो बभूव स एव श्लोकरूपेण प्रकटीबभूव । अयमेवास्ते रसध्वनिः । महत्त्वपूर्णत्वादेन रस एव काव्यस्यात्मा भवति । वस्तुध्वन्यालङ्कारध्वनयोस्तु तत्रान्तर्भावमात्रं भवति । ध्वनेः काव्यात्मत्व कथनं तु सामान्यमास्ते, वस्तुतो रस एव काव्यात्मा भवति । तथा चोक्तं लोचने—

**'तेन रस एव वस्तुतः आत्मा वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रतिपर्य वक्ष्येते इति वाच्यात् उत्कृष्टौ तौ इत्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्ये- नोक्तम् । प्राथमिकानामभ्यासार्थिनां यदि परं चित्रेण व्यवहारः प्राप्तपरिणतीनां तु ध्वनिरेव प्राधान्येन काव्यमिति स्थितमेतत् ।'** (द्र. लोचन, पृ० ३१) ।

अलङ्कारसर्वस्वे ध्वन्यालोकस्यास्यसिद्धान्तस्य स्पष्टरूपेण सरलवर्णनमनेन प्रकारेणास्ति 'वाक्यार्थस्यैव व्यङ्ग्यरूपस्य गुणालङ्कारोपस्कर्त्तव्यत्वेन प्राधान्याद्विश्रान्ति-

धामत्वादात्मत्वं सिद्धान्तितवान् । व्यापारस्य विषयमुखेन स्वरूपप्रतिलम्भात् तत्प्राधान्येन प्राधान्यात्स्वरूपेण विदितत्त्वाभावात् विषयस्यैव समग्रभरसहिष्णुत्वम् । तस्माद्विषय एव व्यङ्ग्यनामाजीवितत्त्वेन व्यक्तत्वः । यस्य गुणालङ्कारकृत चारुत्वपरिग्रहसाम्राज्यम् । रसादयस्तु जीवितभूतानालङ्कारत्वेन वाच्याः । अलङ्कराणामुपस्कारकत्वाद्रसादीनां च प्राधान्येनोपस्कार्यत्वात् । तस्मात् व्यङ्ग्य एव वाक्यार्थीभूतः काव्यजीवितमित्येष एव पक्षो वाक्यार्थविदां सहृदयानामावर्जकः ।' (अलङ्कारसर्वस्वे पृ० १३.१४) ।

ध्वनिसम्प्रदायानुसारेण काव्यस्य त्रयो भेदाः सम्भवन्ति ध्वनिकाव्यम्, गुणीभूत-व्यङ्ग्यकाव्यम्, चित्रकाव्यञ्चेति । ध्वनिकाव्ये वाच्यापेक्षया प्रतीयमानोऽर्थोऽधिक-चमत्कारात्मको भवति । इदमेव सर्वोत्तमं काव्यम् । यत्र काव्ये व्यङ्ग्यार्थापेक्षया न्यून-चमत्कारयुक्तो भवति अथवा वाच्यार्थसदृश चमत्कारयुक्तो भवति तत्र गुणीभूतव्यङ्ग्य काव्यता आयाति । चित्रकाव्ये तु वाच्यार्थापेक्षया व्यङ्ग्यार्थोऽवरो भवति । इदं काव्यम् अधम कोटिकं भवति ।

ध्वनेः काव्यात्मत्वरूपेण प्रतिपादनं महनीयमस्ति । यदीयं ध्वनिरनादरणीया-स्यात्तर्हि अस्याः उपदेशः समादरेण भवितुं न शक्यते । तथाहि—'**न च बुधाः भूयसोऽनादरणीयं वस्तु आदरेणोपदिशेयुः । एतत्तु आदरेणोपदिष्टम् ।**'

(ध्व०लो० पृ० ४)

आनन्दस्याभिनवगुप्तस्य च मते काव्यस्यात्मरूपत्वेन ध्वनेरति प्राचीन कालेऽपि प्रदर्शनोऽभवत् । आनन्देन कथितः—प्राचीनाचार्येषु भरतोऽपि रसादि तात्पर्येणास्य ध्वन्यमानार्थस्य प्रतिपादनं कृतवानस्ति । यथा— 'एतच्च रसादि तात्पर्येण काव्य-निबन्धनं भरतादावपि सुप्रसिद्धमेव । (ध्वन्यालोके ३.३२ वृत्तौ ।' अस्फुटरूपेण प्रतीतमिदं काव्यतत्त्वं व्याख्यातुमसमर्थाः वामनाद्याचार्याः रीतयः प्रवर्त्तिताः । यथा—

**अस्फुट स्फुरितं काव्यतत्त्वमेतद् यथोदितम् ।**
**अशक्नुवद्भिर्व्याकर्तुं रीतयः संप्रवर्तिताः ॥** (ध्वन्या० ३,४७)

काव्येऽलङ्कारमेवाङ्गीत्वेन स्वीकर्त्तारः भामहाद्याचार्याः ध्वन्यमानार्थस्यापलापं कर्तुम् असमर्थो भूत्वैव पर्यायोक्त-अप्रस्तुतप्रशंसाद्यलङ्कारेषु अन्तर्भूतः कृतवान् । (द्र० काव्यात्ममी० तृ०पृ०अ०) तथा रसाद्यर्थान् रसवत्-प्रेय-ऊर्जस्वी प्रभृत्यलङ्कारेष्वन्तर्भूतः कृतवान्, यदलङ्कारसर्वस्वकारस्तथैकावलीकारोऽपि प्रदर्शितवान् । तथाहि—

'इह हि तावत् भामहोद्भट-प्रभृतयश्चिरन्तनालङ्काराः प्रतीयमानमर्थं वाच्योपस्कार कवयालङ्कार, पक्ष-निक्षिप्तं मन्यन्ते (अ० स० पृ० ३) ।

यत् पुनरलङ्कार-कोटि-निविष्टित्वं वस्तुध्वनेरुद्भावयन् भामहादयस्तदपि विचार-विधुरम् । (एकावली पृ० ३०) ।

अस्य ध्वन्यमानार्थस्यान्तर्भावः अलङ्कारादिषु केनापि प्रकारेण भवितुं न शक्यते । अतोऽस्यार्थस्य स्वतंत्र अस्तित्वमङ्गीकारं समुचितमेवास्ति । न तावदेतावत्प्रत्युत् वाल्मीकिव्यास-कालिदासादि महाकवयः स्व-स्व रचनासुकाव्यस्य सारभूतोऽतिरमणीयो

ध्वन्यर्थस्य यत तत्र विधानं कृतवन्तः । तथाहि—

तस्य हि ध्वनेः स्वरूपं सकल सत्कवि काव्योपनिषद्भूतमतिरमणीयम्' (ध्वन्यालोक पृ० १३) । रामायणमहाभारत-प्रभृतिशब्देन आदिकवेः प्रभृति सर्वैरिवमुनिभिस्यादरः कृत इति दर्शयति (तत्रैव लोचनः पृ० १३) ।

अथ च रामायण-महाभारत (नि) लक्ष्ये सर्वत्र प्रसिद्ध व्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते । (ध्व० पृ० १३) ।

रसवादिनः आचार्याः ध्वनिसिद्धान्तमाश्रित्य गुणालङ्कारयोः काव्ये महत्त्वस्य सम्यङ् निरूपणमकार्षुः । गुणा एव काव्यात्मभूतस्य रसस्य धर्माः सन्ति-माधुर्योजः प्रसादाख्याः । येन प्रकारेण शौर्य वीर्य पराक्रमादिकाधर्माः आत्मन एव भवन्ति न तु शरीरस्य तथैव काव्यात्मभूतस्यैव भवन्ति गुणाः धर्माः । यथा कटककुण्डलादिकाः शरीरमेव भूषयित्वाऽऽत्मनमलङ्कुर्वन्ति तेनैव प्रकारेण शब्दार्थालङ्कारयमकोपमादीनां शब्दार्थद्वारेण काव्यशोभाकरत्वं भवति । तथा चोक्तमपि आनन्दवर्धनाचार्येण -

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥** (ध्व०लो० २।६)

अस्याः करिकाया वृत्तौ प्राहानन्दवर्धनाचार्यः—

ये ये तमर्थ रसादिलक्षणमङ्गिनं सन्तमवलम्बलम्बन्तेः, ते गुणाः शौर्यादिवत् । वाच्यवाचकलक्षणानि अङ्गानि ये पुनस्तदाश्रितास्तेऽलङ्कारा मन्तव्याः कटकादिवत् । (ध्व० वृ० ६)

ध्वन्यालोके काव्यस्य-ध्वनिकाव्यम्, गुणीभूतव्यङ्ग्यकाव्यम् तथा चित्रकाव्यम्' इति त्रयो भेदाः भवन्ति । तत्रान्तिमे भेदे एव सर्वेषां शब्दार्थालङ्काराणांमन्तर्भावो भवति ।

तत्र ध्वनिकाव्यं यथा—

**वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् ।**
**रपादिपरता यत्र स ध्वनेर्विषयो मतः ॥** (ध्व०लो० २।४)

गुणीभूतव्यङ्ग्यकाव्यम्—

**प्रसन्नगंभीरपदाः काव्यबन्धाः सुखावहाः ।**
**ये च तेषु प्रकारो यमेव योज्यः सुमेधसा ॥** (ध्व०लो० ३।३५)

तथा चित्रकाव्यम्—

**प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।**
**काव्ये उभे ततोऽन्यत् यत्तच्चित्रमभिधीयते ॥**
**चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।**
**तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥** (ध्व०लो०३.४१,४२)

किन्तु, ध्वन्यालोकानुसारेण कविं रसहीनकाव्यस्य रचनायां कदाचिदपि शक्तेरपव्ययं न कर्त्तव्यम् ।' एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम् । इदानींतनानां तु न्याय्ये काव्यनय व्यवस्थापने... एव न शोभते । (ध्व० लोकस्य १७७ पृष्ठे) ।

आनन्दवर्धनाचार्यः, सङ्घटनायाः त्रीन् भेदान् स्वीकरोति—समासा, मध्यसामासा, दीर्घसमासा चेति । एतेषु त्रिषु भेदेषु प्रत्येकं रस विशेषमाश्रित्यानुकूलं भवति । सङ्घटनाया औचित्य विचारो रसं वक्तारं दणर्य विषयञ्चाश्रित्य निश्चीयते ।

काव्ये वृत्तीनां द्विप्रकारको भेदो भवति—शब्दवृत्तिरर्थवृत्तिश्चेति । उपनागरिका, परुषा, ग्राम्या चेति तिस्रो वृत्तयः । शब्दाश्रिताः भवन्ति, कैशिकी आरभटी, सात्वती, भारती चेति चतस्रो वृत्तयो वाच्यार्थमाश्रित्य भवन्ति । रसानुकूलतां गता एव वृत्तयः काव्यनाट्ययोः शोभावहाः भवन्ति । रसप्रतिकूलत्वेन तासां विधानं काव्ये कदापि न हि कर्त्तव्यम् । ध्वनिवादिनामाचार्यानुसारेण मुख्यार्थापहतित्वमेव दोषसामान्यलक्षणम् । इत्थं ध्वनिवादिन आचार्याः ध्वनिमेव काव्यस्य मुख्यतत्त्वरूपेण स्वीचक्रुः । आनन्दवर्धनाचार्येण ध्वनिमुद्दिश्य प्रोक्तः—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।**
**व्यङ्क्तः काव्यविशेषः सः ध्वनिरिति सूरिभिः कथितः ।।**

(१। १३ ध्व०लो०)

यत्रार्थो वाच्यविशेषः शब्दो वा तमर्थं व्यङ्क्तः स काव्यविशेषो ध्वनिरिति । सहृदयेभ्यः काव्ये सारवस्तु तद् ध्वन्यमानार्थः, क्वाऽपि रसादिरूपेण, क्वचित् वस्तुरूपेण, क्वचित् अलङ्काररूपेण भासितो भवति । **'एवं वस्त्वलङ्काररसभेदेन त्रिधा ध्वनिः ।'** (लोचने पृ० ३,५८) **'स ह्यर्थो वाच्य सामर्थ्याक्षिप्तं वस्तुमात्रयमलङ्कारा रसादयश्च इत्यनेक प्रभेद-प्रभिन्नो दर्शयिष्यते ।'** (ध्व०लो० १.४ उपरिवृत्तिः) **'सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः व्यङ्ग्यस्य त्रिरूपत्वात् ।** (का०प्र० ५,४७ उपरि वृत्तिः) । तथा त्रिभिः रूपैः वाच्यार्थेन भिन्नः ध्वन्यर्थोऽयं काव्यस्याऽऽत्माऽस्ति ।



# औचित्यसम्प्रदायः

संस्कृतवाङ्मये औचित्यशब्दस्य प्रयोगोऽतिप्राचीनादेवकालात् प्रवृत्तो वर्त्तते । अस्मिन् वाङ्मये साहित्यालोचनस्य जगतः औचित्यतत्त्वं महदं वदानमास्ते । औचित्यस्य भावना ध्वन्यादि समस्त काव्यतत्त्वानां मूलभावना वर्त्तते । अयं हि काव्यं शास्त्रस्य व्यापकतमः सिद्धान्तो वर्त्तते । समस्त प्राचीनालङ्कारिका हि स्व स्व ग्रन्थे औचित्यरक्षणायै सङ्केतं निर्दिष्टवन्तः । तान्येव पूर्वग्रन्थानालोच्य काव्यतत्त्वस्य व्यापकरूपमादातुं क्षेमेन्द्रेण औचित्यविचारचर्चानामके ग्रन्थे औचित्यमेव काव्यस्य जीवातुतत्त्वरूपेण ग्रथितः । रसस्य जीवनभूतः प्राणः औचित्यमेव इति स्पष्टं तेन समुद्घोषितम् । तथाहि—

**औचित्यस्य चमत्कारकारिणश्चारुचर्वणे ।**
**रसजीवितभूतस्य विचारं कुरुतेऽधुना: ॥** (का० ३)

किमिदमौचित्यम् ? इति जिज्ञासायाम् 'यो यत्सदृशः, येन परस्परं सम्मिश्रणम्, सम्मिलनम्, वा भवेत् तदेवोचितम् । अथ चोचितस्य भाव औचित्यम् । तथा चोक्तं तेनैव—

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत् ।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ॥** (का० ३)

किन्तु, औचित्यतत्त्वस्य सर्वप्रथमं कल्पना क्षेमेन्द्र एवाकार्षीत् इति वक्तुं न शक्यते । औचित्यस्य संस्कृतसाहित्ये कल्पनाऽतीव प्राचीना वर्त्तते । औचित्यस्य पद-वाक्यार्थ-रस-कारक-लिङ्ग-वचनाद्यनेक स्थलेषूदाहरणानि प्रदर्श्य एतदभावस्यान्यत्र स्थितिश्च प्रदर्श्य साहित्यरसकिानां महानुपकारः कृतः, तेन क्षेमेन्द्रेण—औचित्यस्य मूलतत्त्वमानन्देनैवोद्घाटितम् । आनन्दवर्धनाचार्य एवौचित्यस्य सर्वमान्य आचार्यो वर्त्तते। स एव ध्वन्यालोके गरिम्णः पूर्णतया विवेचनं चकार । रसभङ्गस्य व्याख्याया अवसरे तेनैवाभिहितम्—

**अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम् ।**
**औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥**

(ध्वन्यालोकः ३, वृ० पृ० ३०३)

भरतमुनिप्रणीते नाट्यशास्त्रे तु सिद्धान्तरूपेण तु नहि किन्तु, व्यवहार-रूपेणौचित्यं विहितमेवास्ते । भरतमुन्यनुसारेण लोक एव नाट्ये प्रमाणम् । लोके यद्

वस्तु येन रूपेण येन वेषेण यया मुद्रया च समुपलभ्यते तस्य वस्तुनः तेनैव रूपेण वेषेण च तथैव मुद्रया अनुकरणं नाट्यस्य चरमं लक्ष्यम् । एतस्मादेव कारणात् नाट्यशास्त्रं प्रकृतेः भाषा-वेषादीनां विधानेऽत्यधिकं बलं ददाति । भरतेनानेन कारणेन नाट्ये पात्रेभ्यः देशस्यावस्थायाश्चानुरूपेण वेशविन्यासस्योपदेशं दत्वेत तत्रोपर्यैव विशेषाग्रहः प्रदर्शितः ।

तथाहि—

**अदेशजो हि वेषस्तु अशोभां जनयिष्यति ।**
**मेखलोरसि बन्धे च हास्यायैव प्रजायते ॥** (ना०शा० २३।६९)

एतत् कारिकाया भाष्यरूपमेव क्षेमेन्द्रस्याधोलिखित पद्यं दृश्यते—

**कण्ठे मेखलाया नितम्बफलके तारेण हारेण वा**
**पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा ।**
**शौर्येण प्रणवे रिपौ करुणया नायान्ति के हास्यता**
**औचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणा ॥**

इतः पूर्ववर्त्तिभिरालङ्कारिकैः, तत्त्वमेनमादायैव स्वस्व ग्रन्थप्रणयनं कृतम् । अतः क्षेमेन्द्रस्यैव नैवेयमुद्भावना किन्तु पूर्वं पूर्वाचार्यैः सूचिता या भावना तामेव स्वग्रन्थे स्पष्टरूपेण प्रदर्शयामास तत्रभवानाचार्यः क्षेमेन्द्रः । अभिनवगुप्तस्यैवेकः प्रमुखः शिष्यः क्षेमेन्द्रो वर्त्तते । सः स्वयमेव ध्वनिवाद्यासीत् । तथाऽपि औचित्यविचार चर्चाभिधस्य ग्रन्थस्य माध्यमेन सः औचित्यस्य सिद्धान्तं पूर्णतया काव्ये प्रतिष्ठापितवान् । औचित्यस्य स्वरूपं निरूपयन् आचार्यः क्षेमेन्द्रः औचित्यविचारचर्चायामाह—

**उचितं प्राहुराचार्याः सदृशं किल यस्य तत् ।**
**उचितस्य च यशो भावः तदौचित्यं प्रचक्षते ॥**
**इदमौचित्यमेव रसस्य जीवितमास्ते ।**

आनन्दवर्धनाचार्यस्य व्याख्याकारः आनन्दवर्धनाचार्यस्तेषां काश्मीराणामालोचकानां तीक्ष्णप्रत्याख्यानमकरोत्; ये ध्वनिसिद्धान्तसम्पर्कं विहायैवौचित्यस्य पक्षपातिन आसन्। अभिनवगुप्तेनापादितं यत् ध्वनिं विनौचित्यसिद्धान्तस्य प्रतिष्ठा भवितुमेव नार्हति । अतएव ध्वन्यौचित्यसिद्धान्तयोः परस्परमुपकारोपकारकभावो वर्त्तते ।

भरतमुनिना नाट्यशास्त्रे ज्ञापितः यत् लोकवृत्यानुचरित नाट्ये लोकव्यवहारे उचितानां सिद्धवस्तूनामेव सम्यक् विधानं कर्तव्यम्—

**लोक सिद्धं भवेत् सिद्धं नाट्यलोक स्वभावजम् ।**
**तस्मान्नाट्य प्रयोगे तु प्रमाणं लोक इष्यते ॥**
(ना०शा० २६, ११४-११९)

स्थावर-जङ्गमात्मकस्यास्य लोकस्य शास्त्रद्वारेण किमपि निर्णेतुं न शक्यते, अतः लोकव्यवहारमेव प्रमाणं मत्वा नाट्यस्य प्रयोगः कार्यः । अतएव नाट्य- प्रयोगे-

ऽवस्थानुकूलं वेषं भाव्यम् । वेषानुकूलागतिः एवं क्रिया कार्या, गत्यानुकूल पाठयम्, पाठ्यानुरूपः अभिनयश्च कर्त्तव्यम् । तथाहि—

**वयोऽनुरूपः प्रथमस्तु वेषो, वेषानुरूपस्तु गतिप्रचारः ।**
**गतिप्रचारानुगतं च पाठ्यं, पाठ्यानुरूपोऽभिनयश्च कार्यः ॥**
(ना०शा० १४.६८)

यो हि वेषः देशानुकूलो न भवति तेन शोभा न वर्धते, यतो हि उरसि एवं मणिबन्धे मेखलाबन्धे केवलं हास्यायेव भवति । नाट्यशास्त्रे औचित्यशब्दस्य स्पष्टतयोल्लेखाभावेऽपि सूक्ष्मप्रदं भवत्येवेति । यथा—

**अदेशजो हि वेषस्तु न शोभां जनयिष्यति ।**
**मेखलोरसि बन्धे च हास्यायैवोपजायते ॥** (ना०शा० २३।६९)

महर्षिणा शौनकेन बृहद्देवतायां अर्थ-प्रकृति-प्रकरण-लिङ्ग-देश-कालौचित्यादिद्वारेण अर्थः कर्त्तुं निर्देशितः । यथा—

**अर्थात् प्रकरणात् लिङ्गादौचित्याद् देशकालतः ।**
**मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः ॥** (बृहद्दे० २.१२०)

अनेनैव प्रकारेण भर्तृहरि महोदयोऽपि निज वाक्यपदीये वाक्य-प्रकरण-अर्थ-औचित्य-देश-कालेभ्यः शब्दार्थयोर्विचारयितुमादिष्टवान् । यथा—

**वाक्यात् प्रकरणादर्थादौचित्याद्देशकालतः ।**
**शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात् ॥** (वा० प० २.३१५)

अयं हि महर्षि यास्क इव शब्दस्य स्वरूपमात्रात् अर्थकरणमसङ्गतं कथितवान् —(निरुक्तः, द्वितीयोऽध्यायः)

भामह-दण्डी-रुद्रटाद्याचार्याः अपि औचित्यस्य महत्त्वं प्रतिपादितवन्तः । भामहाचार्यस्य मते स्रजामन्तराले आबद्धं नीलपलाशमिव रचनाविशेषेण दुरुक्तमपि शोभाधायको भवति । यथा—

**सन्निवेशविशेषात्तु दुरुक्तमपि शोभते ।**
**नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥** (भामहा० १।५४)

यथा मलीमसमिव कज्जलं कान्तालोचन न्यस्तं ललितो भवति, तथैवासुन्दरमपि वस्तु आश्रयसौन्दर्येणातिरमणीयो भवति । अनेन प्रकारेण किञ्चिदाश्रयसौन्दर्यादसाधुपदार्थोऽपि शोभां धत्ते । तथाहि—

**किंचिदाश्रय-सौन्दर्यात् धत्ते शोभामसाध्वपि ।**
**कान्ताविलोचनन्यस्तं इइ मलीमसमिवाञ्जनम् ॥** (तत्रैव १।५५)
**अनयान्यदपि ज्ञेयं दिशायुक्तमसाध्वपि ॥** (तत्रैव ७।५६)

यद्यपि पुनरुक्तोऽपि दोष एवास्ति । किन्तु भय-शोक-असूया-हर्ष-विस्मयादि-भावेषु औचित्येन तद्दोषोऽपि, दोषमुक्तो भवति । तथाहि—

**भय-शोकाभ्यसूयासु हर्षविस्मययोरपि ।**
**यथाह गच्छगच्छेति पुनरुक्तं न तद्विदुः ॥** (तत्रैव ४।१४)

अनेनैव कारणेन महर्षि पाणिन्यपि एतेषु भावेषु द्विरुक्तस्य विधानं कृतवान् । यथा—**वाक्यादेशमंत्रितस्यासूयासंमतिकोप कुत्सनभर्त्सनेषु** । (पा० सू० ८।१।८१)

दण्ड्यपि कतिपय-दोषानवस्थाविशेषे गुणत्वेन स्वीकृत्यौचित्येन गुणस्यानौचित्येन दोषस्य च संकेतमकरोत् । समुदायार्थशून्यवाक्येऽपार्थदोषं मन्यते । किन्तु तदेवापार्थ-मुन्मत्तानां मदिरोन्मत्तानां, बालाकानामखस्यादि जनानाम् प्रलापे दोषः । कथितुं न शक्यते । तथाहि—

**समुदायार्थशून्यं यत्तदपार्थमितीष्यते ।**
**उन्मत्तमत्तबालानां उक्तेरन्यत्र दुष्यति ॥**
**इदमस्वस्थचित्तानामभिधानमनिश्चितम् ।**
**इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम् ॥** (काव्या० ३.१२८.३०)

अनेन प्रकारेण व्यर्थनामकं दोषं दर्शयित्वा दण्डीप्रोवाच यदेवंविधाऽपि विरहादेरवस्था भवति यत्र कवेर्विरुद्धार्था वाणी दोषत्वं विहाय गुणत्वमवधार्यते ।

**अस्ति काचिदवस्था साभिषङ्गस्य चेतसः ।**
**यस्यां भवेदभिमता विरुद्धार्थाऽपि भारती ॥** (तत्रैव ३,१३३)

एवंविधेव विरोधनामकदोषः परिस्थिति विशेषे गुणस्यानुसरणं करोति तथा पुनरुक्तदोषानुकम्पादेस्थितावलङ्कारो भवति । तथा हिं—

**विरोधः सकलोप्येष कदाचित्कविकौशलात् ।**
**उत्क्रम्य दोषगणनां गुणविथीं विगाहते ॥** (तत्रैव ३,१०९)

अभिज्ञानशाकुन्तलस्य—**'न खलु न खलु बाणः'** (अ०शा० प्र०अ०) अस्मिन् पद्ये 'न खलु' शब्दस्य पुनरुक्त्या यत्सौन्दर्यंवर्द्धते, कस्मादपि सहृदयादप्रत्यक्षो नास्ति।

भामह-दण्डिनोः पूर्वोक्तकथनस्य रहस्यमिदमेवास्ति, यत् यस्मै यदुचितं भवति तस्य विधानात् गुणो भवति तथा यदनुचितं भवति तद्विधानाद्दोषो भवति । अनेन प्रमाणितोभवति यद्गुणस्य मूलमस्ति औचित्यम् तथा दोषस्य मूलमस्त्यनौचित्यम् । तथाहि—

**विरोधः सकलोप्येष कदाचित् कविकौशलात् ।**
**उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥** (काव्यादर्शः ३,१७९)
**अनुकम्पाद्यतिशयो यदि कश्चित् विवक्ष्यते ।**
**न दोषः पुनरुक्तोऽपि प्रत्युतेयमलंक्रिया ॥** (तत्रैव ३,१३७)

अत एव मुनिचन्द्रेणालिखत् यदेकस्मिन् दिशि केवलमेकौचित्यमेव समग्रगुणानां समूहोऽस्ति तथाऽपरेस्मिन् दिशि तदेव गुणसमूहः औचित्यं विना दोषो भवति । अस्यैवाधारोपरि आनन्दवर्धनः श्रुतिदुष्टादयो दोषान् अनित्यं दर्शयित्वा ध्वन्यात्मक-शृङ्गाररसे एव तान् त्याज्यं मन्यते । तदेव दोषः वीर-रौद्रादिरसेषु समुचितत्वेन गुणो भवति । यथा—

**श्रुतिदुष्टादयोदोषा अनित्या ये च दर्शिताः ।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥** (ध्व० २।१२)

तथ्यमिदं स्पष्टतयाऽभिनवः स्वकीयलोचने—'नाऽपि गुणेभ्यः व्यतिरिक्तत्वं दोषत्वमित्यादि कथयित्वा स्पष्टं कृतवान् । तथाहि—**विभत्सहास्यरौद्रादौ त्वेषाम् (श्रुतिकटुत्वादीनाम्) अस्माभिरूपगमान् शृङ्गारादौ च वर्जनात् अनित्यत्व समर्पित-मेवेतिभावः** । (तत्रैव लो० पृ० १००)

आलङ्कारिकाणामतिरिक्ताः कवयोऽपि अस्य रहस्यस्योद्घाटनं कृतवन्तः । महाकविमाघस्तु राजनीतिवर्णनप्रसङ्गे गुणौचित्यस्य संकेतः कृतवानस्ति । यथा देश-कालज्ञ महीपालस्य तेजसः वा क्षमाद्याः निरन्तरमेकरूपेणानुसरणमनुचितं भवति तथैव रसभावादेर्ज्ञाता कवेरोजः प्रसादयो वा सर्वथा विधानमसङ्गतमेव भवति । तथाहि—

**तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः ।**
**नैकमोजः प्रसादो वा रसभावविदः कवेः ॥** (शिशु०व० २,८५)

अनेनैव प्रकारेणैव यशोवर्मा औचित्यशब्दस्य स्पष्टरूपेण प्रयोगः कुर्वन् रामाभ्युदयनाटके पात्राणां प्रकृत्यनुकूलकथने औचित्यस्य तथा समुचितावसरे रसस्य च पात्रोचितपुष्ट्याः विधानं कृतवान् । तथा—

**औचित्यं वचसां प्रकृत्यनुगतं, सर्वत्र पात्रोचिता पुष्टिः, स्वावसरे रसस्य च, कथामार्गेण चातिक्रमः । शुद्धिः प्रस्तुतसंविधानकविधौ, प्रौढिश्च शब्दार्थयोः विद्वद्भि- परिभाव्यतामविहितैरेतावदेवास्तु नः ॥** (ध्व० ३.१४ उपरि) ।

अग्निपुराणोऽपि रीतिवृत्तिरसानां विषयानुकूलसमावेशे सति औचित्य-नामककोभयालङ्कारं मन्यते ।

**यथावस्तु तथा रीतिर्यथावृत्तिस्तथारसः ।**
**ऊर्जस्वि मृदुसंदर्भाष्टौचित्यमुपजायते ॥** (अ० पु० ३४५,५)

राजशेखरस्य काव्यमीमांसायां 'आपराजिति' नाम्ना तथा हेमचन्द्रस्य काव्यानुशासने भट्टलोल्लटस्य नाम्नोद्धृतपद्यद्वयोरिदमेव प्रदर्शितमस्ति यत् काव्ये रसयुक्तार्थस्यैव रचना समुचिता भवति न तु वीरसार्थस्येति । काव्ये मज्जन-पुष्पचयन-सन्ध्या-चन्द्रोदयादेरपि सरस वर्णनमपि प्रकृत-रसस्याधिकप्रतिकूलत्नैव करणीयम् । 'यस्तु सरिदद्रि-सागर-पुरतुरगरथादेर्वर्णने तथा यमक-चक्र-पद्य-मुरजबन्धादि रसविरोधिनो वस्तूनां वर्णने यस्य कवेः अभिमानप्रदर्शनात्मकः प्रयत्नो भवति तद्रसस्य परिपन्थिनो

भवन्ति तथा गड्डलिका प्रवाह एवास्ति ।

अतः औचित्यस्य हानिर्भवेद्यदि तदा तत्र कर्त्तव्यमिति । तथाहि—**'अस्तुनाम निःसीमार्थसार्थः । किन्तु रसवत् एव निबन्धो युक्तो न तु नीरसस्य'** इति आपराजितिः । यदाह—

**'मज्जन-पुष्पावचयन-सन्ध्या-चन्द्रोदयादि वाक्यमिह, सरसमपि नाति बहुलं प्रकृतरसानन्वितं रचयेत् ।।' यस्तु सरिदद्रि-सागर-पुर-तुरगरथादिवर्णने यत्नः कवि-शक्तिख्यातकृत्योविततधियां गोमतः स इह ।।'** (काव्य०मी० ९ पृ० ११०-११)

**यमकानुलोमतदितरचक्रादिभेदोऽतिरसविरोधिन्यः ।**
**अभिमानमात्रमेदद्गड्डरिकादि प्रवाहो वा ।।** (काव्यानु० ५ पृ. २१२)

भामह-दण्डिनोरिवाचार्यरुद्रटोऽपि औचित्यं गुणस्य तथाऽनौचित्यं दोषस्य नियामको मन्यते । पुनरुक्तदोषस्तु कवेः शब्ददारिद्र्यं प्रकटयति । किन्तु यदा हर्ष-भयादि भावानामावेशे समागत्य कोऽपि कविः कस्याऽपि निन्दां स्तुतिं वा कर्त्तुं तस्य प्रयोगः करोति तर्हि तत्र वक्तुः हृदयगतभावानां यथार्थाभिव्यक्तिकारणात् गुण एव भवति । यथा—

अर्थविशेषवशात् वाशाद् वा सभ्येपि तथा क्वचिद् विभक्तेर्वा । अनुचितभावं मुञ्चति तथाविधं तत् पदं सदपि । वक्ताहर्षभयादिभिराक्षिप्तमनास्तथास्तुवन् निन्दन् । यत् पदमसकृत् ब्रूयात् तत् पुनरुक्तं न दोषाय ।। (रुद्रटा० ६,२३,२९)

ग्राम्यत्वादि दोषेष्वपि इयमेवास्ति वार्त्ता । अतएव रुद्रटोऽपि अनुप्रास-यमकाद्यलङ्कारणां प्रयोगे औचित्यमेव मापदण्डं मन्यते । (तत्रैव २,३२ तथा ३,५९)। अस्मिन्नेव प्रसङ्गे काव्यालङ्कारस्य व्याख्याकारः नमिसाधु प्रोवाच यत् रसस्य प्रतिकूलं यमक-श्लेषादेर्विधानं गड्डिकाप्रवाहेन न कर्त्तव्यम्, तथौचित्यस्य विचारेणैव काऽपि रचना कार्या । (तत्रैव ३, ५९ उपरि नमिसाधोः टीका द्रष्टव्या)

आनन्दस्तु काव्ये आत्मभूतरसरूप-ध्वन्यमानपदार्थस्य सत्तां प्रदर्श्य रसध्वनि-निरूपणकार्यै औचित्यस्य महत्त्वं दर्शितवान् । तात्पर्यमिदमस्ति यत् औचित्यपूर्ण पदमेव रसनिरूपणे आनन्ददायको भवति, अनुचितरूपेण रसस्य विधानं रसभङ्गस्य कारणं भवति । काव्ये गुणालङ्कार-रीति-वृत्यादीनां रचना तस्याऽऽत्मरूप रसध्वने-रेवोत्कर्षाय भवति । अतएव रसभावादीनां तात्पर्येण कृतगुणालङ्कारादीनां विधानेन गुणत्वमलङ्कारत्वञ्चादि भवन्ति । (ध्व० २.६,१६-१७)। अन्यथा निर्जीवशरीरे-ऽलङ्कारादीनामिव ते व्यर्थमेव भवन्ति ।

प्रबन्धेन सहौचित्यस्यावश्यकतां प्रदर्शयन् आनन्देनाह—काव्येऽथवा नाटके भाव-विभाव-अनुभाव-सञ्चारीभावानामौचित्येन कथाशरीरस्य चारूरचना भाव्यम्, यद्वा तदितिवृत्तं रामायण-महाभारतादौ प्रख्यातवृत्तमस्तु अथवा कविकल्पनाप्रसूत कृतमस्तु । विभावादीनां विधानमभीष्टरसादेः समुचितत्त्वे सत्येवाभिमतरसमभिव्यक्तं कर्त्तुं समर्थो भवति । सन्धि-सन्ध्यङ्गादीनाञ्च घटना रसाभिव्यक्तेरनुसारेण भवितव्यम् ।

मुख्यरसमवान्तररसे नैव विस्मरणीयं नैव च गौणं कर्त्तव्यम् । सत्यपि शक्तावलङ्कारस्य योजना औचित्यपूर्णमेव भवितव्यम् । अनेन प्रकारेणौचित्यपूर्णविधानेनैव प्रबन्ध रसादीनामभिव्यञ्जको भवन्ति ।

विभावभावानुभावसञ्चार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥ १० ॥
इतिवृत्तवशायातां त्यक्त्वाऽनानुगुणां स्थितिम् ।
उत्प्रेक्षाप्यन्तराभीष्ट रसोचितकथोन्नयः ॥ ११ ॥
सन्धि-सन्ध्यङ्ग-घटनं रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थिति सम्पादनेच्छया ॥ १२ ॥
उद्दीपन प्रशमने यथावसरमन्तरा ।
रसस्यारब्ध विश्रान्तेरनुसन्धानमङ्गिनः ॥ १३ ॥
अलङ्कृतीनां शक्तावप्यानुरूपेण योजनम् ।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ १४ ॥
(ध्वन्यालोकः, तृ०उ०)

काव्ये उपर्युक्तौचित्यस्य पालनाभावे एतानवसरे विस्तारस्य तथा विच्छेदाङ्गस्य च विस्मरणं तथाऽङ्गिनः अननुसन्धानादि रसदोषाः भवन्ति ।

प्रबन्धे मुक्तके वाऽपि रसादीन्बन्द्धुमिच्छता ।
यत्नः कार्यः सुमतिना परिहारे विरोधिना ॥ १७ ॥
विरोधिरससम्बन्धि विभावादिपरिग्रहः ।
विस्तरेणान्वितस्याऽपि वस्तुनोऽन्यस्य वर्णनम् ॥ १८ ॥
अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम् ।
परिपोषैगतस्याऽपि पौनःपुन्येन दीपनम् ।
रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च ॥ १९ ॥

अस्य सारांशोऽयमस्ति—

'अनौचित्यादृते मान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥'
(ध्वन्या० तृ०उ० पृ० ३६२)

अतः आनन्दानुसारेण यदा विविधौचित्यस्य वेगाः एकमेवोद्देश्येन रसरूप आनन्दस्य महासागरे प्रविशन्ति तदा तेषां सार्थकता महनीयता च भवति ।

औचित्यं काव्यजीवितं प्रदर्शयन् जयमङ्गलाचार्यः स्वकीय कविशिक्षायां कवीन् शिक्षां प्रदत्तवान् यो हि कवि औचित्यस्य महत्त्वं न जानाति सः यशस्वी भवितुं न शक्यते ।' अतः कीर्त्तिप्राप्त्यर्थं तं काव्यजीवितमौचित्यस्य सम्यक् विधानं परिरक्षणञ्च कर्त्तव्यम् । तथाहि—

**औचित्यं श्लाघ्यते तत्र कविता जीवितोपमम् ।**
**कवयस्तदजानन्तः कथं स्युः कीर्त्तिभाजनम् ॥** (कवि शि०)

राजशेखरः काव्यमीमासायां—**'उचितानुचितो विवेको व्युत्पत्तिः'** (का०मी० अ० ५, पृ० ३७) कथयित्वा औचित्योपरि बलं दत्तवान् । अस्य समुचितशब्दार्थादेः संयोजनं पाकः कथयित्वा अवन्तिसुन्दर्याऽपि औचित्यस्य महिमा प्रकटिताऽस्ति । तथाहि—

**रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः ॥** (का०मी० पृ० ४९)

राजशेखरस्य कथनमिदं नितान्तयुक्तयुक्तमस्ति यदनुसंधानशून्यकवेः भूषणमपि दूषणायते तथा सावधान कवेस्तदेव दूषणं भूषणायते । यथा—

**अनुसंधानशून्यस्य भूषणं दूषणायते ।**
**सावधानस्य कवेर्दूषणं भूषणायते ॥** (तत्रैव)

क्षेमेन्द्रस्य पथप्रदर्शकाचार्यः अभिनवगुप्तेनौचित्यस्य महत्त्वस्य रहस्यस्य चाधिक्येनास्पष्टीकरणमभवत् । ध्वन्यात्मनरलङ्कार्यता सिद्धं कुर्वन् अभिनवेनाह—कटककेयूरादिभिश्चेतन आत्मैवाऽलङ्क्रियते, अचेतनं शवशरीरं कुण्डलाद्युपेतमपि न शोभते, यतो हि अलङ्कार्यस्याभावात् । सन्यासिनः शरीरं कटकादियुक्तं हास्यावहमेव भवति । यतो हि अनेनालङ्कार्ये अनौचित्यं भवति । अत्र शरीरे कस्यापि प्रकारकस्यानौचित्याभावात् आत्मैवालङ्कार्यो भवति । तथाहि—

वस्तुतो ध्वन्यात्मैव अलङ्कार्यः । कटककेयूरादिभिरपि हि शरीरसमवायिभिश्चेतन आत्मैव तत्तच्चित्तवृत्तिविशेषौचित्य सूचनात्मतयालंक्रियते । तथाहिं अचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति । अलङ्कार्यस्याभावात् । यतिशरीरं कटकादियुक्तं हास्यावहं भवति अलङ्कार्यस्यानौचित्यात् । न च देहस्य किञ्चिदनौचित्यमिति वस्तुतः आत्मैवालङ्कार्यः । (ध्व० २,६ उपरिलोचनः २,९०-९१)

अस्मिन् प्रसङ्गे अभिनवेनैकस्य रहस्यस्योद्‌घाटनं कुर्वन् निर्देशितः यत् औचित्यस्य किमपि विशेषमहत्त्वं नास्ति । तत्तु काव्यस्यात्मतत्त्वस्वरूपं रस-ध्वनेः सहायकमात्रमेवास्ति । आनन्दवर्धनस्तूचितशब्देन रसविषयकौचित्यस्य प्रतिपादनं कुर्वन् औचित्य संवलित-रस-ध्वनिं काव्यस्य जीवितं मन्यते ।

**'उचित शब्देन रसविषयमौचित्यं भवतीति दर्शयन् रसध्वनेर्जीवितत्त्वं सूचयति । तदभावे हि किमपेक्षया इदमौचित्वं नाम सर्वत्रोद्‌घोष्यते इतिभावः ।'**

(तत्रैव लोचनः पृ० १६)

रसध्वनेरभावेयंप्रति औचित्यमिदं द्रक्ष्यति । तात्पर्यमिदमस्ति यदौचित्यं कमपि पदार्थं मत्वा तथा तम्प्रति वस्तूचितमेवेति दर्शयत्येव । एवं दर्शयति । यम्प्रति अन्यान्य वस्तूचितमस्ति, तत्पदार्थः काव्यस्यात्मा रसध्वनिरेवास्ति । अत एवायं भामहस्य औचित्यपूर्णातिशयोक्तिम् वा वक्रोक्तिम् काव्यजीवितं स्वीकरणे आपतिम्

दर्शयति । यतः औचित्यस्याश्रयः रसभावादीन् परित्यज्यान्यः अपरपदार्थोभवितुं न शक्यते ।

औचित्यवृती जीवितमितिचेत्, औचित्य निबन्धनं रसभावादिमुक्त्वा नान्यत् किञ्चिदस्ति तद्देवान्तर्भासि मुख्यं जीवितमित्यभ्युपगमन्तव्यं न तु सा । एतेन यदाहु केचित् 'औचित्य घटित-सुन्दर शब्दार्थमये काव्ये किमन्येन ध्वनिना आत्मभूतेन कल्पितेन' इति स्ववचनमेव ध्वनिसद्भावाभ्युपगमसन्निभूतं मन्यमानाः प्रयुक्तः । (तत्रैव ३,३७ उपरि लोचनोपरि, पृ० २६०)

वक्रोक्तिवादस्य प्रवर्त्तकः आचार्यकुन्तकेनाऽपि मुक्तकण्ठेनौचित्यस्य गुणगानं कृतः। तस्य वक्रता कुत्राऽपि औचित्यरूपमेव भवति । यथा पदवक्रतायां तथा पदौचित्ये प्रदर्शितेऽपि ।

**'तत्र पदस्य तावदौचित्यं बहुविधभेदभिन्नो वक्रभावः ।'** (वक्र०जी० १.५० उपरि तस्या वृत्तिः पृ० १६३)

अयं हि प्रत्येकस्य प्रकारस्य मार्गे औचित्यं तथा सौभाग्यमिव साधारण-गुणानामस्तित्वमनिवार्यं मन्यते । औचित्यस्य लक्षणं कुर्वन् तेन कथितः यत् वस्तुनः स्वभावस्य महत्त्वं येन स्पष्टवर्णनप्रकारेण अर्थादभिधा वैचित्र्येण सद्यः परिपुष्टो भवति तत्प्रकारमेवौचित्यं वा उचिताख्यानजीवितं कथ्यते । तथा हि—

**आञ्जसेन स्वभावस्य महत्त्वं येन पोष्यते ।**
**प्रकारेण तदौचित्यमुचिताख्यान मुच्यते ॥** (तत्रैव १,५३)

यत्र वक्तुर्माश्रोतुरत्यन्तरमणीयः स्वभावैरभिधेयवस्तु सर्वथाऽऽच्छादितो भवति तत्रान्य प्रकारकस्यौचित्यगुणो भवति । यथा—

**यत्र वक्तुः प्रमातुर्वा वाच्यं शोभातिशायिना ।**
**आच्छाद्यते स्वभावेन तदप्यौचित्यमुच्यते ॥** (तत्रैव १,५४)

द्वितीय प्रकारे वाच्यार्थस्याच्छादनैः रसोन्मीलनं प्रति संकेतं कृतोऽस्ति । अनेन काव्ये शब्दवैशिष्ट्यं शब्दपारमार्थ्यं तथा अर्थवैशिष्ट्यं अर्थपारमार्थ्यं कथितः । एतदेव ध्वनिवादिनः क्रमशः पदध्वनिस्तथा अर्थध्वनिः तथा औचित्यवादिनः पदौचित्यं तथा अर्थौचित्यं कथ्यन्ते । अस्मिन् प्रसङ्गेऽस्य कथनमस्ति यत् अर्थ-पारमार्थ्यस्य सत्तायामेव रसस्योन्मीलनं भवति । अतः येन वस्तुना कस्यापि पात्रस्य महत्वं न दशर्यति, न च रसस्य परिपोषणं भवति, एवं विध-वस्त्वनुचितो भवति, अनुचितत्त्वेनेदं काव्ये सर्वथा त्याज्यं भवति । (भा०सा०शा० पृ० ८५) । अस्योदाहरणे अनेन राजशेखरस्य बालरामायण नाटकात्पद्यमेकमुद्धृतम् । अस्मिन् श्लोके वर्णितमस्ति-शिरीषपुष्पमिव सुकोमलाङ्गी सीता अयोध्यापुरी परिसरे एव जवात् त्रिचतुराणि पदानि गत्वा पृच्छति —अद्य कियदिति अवशिष्ट गन्तव्यमस्ति । एवं पौनःपुन्येन बृवाणा सीता रामस्य नेत्रेऽश्रुणः प्रथमावतारम् कृतवती । तथाहि—

**'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वीसीता**
**जवात् त्रिचतुराणि पदानि गत्वा ।**
**गन्तव्यमद्य कियदित्यसकृत् ब्रुवाणा**
**रामाश्रुणः कृतवती प्रथमावतारम् ॥'**

(वा० रा० ६,३४ व०जी० ४९ पृष्ठादुद्धृतः)

सर्वसहाभुवः दुहिता पतिव्रते दृढ़प्रतिज्ञ सहजशीलानार्यै त्रिचतुराणिं पदान्येव गमनानन्तरं 'अद्य कियदिति गन्तव्यमस्ति' एवं पृच्छनं नितान्तमनुचितमस्ति । अत्र द्वितीयमनौचित्यमिदमस्ति यदसकृत्पृच्छानन्तरं रामस्य नेत्राभ्यामश्रुप्रवाहो भवति तदपि सहज प्रेम्नः लक्षणं नाभूत् । वर्णनमिदं न तु स्वाभाविकीं महत्तां प्रकटयति, नाऽपि कश्चिद्रसमेव परिपुष्टं करोति । अतोऽस्मिन् श्लोकेऽनौचित्यं दोष एवास्ति (तत्रैव वृत्तिः पृ० ४९-५०) कुन्तकेन वृत्यौचित्यम्, रीत्यौचित्यम्, अलङ्कारौचित्यमित्यादेरावश्यकता वर्णवक्रतायां प्रदर्शितः । तथाहि—

**'वृत्यौचित्य-मनोहारि-रसानां परिपोषणम् ।'**

(व०जी० १.३५ आन्तरश्लोकः)

यमकालङ्कारेऽपि औचित्यं विना सरसयमकस्य रचना कर्तुं न शक्यते ।' (तत्रैव २,६ उपरिवृत्तिः) अनया रीत्याऽयं प्रत्ययवक्रता-लिङ्गवक्रता-पञ्चविधक्रियावक्रताउपग्रह-वक्रतासु औचित्यमेवावश्यकं मत्वा तस्यैव महत्त्वं प्रकटितः । (तत्रैव २,१०,२१, २२,२३,२५,२६,३१) एतदतिरिक्तः स्वभावौचित्यम्, व्यवहारौचित्यम्, अथवा लोकवृत्यौचित्यादेः वर्णनमौचित्यस्य व्यापकं महत्त्वं दर्शयति ।

सारांशोऽयमस्ति यत् कुन्तकः अनौचित्यस्य सम्बन्धं वस्तु—रसादिना सह मत्वा औचित्य-युक्त एव विविधवक्रतानामस्तित्वं स्वीकृतवान् । अतः औचित्य-वक्रत्वयोर्मध्ये परमार्थतः न किमप्यन्तरमस्ति । न तावदेतावत् प्रत्युत् अनेक-स्थानेषु आनन्दस्य ध्वनिः, कुन्तकस्य वक्रता तथा क्षेमेन्द्रस्य औचित्यं समानाकाराः भवन्ति ।

धनञ्जयस्तु औचित्यस्य संकेतं कुर्वन् निर्दिष्टवानस्ति यन्नाटके यदि कोऽपि प्रकरणनायकः अथवा रसोत्कर्षविरुद्धे सत्यनुचितं भवतु तर्हि तं विहाय तस्योत्कर्षाय उचितस्वरूपे तत्परिवर्त्तनं कर्त्तव्यम् । धनञ्जयस्यास्मिन् संक्षिप्तकथने औचित्यस्य पूर्ण संकेतं मिलति । तथाहि-

**यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ।**
**विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥** (दशरूपकम् ३.८४)

महिमभट्टस्तु कुन्तक-काव्यलक्षणस्य समालोचना-प्रसङ्गे काव्यस्वरूपस्य सम्पादक-मौचित्यं मत्वा तस्य समर्थनं कृतवान् । (द्रष्टव्यः—व्य० वि० पृ० १२.४-२६) । अस्यानुसारेण काव्ये सर्वाधिकदोषः अनौचित्यमेवास्ति । यतो ह्यनेन विवक्षितरसस्य प्रतीतौ बाधा भवति अन्तरङ्गवहिरङ्गयोर्भेदेनायमनौचित्यस्य भेदद्वयं स्वीकृतं मन्यते ।

यदा विभावानुभावसञ्चारीभावानां रसेऽनुचितरूपेण विनियोगो भवति तदा रसभङ्गो भवति। अनेन कारणेन अनौचित्यमिदंमन्तरङ्गः कथ्यते तथा शब्दविषयकमनौचित्यम्।

बाह्य-शरीर-सम्बद्धत्वेन बहिरङ्गो भवति । (तत्रैव पृ० १४९-५१) । महिमभट्टस्य कथनमिदमानन्दस्य **'अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम् ॥'** अस्य कथनस्यैव व्याख्यानमात्रमेवास्ति । महिमभट्टो बहिरङ्ग-अनौचित्यात् विधेयाविमर्श-प्रक्रमभेद-क्रमभेद-पौनरुक्त्य-वाच्यावचनादयः शब्ददोषान् मन्यते । अर्थविषयकमनौचित्यं तु रसभङ्गस्य साक्षात् कारणत्वेनान्तरङ्गस्तथा शब्दविषयकमनौचित्यं रसभङ्गे परम्परया कारणत्वेन बहिरङ्गो मन्यते । (तत्रैव पृ० १५२)। अस्मिन्नंशे महिमभट्टः आनन्दस्य सर्वथाऽनुयायी प्रतीयते ।

भोजराजस्य सरस्वतीकण्ठाभरणे तथा शृङ्गारप्रकाशे च काव्यशास्त्रीयान्यतत्त्वानामिवौचित्यस्यापि यत्र तत्र प्रतिपादनमभवत् । शृङ्गार-प्रकाशेऽशेषशास्त्राणामर्थसम्पत्तिः अखिल-कला-काव्य-कल्पनादेः रहस्यैः सहौचित्य-रहस्यस्याऽपि सन्निवेशो दृश्यते । तथाहि—'एतस्मिन् शृङ्गारप्रकाशे सुप्राकाशमेवाशेष शास्त्रार्थसम्पदुपनिषदां अखिलकला-काव्यौचित्य-कल्पना रहस्यानां च सन्निवेशो दृश्यते।' (शृङ्गारप्रकाशः) औचित्यस्याभावे एव तेषां 'अपद' नामक दोषः मन्यते (सर० कण्ठा०, १.२३) तथा रसनौचित्यात् 'विरस' नामकः वाक्यदोषः प्रदर्शितः । तेनानौचित्यस्यैवाधारोपरि विरुद्धनामकस्य दोषस्यान्तर्गतेऽनुमानविरोधे एव औचित्यविरोधः दोषं स्वीकृतः (तत्रैव १,४०) । अस्य भाविक नामकस्य शब्दगुणेऽपि औचित्यतत्त्वं विद्यमानोऽस्ति । भामहदण्ड्यादीनिव भोजराजोऽपि स्वीकृतवानस्ति यत् दोषोऽपि कश्चिदवस्था विशेषे कविकौशलेन औचित्य-पूर्णो भूत्वा गुणकोटौ समागच्छति तथा स्वदोषत्वं परित्यजति । तथा हि—

**विरोधः सकलेष्वेव कदाचिन् कविकौशलात् ।**
**उत्क्रम्य दोषगणनां गुणवीथीं विग्राहते ॥** (तत्रैव १.१५६)

एतदेवायं वैशेषिकगुणः अथवा दोषगुणः कथ्यते । अस्य जात्यालङ्कारस्याधारः औचित्यमेवास्ति । (तत्रैव २.६) । यमयं पात्रानुरूपभाषात्वमुच्यते । (शृं०प्र० ११ प्र०) अनया रीत्या गतिनामकः शब्दालङ्कारोऽपि औचित्योपर्येवावलम्बितोऽस्ति । (सर०क० २,१८) । अयं हि छन्दप्रयोगे औचित्यस्य आवश्यकता प्रदर्शितवान् तथा शृङ्गारप्रकाशे तमर्थानुरूपछन्दस्त्वमुच्यते । अस्य कथनस्यैव स्पष्टं कुर्वन् अनेन शृङ्गारे द्रुतविलम्बितादयः, वीररसे वसन्ततिलकादयः, करुणरसे वैतालीयादयः, रौद्रे स्रग्धरादयः एतदतिरिक्त सर्वत्र शार्दूलविक्रीडितादयः प्रयोक्तव्येत्युच्यते । तथाहि—

'अर्थानुरूपछन्दस्त्वमित्यनेन शृङ्गारे द्रुतविलम्बादयः, वीरे वसन्ततिलकादयः, करुणे वैतालीयादयः, रौद्रे स्रग्धरादयः, सर्वत्र शार्दूलविक्रीडितादयः निबन्धनीया इत्युपदिशति । (तत्रैव) । रसानुरूपसन्दर्भस्य व्याख्याप्रसङ्गे महाकविमाघस्यानुसरणं कुर्वन् भोजराजोऽपि प्रतिपादनं कृतवान् यत् रसानुरूपसन्दर्भाभावे अनौचित्येन वैरस्यो भवति '। अतः रीतिप्रकर्षे कोमलः, उत्साहप्रकर्षे प्रौढः, क्रोधाधिक्ये कठोरः, शोकबाहुल्ये मृदुः, तथा विस्मयबाहुल्ये तु स्फुटशब्द सन्दर्भस्यैव रचना कर्त्तव्येति ।

तथाहि—रसानुरूपसन्दर्भत्वमित्यनेन रतिप्रकर्षे कोमलः, उत्साहप्रकर्षे प्रौढः, क्रोधप्रकर्षे कठोरः, शोकप्रकर्षे मृदुः, विस्मयप्रकर्षे तु स्फुट-शब्द-सन्दर्भो विरचनीय—इत्युपदिशन् नैकमोजः प्रसादो वा रसभावविदः कवेः, इति ख्यापयति । (तत्रैव)

मम्मटाचार्येण दोषविचारस्योपसंहारे औचित्यस्य महत्त्वं प्रकाश्यन् कथितः यत् वक्ता-प्रतिपाद्य-व्यङ्ग्यवाच्यप्रकरणादीनामौचित्यस्य महिम्ना क्वचित् दोषोऽपि गुणायते तथा क्वचिन्न दोषः नाऽपि गुणो भवति । यथा—

**वक्त्राद्यौचित्यवशात् दोषोऽपि गुणः क्वचिन्नोभौ ॥**

(का० प्र० ७.५९)

रुय्यकः स्वसाहित्यमीमांसायामौचित्यं काव्यजीवितं निर्दिश्य काव्ये तस्य पालनमत्यन्तावश्यकं मन्यते । अत्यन्त रक्षणीयं स्यादौचित्यं काव्यजीवितम् ।। (सा० मी०) औचित्येन सम्बद्धः पूर्वोक्त विचाराणामाधारोपरि क्षेमेन्द्रेणाह—यथा त्यागस्य भावनायुक्तः ऐश्वर्यस्तथा शीलेन समुज्ज्वलं शास्त्रं सज्जनसम्मताः भवन्ति तथैवौचित्य-युक्तानि वाक्यानि सहृदयानामभीष्टानि भवन्ति । यथा—

**औचित्य रचितं वाक्यं सततं संमतं सताम् ।**
**त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम् ॥** (औ०वि०च० १२)

यथा गुणप्रभावेन भव्यविभवेन सज्जनः सुशोभितो भवति तथैवोचितार्थ विशेषेण प्रबन्धार्थः प्रकाश्यते । यथा—

**उचितार्थ विशेषेण प्रबन्धार्थः प्रकाश्यते ।**
**गुणप्रभावभव्येन विभवेनैव सज्जनः ॥** (तत्रैव १४)

गुणोऽपि सैव भव्यो भवति यः प्रस्तुतार्थस्यौचित्ययुक्तो भवति । तत्र सहृदय-हृदये गुणस्तथैवानन्दानुभूतिं कारयति यथा संभोगावसरे उदितः सुधांशु आनन्दं स्यन्दति । यथा—

**प्रस्तुतार्थोचितः काव्ये भव्यः सौभाग्यवान् गुणः ।**
**स्यन्दतीन्दुरिवानन्दं संभोगावसरोदितः ॥** (औ०वि०च० १४)

अनेन प्रकारेण क्षेमेन्द्रः रससिद्धकाव्यस्य जीवितभूतौचित्यस्य पद-वाक्य-प्रबन्धस्य गुणालङ्कारादिषु सर्वेषु काव्याङ्गेषु व्यापकं महत्त्वं मन्यते ।

क्षेमेन्द्रः अस्यौचित्यस्य नैकान् भेदान् करोतिस्म । तदौचित्यञ्च सप्तविंशतिः पद-वाक्य-प्रबन्धार्थ-गुण-अलङ्कार-रस-क्रिया-कारक-लिङ्ग-वचन-विशेषण-उपसर्ग-निपात -काल-देश-कुल-व्रत-तत्त्व-सत्त्व-अभिप्राय-स्वभाव-सारसंग्रह-प्रतिभा-अवस्था-विचार-नाम-आशीर्वाद संज्ञकानि तानि । किन्तूपलक्षणमिदम् । संभवन्ति सम्भवन्त्यनन्तभेदाः । यथा च क्षेमेन्द्रः स्वयमेव—अन्येष्वपि काव्याङ्गेस्वनयैव दिशा स्वयमौचित्यमुत् प्रेक्षणीयम्। तदुदाहरणानि आनन्त्याञ्च प्रदर्शितानि अलमति प्रसङ्गेन । तत्त्वादीनि

आशीर्वादान्तानि औचित्यानि क्षेमेन्द्रप्रतिभाविलासमात्राभि: । शिष्टानि तु पूर्वाचार्यै: प्रदर्शितान्येव । किन्तु सर्वत्र नवीनदृष्टिप्रक्षेप: क्षेमेन्द्रस्याभिनयं योगदानमस्ति । तेनैव कथितम्—

**'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ।'** (औ०वि०च०)

अस्यौचित्यस्य निर्वाह एव रसस्य मूलम् । प्रसिद्धं यदौचित्यं तस्य बन्धो योजनन्तु पुन: रसस्य परोत्कृष्टा उपनिषत् प्रकाशनोपाय: । अतएव च भारते प्रबन्ध-प्रख्यात वस्तु विषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्त्तव्यतयोपन्यस्तम् । तथात्वे तन्माहात्म्य प्रकर्षेणानौचित्य प्रत्याभावादिति रसभङ्गाभाव इति । कविकल्पिते चेति वृत्तिऽनौचित्यात् रसभङ्गजनकत्वं भविष्यत्येव । अतस्वत् समुपदष्ट: कवि: ग्रन्थकृता चेति ।

यथा चोक्तम्—**'प्रसिद्धौ चित्यबन्धस्तु रसस्योपनिषत्पण'** (तत्रैव)

सर्वमुपरिष्टात् दर्शितमौचित्यम् एव कल्प्यते रसाय । अतस्तत्र कविना सावहितेन भाव्यम् । वक्त्यतिरिक्तं चानौचित्यम् । तदेव च रसभङ्गस्य कारणम्, यथाङ्गख्याति विस्तार: अङ्गिनोऽननुसंधानमनङ्गकीर्त्तनं प्रकृतिविपर्यय: । अतएव प्रबन्धौचित्यं समाश्रयणीमेव अतथात्वेऽनौचित्यम् । तदेव रसभङ्गस्य कारणम् । यथा च ध्वनिकार: —**'अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम्'** पण्डितराजजगन्नाथस्तु **'अनौचित्यं तु रसभङ्गहेतुत्वात् परिहरणीयम् ।'** अत्रायं भाव:—अनौचित्यं रसास्वादोपयोगिपदार्थ-सार्थनिष्ठं तु शब्दोऽस्य प्रकारान्तर्भावं व्यवच्छिनत्ति । अनुचितानां वस्तुविषयाणां वर्णनं रसभङ्गस्य कारणं भवति । अतस्तत् सर्वथा त्याज्यमस्ति । अत्रेयं शब्दा समापतति यद्—रसस्तु न कोऽपि मूर्त्त: पदार्थो भवति तदा तस्यभङ्ग: कथमिति । अस्य सन्देहस्य निवृत्यै भङ्गपदस्य व्याख्यानं यथा—

**'भङ्गश्च पानकादिरसादौ सिकतादिनिपातजनितेवारुन्तुदता ।'**

यथा पानकादौ पात्रे वस्तूनि बालूकादिनिपतनेन विघातो जायते, तेनैव प्रकारेणरसास्वादे विघात: रसस्य भङ्गो भवति । अत्र विशेषेण ध्यातव्यम्—अनौचित्य परिहारेऽपि विशेषेण बोधव्यं यद् यावता अनौचित्येन रसस्य पुष्टिर्भवति तावता अनौचित्यस्य परिहार: कर्त्तव्य: । यतोहि यदनौचित्यं रसप्रतिकूलं भवेत् तस्यैव निषेध: समुचित: ।

अनेन प्रकारेणाचार्य: क्षेमेन्द्रो व्यवस्थितं रूपंमौचित्यस्य प्रदर्शयामास काव्यशास्त्रे। किन्तु क्षेमेन्द्र एव औचित्यस्य गवेषको नास्ति । आनन्दवर्धन-भरतमुनिभ्यामाचार्य: क्षेमेन्द्र: स्वसामग्र्या: सङ्कलनमकरोत् । क्षेमेन्द्रोप्रदर्शिता: समे औचित्यभेदा: ध्वन्यालोकेऽपि विद्यमाना: सन्ति । अलमति पल्लवितेन अनया सुधीभिरन्यदप्यूह्यम् ।

# काव्यस्य वर्गीकरणम्

आधुनिक-ग्रन्थानामिव प्राचीनग्रन्थेष्वपि काव्यस्य वर्गीकरणमपि त्रिविधं भवति । तद्यथा—महाकाव्यम्, गेयकाव्यम्, दृश्यकाव्यञ्चेति । काव्यस्य वर्गीकरणम् विभिन्नदृष्ट्यै वाकार्षीत् । प्रथमतः दण्ड्याचार्यः गद्य-पद्य-मिश्रभेदेन त्रिविधं काव्यमुच्यते । काव्याय गद्य-पद्यादि बाह्यस्वरूपस्य बन्धनविषये आङ्ग्लसाहित्यकारेषु मतभेदाः सन्ति । तथाऽपि प्रो० मोल्टन् प्रभृतयः विद्वान्सः काव्याय पद्यस्यावश्यकता स्वीकुर्वन्ति । सर्वे संस्कृतालङ्कारिकाः काव्याय पद्यस्यैकान्तावश्यकतायाः औचित्यं न विदन्ति । एतदन्तं वामनादयोऽपि प्रोच्यन्ते—**'गद्यं कवीनां निकषं वदन्ति'** (का०सू०वृ०, १,३,२१)

अन्याचार्यमतेन द्विविधं काव्यम्—लौकिकं वैदिकञ्चेति । तत्र वैदिकं वेदब्रह्मणादि ईश्वरप्रोक्तम् । लौकिकं तु नीरन्ध्रितबुद्धिधारयाऽप्तजनैरवलोकितं रामायणमहाभारतादिः । तदपि चतुर्धा गद्यपद्यविभेदेन । यथोक्तम्—

**'वैदिकं लौकिकं चेति द्विविधं काव्यमुच्यते ।**
**गद्य पद्य विभेदेन तच्चतुर्धा व्यवस्थितम् ॥'**

तत्र गद्यमपि त्रिप्रकारकं भवति—वृत्तगन्धि चूर्णमुत्कलिकाप्रायञ्चेति । इति वामनाचार्यः । दण्ड्याचार्यस्तु पद्यमथ काव्यस्य सर्गबन्धः अथवा महाकाव्य-मुक्तक-कुलक (पञ्चश्लोकी)-कोष-सङ्घात (परस्परा सम्बद्धश्लोकानां संग्रहः) पञ्चप्रकारकान् भेदान् स्वीक्रियते । गद्यस्य कथा आख्यायिका-चम्पू' इति त्रिप्रकारकाणां गणना कृतवानस्ति । मिश्रकाव्ये नाटकस्य तथाऽन्यप्रकाराणामन्तर्भावो भवति । दण्डिना काव्यं संस्कृत-प्राकृत-अपभ्रंशेषु विभाजितः, यावत् रुद्रटोऽपि (२,३१) संस्कृत-प्राकृत-मागध-पिशाच-शूरसेन-अपभ्रंशान् षड्भेदानकरोत् । अनेनैव कथितः सम्पूर्णकाव्येषु नाटकमुत्तममस्ति संदर्भेषु दशरूपकं श्रेयः (१.३.३०) । हेमचन्द्रोऽपि (का० ल० अ० ८) काव्यं द्विविधं प्रेक्ष्यं श्रव्यञ्चेति प्रोक्तवान् । प्रेक्षस्य पाल्यम् गेयञ्च भेदद्वयं प्रदर्श्यानेकानुपभेदान् कृतवान् । श्रव्यमपि महाकाव्य-आख्यायिका- कथा-चम्पू-अनिबद्धेषु विभाजितः कृतवान् । अनेन भाषादृष्ट्या काव्यस्य संस्कृत-प्राकृत-अपभ्रंश तथा ग्राम्यापभ्रंशभेदेन विभाजितः । कथानामकस्य काव्यभेदस्य आख्यान-निदर्शन-प्रह्वलिका-मतल्लिका-मणिकुल्या-परिकथा-खण्डकथा-सकलकथा उपकथादयः उपभेदाः कृतास्तेन ।

अथ सामान्ये ज्ञाते विशेषजिज्ञासोदयात् अपरमपि काव्यभेदाः अपि दर्शनीयाः सन्ति । तत्र मम्मटाचार्येण—पद्य काव्यमपि त्रिविधम् उत्तममध्यमाधमभेदात्—

उत्तमकाव्यम्—उत्तमकाव्यं परिभाषयन् लिखति तत्र भवान् मम्मटः काव्यप्रकाशे

**'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्यात् ध्वनिर्बुधैः कथितः'** (का०प्र० १,४)

इदं पदमत्र काव्यपदपरामर्शकं प्रकृतविषयत्वात्, वाच्यात्, अभिधावृत्ति-प्रतिपाद्यादर्थादव्यङ्ग्ये व्यञ्जनावृत्तिप्रतिपाद्यर्थे, अतिशयिनि अधिकचमत्कारजनके सति, तदेव बुधैः वैयाकरणैः ध्वनिपण्डितैश्च ध्वनिः कथितः । वाच्यार्थापेक्षया व्यङ्ग्यार्थ-स्याधिकचमत्कारित्वे उत्तमं ध्वनिर्नाम काव्यम् । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावित-वाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्येति । प्रधानीभूतस्फोटस्य यथा शब्दार्थयुगल-रूपकाव्ये ध्वनिर्व्यवहार इति तात्पर्यमिति । यथा—

**निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोधरो,**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीड़ागमे,**
**वापीं स्नातुमिता गतासि न पुनस्तस्याधमस्यान्तिके ॥**

(का०प्र० १,२ पृ० १५)

नायकमानेतुं प्रेषितां तमुपभुज्य प्रतिनिवृत्तां दूतीं प्रति स्नानकार्यप्रकाशनमुखेन सम्भोगं प्रकाशयन्त्या विदग्धनायिकाया उक्तिरियम् ।

हे मिथ्यावादिनि ! तदन्तिकमगत्वैव 'मया बहुधा प्रसादितोऽपि' नागत इति । इत्थं विदग्धाया गूढतात्पर्ययाऽनया वाचोयुक्त्या स्नानसाधारण्येनैव सर्वेष्वर्थेषु वक्तृबोधव्यादि वैशिष्ट्यबलात् दुःखप्रयोजककर्मशीलत्वरूपाधमपदार्थघटककर्म पदार्थो वाच्यता दशायां कर्मान्तर-साधारण्येनावस्थितोऽपि व्यञ्जनयादूतीसंभोगरूपेण पर्यवस्यति । इतरानपेक्ष झटिति व्यङ्ग्यार्थबोधकत्वात् अधमपदस्यात्र प्राधान्यम् व्यङ्गार्थस्य वाच्यार्थाधिक्यचमत्कारितयैव ध्वनिर्नामोत्तमकाव्यस्येदमुदाहरणम् । अत्र विप्रलम्भशृङ्गाररस प्रतीतिश्च काव्यत्वप्रयोजकेति ।

नन्वत्र विपरीतलक्षणैव न व्यङ्ग्यम् इति केचित् । किन्तु, बाधाभावान्न लक्षणा । अत्र तु अधमपदार्थपर्यालोचनया व्यङ्ग्यं प्रतीयत एव । तस्मात् 'साहेन्ती; इत्यादौ यदि व्यञ्जना तदालक्षणामूलैव । वापींस्नातुमित्यादौ तु न नियमः ।

**मध्यम-काव्यम्**

काव्यस्योत्तममध्यमाधमभेदेन त्रैविध्ये सिद्धे गुणीभूतापरनामधेयस्य मध्यमकाव्यस्य स्वरूपमाह—**'अतादृशिगुणीभूतव्यङ्ग्यं व्यङ्ग्ये सति मध्यमम्** (का०प्र० १. उ० पृः १८) । अतादृशि वाच्यादनतिशायिनी व्यङ्ग्यं सति मध्यमं काव्यमुच्यते शास्त्रकारै-रिति । व्यङ्ग्यार्थे वाच्यादनतिशायिनि, अर्थात् वाच्यापेक्षयाऽतिशयितचमत्कारानाधायके सति मध्यमं काव्यं भवति । तदेवगुणीभूतव्यङ्ग्यमितिबुधैः कथितम् । व्यङ्ग्यस्य

वाच्यादनतिशयश्च न्यूनत्वेन तुल्यत्वेन चेति द्विविधः । तत्राद्यं यथा—

**ग्रामतरुणं तरुण्या नव वञ्जुल मञ्जरी सनाथकरम् ।**
**पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥**

(का०प्र० प्र० उ० श्लोक ४)

अत्र वञ्जुललतागृहे दत्तसंकेता तरुणी नागतेति व्यङ्ग्यम् । अर्थात् नववेतसमञ्जरीमण्डितकरं ग्रामतरुणं मुहुः पश्यन्त्यास्तरुण्याः मुखकान्तिः मलिना भवतीति वाच्यार्थः । व्यङ्ग्यार्थस्य दत्तसंकेता काचिदुपनायिका तत्र नागतासि । उपनायकश्च सम्प्रति; एव वञ्जुललता संकेतस्थाने गत्वा प्रतिनिवृत्तश्च इति, नव इति पदेन 'मञ्जरीसनाथकरम्' इतिपदेन च व्यज्यते । इदञ्च व्यङ्ग्यम् 'वारं वारं ग्रामतरुणं पश्यन्त्या तरुण्याः मुखकान्तिर्मलिना भवति' इति वाच्यार्थात् नातिरमणीयम् । वाच्यस्यैवाधिकचमत्कारित्वात् । अतोऽत्र व्यङ्ग्यमेव गुणीभूतम् । यतो ह्यत्र व्यङ्ग्येन सङ्केतभङ्गेन वाच्यमुखमालिन्यातिशयरूपानुभाव मुखेनैव विप्रलम्भाभासपोषणं न केवलं न सङ्केतभङ्गस्याकर्त्तव्यबुद्ध्याऽपि सम्भवादिति तदनतिशयित्वं व्यङ्ग्यस्य । तुल्य प्राधानस्योदाहरणं यथा—

**ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।**
**जामदग्नयस्तथा मित्रमन्यथादुर्मनायते ॥**

(का०प्र० ५ उ० श्लो १३१)

अत्र जामदग्न्यः क्षत्रियाणामिव रक्षसामपि क्षयं करीष्यतीति दण्डरूपं व्यङ्ग्यमिव भूत्योपदेशो मित्रत्वाभिधानरूपं सामोपायात्मकं व्याच्यमपि प्रधानमेव विग्रहवत् सन्धेरपि अनर्थनिवारकत्वेन विवक्षितत्त्वादिति भावः । अतो नात्र ध्वनिः किन्तु गुणीभूतव्यङ्ग्य-मेवेति ।

**अधमकाव्यम्**

स्फुट प्रतीयमानार्थरहिते सति अधमं काव्यम्भवति । तदेव च चित्रमित्यभि-धीयते । काव्यमिदं परिभाषयन्मम्मटभट्टेनोक्तम्—

**'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ।'**

(का०प्र० १.५ पृ० १९)

अत्र चित्रमित्यध्याहार्यम् । तेनाव्यङ्ग्यं काव्यमवरमधमम् । तच्चचित्रं द्विविधम्-शब्दचित्रम् वाच्यचित्रं चेति । गुणालङ्कारयुक्तम् । अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थ-रहितम् । अत्र गुणशब्दः गुणाभिव्यञ्जकशब्दार्थपरमत्र । तत्र शब्दचित्रं यथा—

**स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा**
**मूर्च्छन् मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नायवः ।**
**भिद्यादुद्यदुहारदर्दुरदरीदीर्घादरिद्रद्रुम-**
**द्रोहोद्रेक महोर्मिमेदुरमदामन्दाकिनी मन्दताम् ॥**

इदं शब्दचित्रस्योदाहरणम् । वृत्यनुप्रासोऽत्र शब्दालङ्कारः । ननु कथमेतदव्यङ्ग्य-मुच्यते ? मन्दाकिनी विषयायाः प्रीतेरभिव्यक्तेः ? किञ्च नास्त्येव स काव्यार्थो यस्य न व्यञ्जकत्वमन्ततो विभावत्वेनादेति चेत्सत्यम् । किन्तु, तद् व्यङ्ग्यमस्फुटतरम् । यद्वा तत्र न कवेः तात्पर्यम् । अनुप्रासमात्र एव तस्य सम्भवात् । तात्पर्यविषयीभूत-व्यङ्ग्यविरहत्वमेव चाव्यङ्ग्यपदेन विवक्षितम् ।

शब्दचित्रमिदं स्पष्टतः प्रतिभात्येव । प्रथमपादे छकारस्य, द्वितीयपादे महर्षि हर्षेत्यस्य, अह्निकाह्लादयेत्यस्य च तृतीय चतुर्थपादयो दकारस्य, मन्दमन्देत्यस्य चानुप्रासः शब्दालङ्कारः । यद्यप्यत्र मन्दाकिनी विषयो रत्याख्यो भावस्तीर्थान्तरा-धिक्यवर्णनात् व्यत्तिरेकालङ्कारश्च व्यङ्ग्योऽस्ति, तथाप्यनुप्रासे कवेस्तात्पर्यात् स तिरोधीयते, उद्भटानुप्रासचमत्कारेण व्यङ्ग्यस्याच्छादनात् इतिभावः । अतएवाव्यङ्ग्यमिदं काव्यमिति स्पष्टैव । अनुप्रासशब्दालङ्कारश्चमत्कारी तस्य शब्दचित्रताऽपि स्पष्टतयैव । अस्मिन् प्रसङ्गे ध्वनिकारः आनन्दवर्द्धनस्याऽपि मतं दर्शनीयम्—

**रसभावादिविषयविवक्षाविरहे सति ।**
**अलङ्कारनिबन्धो यः स चित्रविषयोमतः ॥**
**रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा ।**
**तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः ॥**

(ध्व०लो० तृ०उ० प्र० ५३८)

**अर्थचित्रञ्च (वाच्यचित्रं वेति)**

**विनिर्गतं मानदमात्ममन्दिरात् भवदुपश्रुत्य सदृच्छयाऽपि यम् ।**
**ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलताक्षीव भियाऽमरावती ॥**

(का०प्र० १ उ० श्लो० ५ पृ० २१)

अत्र नायिकेन्द्रभयप्रदर्शनप्रभूतममरावतीस्त्रीभयमपि वीररसोपकृदित्यस्यालङ्कारत्वं बोध्यम्, निमीलताक्षीवेत्युत्प्रेक्षार्थालङ्कारश्चमत्कारीति वाच्यचित्रता । उत्प्रेक्षायां कवेस्ता-त्पर्यात् सन्तोऽपि वीररसादयो व्यङ्ग्यास्तिरोधीयन्ते इत्यव्यङ्ग्यमिदं काव्यम् । ननु कथमुत्प्रेक्षायां कवेस्तात्पर्यम्, कथं वा वीररसादयो व्यङ्ग्यास्तिरोधीयन्ते इति चेत् - ननु हयग्रीवस्यालम्बनस्याप्रतिपक्षेन्द्रभयस्योद्दीपनस्य शत्रुमान खण्डनस्यानुभावस्य यदृच्छाचरणव्यङ्ग्यायाः धृतेः सञ्चारिण्याश्च सत्त्वेन हयग्रीवस्य वीररस एव हयग्रीव-विषयकभावो वा व्यङ्ग्य इति कथमव्यङ्ग्यस्योदाहरणमिदमिति चेन्न । वध्यत्वेनोप-निबध्यमाने तदुभयानवभासात् । अलङ्कारमात्रपरामर्शाधीनचमत्कारेण हीनोदाहरणताऽस्य सम्भवाच्चेति सर्वमवदातम् ।

मतान्तरे तु—

साहित्यदर्पणकृता महापात्रविश्वनाथेनोक्तम्—काव्यं द्विविधम्—ध्वनि काव्यम् गुणीभूतव्यङ्ग्यञ्च ।

यथा— **'काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्विधा मतम्'**

तत्र— **वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुच्यते ॥**

(सा०द०च०प० पृ०२३९)

वाच्यापेक्षयाधिकचमत्कारिणि व्यङ्ग्ये ध्वनिर्नामोत्तमं काव्यं भवति । ध्वनिस्तु ध्वनति व्यञ्जनया रसादीन् प्रत्याययतीति ध्वनिः शब्दार्थसमुदाय इत्यर्थः । वस्त्वलङ्कारध्वन्योः काव्यघटकत्वाभावेऽपि काव्योत्कर्षतया तद्व्यञ्जकशब्दार्थयोर्ध्वनित्वमवगन्तव्यम्, अन्यथा वक्ष्यमाणध्वनिकाव्यप्रकारसंख्यानुपपत्ते । यद्यपि गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्ति सम्भवेऽपि ध्वनिपदस्य निरुक्तरूढिसापेक्षत्वात्र तत्र व्यवहारः । श्रीकृष्णमोहनठक्कुरस्य लक्ष्मीटीकायां ध्वनिः परिभाषयन् कोऽपि—

वाच्यविशिष्टवाच्यत्वं ध्वनित्वम् । वैशिष्ट्यञ्च स्वतादात्म्य-स्वविशिष्टार्थविषयकज्ञानजनकत्वचमत्काराधिकचमत्कारजनकव्यङ्ग्यार्थप्रतिपादकत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वशक्तिलक्षणान्यतरसम्बन्धेनेति सुधीभिरालोचनीयम् ।

काव्यात्मभूतस्य ध्वनेर्भेदप्रदर्शनेनैव ध्वनिकाव्यप्रभेदान् दर्शयति—

**भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।**
**अविवक्षितवाच्योऽन्यौ विवक्षितान्यपरवाच्यश्चेति ॥'**

(सा० द० श्लो० २, परि ४)

अविक्षितवाच्यस्य द्वौ भेदौ—अर्थान्तर संक्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च । विवक्षितान्यपरवाच्योऽपि द्विविधः—असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्चेति । आद्योऽसंलक्ष्यक्रमव्यङ्ग्यः रसभावादिरेक एवात्र गण्यतेऽलङ्कारशास्त्रे । द्वितीयः संलक्ष्यक्रमश्च त्रिविधः—शब्दशक्त्युद्भवः, अर्थशक्त्युद्भवः, शब्दार्थोभय शक्त्युद्भवश्चेति । ध्वनिकारमतेध्वनिर्द्विविधः—अविवक्षितवाच्यः विवक्षितान्यपरवाच्यश्चेति । तत्राद्यस्य द्वौ भेदौ—अर्थान्तरसङ्क्रमितवाच्यः, अत्यन्त तिरस्कृतवाच्यश्चः । द्वितीयोऽपि द्विधा-असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति । यथोक्तम्—

**अर्थान्तरेसंक्रमितमत्यन्तं वा तिरस्कृतम्**
**अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधामतम् ।**
**असंलक्ष्यक्रमोद्योतः क्रमेण द्योतितापरे,**
**विवक्षिताभिद्येयस्य ध्वनेरात्मा द्विधा मतः ॥**

(सा०द०च०परि०)

अलमतिविस्तरेणेति ।



# काव्य-दोषाः

काव्यशास्त्रसम्बन्धिषु ग्रन्थेषु विषयोऽयमतीव महत्त्वपूर्णोऽस्ति । कवित्वस्याभावः कस्याऽपि प्रकारकस्याधर्मोनास्ति । नैव तद्रोगः, न च कवित्वशून्यजनः दण्डनीयो भवितुं शक्यते । किन्तु, ज्ञानवतां जनानामनुसारेण कुकवित्वं मृत्युतुल्यं भवति । काव्यादर्शानुसारेण काव्यगतास्वल्पाऽपि त्रुटिरक्षम्या भवति । त्रुटिरियं सष्ठुशरीरोपरि कुष्टमिवारुचिकरो भवति । यथाह—'स्याद्वपुः सुन्दरमपि खिलेणैकेन दुर्लभम्' । (काव्यादर्शः १, ७) । भरतेन दश-दोषाणामुलेखः कृतः । (१७, ८८, भाग २, पृ० ३३१) । दण्ड्याचार्यस्तु दशदोषाणामेवोल्लेखः कृतवानस्ति किञ्च भामहेनैकादशदोषाणामुल्लेखः कृतः । किन्तु तेन पद-वाक्य-वाक्यार्थसम्बन्धिनः दोषाणां भेदाः वैज्ञानिकदृष्ट्या न कृताः । वामनस्य भेदाः समुचिताः सन्ति । मम्मटादयोऽप्यन्योत्तरवर्त्तिनः लेखकाः एतान् भेदानेव स्वीकृतवन्तः । दोषसामान्यलक्षणमाह मम्मटाचार्येण—

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥**

(का०प्र० उ० ७, श्लो० ४९)

मुख्यार्थस्य हतिः अर्थात् अपकर्षो यस्मात् सदोषः अत्र व्यधिकरणत्वेऽपि गमकत्वात् बहुब्रीहिः । करण साधनो हतिशब्द इत्येके । मुख्यत्वमर्थस्य न शक्यत्व लक्षणम् । येनार्थासङ्गतिः स्यात् । किन्त्वन्यदित्याह—रसश्च मुख्य इति । रस्यन इति व्युत्पत्या रसशब्देन भावादिरप्युपसंगृह्यते ।' इति काव्यप्रदीपे ।

नन्वेवं नीरसेषु न कश्चिद्दोषः स्याद् विघातस्यार्थादपकर्षणीयस्य रसस्य अभावादिति चेन्न, तदाश्रयाद्वाच्यः । तथा च तेन रसेन, आश्रयणात् उपकारकतया-ऽपक्षणात् वाच्यः शब्दबोध्यः, वाच्यलक्ष्यव्यङ्ग्यरूप इत्यर्थः, मुख्य इति सम्बन्धः ।

एवं चोद्देश्य प्रतीतिविघातकत्वं दोषत्वम्, इतिदोषसामान्यलक्षणम् । नित्यानित्यरूपेण स द्विविधः । हेयस्तत्र सदैव नित्यो यथाच्युतसंस्कृतित्वम्, अनित्यस्तुतदन्यः । शृङ्गारादौ हेयमपि श्रुतिकटुरौद्रादौ उपादेयत्वमेव । अयं हि दोषः नित्यानित्यरूपेण द्विविधोऽपि त्रिविधः—शब्ददोषोऽर्थदोषो रसदोषश्चेति । तत्र शब्ददोषान्—

**दुष्टं पदं श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।**
**निहितार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥**

**संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥**

(का०प्र० ७.५०,५१)

तद्यथा—श्रुतिकटुत्वम्, च्युतसंस्कृतित्वम्, अप्रयुक्तत्वम्, असमर्थत्वम्, निहितार्थत्वम्, अनुचितार्थम्, निरर्थकत्वम्, अवाचकत्वम्, अश्लीलत्वम्, सन्दिग्धत्वम्, अप्रतीत्वम्, ग्रामत्वम्, नेयार्थत्वम्, क्लिष्टत्वम्, अविमृश्यविधेयांशत्वम्, विरुद्धत्वञ्चैते षोडशशब्ददोषाः भवन्ति ।

काव्यप्रकाशकृतार्थदोषानाह—

**अर्थो पुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥**
**संदिग्धो निर्हेतुः प्रसिद्धविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥**
**साकांक्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादा युक्तस्त्यक्तपुनः स्वीकृतोऽश्लीलः ॥**

(का०प्र० ७.५५-५७)

इमे त्रयोविंशतिविधाः अर्थदोषाः भवन्ति । एवञ्च रसदोषाः—

ये साक्षाद्रसमपकर्षयन्ति ते रसदोषाः । साक्षात् रसापकर्षकत्वं रसदोषत्वमिति भावः । रसदोषोऽत्र रसाभासादीनामपि उपलक्षणम् । ते च रसदोषाश्चतुर्दश भवन्ति यथा—

**व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।**
**कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥**
**प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।**
**अकाण्डे प्रथनच्छेदावङ्गस्याऽपि अतिविस्तृतिः ॥**
**अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः ।**
**अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥**

(का० प्र० ७.६०-६२)

विश्वनाथस्य साहित्यदर्पणप्रथमपरिच्छेदे परमतकाव्यलक्षणखण्डनप्रसङ्गे प्रागुपदेशोऽयं दोषविषये विचारणीयः—**एवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसंभवात्** (१, २) । अस्मिन् प्रसङ्गे कुमारिलभट्टस्याऽपि पूर्वप्रतिबोधोऽप्ययं ध्यातव्यः—

**न चाप्यतीव कर्त्तव्यं दोषदृष्टिपरं मतः ।**
**दोषोप्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥**

उक्तिरियं अर्जुनवर्मदेवेन अमरुकशतके एवं व्यक्तिविवेककारेणाऽपि उद्धृतोऽस्ति। दोषाणां विषये विश्वनाथेनोक्तं साहित्यदर्पणे—

'दोषाः' पुनः काव्ये किं स्वरूपाः ? इत्युच्यन्ते—

**'दोषास्तस्यापकर्षकाः'** (सा० द० १.२)

दोषास्तस्य काव्यस्यापकर्षका रसाद्यपकर्षोत्पादनद्वारापकर्षोत्पादकासन्तोवर्त्तन्त इति। तद्यथा काणत्वखञ्जत्वादयः शरीरधर्मा इति साक्षात् सम्बन्धेनात्मानमपकर्षयितुमसमर्थाः भवन्ति, अतस्ते यथा शरीरद्वारेण स्वाश्रयाश्रिततत्त्वरूपपरम्परासम्बन्धेनात्मानमपकर्षयन्ति तथा काव्यस्य शरीरभूतयोः शब्दार्थयोःऽर्थेधर्माः श्रुतिदुष्टत्वादयस्ते साक्षात्सम्बन्धेन रसादीनपकर्षयितुमसमर्था भवन्त्यपि शब्दार्थद्वारेण स्वाश्रयाश्रिततत्त्वरूपपरम्परा सम्बन्धेन रसादीनपकर्षयन्ति । अपिच यथात्मगता मूर्खत्वादयः साक्षात् वृत्तितावच्छेदक समवायसम्बन्धेनैवात्मानमपकर्षयन्ति, तथा रसादिगता व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो दोषाः साक्षात् वृत्तितावच्छेदकस्वरूपसम्बन्धेनैव रसादीनपकर्षयन्तीति तात्पर्यम् । रसमपकर्षयन्तो रसस्य न्यूनत्वं बोधयन्तः । तथा सति रसस्योत्कर्षेण काव्यस्योत्कर्षः, रसस्यापकर्षेण च काव्यस्यचापकर्ष इति ।

पण्डितराजजगन्नाथोऽपि रसगङ्गाधरस्य द्वितीयानने प्रसङ्गप्राप्तान् उपमादोषान् व्याख्यातुमुपक्रमते; यथा—

'अथास्याश्चमत्कारस्यापकर्षकं यावत्तत्सर्वमपि दोषः । कविसमयप्रसिद्धिराहित्यम्, उपमानोपमेययोर्जात्या प्रमाणेन लिङ्गसंख्यायां चाननुरूप्यं विम्बप्रतिबिम्बभावे धर्माणामुपमानोपमेयगतानां न्यूनाधिकत्वम्, अनुगामितायामनुपपद्यमानकालपुरुषविध्याद्यर्थकत्वम्, एवमादि ।'

अत्रायमाशयः—चमत्कारस्यापकर्षकत्वमेव सामान्यरूपेण पण्डितराजमते दोष इति कथ्यते । अतः यानि वस्तूनि—उपमायाश्चमत्कारापकृष्टजनकानि भविष्यन्ति, तानि सर्वाणि उपमायाः दोषस्वरूपाणि भवन्ति । तत्प्रकारकान्यनेक वस्तूनि भविष्यन्ति । यथा—सर्वप्रथमं कवीनां सिद्धान्तेषु यद्वस्तु यस्मिन् रूपे प्रसिद्धं नास्ति, तस्य तद्रूपे उल्लेखः । अपरञ्चोपमानोपमेययोः जातिप्रमाण-लिङ्गसंख्याभिश्च परस्परमनुरूपताया अभावः बिम्ब-प्रतिबिम्बभावापन्नेषु धर्मेषु-उपमानोपमेययोः धर्माणां न्यूनाधिकरूपेण संस्थितिः, साधारणधर्मस्य चानुगामिनि सतिकालपुरुषविध्याद्यर्थानामनुपपन्नता । अर्थात् एवंभूतायाः क्रियाया अनुगामित्वं यस्य कालपुरुषाद्युपमानोपमेययोरंशे सङ्गतो न भवेत् । एते सर्वे चमत्कारापकर्षकत्वादुपमायाः दोषाः सन्ति ।

दोषाणां विषये डॉ० राघवनसम्पादिते शृङ्गारप्रकाशस्य प्रथम भागे पृ० २१६-२५७ तथा डॉ० कृष्णमूर्त्ति महोदयस्य रससिद्धान्तोपरि निबन्धः I.H.Q. विंशतितमेभागे पृ० २१७-२३२ द्रष्टव्यः ।

### काव्यशास्त्रोपरि अन्यशास्त्राणां प्रभावः

काव्यशास्त्रोपरि व्याकरणशास्त्रस्य सर्वाधिकप्रभावः परिलक्ष्यते । ध्वन्यालोकानुसारेण ध्वनिशब्दः वैयाकरणैः गृहीतोऽस्ति । स्फोटद्योतकस्य ध्वनिशब्दस्य प्रयोगस्तैस्तथैवकृताः यथा कवितायां शब्दद्वारेण ध्वनितार्थस्य व्यञ्जनकत्व साम्यादाभासो

मिलति । स्फोटस्तु एकः सर्वव्यापी, अमरः, अनश्वरश्च शब्दसिद्धान्तोऽस्ति । ध्वनि-वास्याभासो मिलति । वाक्यपदीयस्य प्रथमोऽयं श्लोकः—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्त्ततेऽर्थभावेन प्रक्रियाजगतो यतः ॥**

शब्दश्चाक्षरश्च भाषाव्यापार-विश्लेषणार्थप्रयुक्ताः पद्धतयो भवन्ति । यदा कोऽपि शब्दस्यैकस्योच्चारणं करोति तदा तस्यान्तिमाक्षरेऽस्य पूर्वागताणामक्षराणां संस्कारस्यापि समावेशो भवति । एतैः संस्कारैरमाकं मनसि भावस्योद्गमो भवति । अतोऽयं भावः शब्दः प्रचक्षते । तथाहि—

**पदेन वर्णा विद्यन्ते वर्णेष्ववयवा इव ।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥** (वा० प० १.७३)

अन्यच्च—

**नादैराहितबीजायामन्त्येन ध्वनिना सह ।**
**आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥** (वा० प० १.८६)

अस्मिन् प्रसङ्गे जयन्तभट्टकृत-न्यायमञ्जर्याः षष्ठाह्निके तथा वाक्यपदीयस्य प्रथममात्रे एवं शब्दकौस्तुभोऽपि द्रष्टव्यः ।

नादः अथवा ध्वनिस्तु अभिव्यञ्जको भवति स्फोटस्तु अभिव्यङ्ग्यः । लोचनेऽपि वाक्यपदीयस्य कतिपय-श्लोकाः उद्धृताः सन्ति । 'व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्गाह्याः स्फोटभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः ।' स्फोट-सिद्धान्तोऽयमतीव प्राचीनोऽस्ति । पाणिनिना स्फोटायन-नामकस्य कस्याऽपि पूर्ववर्त्तिनः उल्लेखः कृतोऽस्ति 'अवङ्स्फोटायनस्य' (पा० ६.१.१२३) । महाभाष्ये 'शब्दोनित्योऽथवा कार्यः' प्रसङ्गेऽस्मिन् चर्चाप्यस्ति । व्याडिसङ्ग्रहे मुख्यतोऽस्य विवेचनमस्ति—'सङ्ग्रहे प्राधान्येनैतत्परीक्षितम्, नित्यो वा स्यात् कार्यो वेति ।' श्रीमद्भागवतपुराणानुसारेण (१२.६.४०) 'स्फोट एव ब्रह्म' । काव्यप्रकाशेऽपि उल्लेखोऽयं मिलति 'सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।' (२, पृ० ३०) उक्तिरियं महाभाष्यस्य (भा० १, पृ० १९) 'चतुष्टयी' शब्दानां प्रवृत्तिः । उपरि आधारितोऽस्ति । काव्यप्रकाशे द्वितीयोल्लासस्य द्वात्रिंशत्पृष्ठे—'उक्तं हि वाक्य-पदीये—'नहि गौः स्वरूपेण गौर्नाप्य गौः, गोत्वाभिसंबन्धात्तु गौः ॥' अर्थात् गौः स्वरूपेण न गोव्यवहारस्य, नाप्यगोव्यवहारस्य विषयः' इति । भामहस्य (६.२१) मतमप्येतदोपरि आधारितोऽस्ति । काव्यप्रकाशस्यैव द्वितीयोल्लासे त्रयः षष्टितमे पृष्ठे वाक्यपदीयान्निम्नोद्धरणं सङ्गृहीतमस्ति—

**संयोगोविप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥**
**सामर्थ्यमौचितीदेशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥** (का०प्र०, पृ० ६३)

उक्तिरियं तच्छब्दस्यार्थनिर्धारणे सहायकः सिद्धो भवति यस्य निर्देशः एकाधिकार्थम्प्रति भवति । भामहः (२.३३ वतिनामपि क्रियासाम्यम्), उद्भटोऽपि १, १५ का०, मम्मट-विश्वनाथावपि उपमायारुपभेदेभ्यः व्याकरणनियमस्यैवानुसृतवन्तौ । अनेन प्रकारेण—

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेन दृष्टिर्निष्फलताङ्गतः ॥**

(का०प्र० १०.४१७, पृ० ४६०)

मुख्यतः श्लोकोऽयं मृच्छकटिकस्य प्रथमाङ्कादुधृतोऽस्ति । अत्र भ्रमातिशय-कारकत्वसकलवस्तुमलिनीं करणत्वादिनिमित्तम् । अत्रोत्प्रेक्षैव । तिङन्तसमभिव्याहृतेव-शब्दस्य संभावनाबोधकत्वात् । क्रियोपसर्जनस्य कर्त्तुरन्यत्रान्वययोगात् । सन्सूत्रभाष्ये चेदं स्पष्टीकृतमस्ति । श्लोकस्यास्य विवेचनं कुर्वन् दण्डिना प्रोक्तम्—

**कर्त्तायद्युपमानं स्यात्न्नयग्भूतोऽसौ क्रियापदे ।**
**स्वक्रिया साधनव्यग्रोनालमन्यद्व्यपेक्षितुम् ॥ इति ।**

तथाच तेन महाभाष्यस्य शब्दानामपि उल्लेखः कृतः । काव्यप्रकाशे कृता विभावनायाः परिभाषायाम्—**'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ।'**

वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम् । वस्तुतस्त्वत्र कारणप्रतिषेधे कार्य-वचनमत्र विभावना । पञ्चमाधिकरणे वामनेन ६.३०-६१ पृष्ठे भामहेन च शब्दानां व्याकरणजन्यशुद्धतायाः विवेचनं कृतमस्ति ।

तर्कशास्त्रे शब्दशक्तेर्विवेचनं भवति । आलङ्कारिकाः अभिधावृत्तिमातृका, शब्द-व्यापारविचारः, त्रिवेणिका, वृत्तिवार्त्तिकादि ग्रन्थेष्वस्य विषयस्यैव वर्णनं कृतवन्तः । आलङ्कारिकाः अनुमानमप्यलङ्कार एव मन्यन्ते । काव्यलिङ्ग-अलङ्कारस्तु तर्क शब्दावल्यापि ध्वनितो भवति । 'ध्वनिस्तु मानान्तर्गतमेवायाति' अस्य मतस्य स्थापनाय महिमभट्टेन व्यक्तिविवेकनामकस्य ग्रन्थस्य रचना कृता । एवं प्रतीतो भवति यत् शङ्कुकस्य मतानुसारेण रसोऽनुमेयोऽस्ति एवं विभावोऽनुमापकः । अयं प्रयतने स्म रसस्य सम्बन्धं सामाजिकेन साकं संस्थापयितुम् । अस्याचार्यस्य मतानुसारेण नटः कृत्रिमतया अनुभावादीनां प्रकाशनं करोति, किन्तु तेषां सौन्दर्यबलात् तेषु वास्तविकता प्रतीयते । तान् कृत्रिमान् अनुभावादिकानेवावलोक्य सामाजिकः अनुकर्त्तरि नटे वस्तुतोऽविद्यमानस्याऽपि रसस्यानुमानङ्करोति, स्ववासनापरतन्त्रस्वानुमितस्य रसस्या-स्वादनमपि करोति ।

सांख्यदर्शनस्याधिक प्रभावोऽस्मिन् शास्त्रोपरि न परिलक्ष्यते । भट्टनायकमते रस निष्पत्तौ व्यापारद्वयम्, भावकत्वव्यापारः, भोजकत्वव्यापारश्च । तत्र भावकत्वव्यापारेण रसः साधारणः क्रियते, भोजकत्वव्यापारेण च सा रतिः सहृदयैरास्वाद्यते । किन्त्वस्य वर्णनप्रसङ्गे सत्त्व-रज-तमो गुणानां बहुधा उल्लेखः समायाति । तथाहि—**'तत्-एव कापिलैर्दुःखस्य चाञ्चल्यमेव प्राणत्वेनोक्तं रजोवृत्तिं वदद्भिः ।'** (अभि०भा०, भा० १, पृ० २९७)

'पुरुषः भोक्ताऽस्ति नैव कर्त्तेति' सांख्यदर्शनस्यानेन सिद्धान्तेन भोगो वा भोगीकृतिरिति शब्दध्वनितो भवति ।

अलङ्कारशास्त्रस्य कतिपयसिद्धान्तः पूर्वमीमांसादर्शनादपि गृहीतोऽस्ति । काव्यप्रकाशस्य 'सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।' (का०प्र० २, पृ० ३०) मतमिदं पूर्वमीमांसायाः 'आकृतिस्तु क्रियार्थत्वात्' (जै० १.३.३३) मतेन तुल्योऽस्ति 'तात्पर्यार्थोऽपि केषुचित्' (का०प्र० २.६, पृ० २४) तथा—

**तात्पर्याख्यांवृत्तिमाहुः पदार्थान्वयबोधने ।**
**तात्पर्यार्थं तदर्थञ्च वाक्यं तच्द्बोधकं परे ॥**

(सा०द०, द्वि०परि०, श्लो० २०)

इत्यादिमतमपि अभिहितान्वयवादस्याधारः गृहीतमस्ति । इयमेव तात्पर्यवृत्तिराधुनिकैः संसर्गमर्थादोच्यते । अभिहितान्वयनादिनां पदैरूपस्थितानामर्थानान्वय इतिवादिनां भाट्टमीमांसकानां प्राचीननैयायिकानाञ्च मतम् । पदानि अन्वितानि भूत्वा पश्चात् तात्पर्यनामवृत्तिः । तदर्थश्च तात्पर्यार्थः । तद्बोधञ्च वाकयमित्यभिहितान्वयवादिनां मतम्। कुमारिलस्तथा पार्थसारथिमिश्रोऽपि न्यायरत्नमालायामभिहितान्वयवादस्याधारः अङ्गीकृता वान् । काव्यप्रकाशस्य द्वितीय एवं पञ्चमउल्लासेऽभिहितान्वयवादस्य तथा अन्विताभिधानवादस्योल्लेखो मिलति । काव्यप्रकाशे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति', यत्परः शब्दः सशब्दार्थः, (५, पृ० २२५-२२७) । एवंविधोल्लेखः समायाति । एतेषां विषयाणां विवेचनं पूर्वमीमासायामभवत् । (द्र० : जै० ३.८, १२)

**'ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।'** (१८)
**'प्रत्यक्षादेर्हि नीलादिर्विषयः । फलं तु प्रकटता संवित्तिर्वा ।'**

(काव्य०, द्वि० उ०, पृ० ५९)

इत्यादिशब्देषु प्रभाकरस्य कुमारिलभट्टस्य च सिद्धान्तानामभिव्यक्तिर्मिलति । साहित्यदर्पणस्य तथा अलङ्कारसङ्ग्रहस्य चानुसारेणार्थापत्तिरलङ्कारोऽस्ति । पूर्वमीमांसायामर्थापत्तिः प्रमाणमस्ति । पूर्वमीमांसायाः सुप्रसिद्धपारिभाषिकैकशब्दः परिसंख्याऽस्ति, शब्दमिमं रुद्रट-मम्मट-विश्वनाथादयः अलङ्काररूपेणैव स्वीकृतवन्तः ।

रसास्वादजन्यपरमानन्दस्य स्थितेर्वर्णनक्रमे चमत्कारचन्द्रिका-मन्दार-मन्दर-चम्पू-रसगङ्गाधरादिषु ग्रन्थेषु तैत्तरीयोपनिषद्ब्रह्मानन्दबल्लीसप्तमखण्डे—'रसो वै सः, रसो ह्येवायं लब्ध्वानन्दी भवति ।' इत्याद्यवतरणमुतद्धृतमस्ति । एते ग्रन्थकाराः रसम्, आनन्दं च सामान्यतः एकरूपमेव मन्यन्ते । बृहदारण्यकोपनिषदि (४.३.२१) निम्नलिखितावतरणमपि दर्शनीयमस्ति—तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेदनान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तम् । तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् । अत्र पिताऽपिता भवति... तीर्णो हि तथा सर्वान् शोकान् हृदयस्य भवति । अस्योद्धरणस्यापि विवेचनमलङ्कारग्रन्थे मिलति । सहैवानन्दमयात्मनः उल्लेखोऽपि मिलति ।

**कला-काव्ययोः साधर्म्यम्**

केयङ्कलेति जिज्ञास्य प्रतीच्यः पण्डितः वैडले महोदयो वदति—'कलावस्तुनो ह्यान्तरिकी अभिव्यक्तिरस्ति ।' शब्दान्तरेष्विदं वक्तुं शक्यं यद्वस्तुनो हि स्वकीया आकृतिर्यया सुघटिता भूत्वा प्रत्यक्षीभवति सा सुघटित यथार्थं वैशिष्ट्याभि-व्यञ्जनकारिणी क्षमता 'कला' इत्यनेन नाम्ना प्रोक्ता भवति । वस्तुनो नैजाकृति-र्वस्तुगतो धर्मः किं वा तद्गतः सारो वा वैशिष्ट्यं भवति । आलङ्कारिकानां भाषायां वस्तुन इदं वस्तुत्वमेव सौन्दर्यमित्यभिधीयते । जगति सर्वे पदार्थाः स्वसौन्दर्यवत्वादेव ग्राह्याः भवन्ति । कलायाः कार्यं सौन्दर्यस्योन्मीलनमस्ति । मानवस्य रागात्मिका बुद्धिर्यदवाप्य रमते सन्तुष्यनि, प्रसीदति, आनन्दमनुभवति तदेत बुद्धेः सुरम्यं विश्राम-स्थलं सौन्दर्यमिति गीयते । कला इदमेव सौन्दर्यमव्यक्ततातो व्यक्ततांनयति । कलायाः स्वभाव एवास्त्यभिव्यक्तिपरकतेति ।

संदर्भेऽस्मिन् काव्यस्यापि सहृदय-हृदयश्लाघ्यार्थैकमात्राभिव्यङ्ग्यरूपमेवार्थः भवितुमर्हति न तु अनुमेयार्थरूपोऽर्थः । काव्यस्यापातसुन्दरम् अन्तरमणीयवाच्यं तथा व्यङ्ग्रूपार्थेषु वा लक्ष्यव्यङ्ग्यरूपार्थेषु वत्सम्बम्धोनास्ति यस्मिन् अनुमाप्यानुमापक भावस्य परिचयो भवति तथाऽनुमित्यामेव व्यञ्जनायाः गतार्थता भवति । कमपि शब्दं केवलैक दृष्ट्यैव लिङ्गं कथितुं शक्यते तथा दृष्टिरियं केवलं शब्दप्रयोक्तुः प्रतिपादनेच्छैवास्ति । अत्र व्यञ्जनाऽनुमित्या सर्वथा विलक्षणकाव्यव्यापारोऽस्ति । अस्य प्रतिपादनमभिनवगुप्ताचार्येण स्पष्टरूपेण कृतमस्ति—

'यत एव हि क्वचिदनुमानेनाभिप्रायादौ, क्वचित्प्रत्यक्षेण दीपावलोकयते क्वचित्कारणत्वेन गीतध्वन्यादौ, क्वचिदभिधयाविवक्षितान्यपरे, क्वचित् गुणवृत्या-ऽविवक्षितवाच्येऽनुगृह्यमाणं व्यञ्जकत्वं दृष्टं तत एव तेभ्यः सर्वेभ्यो विलक्षणमस्य रूपं नः (व्यञ्जनावादिनः) सिद्ध्यति (ध्वन्यालोकलोचनः तृतीयोद्योते) ।'

अत्रायं भावः एकस्य वर्णसमूहात्मनः पदस्य अनेकत्राऽनेकैव शक्तिः । शक्यता-वच्छेदकभेदेन तद्भेदात् । ततश्च यस्मिन्नर्थे तात्पर्यग्राहकं प्रकरणादिकं अवतरति, उद्बुद्ध्या तद्गोचरशक्तया तदर्थोपस्थानम् । अन्यस्याश्च शक्त्याः तिरोधानम् । तया निरुद्धयाभिधयाबोधयितुमशक्यार्थस्य बोधने प्रभवन्ती वृत्तिर्व्यञ्जना नाम । इयं हि, अभिधामूलाशाब्दीव्यञ्जनेत्युच्यते ।

अस्मिन्विषये मम्मटाचार्यस्यैकः निर्णयोऽस्ति—व्यङ्ग्यरूपमर्थः अनुमेयरूपमर्थः कदापि भवितुं न शक्यते । अत्र युक्तिरियमस्ति यत् व्यङ्ग्यार्थप्रतीतौ उपपत्तेरपेक्षा-भवत्येव न । 'एवं विधादर्थादेवंविधोऽर्थ उपपत्यनपेक्षत्वेऽपि प्रकाशते इतिव्यक्ति-वादिनः पुनस्तददूषणम्, ।' (का० प्र० पञ्चमोल्लासः) व्यङ्ग्यप्रतीतौ उपपत्तेरनपेक्षा कलायाः काव्यसाहित्यस्य च मूलरहस्यमस्ति । कलायाः कवितायाश्च अभिव्यञ्जनैव स्वयमेका लोकोत्तरोपपत्तिरस्ति । इदं व्यञ्जनारूपकलात्मकं किं वा काव्यात्मकमुप-पत्तावेव काव्यसृष्टेः कलासृष्टेश्च तथा काव्यानुभूतेः कलासंवित्तेश्च मर्मान्तर्भूतोऽस्ति । आधुनिकः कलाविद् काव्ये कलायाञ्च 'अभिव्यञ्जनायाः महत्त्वं पश्यन्ति—

"The entire history of the fine art and literature, from the earliest times on record down to the present, offers overwhelming evidence that art in the various media has arisen from the artists, desire to express and communicate to his fellows some pervasive human emotion, some insight felt by him to have a wider relevency, some interpretation of a reality other than the work of art itself in all its specificity."

'Self-expression' in art in therefore, even its most restricted forms, the expression of more than a passing mood, idea or impulse. It must to some extent, express the artist's enduring personality.'

'The more pretty the artist and the more egoistic, the more anxious has he been, no doubt, to exhibit himself to the world as a unique individual Instances are on record of artists so absorbed in their own inner states that their chief desire was to indulge in autobiographical self-revelation. But the more significant the artist, the stronger has been his conscious or unconscious preoccupation with some aspect of universal human experience and the more compelling has been his desire to employ artistic form as a vehicle no for mere self-expression but for what he has felt to be a true and revealing interpretation of some aspect of his environment. Greene: "The Art and the Art of Criticism." (page 231-233).

काव्ये कलायाञ्चाभिव्यञ्जनाया: शक्ते: प्रत्यभिज्ञाकाव्यकृत्या:... एवं कलाकृत्या: मात्रैकोपपत्तिरस्ति । अस्या: शक्त्यारनन्तविधस्फुरणस्यैवैकोपादनप्रकारस्तदेवास्ति यस्मिन् शब्दस्य व्यञ्जना सिद्ध: कृताऽस्ति तथेमाक् वाचकता, लाक्षणिकताप्रभृतिभिर्व्यापारै: सर्वथा विलक्षणव्यापार एव मन्यते । अर्थस्य व्यञ्जनाऽस्यान्यविधमुपादानमस्ति । शब्दार्थयोरतिरिक्त: सर्वथाऽवाचकवर्णध्वनिषु, पदानामवयवेषु, रचनायाञ्च, किं बहुना काव्यस्य सर्वस्मिन्नपि शरीरे, इयमेवाभिव्यञ्जनाशक्ति: स्फुरिता: भवन्ति । रसस्य योजनाऽपि व्यञ्जना एवास्ति तथा रसस्य भावनाऽपि व्यञ्जना एवेति।

कलाकारस्तु कलां सहकृत्य सर्वविधान् अपि मूर्त्तान् अमूर्त्तान् वा पदार्थान् रमणीयतमे रूपे परिवर्त्तयति । कलाकारस्तु स्वकलासाहाय्येन वस्तुजातं सर्वथैव काम्यं रुचिकरं आकर्षकञ्च विधाय समवतारयति । तत् स्वकीयं स्थूलं रूपमत्यजदेव किमपि परमाश्चर्यकरं कमनीयतममानन्दावहं रूपञ्च परिगृह्य विलोकयितृणां सहृदयानां पुर: प्रतिष्ठापयति । यद्यपि चतु:षष्टिकला: सन्ति । किन्तु, तत्र पञ्चकला: ललितकला: इत्येतया संज्ञया प्रसिद्धा सन्ति । ता: इमा: सन्ति । १. स्थापत्यकला, २. मूर्त्तिकला, ३. चित्रकला, ४. सङ्गीतकला, ५. काव्यकलाश्चेति । तास्वपि चतु:षष्टि-

कलासु सङ्गीतकलायाः काव्यकलायाश्च विशिष्टता सर्वविदितैवास्ति । तथाचोक्तम्—

**सङ्गीतमथसाहित्यं सरस्वत्यास्तनद्वयम् ।**
**एकमापातमधुरमन्यदालोचनाऽमृतम् ॥**

सङ्गीतकारः साधारण्यन् एव शब्दान् स्वराञ्चातिमधुरान् सरसान् आनन्दविधायकांश्च विधायकांश्च विधाय सचेतसांपुरः सन्निदधाति । तान् निशम्य मानवानां तु कथैव का पशु-पक्षि-भुजङ्गा अपि नितरामानन्दं विन्दन्तः प्राप्यन्ते । तेऽपि पुनः-पुनः सानन्दं शिरोधुनानाः सुखसागरे निमज्जन्तो लीयमाना विलीयमानाश्च विलोक्यन्ते । यथा कलया सङ्गीतकाराः संसारं प्रमोदयन्ति सैव सङ्गीतकलेति कथ्यते ।

एवमेव कविरपि यां कलांशरणं प्रपद्य शब्दार्थौ हि सुधामयौ कृत्वावतारयितुं समर्थोभवति कलाकलितौ भूत्वा तौ शब्दार्थौ लोके चित्रविचित्राः घटनाः घटयितुं समर्थौ वोभूतः । एषा काव्यकला सर्वाभ्योऽपि कलाभ्यः श्रेष्ठा किञ्च ज्येष्ठाऽस्ति । अन्ये कलाकारास्तु बाह्यमेव सौन्दर्यं परिलक्षयितुं समर्थाः भवन्ति, परं काव्यकलाकारास्तु आभ्यन्तरमपि सौन्दर्यं विना रङ्गतूलिकाकरण्डिकादिसाधनं प्रभविष्णवो भवन्ति । कवेः काव्ये सत्यं शिवं सुन्दरञ्च भवद्दृष्टं भवतीत्येतदेव वैशिष्ट्यं काव्यं वाङ्मये मूर्धन्यस्थानाधिष्ठितं विदधाति । परोक्षतया कथनमित्येत्यस्याभिप्रायोऽयं यत् काव्यं स्वाभिमतं वचः प्रकाशयितुं न अभिधावृत्तिमवलम्बते न च लक्षणां न च मीमांसकानां प्रियां तात्पर्यमेव । अपितु व्यञ्जनां वृत्तिमाश्रयेति । व्यञ्जनया काव्यमनन्यलब्धां प्रकर्षश्रियमश्नुते । तल्लोकोत्तरमेव सञ्जायते । काव्यस्य लोकोत्तरत्वादेवाचार्यानन्दवर्धनस्तस्य प्रशंसामेवाह—

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥**

(ध्व०लो०, प्र० उ०, श्लो० ४)

अतः काव्ये कलायाञ्चाभिव्यञ्जनाशक्तेरेव प्राधान्यमस्ति । इयमेव व्यञ्जनाशक्तिरनन्तविधस्फुरणस्यैवैक उपपत्तिरस्ति । काव्यस्येयमेवाभिव्यञ्जनाशक्तिः कलायाः अपि प्रत्यभिज्ञा भवति । अतः कला-काव्ययोः साधर्म्यं स्पष्टमेवेति ।



# काव्यशास्त्रीयालङ्कारिकाणां परिचयः

अथ सम्प्रति साहित्यशब्दो वाङ्मय इत्यर्थे प्रयुज्यते, यत्रार्थे 'लिटरेचर (Literature)' शब्दो वैदेशिकैः प्रयुज्यते, परन्तु, संस्कृतभाषायां साहित्यशब्दस्य 'शब्दार्थौ, इत्यर्थः, सहितयोर्भावः साहित्यम्—सहितयोः कयोः? शब्दार्थयोः, तच्च साहित्यं क्वचिदन्यत्र शास्त्रे न भवति किन्तु, काव्यशास्त्र एव । तत्र हि शब्दः अर्थश्च इत्युभयं मिलितं सदेवकमप्याह्लादञ्जनयति, न केवलः शब्दो नाऽपि वा केवलोऽर्थः, तथा चोक्तमपि—'न च काव्ये शास्त्रादिवत् अर्थप्रतीत्यर्थं शब्दमात्रं प्रयुज्यते, सहितयोः शब्दार्थयोस्तत्र प्रयोगात् । साहित्यं तुल्यकक्षत्वेन अन्यूनानतिरिक्तवृत्तित्वम्' इति व्यक्तिविवेकटीकायाम् । अपिच राजशेखरेण—'पञ्चमीसाहित्यविद्येति यायावरीयः' इतिकाव्यमीमांसायामुक्तं विल्हणेनाऽपि—

**साहित्यपाथोनिधिमन्थनोत्थितं काव्यामृतं रक्षत हे कवीन्द्राः ।**
**यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणी भवन्ति ॥**

इति स्वीये विक्रमाङ्कदेवचरितनामके महाकाव्ये प्रोक्तम्, तदपि साहित्यशब्दस्य काव्य-शास्त्रार्थतां व्यञ्जयति । 'साहित्यदर्पणः' इति काव्यलक्षणस्वरूपादिबोधकग्रन्थस्य नामकरणमपि विद्यान्तरव्यावृत्तकाव्यमात्रवाचकस्य साहित्यशब्दस्य प्रयोगं प्रमाणयति ।

संस्कृतसाहित्यानुसंधातृभिः कृतेऽपि तादृशसामीक्षिक (critical) मार्गणागणो-तथाविध क्लेशश्लेषविषमे च प्रचुरप्रयासे संस्कृतसाहित्यस्येतिवृत्तं यावदधानापद्यमानं प्रकाशपद्यां वेविद्यते । 'संस्कृतसाहित्येतिहाससम्बन्धिन्यः सर्वास्तिशयस्ताः समुण्ड-सूच्यः (Pins) खलु याः पुनः उद्धरणायैव कर्णलेषु जटिताः भवन्ति ।' लेपजिगनगरे १८७९ तमे वर्षे मुद्रितस्य व.द.ह्विटनी कृतस्य संस्कृतव्याकरणस्य भूमिकातः गृहीतः। पञ्चाशतोप्यधिकेभ्यो वर्षेभ्यः पूर्वं प्रकाशितमतमेतत् साम्प्रतमपि तथावदभ्युपगन्तव्यं भवति । भारतीयैतिहासिकानां मूर्धन्यायमानः कल्हणः 'हीरोडोरसस्य' अपि तुलां नाधिरोहति ।

संस्कृत साहित्यस्यान्यशाखाणामिवालङ्कारशास्त्रेऽप्यनेकाः एवं विधाः लेखकाः सन्ति, येषां कृतयः अद्याऽपि लुप्तप्रायैव सन्ति । राजशेखरस्य काव्यमीमांसायाः प्रथमपृष्ठे वर्णितोऽस्ति यत् केन प्रकारेण ब्रह्मा शिवमलङ्कारशास्त्रस्य ज्ञानमकारयत् तथा शिवेनाप्यन्यान् जनानस्य शास्त्रस्य शिक्षां प्रदतः तथा केन प्रकारेण प्रत्येकाधिकरणस्य भिन्नभिन्नाचार्यैः दत्तः । तथाहि—

**'तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्, औक्तिकमुक्तिगर्भः, रीतिनिर्णयं सुवर्णनाभः, आनुप्रासिकं प्रचेतायनः, यमकानि चित्रं चित्राङ्गदः, शब्दश्लेषं शेषः, वास्तवं पुलस्त्यः, औपम्यमोपकायनः, अतिशयं पाराशरः, अर्थश्लेषमुतथ्यः, उभयालङ्कारिकं कुवेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकारिकं धिषणः, गुणौपादानिकमुपमन्युः, औपनिषदिकं कुचुमारः ॥ इति ॥'**

किञ्चेदं कथितुं न शक्यते, यदुपर्युक्तानुक्रमणिका वास्तविकास्ति वा काल्पनिकेति। कामसूत्रे (१.१ पृ० १३, १७) सुवर्णनाभङ्कुचुमारञ्च क्रमशः कामशास्त्रस्य साम्प्रयौगिकानामौपनिदिकाखण्डानामाचार्यपदेन निर्देशमकार्षीत । भरतस्य नाट्यशास्त्र-मद्याप्यनुपलब्धमेवास्ति । कामशास्त्रे सुवर्णानाभस्योल्लेखः पौनःपुन्येन मिलति द्रष्टव्यः (१.५.२३।२.२३,५.३४।८.७ इत्यादि) ।

काव्यमीमांसायारूपर्युक्तोद्धरणेनन्दिकेश्वरं रसानां प्रतिष्ठातृरूपेण स्मारितः । संभवमिदमस्ति । काव्यमालायां प्रकाशितस्य नाट्यशास्त्रस्यान्तिमाध्यायस्य समाप्तौ निम्नलिखितवाक्योऽपि दृष्टव्यः—

**'नन्दिभरतसङ्गीतपुस्तकम् ।'** (अभि० भा० गायकवाड़संस्करणम्)

अस्मिन्नेव ग्रन्थेऽभिनवगुप्तप्रणीतटीकायाः नवविंशतितमेऽध्यायेऽस्य भूमिकायाः दशमपृष्ठेलिखितमिदमस्ति—**'यत्कीर्त्तिधरेण नन्दिकेश्वरमतमत्रागमित्वेन दर्शितं तदस्माभि साक्षान्न दृष्टं तत्प्रत्यायत्तलिख्यते संक्षेपेतः... एवं नन्दिकेश्वर... मतानुसारेणायं चित्रपूर्वरङ्गविधिरिति निबद्धः ।'** अनेन प्रमाणितोभवति यन्नन्दिकेश्वरस्य मतमनवलोक्यैव कीर्त्तिधरस्य साक्ष्यमवलम्ब्याभिनवगुप्तेन नन्दिकेश्वरमतस्याशयः संक्षिप्तेन लिखितम् । भण्डारकर रिसर्च इन्स्टीट्यूट नामक संस्थायामभिनवभारत्याः हस्तलिखितग्रन्थे (सं० ४१ पृ० ३८४.३९१) कश्यपमुनेः पञ्चसप्ततिः पद्यानि उद्धृताः सन्ति । **'अत्र टीकाकारः शङ्कते योऽयं जात्यंशकानां विनियोगः उक्तः स कश्यपमुनिमतादिभिर्विरुध्यते ।... अत्राहुः । काश्यपाद्यैस्तावन्मालव-कैशिकानां क्लचियन्तवृत्या जीवनौचित्यं दृष्ट्वा विनियोगः उक्तः' (अभि० भा० पृ० ३८४, अ० २९, अत्र टीका)** । भावप्रकाशने (१ द्वि० पृष्ठे०) नाट्यस्यानेकप्रतिपादकानामुल्लेखोऽस्ति । तद्यथा—सदाशिव-गौरी-वासुकी-नारद-अगस्त्य-व्यास-आञ्जनेयादि प्रमुखाः । अस्यां सूच्यां भरतस्य शिष्याणामप्युल्लेखो मिलति । सङ्गीतरत्नाकरस्य प्रथमोऽध्यायस्य पञ्चदशं पृष्ठेऽनेकानां देवानां, मुनीनाम्, विदुषाञ्च नाम लेखकरूपेणोल्लेखोऽस्ति । यथा—सदाशिव-ब्रह्मा-भरत-कश्यप-मतङ्ग-कोहल-नारद-तुम्बर-आज्जनेय-नन्दिकेश्वरप्रभृतयः । नान्यदेवस्तु भरतभाष्यं वा सरस्वतीहृदयालङ्कारहारनामकस्य ग्रन्थस्य रचनामकार्षीत् । कृतिरियं नाट्यशास्त्रस्य सङ्गीतविषयकाऽध्यायस्य (२८-३८) पद्यबद्धटीकाऽस्ति । अस्मिन् मतङ्ग-विशाखिल-काश्यप-वृद्धकाश्यपनन्दिन्-दन्तिलादीन् प्राचीनाचार्यरूपेण स्मारितः । नान्यदेवः मिथिलायाः नृपतिरासीत् । हर्षवर्द्धनस्य मरणोपरान्त भारतस्य तत्कालीनकेन्द्रीय शक्त्याः पतनं बभूव । भारतस्य पूर्व-पश्चिम-दक्षिणभागे तस्मिन् समये क्रमशः पाल-प्रतिहार-

राष्ट्रकूटानां प्रमुखताः आसन् । तेषु तिसृषु शक्तिषु उत्तरीयभारतस्य राजनैतिककेन्द्रीभूतकान्यकुब्जमधिकर्तुं परस्पर घोरसङ्घर्षं बभूव । (द्र० इतिहास की रेखायें—डॉ० फूलचन्द्र शर्मा, पृ० ६) । विग्रहपालस्य समये पालवंशस्य पतनोपरान्त दक्षिणभारतस्य षष्ठविक्रमादित्यः प्रबलो बभूव । तदा मिथिलायां कर्णाटवंशस्याभ्युदयोऽभवत् । विक्रमाङ्कचालुक्यस्य समये मिथिलायामनेकाः कर्णाटसैनिकारवात्सुः । तेषु नान्यदेवः मिथिलायां कर्णाटराजवंशस्य स्थापना कृता । कर्णाटराज्यस्थापना कालः १०९७ खीष्टाब्दमासीत् । कर्णाटवंशीयराजानः मिथिलायां २२९ वर्षपर्यन्तं राज्यमकुर्वन् । कर्णाटवंशस्यान्तिमो राजा हरिसिंहदेव आसीत् । अनेनैव महानुभावेन मिथिलायां पञ्जीप्रथामारब्धेति । यथा—

**शाके श्रीहरिसिंहदेवनृपतः भूमार्कतुल्येजनिः ।**
**तस्माद्धन्तमितेऽब्दके द्विजगणैः पञ्जीप्रबन्धः कृतः ॥**

सन् १३२३।२४ खीष्टाब्दे गयासुद्दीनतुगलकः मिथिलायामाक्रमणमकरोत् (डा० सेन, भा० इति०) अस्मिन् प्रसङ्गे इतिहासकारेण फरिस्तामहोदयेनालिखत् यत् हरिसिंहदेवमहोदयः तस्मिन् युद्धे पराजितोऽभवत् । (Ferishta ( Briggs) Vol-I, pp. ४०६.७) । कर्णाटवंशीयं भूपतिनां प्रशासनकाले मिथिलायां सस्कृतसाहित्यस्य महत्युन्नतिरजनि । तस्मिन् काले मिथिला न्याय-वेदान्त-तर्क-मीमांसा-व्याकरण-काव्यशास्त्रादीनामध्यनस्य विशिष्टकेन्द्रोऽभवत् । कर्णाटवंशस्य प्रथमः संस्थापकः नान्यदेवः स्वयं संस्कृतस्योद्भटविद्वान् आसीत् । आजानुबाहुरसौ प्रारम्भे महतीं कीर्तिमवाप । तेन संत्रस्तो यवनराजा तं दिल्लीनगरे नीत्वा कारावेश्मनि न्यद्यात् । अयं हि भरतस्य नाट्यशास्त्रोपरि 'भरतभाष्यं वा सरस्वतीहृदयालङ्कारनामकस्य ग्रन्थस्य रचना कृतवान् । नान्यदेवः (१०९७-११३३) खीष्टाब्दे मिथिलायाः प्रशासकः आसीत्—

"To music Mithila appears to have made notable contribution. It was perhaps Nanyadeva, the first historical king of Mithila, who founded the school of music in this region, Sarngadeva, author of the celebrated work on music called 'Sangita Ratnakara', who in all probability flourished about the middle of the thirteenth century, mentions Nanyadeva. We know of Nanyadeva, founder of Karnata dynasty, who ruled over Mithla from C. 1097 to 1147 A.D. To this scholar-king are attributed several works of which the Bharata-Bhasya (aso called Bharat Vartika in some of the colophons) deals with music. The Bhasrata Bhasya also known by the name Sarasvatihrdayalankara-hara or Sarasvati-hrdaya-bhusana, is not a direct commentary on Bharata's Natyasastra. It is planned in four Amsas each devoted to one of the four kinds of Abhinaya. The extant portion deals in verse only with one kind of Abbinaya, vig. Vacika, and relates mainly to chapters xxviii to xxxiv of the

Natyasastra, which deal with music—Contribution of Bihar to Sanskrit Literature, page-105 and for Nanyadev's personal history and works, see M.R. kavi in Quarterty Jour of Andhra Historical Research Soc. Vol. I No. 2 (1926)."

यद्यपि वैदिकात् कालात् आरभ्य पाणिनेः कालपर्यन्तमपि काव्यस्य तत्त्वानां विवेचनं यत्र तत्र समुपलभ्यते, किन्तु तादात्त्विकीकाव्यशास्त्रस्थितिः सुस्पष्टा नासीत् । काव्यशास्त्रस्य सुस्पष्टा स्थितिस्तु भरतमुनेरारभ्यैव भवति । भरतमुनेः कालः खीष्ट्रपूर्व द्वितीयं शताब्दमारभ्य द्वितीयशताब्दं यावत् स्वीक्रियते । अत एव खीष्ट्रपूर्वस्मात् द्वितीयशताब्दादारभ्य अष्टादशशताब्दं यावत् काव्यशास्त्रीयसाहित्यस्य निर्माणं सञ्जातम् । अयमेव काव्यशास्त्रीयसाहित्यस्य प्रसरस्य कालः स्वीकर्त्तुं शक्यते । अस्य विषयस्य विवेचनाय सौकर्यं कालविभागेन सम्पद्यते । अत्रालङ्कारशास्त्रस्य कालस्य विभागं विद्वान्सो निम्नप्रकारेण चतुर्षु भागेषु कृतवन्तः—

१. **अत्र प्रथमः प्रारम्भिकः कालः**—अज्ञात कालादारभ्य भामहकालपर्यन्तमयं कालः स्वीक्रियते ।

२. **रचनात्मकः कालः**—भामहादारभ्य आनन्दवर्धनाचार्यस्य कालपर्यन्तम् । ६०५० खीष्ट्राब्दादारभ्य ८०५० खीष्ट्राब्दपर्यन्तम् ।

३. **निर्णयात्मकः कालः**—आनन्दवर्धनाचार्यादारभ्य मम्मटस्य कालं यावत्—८०५१ खीष्ट्राब्दादारभ्य १०६० खीष्ट्राब्दं यावत् ।

४. **व्याख्याकालः**—मम्मटकालादारभ्याधुनिककालं यावत् । १०६० खीष्ट्राब्दादारभ्य आधुनिककालं यावत् ।

तदेवां चतुर्णामपि कालानां विवेचनं क्रमशः प्रस्तूयते—

## १. प्रारम्भिकः कालः

कालोऽयमादिमः अज्ञातकालात् भामहं यावत् । काव्यशास्त्रास्योत्पत्तिमधिकृत्य काव्यमीमांसाकार राजशेखरो यामाख्यायिकां समुपस्थापयति सा कथयति यत् श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यश्च तुष्टये शिष्येभ्य उपदिदेश । एतेन कथनेन शास्त्रस्यास्याविर्भावो भगवतः शङ्करात् विदितो जायते । परमेतादृशीषु आख्यायिकासु न साम्प्रतिको वैज्ञानिकः कालः श्रद्धत्ते । काव्यसौन्दर्यस्याधायकानि यानि गुण-रीति-ध्वन्यलङ्कारादि-तत्त्वानि काव्यशास्त्रविविनक्ति तानि सर्वाण्यपि तत्त्वानि मूलतो वेदेषु प्राप्तानि भवन्ति, तस्मात् काव्यशास्त्रमपि स्वोत्पत्त्यर्थमुपादानानि सामग्रीं वा वेदेभ्य एव लेभे, इत्येतदेव सत्यमस्ति । वेदः स्वयमेव 'अमरकाव्यम्' इत्येतेन नाम्ना भुवनविदितोऽस्ति **'देवस्य पश्य काव्यं न ममार न जीर्यति ।'** एवं स्थिते काव्यशास्त्रस्य जन्मदात्री श्रुतिमातैव सिद्ध्यति । इदं त्ववश्यं वेदवेदाङ्गादिषु केवलं काव्यशास्त्रस्य तत्त्वानि समुपलभ्यन्ते नच तानि शास्त्राणि प्रत्यक्षतयाऽप्रत्यक्षतया वा तस्य शास्त्रीयं निरूपणं कुर्वाणानि दृष्टानि जायन्ते । तदीयं शास्त्रीयं निरूपणन्तु भरतमुनिसमयात् प्रारब्धं भवति ।

भरतस्य समयमधिकृत्य विदुषां सन्ति भिन्न भिन्नानि मतानि । भरतस्य कालः खीष्टात् प्राग्वर्त्तिशतकद्वयमारभ्य तदर्वाग्वर्त्ति शतकद्वयं यावत् यो विद्यते तस्यान्तराले सुधीभिः प्रायेण विचिन्त्यते । अतः काव्यशास्त्रस्य निर्माणं प्रारब्धन्त्वभूत् भरतसमयात् परं तन्निर्माणस्यावसानं हि ईशवीयाष्टादशशतकेऽभवत् । काव्यशास्त्रस्येतिहासः वर्षाणां सहस्रद्वयमभिव्याप्य विततः संलक्ष्यते । तस्माविरचनानेह तावान् महान् स्वीक्रियते सुधीभिरिति ।

अस्मिन्काले द्वावेव काव्यशास्त्रस्य भरत-भामहौ मुख्याचार्यौ प्राप्येते । भरतः स्वकीये-नाट्यशास्त्रे रसंनाट्यस्य तत्त्वानि सुन्दरतया वर्णयन् दृग्गोचरो भवति । स तत्र चतुरोऽलङ्कारान् दशगुणान् दशदोषांश्चोल्लिखन् प्राप्यते । तदीयं नाट्यशास्त्रं वस्तुतो बीजभूतमेव । गच्छताकालेन विद्वान्स आचार्यस्तद्गतान् विषयान् वितेनुः । भरतानन्तरं मेधाविरुद्र प्रभृतयः कतिपये विद्वान्सोऽजायन्त परं न तेषां ग्रन्था उपलभ्यन्ते भामह एव काव्यशास्त्रस्यातः प्रथम आचार्यो मतः । काव्यालङ्कार काव्यालङ्काराभिधस्तदीयो ग्रन्थः काव्यशास्त्रस्य मुख्यः प्रथमो वा ग्रन्थः स्मृतः । ग्रन्थेऽस्मिन् आचार्यो भामह अष्टात्रिंशत् संख्याकानां स्वतन्त्राणामलङ्काराणां विवेचनमकार्षीत् ।

## २. रचनात्मकः कालः—भामहात् आनन्दवर्द्धनं यावत्

(५५० तम खीष्टाब्दात् ७५० तम खीष्टाब्दपर्यन्तम्)

रचनात्मकः कालः काव्यशास्त्रस्य महत्त्वमयः कालो गण्यते । अस्मिन् काले सञ्जाता रचनाः वस्तुतः काव्यशास्त्रस्य गौरवशालिन्यो रचनाः सन्ति । एतस्मिन् काले काव्यशास्त्रीय जगति अलङ्कार-रीति-रस-ध्वनिनामकाश्चत्वारः सम्प्रदायावीक्षिता अभूवन् । अलङ्कारसम्प्रदाये भामहोद्भट-रुद्रटाः, रीतिसम्प्रदाये-दण्डिवामनौ, रससम्प्रदाये-लोल्लट-शङ्कुक-भट्टनायकप्रभृतयः, ध्वनिसम्प्रदाये चानन्दवर्धनादयः प्रमुखाः आचार्याः समजायन्त । एतेषां समेषां सम्प्रदायानां मौलिकग्रन्थानां निर्मातारः अस्मिन् एवकाले समुत्पन्ना अभूवन्। काव्यशास्त्रस्य दृष्ट्या कालोऽयमतीवमहत्त्वपूर्णो वर्त्तते । यदि भामहरुद्रटोद्भटादिकाः काव्यस्य वाह्यानां तत्त्वानामुन्मीलनमकार्षुस्तदा दण्डिवामनादिका अन्ये आचार्याः काव्यस्यात्मतत्त्वस्य निरूपणमकार्षुः ।

## ३. निर्णयात्मकः कालः—आनन्दवर्धनात् मम्मटपर्यन्तं

(७५० तम खीष्टाब्दात् ९५० तम खीष्टाब्दपर्यन्तम्)

अस्मिन्काले बहवः काव्यशास्त्रपारावारीणा उत्पद्यन्त । अयमपि कालो महीयान् कालः संस्कृतकाव्यशास्त्रीयसंसारे मतो भवति । ध्वन्यालोकलोचनटीकाकारः अभिनव-भारतीनिर्माता आचार्योऽभिनवगुप्तः, वक्रोक्तिजीवितकारः कुन्तकः, व्यक्तिविवेककारो महिमभट्टः अस्य कालस्य प्रधानाचार्याः सन्ति । रुद्रभट्ट-भोजराज-धनिक-धनञ्जया अपि कालमिममधितस्थुः । आचार्य कुन्तको वक्रोक्तिं प्रतिपाद्य प्रामुख्येण, वक्रोक्ति सम्प्रदायं प्रतिष्ठापयामास, महिमभट्टः स्वरचनया ध्वनिसिद्धान्तं निराचकार । व्यक्ति-विवेकाभिधाने ग्रन्थे आचार्यो महिमभट्टो ध्वनिसिद्धान्तस्यामूलचूडं खण्डनमकार्षीत् ।

## ४. व्याख्याकालः—मम्मटात् अद्यतनं यावत्
(९५० तम खीष्टाब्दात् २००१ खीष्टाब्दपर्यन्तम् )

व्याख्यात्मकः कालोऽपि नैजं महिमानं निदधाति । कालोऽयं दीर्घतमः । प्रायेण सार्द्धसहस्रवर्षाणामभिव्याप्य सन्तिष्ठते । अस्मिन् काले हेमचन्द्र-विश्वनाथ-जयदेवादिकाः काव्यशास्त्रस्य सर्वाण्यङ्गानि समीचीनतया वर्णयामासुः प्रतिपादयामासुश्च । रुय्यकः अप्पयदीक्षितः, अन्ये च कतिपये अलङ्कारेष्वेव रुचिं दर्शयामासुः । शारदातनय-शिङ्गभूपाल-भानुदत्तप्रभृतयः काव्यशास्त्रीयसिद्धान्तविवेचने प्रशंसनीयमुद्योगं चक्रुः । अस्यां दिशायां रूपगोस्वामी यं प्रयत्नं कृतवान् सोऽपि श्लाघनीयः । राजशेखर-क्षेमेन्द्रामरचन्द्रादिकाः विद्वद्वरेण्याः कविशिक्षाविषये ग्रन्थान् अजग्रन्थन् । आचार्य-मम्मटस्य तु साहित्यसंसारे वाग्देवतायाः अवतारो कल्प्यते । सहस्रतमे शतके प्रादुर्भूतेयमलौकिकी प्रतिभा काव्यशास्त्रसम्बन्धिनः सिद्धान्तान् विषयांश्च समन्वयात्मिकायां शैल्यां निरूपितवती । आचार्य आनन्दवर्धनो यदि ध्वनिविरोधिनः सिद्धान्तान् प्रत्याख्याय ध्वनिसिद्धान्तस्थापनाद्वारेण काव्यशास्त्रस्य सत्तां शास्त्रजगति द्रढयामास, तदा आचार्य मम्मटः काव्यप्रकाशं प्रणीय साहित्यिकानां समक्षे स्वस्मात् प्राग्वर्त्तिन्यां सहस्राब्द्यां सञ्जातानां आचार्याणां कृतिः सम्यगवगाह्य तासां सारभागं निहितवान्, साहित्यिकान् विषयांश्च सर्वान् दोषविरहितायां सर्वाङ्गसुन्दरायां भाषायां प्रस्तुतीकृतवान् । किञ्च रसध्वनिगुणालङ्काराणां सर्वेषां महत्त्वमुपादेयत्वं वैशिष्ट्यञ्च यद् यदस्ति तत्तद्सकलं साधु तथा दर्शितवान् ।

इत्थं तत्तद्सम्प्रदायगता आचार्याः सर्वेऽपि काव्यशास्त्रं प्रतिष्ठापयितुं तस्य शास्त्रत्वं साधयितुं तस्य सर्वाणि चाङ्गानि निष्पादयितुं निरूपयितुञ्च पूर्णमनोयोगपूर्वकं प्रयासं विदधुः । तेषां प्रयासादविरामात् यस्य काव्यशास्त्रस्य बीजानि तत्त्वानि वा वेदादिषु विकीर्णान्यासंस्तानि शास्त्रीयं रूपमधिजग्मुः ।



# भरतः

भारतीयपरम्परा नाट्यशास्त्रस्य प्रख्यातरचयिता भरतं यद्यपि मुनेरूपाधिना विभूषितं करोति, तं पौराणिकयुगीनं मन्यन्ते जनाः । किञ्च तथाऽपि तस्य वास्तविकस्य स्थितिकालस्य सम्बन्धे विद्वत्सु बहुमतभेदो वर्त्तते । तस्य तिथिः खीष्ट्रपूर्व द्वितीयशतकादारभ्य खीष्टाब्दस्य द्वितीयशतकं पर्यन्तं निर्धारितमस्ति । (द्र० रेनो— Annales devus, Gwimet, ii, Page ६६ and पिशल GgA १८८५, page ७६३) । तेन हि भरतः कदा स्वजनुषा भारतभुवं समलञ्चकार इतिनिर्णयः एका-विषम समस्या वर्त्तते । इदमेकं सामान्यतः स्वीकृतमेकं तथ्यमस्ति यत् नाट्यशास्त्रस्य, सङ्गीतस्य तथा तस्सम्बन्धिनो विषयाणां लेखकेषु स एवैकः प्राचीन लेखकोऽस्ति, यस्य रचना अद्याऽपि विद्यमानोऽस्ति । किञ्चात्र सहैव यक्षप्रश्नोऽस्ति यत् तस्य रचनायाः उपलब्धस्वरूपं कियतांऽशेन तस्य रचनायाः मौलिकस्वरूपस्य प्रतिनिधित्वं करोति । अभिनवगुप्तः नाट्यशास्त्रस्य टीकायां प्रस्तावनायाः द्वितीयश्लोके लिखति यत् भरतस्य ग्रन्थः यस्मिन् रूपे वंशातः आसीत्, तस्मिन् ग्रन्थे मात्रषट्त्रिंशदध्यायान् एवासौ वेत्ति **'(षट्त्रिंशकं भरतसूत्रमिदम्)'** अभिनवगुप्तं कतिपयाध्यायानां पाठद्वयस्य ज्ञानमासीत् । **(द्विविधः पाठो दृश्यते-अध्यायः १५)** । अस्याध्यायस्यान्ते प्रदत्ता-सूच्यामुल्लिखितविभिन्नप्रकाशितसस्करणानातुलनया तथोपलब्धपाण्डुभिः प्रतीतो भवति यदेतेषु अध्यायानां संख्या, अध्यायक्रमः तथा प्रत्येकाध्यायस्य श्लोकानां संख्या-क्रमेष्वेकरूपता नैवास्ति । अनेन प्रकारेणास्य पाठः अनिश्चितस्तथाऽ- संतोषजनको-ऽप्यस्ति । अनेन सिद्धो भवति यद्वर्त्तमान स्वरूपप्राप्तकरणात्पूर्व भरतोत्तरकाले पाठो-ऽयमनेकहस्तेषु भ्रमणमकरोत् । अस्य तथ्यस्य, तथाकथित रचयितुस्तिथ्या गम्भीर-सम्बन्धमस्ति ।

अस्मिन् पाठे कतिपयेषु स्थलेषु कृतप्रक्षेपस्य स्पष्टतः परिदर्शनो भवति । अस्य नाट्यशास्त्रस्य काव्यमालासंस्करणस्य पुष्पिकालेखे ग्रन्थस्योत्तरार्धस्य नाम 'नन्दिभरतः' प्रदत्तोऽस्ति—**'समाप्तश्चायं ग्रन्थः नन्दिभरत सङ्गीतपुस्तकम् ।'** नामेदं दृष्ट्वा सम्भवतः सम्पादकोऽपि भ्रमजाले न्यपप्तत् । राइस (Rice) महोदयोऽपि नन्दिभरतनामकस्य सङ्गीतविषयकग्रन्थस्योल्लेखः कृतवान् । (मैसूर एवं कुर्ण कैटेलॉग पृ० २९२) । मद्रासकैटलॉग १२ संख्या १३००९, अस्मिन् सूचिपत्रे सङ्गीतस्य अभिनयग्रन्थाना-ञ्चैकस्यां हस्तलिप्यां नाट्यमुद्राविषयकस्य ग्रन्थस्यैकस्मिन् अध्यायेनन्दिभरतोक्तसङ्कर-हस्ताध्यायनाम्नोल्लेखो मिलति । सङ्कलितास्य ग्रन्थस्य नाम पश्चात् 'नन्दि' अथवा 'नन्दिकेश्वरोऽभवत् । अयं हि महानुभावः परम्परया सङ्गीत-नाट्य-कामशास्त्राणाञ्चा-चार्यः आसीत् । वात्स्यायनोऽपि नन्दीमहोदयस्य एकः पाठः समुद्धृतोऽस्ति । ओफ्रेक्ट

महोदयस्य विचारे अयं हि एव 'नन्दि' अस्ति यस्योल्लेखः पञ्चसायके' (१-१३) तथा रतिरहस्ये (१-५) कामशास्त्रस्य लेखकः नन्दिकेश्वरस्य रूपे चर्चितोऽस्ति । द्र० 'पञ्चसायकः' सदानन्दशास्त्री घिलाद्रिया, लाहौर, १९२१, 'रतिरहस्यम्' सैव सम्पादकः । द्रष्टव्य Schmidt (शमिट) (Indian Erotic 1911, Page 46, 59)। नान्यदेवोऽपि तं 'नन्दी' एवोक्तवान् ।

नाट्यकलायामभिनयदर्पणं नामकस्य ग्रन्थस्य रचयिता नन्दिकेश्वरमेव मन्यते। ग्रन्थेऽस्मिन् पौनःपुन्येन भरतस्य तथा तस्य विचाराणां मुल्लेखो मिलति । उदाहरणार्थं द्रष्टव्यम्—अस्य ग्रन्थस्य श्लो० सं० (१२, १२८, १४९, १५९, १६२) । अतः अस्य ग्रन्थस्य सङ्कलनं तत्पश्चाद्भवदिति संभाव्यते । राजशेखरोऽपि रसशास्त्रस्याचार्य स्वरूपे एव नन्दिकेश्वरस्योल्लेखः कृतवान् । किन्तु, नन्दिकेश्वरः सङ्गीतस्य आचार्य स्वरूपेणैवाधिकं चर्चितोऽस्ति । खीष्ट्रस्य त्रयोदशशताब्दे समुत्पन्नः शार्ङ्गदेवः स्वकीय-ग्रन्थे सङ्गीतरत्नाकरे (१.१.१७) तथा तस्य टीकाकारः कल्लिनाथश्च सप्तचत्वा-रिंशत्पृष्ठे तमेव स्वग्रन्थस्याधारस्रोतः मन्यते । 'नन्दिकेश्वरमते तालाध्यायः' तथा भरतार्णवोऽपि नन्दिकेश्वरस्य ग्रन्थस्य सुमतिकृत संक्षिप्तरूपेणैव मन्यते । ग्रन्थेऽस्मिन् नाट्यमुद्राणां तालविषयाणाञ्च विवेचनमस्ति । बल्लराजरचिता रसरत्नप्रदीपिकायामपि नन्दिकेश्वरस्य ग्रन्थः नाट्यार्णवस्योल्लेखो मिलति । गायकवाडसंस्करणस्य ऊनत्रिंशत-तमोऽध्याये भरतोपरिटीकायामभिनवगुप्तस्य कथनमस्ति यन्मया नन्दिकेश्वरस्य ग्रन्थं साक्षान्नाव-लोकितं **(साक्षान्न दृष्टम्)** किन्तु कीर्त्तिधरेण यद्दर्शितं तत्प्रत्ययादहं संक्षेपेण नन्दिकेश्वर मतस्य निरूपणं करिष्यामि **(यत्तु कीर्त्तिध्दरेण दर्शितं... तत्प्रत्यात्)** किञ्चाभिनवगुप्तः 'नन्दि-मत' नामक पुस्तकात् परिचितः आसीत् । (पृ०१७ द्रष्टव्यः) तस्मिन् ग्रन्थे 'रेचितः' अथवा रेचकोनामकः अङ्गहारविषयकः एकः श्लोकः उद्धृतोऽस्ति । अन्यत्र तस्य कथनमस्ति यत्रंदिमतस्यार्थस्तण्डुमतमस्ति यतो हि तस्य मते नन्दिस्तथा तण्डुः एक एव जनस्य नामद्वयमस्ति । भरतकृतनाट्यशास्त्रस्योत्तर-भागस्यावलोकनेन ज्ञातो भवति यदस्य ग्रन्थस्यैक भागेऽन्य विषयैः सह सङ्गीतविषयस्याप्युल्लेखो वर्त्तते । संभवतः अस्मिन् ग्रन्थेऽस्य विषयस्य सङ्कलनं परववर्त्तीकाले नन्दिकेश्वरस्य, विचारानुरूपेणाभवत् ।

अनेनैव प्रकारेणानिश्चितकालीन लक्ष्मणभास्कररचितमतङ्गभरताख्यग्रन्थस्य बोधो-ऽभवत् । ग्रन्थेऽस्मिन् प्रत्यक्षतः मतङ्गमतस्यैव चर्चा प्रतीतो भवति । मतङ्गः एकः प्राचीनाचार्यः आसीत् । अभिनवोऽपि मतङ्गमुनिरूपेणास्योल्लेखः कृतवान् । तस्यानुष्टुप्छन्दे श्लोकद्वयस्योल्लेखोऽपि कृतवानसौ । नाट्यशास्त्रस्य अन्तिमाध्याय-पुष्पिकालेखे कोहलस्य चर्चाऽस्ति । नन्दिकेश्वरस्य तिथिः ज्ञातो नास्ति । खीष्ट्रस्याष्टम-शतकान्ते दामोदरगुप्तस्य 'कुट्टनीमतम्' नामक ग्रन्थस्य प्रकाशनमभवत् (मद्रास कैटलग, १२९८९, तेलगुटीकासहितम्) ग्रन्थेऽस्मिन् भरतेन सह कोहलस्यापि-चर्चाऽस्ति ।

**अस्मिन्प्रसङ्गे ध्यातव्यमस्ति नाट्यशास्त्रस्य षष्ठाध्यायस्यं दशं श्लोकस्य टीकायामभिनवगुप्तेनोक्तं नाट्यशास्त्रस्य यद्यपि पञ्चाङ्गान्येव भवन्ति किञ्च प्रस्तुतश्लोके**

एकादाङ्गाणां परिगणना कोहलस्य तथान्येषां विदुषां मतानुसारेणैवास्ति । टीकाकारेण नाट्य-गेय-विषयाणामुपरि एतेषां विदुषां मतस्य पौनःपुन्येन चर्चा कृताऽस्ति । शिङ्गभूपालस्तं नाटकस्य तथा तत्सम्बन्धि-कलानामाचार्यः मन्यते । रूपकस्य भेदानामुल्लेखं कुर्वन् हेमचन्द्रेणोक्तम् (पृ० ३२९ तथा पृ० ३२५)—**'प्रपञ्चस्तु भरतकोहलादिशास्त्रेभ्यो-ऽवगन्तव्यः ।'** नाट्यविद्यायाः लेखकाः कोहलमुपरूपकस्य प्रवर्त्तको मन्यन्ते । एभिः सङ्केतैः प्रमाणितो भवति यद्भरतस्य मौलिकरचना तथा तस्य नाट्यशास्त्रस्य वर्त्तमानोपलब्धस्वरूपस्य मध्यावधौ कोहलादयो लेखकाः अजनिषत । अतस्तेषां विचारोऽपि भरतकृतनाट्यशास्त्रस्य मूलस्वरूपे एव समाविष्टोऽभवत् । भरतस्य समयनिर्धारणे पाठान्तरमिदमेव काठिन्यं समुत्पादयति । अनेनैव कारणेन चर्चाधीनपाठे प्रत्यक्षरूपेणैवंविधासामग्रीवर्त्तते, यस्मिन् १. स्वतन्त्ररूपेण विद्यमानः गद्यांशोऽस्ति, २. आर्या एवं अनुष्टुप् छन्देषु अनुवंश्यश्लोकाः सन्ति, ३. सूत्र-भाष्यरीत्याः स्थलान्यपि सन्ति तथा ४. वर्त्तमानकारिकारूपमप्यस्ति । तेषां विकासक्रमे अनेन प्रकारेण भेदः कर्त्तुं शक्यते १. गद्यग्रन्थानां निर्माणावस्था २. कारिकालेखनस्य प्रयोगात्मकावस्थ, ३. सूत्रभाष्यपद्धत्याः अवस्था ४. संहिताग्रन्थानां सङ्कलनस्यान्तिमावस्था । एवं विविध-पाठानां समस्यां विहायान्तः साक्ष्येनानुमीयते यदस्य सङ्गीतविषयकांशस्य सङ्कलनं खीष्टाब्दस्य चतुर्थशताब्दे एव सम्भवति । इदमपि संभाव्यते यदन्यांशस्यापि सङ्कलनं तस्मिन् काले एवाऽभवत् । अत्रेवं प्रतीतो भवति यद्भरतस्योपदेशः कदाचित् कालिदासात्प्राचीनः आसीत् । रघुवंशे (१९.३६) कालिदासः अङ्ग-सत्त्व-वचनाश्रय, नृत्यस्योल्लेखः क्रियते, यत् मल्लिनाथस्य कथनानुसारेण भरतस्यानया उक्त्या मिलति—**'सामान्याभिनयो नाम ज्ञेयो वामाङ्गसत्वजः ।'** एवमेव कुमारसंभवे (८। ९१) अपि नाट्यशास्त्रोक्तः सन्धीनां तथा ललिताङ्गहारस्य उल्लेखोऽस्ति । एतादृश्यवस्थायां निश्चयपूर्वकं किमपि कथितुं न शक्यते, यदयं मुनिभरतः कदा भारतस्य कां भूमिं स्वजनुषा समलञ्चकार । इति त्वेका विषया समस्या अद्याऽपि यंक्ष प्रश्न इवास्ति ।

उत्तररामचरिते भवभूतिः भरतमुनिं 'तौर्यत्रिक' सूत्रधारशब्देन निर्देशमकार्षीत् । अनेनायमप्यर्थः सिद्ध्यति यद् भरत प्रणीतो ग्रन्थः सूत्रात्मको वर्त्तते । दशमशताब्दस्य धनञ्जयस्य कृतिः 'दशरूपकम्' नाट्यशास्त्रस्य संक्षिप्तरूपमास्ते । एकादशशताब्दस्या-भिनवगुप्तपादाचार्यः नाट्यशास्त्रस्याभिनवभारत्यभिधानां व्याख्यां प्रणैषीत् । सर्वाधिकः प्राचीनो निर्देशः भरतमुनेर्विषयो महाकवेः कालिदासस्य विक्रमोर्वशीये समुपलभ्यते । कालिदासानुसारेण भरतमुनिः देवानां नाट्याचार्य आसीत्। नाट्यस्य चोद्देश्यमष्टानां रसानां विकासकरणमेवासीत् । नाटकस्य प्रयोगे अप्सरसः प्रभूतमात्रायां भरतमुनेः साहाय्यमकार्षुः तथाहि—

**मुनिना भरतेन यः प्रयोगो भवतीष्वदृष्टरसाश्रयः प्रयुक्तः ।**
**ललिताभिनयं तमद्य भर्त्तामरुतां द्रष्टुमनाः सलोकपालः ॥ इति ।**

महाकविना कालिदासेन निर्दिष्टा इमाः सर्वाः विशेषता नूनं वर्त्तमाने नाट्यशास्त्रे समुपलभ्यन्ते । एभिः प्रमाणैरयमर्थो भवति यन्महाकविः कालिदासो भरतस्य

नाट्यशास्त्रेण पूर्णतया परिचितः आसीत् । नाट्यशास्त्रे शकयवनपल्लवादिकानामपि वर्णनं समुपलभ्यते । इमे वैदेशिका प्रथमे शताब्दे भारतस्योपरि कृताक्रमणाः आसन् । वर्त्तमान भरतनाटयशास्त्रस्य अयमेव कालो भवितुमर्हति । ऐतिह्यविदः समालोचकाः भरतनाट्यशास्त्रस्य कालं ख्रीष्टपूर्वात् द्वितीयशतकादारभ्य ख्रीष्ट्रस्य द्वितीयशतकं यावत् स्वीकुर्वन्ति ।

## भरतप्रणीतं नाट्यशास्त्रम्

भरतप्रणीतं-नाट्यशास्त्रस्य प्रकाशनं त्रिप्रकारकं समुपलभ्यते । तद्यथा—दाक्षिणात्यप्रकाशनम्, औत्तराह प्रकाशनम्, प्राचीनतम प्रकाशनञ्चेति । किञ्चानुसंधानेन ज्ञातो भवति यन्नाट्यशास्त्रस्य मूलपाठः परिनिष्ठितो नास्ति तथा तस्य प्रत्येकस्मिन् अध्याये यत्र तत्र संमिश्रणं परिवर्त्तनं, परिवर्द्धनञ्च परिलक्ष्यते । अस्य विचारसरण्यामपि अनेकाः विप्रतिपत्तयः सन्ति । तद्यथा विक्रमोर्यशीयनाटकस्यैकस्मिन् पद्ये (२-१८) नाटकस्य प्रयोगेऽष्टानां रसानां विकासकरणमेवासीत् । अस्मिन् पद्ये प्रतिपादितौ द्वावपि विषयौ नाट्यशास्त्रे उपलब्धौ स्तः । अष्टरसेभ्यः दर्शनीयः—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥** (६.१५)

चौखम्बासंस्करणस्य नाट्यशास्त्रस्य षष्ठाध्याये निम्नलिखितेन श्लोकेन सह समाप्तोऽभवत्—**एवमेते रसा ज्ञेयास्त्वाष्टौ लक्षणलक्षिताः ॥ ८३ ॥** काव्यादर्शे (२. २९२) **'एष त्वष्टरसायत्ता रसवन्ता स्मृता गिराम् ॥'** अनेन ज्ञातो भवति यत् ख्रीष्ट्रस्य सप्तम शतकेऽपि रसानां संख्या अष्ट एवासीत् । अभिनवगुप्तेनोल्लिखितः यत् कतिपय जनाः नवरसानां स्थानेऽष्ट एव रसाः मन्यन्ते । किञ्च तेन कस्मिंश्चित् प्राचीनग्रन्थे शान्तरसस्य तथा तस्य स्थायीभावः शमस्य वर्णनमवलोकितः—**'ये पुनर्नवरसा इति पठन्ति तन्मते शान्तस्वरूपमभिधीयते ।'** (गायकवाड़ ओरियण्टल सीरीज, प्र०भा०, पृ० ३३३, तथा पुनः—**'तस्मादस्ति शान्तो रस तथा च चिरन्तन पुस्तकेषु 'स्थायिभावान् रसत्वमुपनेष्यामः'—इत्यनन्तरं 'शान्तो नाम शमस्था-यिभावात्मकः' इत्यादिशान्ति लक्षणं पस्यते ।'** गा० ओ० सि० जि० १ पृ० ३४० । रिंनॉद संस्करणस्य षष्ठाध्याये—**'त्वष्टौ नाट्यरसाः स्मृताः'** इत्यस्योल्लेखो-ऽस्ति । अनेन सिद्धो भवति यत्कालिदासस्य समयपर्यन्तं अर्थात् ख्रीष्ट्रस्य चतुर्थ शतकपर्यन्तं शान्तं रसत्वे न स्वीकृतिर्नासीत् । किञ्चैवं प्रतीतो भवति यदभिनवगुप्तः नाट्यशास्त्रस्य संस्करणद्वयस्य परिज्ञाता आसीत् । उद्भटोऽपि स्वकीय काव्यालङ्कार-सारसङ्ग्रहे (४.५) नवानां रसानामुल्लेखः कृतवान् । (**शृङ्गार हास्य... नकाः । वीभत्साद्भुतशान्तश्च नवनाट्ये रसाः स्मृताः**) । भावप्रकाशनस्य (गा० ओ० सि० संस्करणं पृ० ४६-४८) इयं मान्यता प्रतीतोभवति यत् शान्तरसस्य परिवर्द्धनं वासुकिना कृतम् । अस्य वक्तव्यस्य प्रामाप्याप्रामाणस्य निर्णयाभावेऽपि इदं कथितुं शक्यते यदिदं नाट्यशास्त्रं चतुर्थशकात् पश्चात् तथाष्टम शतकतात्पूर्वमेव शान्तरसं स्वीचकार ।

छन्दोविषयकस्य पञ्चदशाध्यायस्य प्रारम्भे अभिनवगुप्तः संस्करणद्वयस्य निर्देशमकरोत् । **'तत्रेहाध्याये भरतमुनिकृतमिति त्रिकैर्मकारादिभिः कैश्चित् किञ्चिल्लक्षणं स्वीकृतमिति विविधः पाठो दृष्यते । मध्ये च चिन्तनाय (चिन्तनेषु) पुस्तकेषूभयमपि पठ्यते इति** । (अभि० भा०, पा०-२, पृ० २५२-२५३) । काव्यमालाद्वितीयसंस्करणेन सह समत्वमेवास्ति । काव्यमालासंस्करणस्य षोडशाऽध्याये तथा चौखम्बासंस्करणस्य सप्तदशाऽध्याये नाट्यस्य षट्त्रिंशल्लक्षणानि पञ्चानुष्टुप्श्लोकैः परिगणितानि सन्ति । किञ्च गा० ओ० सि० संस्करणे चेयं परिगणना षोडशाध्याये उपजातिछन्देषु कृतास्ति । षट्त्रिंशल्लक्षणानां क्रमोऽपि उभयोः संस्करणयोरसंलग्न एवास्ति । केवलं सप्तदशलक्षाणान्येव उभयोः संस्करणयोः समरूपेण मिलन्ति । अभिनवभारत्यामस्योल्लेखोऽस्ति लक्षणानां यन्नाम तत्रास्ति तन्नाम भरतप्रदत्तनाम्नः भिन्नोऽस्ति । विभिन्नसंस्करणेषु क्रमस्य तथा नाम विषयकस्य च भेदः परिलक्ष्यते । तेन हि अभिनवगुप्तेन स्वगुरोः भट्टतौतस्य परम्परायाः अनुसरणंकृतम् । **(तथा च मतान्तरेण भरतमुनिरेवान्यथाप्युद्देशलक्षणेन नामान्तरैरपि च व्यवहारं करोति, तत एव पुस्तकेषु भेदो दृश्यते तच्च दर्शयिष्यामः । पठितोद्देशक्रमस्त्वस्मदुपाध्याय परम्परागतः** । १५, ४ पा० २, पृ० २९८) ।

काव्यमालासंस्करणस्यैकत्रिंशदध्याये ३३४ श्लोकाः सन्ति । किन्तु, चौखम्बासंस्करणस्य तस्मिन्नेवाध्याये ५४५ श्लोकाः सन्ति । काव्यमालायाः नवीनसंस्करणे एका टिप्पणी अस्ति—**'आकारवृत्यमन्यत्स्यात् चतुष्कं त्रिकमेव वा ।'** अस्य टिप्पणस्य पश्चाद्वर्त्ती द्वानवतिश्लोकाः प्रक्षिप्ताः सन्ति (काव्यमालासंस्करणस्य २९.३ श्लोकास्तथा चौखम्बासंस्करणस्य ३९७ श्लोकाः द्रष्टव्यम्) । नाट्यशास्त्रस्य विशिष्टसमालोचकेन श्रीकविनानुसारेण प्रारम्भकालादेव नाट्यशास्त्रस्य द्वे संस्करणे स्तः — उत्तरीयसंस्करणं दाक्षिणात्यसंस्करणञ्चेति । तस्य मान्यतायां दाक्षिणात्यसंस्करणं प्राचीनमस्ति तथोत्तरीय संस्करणमर्वाचीनमस्ति । श्रीकविना स्वसम्पादितस्य संस्करणद्वयस्य भूमिकायां यल्लिखितं तेनप्रतीतोभवति अभिनवभारतीं सम्पादनायोपलब्धसाधनसमूहोऽपर्याप्त एवासीत् । संक्षेपे नाट्यशास्त्र-अभिनवभारत्योः सम्बन्धे उपरि निर्दिष्ट तथ्येन प्रश्नद्वयं समुपस्थितौ । प्रथमः प्रश्नोऽस्ति नाट्यशास्त्रस्य मौलिकं रूपं किमस्ति? द्वितीयः प्रश्नोऽस्ति नाट्यशास्त्रं कस्य रचनाऽस्ति? अनयोः प्रश्नयोः समाधानं कठिनमस्ति ।

### वर्त्तमान नाट्यशास्त्रस्य महत्त्वपूर्णरहस्यं निम्नलिखितमस्ति

षष्ठ-सप्तमाध्याये तथाऽनेकेषु अध्यायेष्वपि गद्यभागोऽपि सम्मिलितोऽस्ति, षष्ठ-सप्तमाध्याये गद्य भागो विस्तीर्णोऽस्ति । चतुर्दशाध्याये प्रवृत्युपरि नव पंक्तयः सन्ति । विषयोऽयं काव्यमालासंस्करणस्य त्रयोदशाध्यायेऽस्ति (द्र० पृ०२१६) । पञ्चदशाध्यायस्य १०० पृष्ठे चतस्रः पङ्क्तयः स्वरःव्यञ्जनयोर्विषये सन्ति । काव्यमालासंस्करणस्य चतुर्दशाध्यायस्य २२१-२२२ पृष्ठेऽस्ति । एकोनविंशतितमो- ऽध्याये २२१-२२२, २२४-२२५ पृष्ठे गद्यांशोऽस्ति । अष्टाविंशतितमोऽध्याये ३१८-३२२, ३२६ पृष्ठेऽनेकानि दीर्घतराणि गद्यानि सन्ति । इमानि गद्यानि काव्यमाला-

संस्करणस्याष्टाविंशतितमोऽध्यायस्य ४३२-४३७ पृष्ठे सन्ति । त्रयस्त्रिंशदध्यायस्य ४३३-४३५, ४३६, ४३८-४३९ पृष्ठेषु कतिपयाः गद्यांशाः सन्ति । एतानि लघुगद्यानि काव्यमालासंस्करणस्य चतुस्त्रिंशदध्यायस्य ६११ पृष्ठे तदग्रे च सन्ति । अल्पादल्पतराणि पञ्चदशानुष्टुप्छन्दांसि तथा षोडशआर्यापद्यानि सन्ति । अस्मिन् प्रसङ्गे निम्नलिखितानि पद्यान्यपि दर्शनीयानि—

**'सूत्रानुविद्धे आर्ये भवतः ।' तथा—**

**भवन्ति चात्र श्लोकाः । अथवा—अत्रार्ये भवतः ।' अथवा—अत्र श्लोकाः ।**

उपर्युक्त कथनं कमपि विशेष तथ्यं प्रति सङ्केतं करोति । विचारणीयोऽयंप्रश्नः ।

कतिपयाः गद्यांशाः निरुक्तगद्यैः सह मिलन्ति तथेमाः गद्यांशाः सूत्र-भाष्य-शैल्यामेव वर्णितोऽस्ति । उदाहरणस्वरूपे षष्ठाध्यायस्य रससूत्रविषयकं गद्यं द्रष्टव्यम्—**'विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तः ।' को रा दृष्टान्त इति चेत्, उच्यते । यथा नाना व्यञ्जनौषधि... रसत्वमाप्नुवन्ति ।**

**ऋषय ऊचुः । रस इति कः पदार्थः? अत्रोच्यते । आस्वाद्यत्वात् ।'** अत्र प्रथमं वाक्यं सूत्रमिव प्रतिभाति तथा शेषवाक्यानि गद्य-भाष्यमिव प्रतीतो भवति । द्वितीय निदर्शनं निम्नलिखितमस्ति—**'व्यभिचारिण इदानीं वक्ष्यामः... । अत्राह व्यभिचारिण इति कस्मादुच्यते ? वि + अभि इत्येतावुपसर्गौ । चरगतौ इतिधातुः ।'** (अध्या० ७, पृ० ८४) । एतेषां गद्यानां तुलना निरुक्तस्य गद्येन सहकर्त्तुं शक्यते । **'अपत्यं कस्मात् अपततं भवति नानेन पततीति'** वा (३, १) । अथवा—अस्य तुलना जैमिनीय सूत्राणामुपरि प्रसिद्धेन शाबरभाष्येण सहाऽपि कर्त्तुं शक्यते । यथा—**को धर्मः? कथं लक्षणः? काव्यस्य साधनानि किं परश्चेति?**—(आनन्दाश्रम-संस्करणस्य नवमपृष्ठे) । उल्लेखनीयमियं वार्त्ता यदभिनवगुप्तः नाट्यशास्त्रस्य निर्देशः भरतसूत्ररूपे एव करोति । वर्तमानग्रन्थेणाऽपि प्रतीतो भवति यदस्मिन् ग्रन्थे सूत्र-भाष्य-सङ्ग्रहश्लोक-निरुक्तादयः सर्वे सम्मिलिताः सन्ति । यथा—

**विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।**
**निबन्धो यः समासेन सङ्ग्रहें तं विदुर्बुधाः ॥**
**रसाभावा अभिनया धर्मी वृत्ति प्रवृत्तयः ।**
**सिद्धिः स्वरास्तथातोद्यं गानं रङ्गञ्च सङ्ग्रहः ॥**
**अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः ।**
**सूत्रतः सा तु विज्ञेया कारिकार्थप्रयोगिनी ॥**
**...एवमेषोऽल्पसूत्रार्थो व्यादिष्टो नाट्यसङ्ग्रहः ।**
**अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् ॥**

(ना०शा० ६, ९-११, ३१)

अभिनवगुप्तस्य कथनानुसारेण सूत्रस्यार्थोऽस्ति परिभाषा तथा भाष्यस्यार्थोऽस्ति सूत्रं स्पष्टयितुं कृत पक्ष प्रतिपक्षचिन्तनम्, तथा तस्य व्याख्या—**'सूत्रं लक्षणं भाष्यं तद्व्यक्तिकरण रूपा परीक्षा,** (भा० १ पृ० ६५) कारिका शब्दस्य व्युत्पत्तिं कुर्वन्

अभिनवगुप्तेनोक्तं यत् सूत्रमपि कारिका वा श्लोकः कथितुं शक्यते । तत्तु सूत्रेण सम्बद्धस्तथा तस्य साक्षादनन्तरं सन्निहितोऽस्ति तथा सूत्रस्यार्थं स्पष्टकरणे समर्था व्याख्यामपि कारिका कथ्यये—**'सूत्रतः सूत्रेण तेन सूत्रमपि कारिकां, तत्सूत्रमपेक्ष्य या अनुपश्चात्पठिता श्लोकरूपा साऽपि कारिका ।'** पाठः-१, पृ० २६६ । **सूत्रग्रन्थ विकल्पनं** (चौखम्बासंस्करणस्य षष्ठाध्याये तथा गायकवाड़ ओ० सि० संस्करणस्य चतुस्त्रिंशदध्याये) अभिनवगुप्तस्य कथनमस्ति—**'सूत्रं सूत्रकं लक्षणं वक्ष्यामि । तेनैव च कारिका सङ्गृहीता । ग्रन्थो भाष्यं तत्कृतं च विकल्पनमाक्षेप प्रतिसमाधानात्मक-मिति परीक्षा निरुक्त शब्दवाच्या प्रतिज्ञाता । सूत्रविवरणस्वभावा तु कारिका सूत्रमपि प्रकाशयन्ती बहुतरापेक्षसमाधानव्याकुलशिष्यजनस्थितिपक्षं निरूपणेनोपत्करोतीति भाष्यस्य पश्चादस्याः पाठः ।'** (भागः १ पृ० २७३) । **विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ।'** अस्य सूत्रस्योपरि अभिनवभारत्याः कथनमिदमस्ति—**एवं क्रमहेतुमभिधाय लक्षणसूत्रमाह—'विभा०'। 'को वा दृष्टान्तः' अत्राह यथा हि०'** अस्मिन् सम्बन्धेऽभिनवभारत्याः कथनमस्ति—**'अत्र प्रश्ने भाष्येण प्रतिवचनमाह यथेत्यादिना आप्नुवन्तीत्यन्तेन'** (भाग० १ पृ० २८९) । सूत्रस्य भाष्यस्य च सम्बन्धेऽपरोप्युदाहरणं दातुं शक्यते । प्रथमाध्यायस्य पञ्चमाध्याये ३०१-३०२ पृष्ठे पाठोऽस्ति—**तत्र शृङ्गारो नामरतिस्थायिभावप्रभव उज्ज्वल वेषात्मकः आदि** । अभिनवभारत्याः ३०३ पृष्ठे एवमपि कथनमस्ति—**अत्र रतिस्थायीति सूत्रभागं भाष्येण स्पष्टयति चेत्यादिना ।'**

कथनमिदमपि ध्यातव्यमुत्तररामचरितस्य चतुर्थाङ्के आचार्यभवभूतिः भरतमुनिं तौर्यत्रिकसूत्रधारशब्देन निर्देशमकार्षीत् । अनेनायमप्यर्थः सिद्ध्यति यत् भरत प्रणीतो ग्रन्थः सूत्रात्मको वर्त्तते । किञ्चानेनेदं ज्ञातव्यं यत् सूत्रग्रन्थः गद्ये एव भवितुमर्हति । ऐतरेयस्तथा शतपथब्राह्मणः एवं गृह्यसूत्रधर्मसूत्रश्चेति (आपस्तम्ब-बौधायनविशिष्टाश्चेति) (द्र० आ० ध० सू० १.४ १४-२३, १.६. १६-१३ (द्वौ श्लोकौ) १.६, १९, १४.१५, १.९-२५, १०-११, इत्यादि, आश्वलायनगृह्यसूत्रे १, ३, १० श्लोकाः सन्ति, कौशिकगृह्यसूत्रेऽपि श्लोकाः सन्ति ।) एवं विधेषु प्राचीनग्रन्थेष्वपि श्लोकाः सन्निहिताः सन्ति । अतोऽस्य संभावनाऽस्ति यन्नाट्यशास्त्रस्य मूलग्रन्थे उभयोः.. गद्य-पद्ययोः सम्मिश्रणञ्चासीत् ।

सम्प्रति आनुवंश्यशब्दस्यार्थोऽपि विचारणीयोऽस्ति । अस्मिन् संदर्भे आर्याछन्द्सां तथा कतिपय श्लोकानां प्रयोगोऽपि द्रष्टव्यः अस्मिन् अर्थे । विशेषतः प्रश्नोऽयं विचारणीयोऽस्ति । आनुवंश्यशब्दद्वारेण प्रस्तुतश्लोकाः प्रायः षष्ठ एवं सप्तमाध्याये एव मिलन्ति । अन्येष्वध्यायेषु एतेषां श्लोकानां संख्याऽत्यल्पाऽस्ति उदाहरणार्थम्—चौखम्बासंस्करणस्यैकोनविंशतितमोऽध्याये श्लो० सं० ४६-५८ तथा काव्यमाला-संस्करणस्य सप्तदशाध्यायस्य श्लो० १०७-११९ । महाभारतस्यादिपर्वे (९५.९, २७, ३०-३१) आनुवंश्यश्लोकाः पौनःपुन्येन समायान्ति । महाभारतस्य वनपर्वे—

**'यत्रानुवंश भगवाञ्जामदग्न्यस्तथा जगौ ।**
**विश्वामित्रस्य तां दृष्ट्वा विभूतिमतिमानुषीम् ॥** (८७-१६)

केवलमानुवंश-शब्दस्य प्रयोगोऽपि मिलति । वनपर्वानुसारेण (८८.५) आनुवंश्यशब्दस्य प्रयोगः गाथया सह मिलति । (द्र० वनपर्वस्य ११४-१०, १९२, २७-२९, १९३-१३.१५) । वनपर्वे १२९-८ निम्नलिखितः पाठोऽस्ति—**'अथानुवंशं पठतः शृणु मे कुरुनन्दन** । नीलकण्ठनाम्ना टीकाकारेणास्य व्याख्या—**'परम्परागतमाख्यानश्लोकम्'** इत्येवं रूपेणैव कृताऽस्ति । मत्स्यपुराणेऽप्येकः आनुवंश्यश्लोकोऽस्ति । अस्य ग्रन्थस्य षष्ठाध्यायस्य ३५-३६ श्लोकात् पूर्वं समागतेयमुक्तिः—**अत्रानुवंशौ श्लोकौ भवतः** । अस्य कथनस्योपरि अभिनवभारत्याः कथनमस्ति—**अत्रेति भाष्ये । अनुवंशभवौ शिष्याचार्यपरम्परासु वर्त्तमानौ श्लोकाख्यौ वृत्तविशेषौ सूत्रार्थसंक्षेपप्रकटीकरणेन कारिकाशब्दवाच्यौ भवन्तौ पठति यथेत्यादि** ।' प्रथमभागस्य २९० पृ०।

अत्र विचार्यते—आनुवंश्यपदेन व्यवहृताः कारिकायाः रचना अतिप्राचीनकाले एवाभवत् । सम्बन्धश्च तासाङ्कारिकानां नाट्यकलया सह आसीत् । ताः कारिकाः पितृपरम्परया वा गुरुपरम्परया उत्तरोत्तर संरन्त्येव । ताः कारिकाः नाट्यशास्त्रे सङ्गृहीताः अभवन् । किञ्चेमाः आनुवंश्यकारिकाः नाट्यशास्त्रस्य कर्त्तुः रचना नैवास्ति ।

**'सूत्रानुविद्धे (५.१ सूत्रानुबद्धे) आर्ये भवतः'** अस्याः पंक्त्यारर्थोस्ति—इमाः आर्याः यासां पूर्ववर्त्तिनानुबद्धसूत्रेण सह घनिष्ठसम्बन्धोऽस्ति, किम्वा या सूत्रस्यैवानुविद्धार्थं सरल एवं सुस्पष्टभाषायां प्रकटयति । सम्भवतः पद्यान्येतानि ग्रन्थकर्त्तुः द्वारेणैव रचितानि भवन्ति **'अपि च सुख'** (प्रथमभागस्य ३११-१२ पृष्ठोपरि अभिनवभारत्याः टिप्पणमस्ति—**'एवं सूत्रार्थे परीक्ष्य स्थापिते तदर्थस्य सुखग्रहणार्थं सूत्रार्थं विवरण रूपत्वात् सूत्रसमीपेऽप्युपचितपाठात् कारिकामधुना पठति अपि चेति । न केवलं सूत्रं परीक्षापि यावदियं कारिकेति एवं सर्वत्र मन्तव्यम् । तामेवकारिकां पठति सुखेति टिप्पणीयं सूत्रानुबद्धरूपे प्रयुक्तेनार्ययासहापि भवति ।**

अत्रार्याः (भा०-१, पृ० ३२७-३२८) आदि पाठोपरि अभिनवगुप्तस्य कथनमस्ति यत् प्राचीनाऽचार्याः रससंबन्धिनस्तथाऽन्यविषयकानामार्याछन्दसां रचना एवं सङ्ग्रहश्च कृतवन्तः । भरतस्तु ताः विभिन्नरसप्रकरणे यथास्थाने निविष्टमात्रं कृतवान्—'ता एता ह्यार्या एकप्रदादृकतया पूर्वाचार्यैर्लक्षणत्वेन पठिताः ।' मुनिना तु सुखसङ्ग्रहाय यथास्थानं निवेशिताः (प्रथमभागस्य ३२८ पृ०) भरतस्य नाट्यशास्त्रे प्रमुखपद्यमनुष्टुपमेवास्ति । किन्तु, यथास्थाने उपजात्यार्याप्रभृति छन्दसां प्रयोगोऽपि कृतोऽस्ति ग्रन्थकारेणेति । अनेन प्रमाणितो भवति यदभिनवगुप्तस्य मतानुसारेण नाट्यशास्त्रे प्रयुक्ताः आर्याः भरतस्य कृतिर्नास्ति । भावप्रकाशनः वासुकेः एका कारिका उद्धृतवान् । नाट्यशास्त्रे कारिकेयं पञ्चसु श्लोकेषु सङ्गृहीताऽस्ति । याः कारिकाः विभिन्न संस्करणेषु हस्तलिखितप्रतिलेखेषु च—**'भवन्ति चात्र श्लोकाः ।' अथवा अथवा—'अत्र श्लोकाः'** इत्येंत्यादिभिः शब्दैः प्रदर्शितोऽस्ति । (द्रष्टव्यः—चौ० सं० सी० षष्ठाध्यायस्य श्लो० ३४-३८, का० मा० सं० अ० 'श्लो० ३५-३९ तथा गा० ओ० सि० सं० अ० ६ श्लो० ३८-४२) ।

**नानाद्रव्योषधैः पाकैर्व्यञ्जनं भाव्यते यथा ।**

**एवं भावा भावयन्ति रसानभिनयैः सह ।**
**इति वासुकिनाप्युक्तो भावेभ्यो रससंभवः ॥**

(भा० प्र०, पृ० ३६-३७)

चौ० संस्करणस्य षष्ठाध्यायस्य पञ्चत्रिंशत्तमे पृष्ठे अनेन प्रकारेण पाठोऽस्ति— **नानाद्रव्यैर्बहुविधैर्व्यञ्जनं... यथा । एवं... सह** । द्र० गा० वा० ओ० सि० पाठ.१, पृ० २९४ । अस्योपरि पद्यमिदमेव ।

नाट्यशास्त्रस्योपलब्धसंस्करणस्य षष्ठसप्तमाध्याये विभिन्नप्रकाराणां अभिनय-अङ्गसञ्चालना-गत्यादीनां निरूपणम्, अष्टमाध्यायाच्चतुर्दशाध्यायपर्यन्तं तथा सप्तदशाध्यायात् पञ्चत्रिंशदध्यायानां सङ्कलनं सहैवाऽभवत् । षष्ठाध्यायस्य सप्तमाध्यायस्य च गद्यमागस्तथाऽऽर्याछन्दसां रचना पूर्वाचार्याः कृतवन्तः इत्यभिनवगुप्तस्य कथनमस्ति । संभवतः खीष्टात्पूर्व द्विशतके रचिता आर्येयं द्वितीयाध्यायस्य रचनाभिः सह सङ्कलिताऽस्ति । कालसम्बन्धिनः अस्याः मान्यतायाः निम्नलिखिताधारोऽस्ति—

गौतमधर्मसूत्रे (९.१९) उपवेदानामुल्लेखोऽस्ति । अतिप्राचीनकालादेवचतुर्भिः प्रमुखवेदैः सहचतुर्णामप्युपवेदानामुल्लेखो मिलति । तद्यथा-आयुर्वेदः, धनुर्वेदः, गान्धर्व-वेदः, अर्थशास्त्रञ्चेति (कतिपयजनाः अर्थशास्त्रस्य स्थाने स्थापत्यं कथयन्ति) अर्थशास्त्रेण सह चतुर्भ्यः उपवेदभ्यः द्रष्टव्यः—विष्णुपुराणे ३,६,२८ तथा भागवते १२.३८, भागवते चतुर्थमर्थशास्त्रमेवास्ति, अनुशासनपर्वस्य (१०४.४९) कथनमस्ति—

**गान्धर्वशास्त्रं च कला परिज्ञेया नराधिप ।**
**पुराणमितिहासाश्च तथाख्यानानि यानि च ॥**

शान्तिपर्वस्य (२१०-२१) अध्याये गान्धर्व वेदस्य प्रथम प्रवर्त्तको नारदं मन्यते। नाट्यवेदात् गान्धर्व वेदः भिन्नोऽस्ति । गान्धर्ववेदस्तु सामवेदस्यैवोपवेदोऽस्ति तथाऽस्याध्ययनं द्विजातिपर्यन्तमेव सीमितमासीत् । किञ्च नाट्ये शूद्रादिकस्यापि वर्णस्य प्रवेशो वर्जितः नासीत् । क्षेत्रस्य दृष्ट्या शास्त्रमिदमतीव व्यापकमस्ति । नृत्यसङ्गीतञ्च तस्यांश एवास्ति । गान्धर्वशिक्षा पूर्णतया नाट्यशास्त्रस्यैवानुसरणं करोति । अत एव नाट्यशस्त्रानुसारेण गान्धर्ववेदस्य प्रथमः प्रवर्त्तकः नारद एवासीत् ।

**गान्धर्वमेतत् कथितं मया हि पूर्वं यदुक्तं त्विह नारदेन ।**
**कुर्याध एव मनुजं प्रयोगं संमानमग्र्यं कुशलेषु गच्छेत् ॥**

(ना०शा० ३२.४८४)

नाट्यशास्त्रस्य कथनमस्ति यत् उपवनविहारादिभिः, पुष्पाणां शय्यादिभिः, काव्यसेवाभिः श्रृङ्गाररसस्याभिव्यक्तिर्भवति । यथा—

**ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।**
**उपवनगमनविहारैः श्रृङ्गाररसः समुद्भवति ॥**

(ना०शा० ६. ४७)

हाथीगुम्फायाः एकस्मिन् शिलालेखे कलिङ्गराज खारबेलं गान्धर्ववेदविदः 'कथितोऽद्धिशिलालेखोऽयं खीष्टात्पूर्व द्वितीयशतकस्य मन्यते स्म । अस्यार्थो भवति खीष्टात् कतिपयाब्दपूर्वमेव गान्धर्वविद्या सर्वमान्योऽभवत् तथा नाट्यवेदेऽस्य सिद्धान्तस्य क्रियायोगस्य चासभीमोऽभवत् । खीष्टात्पूर्व द्वितीयशतके एवायं सिद्धान्तः सुचारुरूपेण निजास्तित्वे समागतः आसीत् ।

अनेन प्रतीतो भवति, यद्वर्त्तमाननाट्यशास्त्रस्य प्रथमोऽध्यायस्तथा सम्भवतया उत्तरवर्त्तिनः चत्वारोऽध्यायाः पञ्चमशतकात् किञ्चित्पूर्वं सङ्कलिताः बभूवुः । यतः कालिदासः, भवभूतिस्तथा दामोदरगुप्ताद्याचार्याः भरतमुनिं कतिपयेषु स्थानेषु नाट्यशास्त्रस्य प्रवर्त्तकरूपेण तमस्मार्षुः । निम्नलिखितैः प्रमाणैः साक्ष्यैर्वा सिद्धो भवति यदधिकतरोऽध्यायाः वर्त्तमानोपलब्धनाट्यशास्त्रे तृतीयाथवा चतुर्थशतके विद्यमानाः आसन् ।

अभिनवगुप्तः (१००० खीष्टात् १०३० खीष्टपर्यन्तम्) स्वकीयाभिनवभारत्यामनेकान्यव्याख्याकाराणां निर्देशं कृतमस्ति । तस्मिन्निर्देशे तेनोक्तम्—नवमाध्यायस्यैकश्लोकस्य पाठः उद्भटाचार्यः भिन्नप्रकारेण कृतवानस्ति—

**उत्तानः वर्त्तुलस्त्र्यस्त्रः स्थितोऽधोमुख एव च ।**
**पञ्चप्रकाशः हस्तस्य नाट्यनृत्य समाश्रयाः ॥**

(ना० शा० ९. १८२; गा० ओ० सि० सं०)

अष्टादशाध्याये अभिनवगुप्तस्य पाठोऽस्ति—

**वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि'** सहैव तेनोल्लेखः कृतोऽस्ति **वृत्तानि समवकारे कविभिर्नैव प्रयोज्यानि** । (पाठ २, पृ० १४१) । अभिनवभारत्याङ्कथितमस्ति ।

**उत्तानोऽधस्तलस्त्र्यश्रोऽग्रगोधोमुख एव च ।**
**पञ्चप्रचाराः हस्तस्येति भट्टोद्भटः पठति ॥**

पा०-२ पृ० ७०। द्रष्ट० चौ० सं० ९.१७१-१७२ । द्र० चौ० सं०, अध्या० २०. ८० यत्र **'नैव प्रयोज्यानि'** पाठोऽस्ति । अभिनवभारत्याः कथनमस्ति यदुद्भटः विमर्शस्य स्थाने 'अवमर्शशब्दस्य प्रयोगः कृतवानस्ति । तथा तेन तस्य व्याख्याऽपि कृतेति । तस्मिन्नेवाध्याये (५.६९) सन्ध्यङ्गानां क्रमविषयकस्योद्भटस्य मतस्य समालोचना कृतास्ति । उद्भटस्य समयः अष्टमशतकस्योत्तरार्द्धे प्रमाणितोऽस्ति । अस्यार्थोऽस्ति नवम एवं अष्टादशोऽध्यायश्चाष्टमशतकात् पूर्वकाले एव विद्यमानः आसीत् । षष्ठाध्यायस्य दशमश्लोके (पाठ १, पृ० २६६) अभिनवस्य कथनमस्ति यल्लोलटे उद्भटमतस्य समालोचनाकृताऽस्ति । शङ्कुकस्य व्याख्यायाः अप्यनेनोल्लेखः कृतोऽस्ति । यच्च सन्ध्यङ्ग, वृत्यङ्गलक्षणाद्यागमव्यापारे वर्णितं तत्तु काव्यादर्शेऽलङ्कारतयैव वर्णितमस्ति । **यच्च सन्ध्यङ्ग, वृत्यङ्गलक्षणाद्यागमान्तरे । व्यावर्शितमिदं चेष्टमलङ्कारतथैवनः** । (काव्यादर्शः २.३६३) नाट्यशास्त्रेऽपि द्रष्टव्यः २१.५८-६९).

इदमप्युल्लेखनीयमस्ति 'शारिपुत्र-प्रकरण' नामकनाटकस्याधिकांशः शैलीनाट्य-शास्त्रेण सह मिलति । अस्य प्रकरणस्य रचयिता अश्वघोषस्य समयः ख्रीष्ट्रस्य प्रथम शतके मन्यते स्म । नाट्यशास्त्रस्योपलब्धसाक्ष्यानुसारेण शारिपुत्रप्रकरणस्य रचना भरतकृतनाट्यशास्त्रस्याधारोपरि अभवत् । (द्रष्ट० History of Sanskrit Litterature ? p. 82-85 keith) । पाणिनेः पूर्वमेव शिलालि-कृशाश्वौ नट-सूत्राणां रचनाऽकुरुताम् । (अष्टाध्यायी ४ अ० ४-३, ११०, ११) । किञ्चोभौ तौ पूर्णतया विस्मृतौ जातौ । नाट्यशास्त्रस्य कस्मिंश्चिदपि ग्रन्थे तयोः चर्चा नैवास्ति । तयोर्नाम केवलं अमरकोशे एव मिलति । तत्र शिलालि कृशाश्वि-भरतनामानि नटशब्दस्य पर्यायवाचिनः सन्ति । अमरकोशस्य श्लोकोऽस्ति—**शैलालिनस्तु शैलूषा जायाजीवा कृशाश्विनः । भरता इत्यपि नटाश्चारणास्तु कुशीलवाः** । पाणिनि स्वयमपि नटस्यार्थे शिलालिन् तथा कृशाश्विन् शब्दयोः प्रयोगः कृतवानस्ति । याज्ञवल्क्यस्मृतौ भरतशब्दस्य प्रयोगः नटशब्दस्यार्थे कृताऽस्ति । पाणिनेः पश्चात् तथा कालिदासात् कतिचिच्छतके पूर्वं भरत नाम्नः कोऽपि विद्वान् नाट्यविषयोपरि कमपि ग्रन्थमरचयत् । तदेव कालक्रमेण-विकसितोभूत्वा वर्त्तमाननाट्यस्वरूपे समुपलब्धो-ऽस्ति । क्रमेण सामाजिकभावनां नाट्यकर्मणः विरुद्धाऽभवत् । भावनेयं धर्मसूत्र एवं प्राचीनस्मृतिकाले परिपक्वाऽभवत् । तत्पश्चात् अभिनयकलां सम्मानयितुं प्रतिष्ठितपदे स्थापयितुञ्च प्रबलप्रयत्नः सञ्जातः । सम्भवतः लक्ष्यमिदं साधयितुं कतिचन विद्वान्सः दृढपरिकराः अभवन् । अस्मिन्नेव प्रसङ्गे नाट्यशास्त्रस्य प्रथमपञ्चाध्यायाः सङ्कलिता बभूवुः । विषयेऽस्मिन् प्रतिभाशाली-विद्वान् तथा प्रसिद्धशैवदार्शनिकोऽभिनवगुप्तः नाट्यशास्त्रसमुद्धर्त्तुं कृतप्रयत्नो बभूव । अस्य महापुरुषस्य विचारोऽत्रातीव समुचितः, व्यावहारिकः तथा दार्शनिकश्चास्ति । तद्यथा—

'एतेन कामजो दशको गणः' इति वर्जनीयत्वेन नाट्यस्यानुपादेयतेति यत्केचिदा-शंशङ्किरे तदयुक्तिकृतम् । याज्ञवल्क्यस्मृतिपुराणादौ चास्य प्रशंसाभूयस्त्व श्रवणात् न चागमाद्वृते धर्मोऽनुमानगम्य इति न्यायात् । एतत्तु वृथैवास्थानभीरून् प्रतिशङ्का शमनार्थमभिधीयते नाम । तथाहि—नटानां तावदेतत्स्वधर्माम्नायरूपतयानुष्ठेयमेवेति । न चास्माकं तच्चेष्टितं विचार्यम् । सोमकथोपदेशिनो हि वाक्यस्य न तद्विक्रयि ब्राह्मणान्तर्गतकृत्याकृत्यविचारणोद्योगो युक्तः । न चाप्यस्योपदिश्यते गायेन्नृत्येदिति ।' (ना०शा० ३६, ७४-७५) । 'एतेन' शब्दस्याभिप्रायो नाट्यशास्त्रमेवास्ति । नाट्यशास्त्रस्याध्येतारः श्रोतारश्च तदेव फलमाप्नुवन्ति यत्फलं वेदानामध्येतारं, धार्मिकानुष्ठानकर्तारम्, तथा दान-दातारञ्च मिलन्ति । राजा निम्नलिखितानि दशमनोरञ्जनकर्माणि परिवर्जयेत्—

**मृगयाद्यो दिवास्वप्नः परिवादः स्त्रियो मदः ।**
**तौर्यत्रिकं वृथाट्या च कामजो दशको गणः** ॥ (मनु० ६.४६)

अनेन तथ्येन प्रमाणितो भवति यत्तृतीयचतुर्थख्रीष्टाब्दे नाट्यशास्त्रमिदं ग्रन्थरूपेण सन्नद्धोऽभवत् । ग्रन्थोऽयं केनाप्येकेन कविना रचिता आसीत् । (नाट्यशास्त्रस्य मूलपाठस्योपरि विचाराय द्र० Dr. Day-History of Sanskrit poetics, part I,

Page 23-36) । ग्रन्थेऽस्मिन् सूत्रस्य भाष्यस्य च शैल्यां गद्यमासीत् । प्राचीनः आर्यास्तथा सामान्यश्लोकाः अप्यासन् । सहैव ग्रन्थकर्त्ता स्वयमपि कतिपयाः आर्याः रचयामास । तत्पश्चादस्य शास्त्रस्याधिकारिभिः विद्वद्भिः यथावसरे यत्र तत्र अन्यश्लोकाः अपि संयोजिताः ।

यावत् कोहलस्य, नन्दिकेश्वरादेश्च रचनायास्तथोद्भटादेर्टीकायाश्च समुचितस्वरूपस्य परिचयो न भवेत् तावन्नाट्यशास्त्रस्य कालनिर्धारणस्य समस्यायाः समाधानं भवितुं न शक्यते ।

नाट्यशास्त्रस्य प्रणेतुर्निर्णयेऽपि बहुविधङ्काठिन्यं भवति । अभिनवगुप्तात्पूर्वं धारणेयमासीत् यत् प्रथमोऽध्यायस्य षण्णां श्लोकानां रचना भरतस्य शिष्यः अकार्षीत् । अनेनैव प्रकारेणेयमपि मान्यता आसीत् यद्ग्रन्थान्तर्गते प्रश्नोत्तरं केनाऽपि भरत-शिष्येण सम्पादितम्, तथा नाट्यशास्त्रस्य मूलपाठः स्वयं भरतेन रचितः । आसां मान्यतानां खण्डनमभिनवगुप्तेन कृताः । तन्मते तु समग्रं नाट्यशास्त्रं एकस्यैव भरतस्य कृतिरस्ति । साधारणतया ग्रन्थकर्त्तारः स्व स्व अर्थे अन्य पुरुषस्य प्रयोगः कुर्वन्त्येवेति । **'एकस्य ग्रन्थस्यानेकवक्तृवचनसंदर्भमयत्वे प्रमाणाभावात् स्वपर-व्यवहारेण पूर्वपक्षोत्तरपक्षादीनां श्रुतिस्मृतिव्याकरणातर्कादिशास्त्रेष्वेकविरुचिरोष्वपि-दर्शनात् (अभिनवभारत्याः प्रथमभागस्य नवम पृष्ठे) ।**

कतिचन नास्तिकानामाचार्याणां मान्यताऽऽसीत् यन्नाट्यशास्त्रस्य त्रयः प्रवर्त्तकाः आसन् । ते च सदाशिवः, ब्रह्मा, भरतश्चेति । तेषु ब्रह्माणं विशेषमान्यता प्रदातुं ब्रह्मा अस्य नाट्यशास्त्रस्य रचना कृतवान् । किञ्चाभिनवगुप्तेन नास्तिकानामाचार्याणामप्यस्य मतस्य खण्डनं कृतम् ।

**'एतेन सदाशिवब्रह्मभरतमतत्रयविवेचनं ब्रह्ममतसारता प्रतिपादनाय मतत्रयी-सारासारविवेचनं तद्ग्रन्थखण्डप्रक्षेपेण विहितमिदं शास्त्रं न तु मुनिविरचित- मिति यदाहुः नास्तिकधुर्योपाध्यायास्तत्प्रत्युक्तम्, सर्वानपह्नवनीयाबाधितशब्दलोकप्रसिद्धि-विरोधाच्च ।'** (अभि० भा० १, भा० पृ० ८)

विषयविवेचनस्य दृष्ट्या समुपलब्धनाट्यशास्त्रस्याध्यायानां संख्याऽपि भिद्यते । हन्त, चौखम्बा संस्करण-गायकवाड़ संस्करणयोर्मध्ये पर्याप्त भेदाः सन्ति । सर्वाधिक भेदः गायकवाड़संस्करणस्य तृतीय भागे सन्ति । अस्मिन् संस्करणे अध्यायानां क्रमे तथा श्लोकानां संख्यायां विचित्रभेदाः सन्ति । कस्मिंश्चित्प्रकाशने सप्तत्रिंशत् अध्यायाः सन्ति तु कस्मिंश्चित्प्रकाशने षट्त्रिंशत् अध्याया एव सन्ति । किञ्च नाट्यशास्त्रस्य षट्त्रिंशत् अध्यायाः एव प्रामाणिकाः आभान्ति ।

नाट्यशास्त्रस्य मुख्यं लक्ष्यं तु नाट्यशास्त्रस्य विस्तृतं विवेचनमेवास्ति किन्तु, छन्दः शास्त्रस्य, अलङ्कारशास्त्रस्य, सङ्गीतशास्त्रस्याऽपि विषयाणामत्र विवेचनं समुपलभ्यते । अध्यायक्रमेण नाट्यशास्त्रस्य विषयाः निम्नप्रकारकाः सन्ति—

**१. प्रथमाध्याये नाट्यस्योत्पत्तिः ।**

आत्रेयस्तथाऽन्य ऋषयः ब्रह्माणं पञ्च प्रश्नानपृच्छन्—नाट्यवेदस्योत्पत्तिः केन

प्रकारेणाभूत् । कस्मै निमित्तार्थं कानि चाङ्गानि सन्त्यस्य, निश्चित-निष्कर्ष-परिज्ञातुं कः उपायः, किम्वा साधनम् ? तथा मञ्चोपरि केन-प्रकारेणास्य प्रदर्शनं भवति ? अभिनवगुप्तस्यात्र कथनमस्ति—पञ्चप्रश्नस्योत्तराणि सर्वत्र ग्रन्थे विकिरितानि सन्ति । तद्यथा—'**वयं तु ब्रूमः—नात्र क्रमः कश्चित् । अपितु यथावसरं महावाक्यात्मना षट्साहस्रीरूपेण प्रधानतया पाञ्चप्रश्नकनिरूपणपरेण शास्त्रेण तत्त्वं निर्णीयते न तु क्रमः कश्चित् ।**' (अभि०भार०, भा०-१, पृ० ८) । यतो हि तस्मिन् काले शूद्रजातिभ्यो वेदाध्ययनं वर्जितमासीत् । अतः ब्रह्मा भरतं पञ्चमवेदस्य रचना कर्त्तुमशिषत् । '**न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु । तस्मात्सृजा परं वेदं सार्ववार्णिकम् ।**' (ना० १२) । अतः सर्ववार्णिकोऽयं पञ्चमो वेदः । भरतेन ऋग्वेदात्कथावस्तु, सामवेदात् सङ्गीतम्, यजुर्वेदादभिनयस्तथा अथर्ववेदात् रसान्नीत्वा सार्वजातिक पञ्चमवेदस्य रचनां कृत्वा स्वकीय शत पुत्रान् शिष्यान् वा पाठयामास ।

**२. द्वितीयाध्याये नाट्यशालायाः निरूपणम्**

(तृतीय तथा षष्ठश्लोके मण्डपनिर्माणवर्णनम्, तथा पञ्चमसप्तमश्लोके प्रेक्षागृहस्य निर्माणं वर्णितमस्ति) । सर्वप्रथमः स्तम्भानां निर्माणं कर्त्तव्यम्, कन्दराकृतिः प्रेक्षागृहं द्वे खण्डे विभाजितव्यम् । प्रेक्षागृहस्य कुड्यं चित्रितं भवितव्यम् । दर्शकानां स्थातुं काष्ठपीठस्यापि स्थापना कर्त्तव्यम् ।

**३. तृतीयेऽध्याये रङ्गदेवतासमर्चा—**

प्रथमतः रङ्गदेवानां यथा-महादेव-ब्रह्मा-विष्णु-बृहस्पतिगुहादिदेवानां पूजा कर्त्तव्यास्तथा तैः वरमपि प्राप्तव्यम् ।

**४. चतुर्थाध्याये नाटकद्वयस्य वर्णनम्—**

अमृतमन्थननामकस्य नाटकस्य देव सन्मुखे प्रदर्शनम्, (द्रष्ट० पद्मपुराणे ४. १२. ८१) । तथा महादेवस्य सम्मुखे त्रिपुरदाहनामनाटकस्य प्रदर्शनम्, तण्डुद्वारेण ताण्डवविषयकाणामष्टोत्तरशतानां करणानां द्वात्रिंशदङ्गहाराणां च वर्णनम् । ताण्डव-नृत्यस्योत्पत्तिः (अभि०भा० भा० १ अ० ४) । अस्मिन् प्रसङ्गे नाट्यशास्त्रस्य कथनमस्ति—

'**अत्रोच्यते न खल्वर्थं नृत्ताङ्केचिदपेक्षते । किन्तु शोभाजनयतीत्यतो नृत्यमिदं स्मृतम् ॥ प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः । मङ्गल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्त्तितम् ॥ विवाहप्रसवावाहप्रमोदाभ्युदयादिषु । विनोदकरणञ्चैव नृत्तमेतत् प्रकीर्त्तितम् । गीतप्रयोगमाश्रित्य नृत्यमेतत् प्रनृत्यताम् ।**

(अ० ४, पृ० २६०-६३)

**५. पञ्चमेऽध्याये पूर्वरङ्गस्य विस्तृतं विधानम्—**

अत्र पूर्वरङ्ग-नान्दी-ध्रुवा- प्रस्तावनादेर्विषये विस्तृतविवेचनमस्ति । (द्रष्ट० इण्डि० हिस्टा० क्वा० भाग. १७, १९४१, पृ० ३५९-३६९, अत्र 'नान्दी' पदस्यैतिहासिकः विवेचनमस्ति) ।

**६. षष्ठाध्याये रसस्य विस्तृतविवेचनम्—**

मुनिभिः पृष्टः प्रश्नपञ्चकनिरूपणम्—रसानां नामकरणस्याधारः, भाव-संग्रह-कारिकादेः स्वरूपम्, संक्षेपेण शास्त्रस्यैकादश तत्त्वानां, रस-भाव-अभिनय-धर्मी-वृत्ति-प्रवृत्ति-सिद्धि-स्वर-आतोद्य-गान- रङ्गादीनां वर्णनम्, कारिकानामर्थः निरुक्तश्च, अष्टरसानां (नवरसानां वा) अष्ट स्थायिभावः, त्रयस्त्रिंशत् व्यभिचारिभावः, अष्ट सात्त्विकभावः, चतुप्रकारकस्याभिनयः (आङ्गिकः वाचिकः, आहार्यः, तथा सात्त्विकः), द्वौ प्रकारकौ धर्मी (लोकधर्मी तथा नाट्यधर्मी) चतुःप्रकारकाणां वृत्तयः, भारती, सात्वती, कैशिकी, आरभटी), प्रवृत्तयः—(आवन्ती, दाक्षिणात्या, ओड्रमागधी, पाञ्चाली), सिद्धयः—(द्वौ प्रकारकौ स्तः—दैवी, मानवी च); सप्तस्वराः (षडज, षटभज इत्यादयः); चतुःप्रकारकोवाद्यः (तत-अवनद्ध-घन-सुषिरश्च), पञ्चप्रकारकानि गीतानि, रङ्गमञ्चश्च (मण्डपः—वर्गाकारः, आयताकारस्तथा त्रिभुजाकारः); विभावानुभावव्यभिचारिभाव-संयोगाद् रसनिष्पत्तेः प्रकारः, रसानां पारस्परिकस्तथा भावैः सह सम्बन्धम्; रङ्गस्य रसानाञ्चाधिदेवता; रसानां तथा तेषां स्थायिभावानां विस्तृतं विवेचनम् ।

**७. सप्तमेऽध्याये भावानां विस्तृतं विवेचनम्—**

भाव-विभावस्थायिभावानां अर्थात् रत्यादेः तथा व्यभिचारिभावानामर्शान् निर्वेदस्य, ग्लानेश्च सकलान् संयोज्य त्रयस्त्रिंशत् भावानां विस्तृतं विवेचनम्, अष्ट प्रकाराणां-सात्विक भाव-स्तम्भादीनां वर्णनञ्चेति ।

**८. अष्टमेऽध्याये उपाङ्गैरभिनयवर्णनम्—**

चतुर्ण्णामभिनयभेदानां विस्तृतं वर्णनम् । यथा सात्विकः—स्तम्भ-स्वेद-कम्पन-भयादेः, आङ्गिक-वाचिक-आहार्यादे-र्वर्णनम् ।

**९. नवमेऽध्याये हस्ताभिनयस्य वर्णनम्—**

नाट्यै हस्त-कक्षा-कटि-जानु-पदादीनां विविधप्रकारैः सञ्चालनं तथा विभिन्नमुद्रायाः प्रदर्शनम् । ततु—**'एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनेयकरः'** (ना०शा० ९।२७), अत्राभिनवभारत्याः टीकास्ति—**'स्त्रीपुंसयोरुभयोरपि अभिनेत्रोरभिनेययोर्वा,** (अ०भा० भा०२, पृ० ३१) । हस्तस्य चतुर्विंशति मुद्राः तथा बद्धहस्तस्य त्रयोदशमुद्राः यथा—अञ्जलिः, स्वस्तिकप्रभृतयः, सप्तविंशति प्रकारकाः नृत्तहस्तमुद्राः, सप्तषष्टि-प्रकारकानामङ्गसञ्चालनम्, एतेषां परिभाषा तथा प्रयोगः, रस-भाव-अभिनयादीनां देशकालानुरूपस्य शिक्षेत्यादयः वर्णितमस्ति ।

**१०. दशमेऽध्याये शरीराभिनयस्य वर्णनम्—**

तद्यथा—वक्षस्थलबाहुकोटर कट्यादीनां तथा शरीरावयवानां परिचालनम्, तेषां निरूपणं, विभिन्नावसरेषु तेषां प्रयोगः ।

**११. एकादशेऽध्याये चारिविधानम्—**

चारी, खण्ड-करण-मण्डनादीनां परिभाषाः, षोडशप्रकारकस्य भौम्यचारिणां परिभाषा एवं प्रयोगः । यथा—

**एकपादप्रचारो यः सः चारिव्यभिसंज्ञिता ।**
**द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ।**
**...यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संज्ञितम् ।**

(नाट्य० ११.३ तथा ६) । तथा षोडश आकाशचारिणः परिभाषा तथा प्रयोगः, नाटके धनुर्विज्ञानप्रदर्शनस्य प्रचारः । यान् पात्रान् तीव्रगत्या गमनं वर्जनीयम्, नाऽपि परिश्रमं कर्त्तव्यम् ।

**१२. द्वादशाध्याये—**

मण्डलविधानम्, मण्डलानां संख्या एवं तेषां परिभाषा ।

**१३. त्रयोदशेऽध्याये रसानुकूलगते प्रचारवर्णनम्—**

रसानुसारेण पात्राणां सञ्चरणरीतयः ध्रुवागानस्यारम्भाऽनन्तरं, वाद्यैः सह पात्राणां प्रवेशः, देवताभिः, राजभिः, मध्यवर्गीय पुरुषैः स्त्रीभिः, निम्नवर्गीयजनैः, रङ्गमञ्चाति-क्रमणे कालावधेर्वर्णनम्, रौद्र-वीभत्स-वीरादिरसान्, निष्पादनस्य रीतिः, तथा आहत-शीतपीडित-सन्यासी-मदोन्मत्तोन्मत्तजनानामङ्गपरिचालनप्रकारः ।

**१४. चतुर्दशेऽध्याये प्रवृत्तधर्मस्य व्यञ्जनावर्णनम्—**

नाट्यमण्डपे वाद्येभ्यः समुचितस्थानम्, गृह-उपवन-वन-उपवन-स्थल-जलादीन् प्रदर्शनाय स्थान-निर्णयः, एकाङ्केन घटीमुहूर्त्त-प्रहराष्णमथवा एकस्मात् दिनात् अधिकाधिक घटनायाः चित्रणं न कर्त्तव्यम् एकस्मिन् मासे वर्षे वा घटिताः घटनान्याः चित्रणायाभि नवाङ्कस्य योजना कर्त्तव्या, चतस्रः प्रवृत्तयः पूर्णतः देश-वेशभूषा-भाषा-व्यवहाराणां समुच्चये निर्भराः भवन्ति, इमाः प्रवृत्तयः आवन्ती, दक्षिणात्या । पाताञ्चवाली, ओड्रमागधी सन्ति, उपरोक्तवर्गाणामन्तर्गते समगताः देशानां वर्णनं तथा तेषां वृत्तयः, द्वौ प्रकारकौ नाट्यप्रयोगौ-अर्थात् सुकुमारस्तथा आविद्धः; डिम-समवकार-व्यायोग तथा ईहामृग नामकस्य रूपकः आविद्धो भवति, दशरूपकेषु शेषषट्रूपकानि सुकुमारः कथ्यन्ते, लोकधर्मी-गुणधर्मिनोः परिभाषा तथोदाहरणानि । लोकधर्मिनः तथा नाट्यधर्मिनः सम्बन्धे डॉ० राघवनमहोदयस्य विस्तृतं लेखः (Journal of oriental research Madras. Part 7, page 359-375 and pages 57-74) । भरतेन त्वथानेन प्रकारेण परिभाषा प्रदत्ता—'**स्वभावभावापगतं शूद्रं त्वविकृतं तथा । लोकवार्त्ता क्रियोपेतमङ्गलीलाविवर्जितम् ॥ स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् । यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता ॥ योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः सोङ्गभिनययुक्तो नाट्यधर्मी तु सा स्मृता ॥** (ना० १४. ७०-७१) । कल्लिनाथेन उदाहृतम् (सं० र०, पृ० ६२९) वाक्याभिनये केवलं—वाक्योच्चारणं लोकधर्मी, रागयुक्तवाक्योच्चारणं नाट्यधर्मी ।

**१५. पञ्चदशेऽध्याये छन्दसां विभागवर्णनम्—**

स्वर-व्यञ्जनयोरुपरि आधारितोवाचिकाभिनयः, वाण्येव नाट्यस्य तथा आङ्गिकाभि-नयस्य शरीरमस्ति, वेशभूषया अन्योपकरणैः केवलं सङ्केतमात्र एव भवति, स्वर-

व्यञ्जन-संज्ञा-क्रिया-सन्धि- उपसर्गादीनां विस्तृतं विवेचनम्, नाटके संस्कृतस्य प्राकृतस्य वा प्रयोगः करणीयमस्ति अथवा उभयोः, एकादारभ्य षड्विंशति मात्रा पर्यन्तस्य छन्दांसि प्रत्येकछन्दसः उपभेदाः, उपभेदानां संख्या विशालाऽस्ति, अष्टगणानां प्रक्रिया (यथा—भ० म० ज० गणः), गुरु-लघु यतेरर्थः ।

**१६. षोडशेऽध्याये वृत्तानां सोदाहरणं लक्षणम्—**

यति नाटकेषु प्रयुक्तवृत्तानि, तेषां परिभाषास्तथोदाहरणानि, सम तथा विषमवृत्तम्, आर्याछन्दः ।

**१७. सप्तदशेऽध्याये वागभिनयस्य लक्षणालङ्काराणां काव्यदोषाणां काव्य-गुणानाञ्च वर्णनम्—**

रङ्गमञ्चे प्रदर्शनाय प्रस्तुतस्य कवितायाः षट्त्रिंशल्लक्षणानि, आसां परिभाषाः, नाटकस्य चत्वारोऽलङ्काराः, यथा उपमा-रूपक-दीपक-यमकास्तथा तेषामुपभेदाः उदाहरणानि च, काव्यस्य दशदोषास्तथा दशगुणास्तेषां परिभाषादयः ।

(See. Essay of Dr. Raghawan—The Consept of Laxanas in Bharat; Journal of Oriental Research Madrass, Part 6 P, 54-82 and some concept of Alankarashastra (1942) P. 1-47; Prof. Bhattacharya—'Doctrine of Laxanas, Poona Orientalist Part 16, khand. 1 Pages 11-33.)

नाट्यशास्त्रषोडशाध्यायस्यान्तिमपंक्तौ भरतेनोक्तम्—काव्यबन्धास्तु कर्त्तव्याः षद्-त्रिंशल्लक्षणान्विता । अभिनवगुप्तानुसारेणैतेषु कतिपयानि लक्षणानि विलुप्तान्यभवन् तथा कतिपयानि आशीस्तथा दृष्टान्ताऽलङ्कारनाम्नाऽभिताः वभूवुः—**'तत्र गुणालङ्कारा-दिरिति वृत्तयश्चेति काव्येषु प्रसिद्धो लक्षणानि तु न प्रसिद्धानि ।'** (अ०भा०, भाग-२, पृ० २९४ । अस्मिन् सम्बन्धे दशपक्षाः सन्ति—'इदं तु दशपक्ष्यां वस्तु' (भा०-२, २९७) ।

**१८. अष्टादशेऽध्याये भाषाभेदाभिनयप्रयोगयोः वर्णनम्—**

प्रकारत्रयेण प्राकृतस्योच्चारणं संस्कृतसमः (यस्योच्चारणं संस्कृतमिव भवति), विभ्रष्टः (स्वरस्य व्यञ्जनस्य चोच्चारणे परिवर्त्तनो भवति) देशीयः कं पात्रं संस्कृतं, कञ्च प्राकृतम्, कञ्च प्रादेशिकं प्रयोक्तम्; सौरसैनी प्रमुख प्राकृतमस्ति, एतदतिरिक्ता षडन्याऽपि प्राकृत भाषाः सन्ति, तद्यथा-मागधी अवन्तिजा, प्राच्या, अर्धमागधी, बाह्लीका, दाक्षिणात्याश्चेति आसां प्राकृतभाषाणां प्रयोगः अभिनेतुरिच्छानुसारेणैव कर्त्तव्यम् । आसां-विभाषाणां प्रयोगः—शबर-आभीर-चाण्डाल-शकार-द्रविड़-ओड्रादि--जातीनां पात्राण्येव कर्त्तव्यम् ।

**१९. एकोनविंशेऽध्याये काकुस्वरव्यञ्जनायाः वर्णनमस्ति—**

उच्च-मध्य-निम्न-वर्गाणां पात्राणि सम्बोधयितुं विभिन्नप्रणालीनां प्रयोगः, यथा ब्राह्मणाय 'आर्य', राज्ञे 'महाराजः' द्विजातिभ्यः नम्नामग्रे क्रमशः शर्मा, वर्मा तथा

दत्तान्तं भवतिव्यम् । भद्रवेश्यानाम्नामग्रे दत्ता, मित्रा तथा सेना; पाठ्यस्य अर्थात् गद्यभागस्य गुणाः; सङ्गीतस्य षड्ज-ऋषभेत्यादिसप्तस्वराः, स्थानत्रयम् (वक्षःस्थल-कण्ठ-शीर्षाणि), उदान्त-अनुदात्त-स्वस्ति-कम्पिताख्या' चत्वारः स्वराः; द्विप्रकारकौ काकू, अलङ्कार-उच्च-दीप्त-मन्द्र-नीच-द्रुत-विलम्बितादयः ।

**२०. विंशेऽध्याये दशानां रूपकाणांलक्षणम्—**

दशानां रूपकाणां विस्तृतं विवेचनम्—

**नाटकं सप्रकरणमन्तो व्यायोग एव च ।**
**भाण, समवकारश्च वीथीप्रहसनं डिमः ॥**
**ईहामृगं च विज्ञेयं दशमं नाट्यलक्षणम् ।** (ना०शा० २०.२-३)

प्रथमप्रकारकस्य रूपकस्य विषयो वैशिष्ट्यञ्च; रङ्गमञ्चोपरि कीदृशीघटना उपस्थापितव्यं तथा किमाकारा घटना नैवोपस्थापितव्यम्—

**क्रोधः प्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ ।**
**अद्भुतसंश्रयदर्शनमङ्क प्रत्यक्षजानि स्युः ॥**
**युद्धं राज्य भ्रशोमरणं नगररोधनं चैव ।**
**अप्रत्यक्षकृतानि प्रवेशकैः संविधानि ॥**
**असप्रवेशकं वा प्रकरणमाश्रित्य नाटकं वाऽपि ।**
**न वधः कर्त्तव्यः स्याथोऽभ्युदयी नायकः ख्यातः ॥**

ना० २०. २०-२२, द्रष्टव्य अ० भा० भा० २, पृ० ४२६-४२७ (अध्या० १८) मृत्योः प्रत्यक्षाभिनयस्य प्रदर्शन-सम्बन्धे । अभिनवोऽपि स्वयमस्य विपक्षेऽस्ति 'तस्माद्रङ्गे मरणप्रयोज्यमेव (अभि०भा०, भा०-२, पृ० ४२६) । प्रवेशकस्य तथा विष्कम्भकस्य प्रणालीप्रकरणम्; अन्य प्रकारकाणां रूपकानां विशिष्टता एवं तेषां सङ्कटकाङ्गानां परिभाषेति ।

**२१. एकविंशेऽध्याये नाटकीयानां पञ्चसन्धीनां सन्ध्यङ्गानाञ्च वर्णनम्—**

नाटकस्य कथावस्तु, अस्मिन् आधिकारिको भाग; प्रासङ्गिकश्चेति, पञ्च-प्रकारकस्य सन्धयः, प्रारम्भ प्रयत्नादि पञ्चावस्थाः, पञ्च अर्थप्रकृतयः—बीज-बिन्दु-पताका प्रकरी कार्येत्यादीनां परिभाषाः, सन्ध्यन्तरम्; पञ्चसन्धीनां चतुःषष्टि अङ्गानि; (अर्थात् मुखस्य गर्भस्य च द्वादश, प्रतिमुखस्य तथा विमर्शस्य च त्रयो दश, निर्वहणस्य चतुर्दश); तथा तेषां परिभाषाः, पञ्चार्थोक्षेपकाः (अङ्कानां मध्ये भाविनी घटनानां परिचायकः, यां घटनां मञ्चे उपस्थापयितुं न शक्यते) अर्थात् विष्कम्भक-चूलिका-प्रवेशक-अङ्कावतार-अङ्कमुखादयः; एवंविधानि न कोऽपि कार्यं, विद्या, शिक्षा, कला एवं शिल्पानि सन्ति येषां नाटके प्रदर्शनं भवितुं न शक्यते तथा तदर्थे नोपयोगिनो भवेयुरिति ।

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।**
**न तत्कर्म न योगोऽसौ नाटके यत्र दृश्यते ॥** (ना० २१.१२२)

श्लोकोऽयं ना० ११३-११४ पृष्ठेऽप्यस्ति । अ० भा०, (भा० ३०. ४३ पृष्ठे उल्लेखोऽस्ति 'ज्ञानमित्युपादेयमामात्मजानादि ।... विद्यादण्डनीत्यादि ।... योगो योजनं तेषामेव ज्ञानादीनां कलान्तानां स्वभेदैरन्योन्य स्वभेदैः ।... कर्मेति युद्धनियुद्धादिर्व्यापारः ।'

**२२. द्वाविंशेऽध्याये चतसृणां वृत्तीनां विधानम्—**

चतस्रः वृत्तयः—भारती, सात्वती, कौशिकी, आरमटी (गा० ओ० सि० सं० अध्या० २०) तासां पौराणिकोत्पत्तिः, भगवतः विष्णोः मधु तथा कैटभ नाम्नोः दानवाभ्यां सह युद्धं तथा तस्मिन् युद्धे चतसृणां वृत्तीनां प्रयोगः, यथा—'**या वाक्प्रधाना पुरुषप्रयोज्या स्त्री वर्जिता संस्कृत वाक्ययुक्ता । स्वनामधेयैर्भरितैः प्रवृत्ताः सा भारतीनाम भवेत्तु वृत्तिः** । ना० शा० २२।२५, अथवा गा० ओ० सी० संस्करणे २०।२६ **अलङ्कारशास्त्रस्य ग्रन्थेषु वृत्तीनामनेकार्थाः भवन्ति** ।' तासां वृत्तीनां चतुर्भ्यो वेदेभ्यरुत्पत्ति—ऋग्वेदात् भारती, यजुर्वेदात् सात्वती, सामवेदात् कैशिकी, अथर्ववेदादारभटी, चतसृणां वृत्तीनामुपभेदास्तथा तासां परिभाषाः, चतसृणां वृत्तीनां विभिन्नरसेषु विनियोगः वृत्याः सम्बन्धे द्रष्टव्यः [Dr. Raghawan-Journal of Oriental Research Madras Part-6, Pages 346-370, and part 7, pages 33-52, and 91-112, and Some Concept of Alankarsha, pages 182-193.] रसार्णवसुधाकरेऽपि ६९-७१ पृष्ठे भारतीत्यादीनां नाम्नां काल्पनिकव्युत्पत्तयः द्रष्टव्येति । पञ्चदशाध्यायात् द्वाविंशतितमाध्यायपर्यन्तं नाट्ये वाचिकाभिनयस्य विवेचनमस्ति ।

**२३. त्रयोविंशेऽध्याये आहार्याभिनयवर्णनम्—**

नाट्यस्य प्रदर्शनमाहार्याभि- नयो परि अवलम्बितोऽस्ति तथा आहार्याभिनयः नेपथ्योपर्याश्रितोऽस्ति, यस्यार्थो भवति, वेशभूषा आभूषणानि, तथा प्रदर्शनस्य विभिन्नोपायाः; **आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः । तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता** ॥ ना० शा० २३.२, अथवा गायकवाड़ ओ० सि० ना० २१.३, अत्राभिनवभारत्याः व्याख्याऽप्यनेन प्रकारेण अस्ति—

'**समस्ताभिनयप्रयोगचित्रस्य भित्तिस्थानीयमाहार्यम्** ।' नेपथ्योऽपि चतुः प्रकाराणां भवति—प्रस्तुतः, अलङ्कारः, अङ्गरचना, सञ्जीवः (गा० ओ० सि० संस्करणे 'सञ्जीवः' पाठोऽस्ति तथा २१।१।६१, अत्र 'सजीव; पाठोऽस्ति); एतेषां परिभाषाः—पुस्तस्यार्थोऽस्ति-पर्वतः रथादीनां प्रदर्शनाय वस्त्र-चर्म-निर्मिता कृतयः । अलङ्कारस्यार्थोऽस्ति—पुष्पमालाः, आशीर्षात्पादपर्यन्तस्य आभूषणानि, तथा विभिन्नदेशानां नगराणाञ्च स्त्रीपुरुषयोश्च वेशभूषा, तिलकः, अञ्जनं, दन्तरागः, ओष्ठरागादयश्चेति । अङ्गरचनायाः अर्थोऽस्ति—राजा, धनिकः, किराताः आन्ध्रास्तथा शक-यवन-शूद्रादीनां वर्णं दर्शयितुं तेषां शरीराणां चित्रणम्, कूर्च-गुंफादीनां संरचना चेति । सञ्जीवस्यार्थोऽस्ति-द्विपद-चतुष्पद-पक्षीसर्पादीन् प्रदर्शनस्य रीतयः, नाट्यस्योपकरणानि, कृत्रिमशस्त्रास्त्रादयः ।

**२४. चतुर्विंशेऽध्याये सामान्याभिनयवर्णनम्—**

सामान्याभिनयः—तदभिनयः यस्येदानीं पर्यन्तं वर्णनं नोपलब्धमस्ति, किन्तु तद्वर्णनमावश्यकमस्ति । सत्वस्य बाह्याभिव्यक्तिः ।

युवतीनां त्रयोऽङ्गजालङ्कारा:—भाव-हाव-हेलेति । दश स्वभावजा:—लीला-विलासेत्यादयः, सप्तायत्नजा:—शोभा-कान्ति-दीप्ति-माधुर्य-धैर्य-प्रागल्भ्य-औदार्येति ।

तेषां (तासां) परिभाषा:—पुरुषेषु सत्वस्याभिव्यक्ति-शोभेत्यादि । रस-भावानुसारेण शारीरिकाभिनयः । द्वादशप्रकाराणां वाचिकाभिनयः—अलाप-प्रलाप-विलापादयः । एते सर्वे वाक्याभिनयाः सन्ति ।

दर्शन-श्रवण-आस्वादन-स्पर्शनादीनामभिनयः । उचितानुचितघटनयोः प्रदर्शनस्य प्रकारः ।

विभिन्न प्रकाराणां नारीणां वर्णनम् ।

कामस्य दशदशा:—अभिलाषा-चिन्तन-अनुस्मृति-गुणकीर्त्तन-उद्वेगाविलाप-उन्माद-व्याधि-जड़ता-मरणञ्चेति, ऐतेषां प्रदर्शनस्य प्रकाराः ।

दूतीप्रेषणम्, अष्टानां प्रकाराणां नायिका:—वासकसज्जा-स्वाधीनपतिका-अभिसारिका प्रभृतयस्तथा तेषां प्रदर्शनस्य प्रकारः । दर्शकेषु पितृपुत्रस्नुषाश्वश्रूणामपि विचारं कर्त्तव्यम् । यथा—'**न कार्यं शयनं रङ्गे नाट्यधर्म विजानता ।... चुम्बनालिङ्गनञ्चैव तथा गुह्यं च यद्भवेत् । दन्तं नखक्षतं द्वेधं नीवीसंस्त्रनमेव च । स्तनाधर-विमर्दञ्च रङ्गमध्ये न कारयेत् । भोजनं सलिलक्रीडां तथा लज्जाकरं तु यत् ।... पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाट्यम् । तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥**
ना० श० २४, २८५-२८९ (२२, २९६-२९८, गा० बा० ओ० सि० सं०)

प्रेमिकाभिः निज प्रेमिनम्प्रति क्रोधः, ईर्ष्या एवं प्रेमप्रकाशन काले तेषां सम्बोधन प्रकारः ।

**२५. पञ्चविंशेऽध्याये बाह्यानामुपचाराणां वर्णनम्—**

वैशिकः अर्थात् तद्व्यक्तिः यो हि कलासु निष्णातोऽस्ति तथा गणिकाभिश्चान्य-स्त्रीभिः सह, प्रेमकरणे पटुरस्ति । एवंविधपुरुषाणां स्वाभाविकास्तथा सम्पादिताः त्रयस्त्रिंशत् गुणाः । तेषां मित्राणि तथा कुट्टिन्यः ।

प्रेम-विह्वला एवं पुरुषैः सहोद्वेगकारिणी स्त्रीणां चेष्टाः ।

स्त्रीणां यौवनस्य चतस्रोऽवस्थाः । प्रेमिणां पञ्चप्रकाराः ।

स्त्रियः वशीकर्त्तुं पञ्चोपायाः—साम-प्रदान-मद्य-दण्डोपेक्षा चेति (गा०ओ० सि० २३) ।

**२६. षड्विंशेऽध्याये चित्राभिनयवर्णनम्—चित्राभिनयः—**

आङ्गिकाभिनयानां, येषामद्यावधिवर्णनं नाभूत् तथाये सामान्याभिनया नामन्तर्गते एवास्ति ।

आकाशः, रजनी, सायङ्कालः, अन्धकारश्चोष्णतेत्यादीनां प्रदर्शनस्य प्रकारः । हर्ष-क्रोध-विषाद-शोकादीनां प्रदर्शनस्य प्रकारः ।

आकाशवाणी-आत्मगत-अपवारित-जनान्तिकादीनां तात्पर्यम् ।

वृद्धान् बालकांश्च केन प्रकारेण वक्तव्यम् ।

आसन्नभृत्यस्य प्रदर्शनस्य रीतयः ।

अन्याभिनयस्य जनसाधारणात् शिक्षा ग्राह्येति । यथा—

**नोक्ता ये च मया तत्र लोकग्राह्यास्तु ते बुधैः । लोको वेदास्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्... तस्मान्नाट्यप्रयोगे तु प्रमाणं लोका उच्यते ।... कृतानुकरणं लोके नाट्यमित्यभिधीयते । लोकस्य चरितं यत्तु नानावस्थान्तरात्मकम् । तदङ्गाभिनयोपेतं नाट्यमित्यभिसंज्ञितम्** ॥ ना० २६. १११-११५.

**२७. सप्तविंशेऽध्याये सिद्धिव्यञ्जनानां निर्देशः—**

सिद्धिः अर्थात् अभिनयस्य सफलं प्रदर्शनम् । दैवीसिद्धिः मानुषी सिद्धिश्चेति द्विविधे सिद्धि ॥

दर्शकैः अभिनयस्य सफलतायां सन्तोष-प्रदर्शनस्य प्रकाराः । परितोषिकस्वरूपे वस्त्रादेर्दानम् । स्मितं (विदूषकस्य चातुर्येष्वट्टहासः), चमत्कारपूर्ण-प्रेम्नः दृश्योपरि साधुवादः अथवा अहोवादः, करुणदृश्योपरि कष्टमिति । दैवीसिद्धेरर्थो भवति—कोलाहलस्य, विघ्नस्य, अपशकुनस्य चाभावः एवं दर्शकैः पूरितः कक्षः । दुर्घटनाया-स्तथापशकुनस्य चार्थोऽस्ति—अग्निदाहः, प्रभञ्जनः, गजः, सर्पादीनामुपद्रवाः । अनेनैव प्रकारेण घृणाकर्तृभिर्जनैः करतलध्वनिं निःसारयन्तिः, अभिनेतृषु गोमयं कर्दमञ्च निक्षेपणम्, अभिनेतृभिः पाठस्य विस्मरणम्, मुकुटस्य तथाऽन्याभूषणानामधःपतनम् ।

नाट्यस्य निर्णायकानां अथवा परीक्षकानां योग्यता ।

**२८. अष्टाविंशेऽध्याये सङ्गीतशास्त्रस्य वर्णनम्, आद्योतवर्णनञ्च—**

चतुः प्रकारकाः वाद्याः तत (वीणा इव वाद्ययन्त्रम्), अवनद्धः (भेरिरिवचर्मावृत्त-वाद्ययन्त्रम् घनः (तालः), सुषिरः (वंशी इव, मध्ये रिक्तः)

सप्तस्वराः—षड्ज, ऋषभादयः ।

तेषाञ्चत्वारः प्रकाराः—वादी, संवादी, अनुवादी तथा विवादी एवं तेषां परिभाषाः ।

ग्राम-मूर्च्छनादयः सप्तविंशति श्रुतयः जातयश्चेति ।

**२९. एकोनत्रिंशेऽध्याये ततातोद्यवर्णनम्—**

कस्मिन् रसे कस्य जातेस्तथा कस्य स्वरस्य प्रयोगः कर्त्तव्यः ।

चत्वारो वर्णाः—आरोही, अवरोही, स्थायी तथा सञ्चारिणः वर्णनम् । तेष्वाश्रितास्त्रयस्त्रिंशदलङ्काराणां वर्णनं तेषां परिभाषाः ।

उपहारश्चेति ।

**३०. त्रिंशेध्याये सुषिरातोद्यविधान वर्णनम् ।**

**३१. एकत्रिंशेऽध्याये—तालस्य लयस्य च वर्णनम् ।**

**३२. द्वात्रिंशेऽध्याये ध्रुवाविधानम्,**

अभिनेतुः मञ्चोपरि प्रवेश-निर्गमकाले अङ्कस्यान्ते, अभिनयस्य मध्ये, कस्याऽपि पात्रस्य पतने, पाठ विस्मरणे, कस्याऽपि मूर्छितावस्थायां गातुं योग्यं—पदम् ।

**प्रावेशिकी तु प्रथमा द्वितीयाक्षेपिकी स्मृताः ।**
**प्रासादिकी तृतीया च चतुर्थी चान्तरा ध्रुवा ॥**
**नैष्कामिकी च विज्ञेया पञ्चकी च ध्रुवा बुधैः ॥**

(ना०शा० ३२,२३-२४, द्र० ३२, ३३४-३४०)

ध्रुवानां भाषा सामान्यतया शैरसेनी भाव्यं (श्लो० सं० ४०८-४१०) यद्यपि कतिपयाः श्लोकाः (अ० ३२.४७-५५) संस्कृते अपि सन्ति, गायकस्य, वंशीवादकस्य च योग्यतायाः वर्णनम् ।

स्वाभाविकरूपेण गायनस्य कार्यं स्त्रियः कुर्वन्ति वादनस्य कार्यं पुरुषाः कुर्वन्ति । यथा—

**प्रायेण तु स्वाभावात्स्त्रीणां गानं नृणाञ्च वाद्यविधिः ।**
**स्त्रीणां स्वभावमधुरः कण्ठो नृणां बलत्वञ्च ॥**

(ना०शा० ३२.४६५)

सङ्गीताचार्यस्य सङ्गीतशिक्षणार्थिनश्च षड्विशेषताः ।

**३३. त्रयस्त्रिंशेऽध्याये वाद्यस्य विस्तृतं विवेचनम्—**

**मृदङ्ग-प्रणव-दर्दुरादीनां अनवद्यवाद्यानां विवेचनम् ।**
**स्वात्या नारदेन च गान्धर्वस्य वाद्यानाञ्च प्रवर्त्तनम् ।**
**एवंविधेऽवसरे यदा सर्वविधानि वाद्यानि वादयन्ति ।**
**वाद्यानां अधिरक्षको देवता ।**

**३४. चतुस्त्रिंशेऽध्याये प्रकृतिविचारवर्णनम्—**

पुरुषाणां स्त्रीणाञ्च तिस्रः प्रकृतयः—उत्तम-मध्यमाधमाः एवं तासां विशेषताः । चतुर्विधः नेतारः—धीरोद्धतः, धीरललितः, धीरोदात्तः तथा धीरः प्रशान्तस्तथा तेषां वर्णनम् ।

स्त्रीणां विविधाश्रेणयः—महादेवी-देवी-नर्त्तिका-परिचारिकादयस्तथा तासां परिचयः ।

अन्तःपुरस्य परिचारकाः—कञ्चुकीयः वर्षवरश्चेति ।

नृप-सेनापति-पुरोहित-सचिव-प्राड्विवाक-कुमारादीनां विशेषताः ।

**३५ पञ्चत्रिंशेऽध्याये भूमिकारचनायाः वर्णनम् ।**

नाट्यमण्डलि-सदस्येषु पात्राणां विभाजनं तथा तेभ्यः आवश्यकीय-विशेषता

मृद-काष्ठ-चर्मादिभिर्निर्मिताः कृत्रिमाकृतयः ।

द्वौ प्रकारकाभिनयौ १. सुकुमारस्तथाविद्धः । सूत्रधार—पारिपार्श्विक-अभिनेताविट-शकार-विदूषक-चेट-नायिका-बाणिका-नट-शिलाकार-कलाकारादीनां विशेष-गुणवर्णनम् । यथा—

**उज्ज्वलवस्त्राभरणं क्रुद्ध्यत्यनिमित्ततः प्रसीदति च ।**
**अधमोमागधभाषी भवति शकारो बहुविकारः ॥**

(ना०शा० ३५.५६)

**३६. षट्त्रिंशेऽध्याये नाट्यस्य भूतलेऽवतरणस्य विस्तृतं विवेचनमास्ते ।**

एकदा ऋषिः आत्रेयः मुनिं भरतं कतिपयान् प्रश्नानपृच्छत्—पूर्वरङ्गे कस्य देवस्य पूजा भवति ? नाट्यविद्यायाः स्वर्गात्पृथिव्यामवतरणं केन प्रकारेणाभवत् तथा भरतस्य वंशजान् नटः कथं कथ्यते ? भरतेनोक्तम्—तस्य वंशजान् स्वकलायां गर्वोऽभूत् । मदोन्मत्तास्ते ऋषीणामन्वकार्षुः । उच्छृङ्खला अनुचिता च रचना कर्त्तुं समारभन् । क्रुद्धः ऋषिः तान् शशाप । मुनिना प्रोक्तं ते गणना शुद्रेषु भविष्यति । भरतेनोक्तम्—भविष्ये नाट्यविद्यायाः शिक्षां चरित्रवन्तो हि जना एव ग्रहीष्यन्ति । तथा ते स्वकृतापराधाय प्रायश्चित्तं करिष्यन्ति । तस्मिन् काले नहुषः स्वर्गाधिपतिर्बभूव । स राजा तं समादिशत् नाट्यविद्यायाः प्रचारं पृथिव्यां कुरु । कोहलं नाट्यवेदस्य परिशिष्टं मंस्यते । तत्पश्चात् भरताः निजं सन्ततीः नाट्यविद्यामशेक्ष्यन् । कोहल-वात्स्य-सांडिल्य-धूर्त्तिलादयः नाट्यविद्यायाः निखिलविश्वे प्रचारः कृतवन्तः । नाट्यशास्त्रं हि विश्वकल्याणायातिपवित्रतमवस्त्वस्ति । देवता गन्ध-पुष्प-धूप-दीपादिभिः पूजनैस्तादृश-प्रसन्नो न भवति यादृश नाटकस्याभिनयेनेति ।

नाट्यशास्त्रमेकः विशालः ग्रन्थोऽस्ति । उपरिलिखितक्रमेण ज्ञातो भवति यद् ग्रन्थः विश्वकोष इव प्रतिभाति । रूपकदर्शनेन यत्सात्त्विकानन्दस्य प्राप्तिर्भवति तस्यानन्दस्यास्मिन् ग्रन्थे पर्याप्तविश्लेषणमस्ति । नाट्यशास्त्रस्य रङ्गमञ्चस्य च निर्माणोपरि ग्रन्थेऽस्मिन् विस्तृतं विवेचनमप्यस्ति । अश्लील-व्यवहारस्य, दृश्यस्य, भाषायाश्च निषेधमत्रास्ति । अभिनेतृणां सन्मुखे उच्चाध्यात्मिकादर्शोऽस्ति । नाट्य-शास्त्रस्यान्तिमाध्यायेन ज्ञातो भवति यत् तस्मिन् काले नाट्यविद्यां तथाऽभिनेतृन् प्रतिलोकानां दृष्टिः सुष्ठु नासीत् । भरतोरुभयोः पक्षयोः प्रतिष्ठां वर्द्धयितुं यत्नः कृतवान् । नाट्यविषयकस्य संभवतः विश्वनाट्यसाहित्येऽस्य ग्रन्थस्याद्वितीयं स्थानमस्ति । नाट्यशास्त्रं यावन्मात्रे सर्वस्पर्शी एवं गभीरोऽस्ति, अस्मिन् ग्रन्थे कलायाः यावत् सूक्ष्मं व्यापकञ्च विवेचनमस्ति तावत् विश्वस्यान्येषां भाषाणां कस्मिंश्चि देकस्मिन् ग्रन्थे कुत्राऽपि न मिलन्ति । हा हन्त । सत्यप्युच्चतमे लक्ष्ये, विषयस्यास्य शीघ्रमेव पतनं बभूव । खिष्ट्रस्याष्टमशतकस्योत्तरार्द्धे दामोदरगुप्तकृत 'कुट्टनीमतम्' ग्रन्थात्प्रमाणितो भवति ।

श्रीहर्षकृत रत्नावल्याः प्रथमोऽङ्कस्याभिनयः कस्याऽपि राज्ञः सन्मुखे अभवत् । दामोदरगुप्तेन स्वकथनस्य सम्पुष्टै च अस्योल्लेखः कृतः । वाराणस्याः कस्मिंश्चित् मन्दिर पुरा कस्याऽपि नाटकस्याभिनयोऽभवत् । यत्र नाटकाचार्यस्य निर्देशने

स्त्रीपुरुषयोः समस्त पात्राणामभिनयः गणिकाद्वारेणैव सम्पादितो बभूव । तासु गणिकासु एकस्य नाम मञ्जरी आसीत् । (श्लो० ८०३-८०५) या गणिका सागरिकायाः अथवा रत्नावल्याः अभिनयमकार्षीत् । रत्नावल्याः १.२४ श्लोके कुट्टनीमतस्य ५. ९२१ अक्षरशः उद्धरणमस्ति । वेश्याः धनलोलुपाः भवन्ति । तासामुद्देशः गुप्तो न भवति । पद्यमयोऽयं ग्रन्थः । अस्मिन् ग्रन्थे सङ्गीतस्य नृत्तानुरागवतां चरित्रहीनतायाः वर्णनमस्ति। राजतरङ्गिण्यां स्पष्टरूपेण लिखितमस्ति—कश्मीरनरेशः जयापीडः कुट्टनीमतस्य रचयिता दामोदरगुप्तं स्वकीय मन्त्रिपदं समर्पितमासीत् ।

**स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम् । कविङ्कविबलिरिकधुर्यं धी सचिवं व्यहारत्** (रा०त० ४-४९६)

ऐतिहासिक गवेषणायै महत्त्वपूर्णमिदं पद्यम् । एतेन ज्ञातुं शक्यं यत्-कुट्टनीमतलेखको 'दामोदरगुप्तो' नाम कविस्तस्य धुर्यो धी सचिवोऽभूत् । जयापीडस्य 'शुक्रदन्तो' नाम कश्चिन्मन्त्री आसीत् । तस्य पाकशालाध्यक्षः 'थक्कियः नाम कश्चित् राज्ञा विद्वत्तया गृहीतः परिवर्धितश्चेति । उद्भटो नाम विद्वान् तस्य राज्ञः सभापतिरासीत। स प्रत्यहं दीनारलक्षेण कृतवेतन आसीदिति कल्हणोवक्ति । अन्ये चाऽपि तादृशां विद्वांस एव तन्मन्त्रिणोऽभूवन् । मनोरथः, शङ्खदन्तः चरकः, सन्धिमान्—इत्येतेकवयस्तत्सभायामशोभन्त । दामोदरगुप्तः ७७९ तः ८१३ पर्यन्तं कश्मीरान् शासितवतो जयापीडस्य मन्त्री आसीत् । अतस्तस्याऽपि स एव समयो निश्चियते ।

### नाट्यशास्त्रस्य तिथि-निर्णयः

भारतीयनाट्यशास्त्रस्य तिथिनिर्णयविषये विचार्यमाणे कतिपय विषयविशेषज्ञा पण्डितां मता निद्रष्टव्यानि । तत्र म० म० प० हर प्रसादशास्त्रीमहोदयः अस्य ग्रन्थस्य रचनातिथिः ई० पू० द्वितीयशतकं प्राह । (ज० ए० सो० ब० १९१३, पृ० ३०७) । अस्मिन् प्रसङ्गे पाश्चात्य पण्डितानामपि मतानि द्रष्टव्यानि । (Indian antiquary भाग 33, 163 पृष्ठेऽनूदिते) एकस्मिनलेखे लेवि महोदयः नाट्यशास्त्रे प्रयुक्तं सबोधनवाचिनां-स्वामिन्, सुनृतंनामन्, भद्रमुखादीनां शब्दानामाधारोपरि प्रमाणयितुं प्रयत्नवान् यत् भरतस्य नाट्यशास्त्रस्य रचना भारतीय शकसमयेऽभूत् । यदाचष्टन-नहपालादीनां शासकानामभिलेखेषु स्वात्मानं स्वामी तथा भद्रमुखादिशब्दैरभिहितं कुर्वन्ति (द्र० एपी० इण्डि०, भाग-९, पृ० २७४) लेविमहोदयस्तु स्वकीयतर्कपूर्णबलेन विश्वस्तरूपेण च स्थापितम् । तथापि मान्यतेयं यत् संस्कृतनाट्यकला सर्वप्रथमः क्षत्रपानां समये एवास्तित्वे समागता इति पुष्टप्रमाणैः प्रमाणितो न भवति । यतो हि स्वामी शब्दः राजकुमाराय प्रयुक्तः आसीत् नतु राज्ञे । म० म० पी० बी० काणे महोदयस्य मतानुसारेण ख्रिष्टस्य तृतीयशतके भरतप्रणीतनाट्यशास्त्रं विद्यमानमासीत् तथा तस्मिन् ग्रन्थे सामान्यरूपेण रससिद्धान्तस्य तथा नाट्यकलायाः विवेचनमासीत् । पाश्चात्यपण्डितस्य कींथ महोदयस्य मतमस्ति ईस्वी तृतीय शतकात्पूर्वं नाट्यशास्त्रस्यास्तित्व स्वीकरणे कोऽपि प्रमाणो न मिलति । कींथ महोदयस्तु—प्राकृतिकपरिवर्त्तनानां मूर्त्तरूपं साधारणजन समक्षमवतारयितुमेव नाटकाना-

मुदयो जात: । कंसवधनामके महाभाष्यनिर्दिष्टे नाटके कृष्णपक्षी या रक्तमुखा: कंस-पक्षीयाश्च श्याममुखा: भवन्ति । तत्र वसन्तस्य हेमन्तोपरि विजय एव दर्शयितु-मभिलषित:। कृष्णविजयेन प्रकृतिप्रकोपं प्रति प्रकाश आधीयत' इत्याह । श्रीमनमोहन-घोषेणाऽपि अस्य प्रश्नस्य विस्तृतं विवेचनं कृतम् । अयं हि नाटयशास्त्रस्य समय: खिष्टात्पूर्व प्रथमशतकादारभ्य खिष्टात् पश्चात् द्वितीयशतकयोर्मध्ये मन्यते । डा० दिनेशचन्द्रसरकारमहोदयस्य मतमस्ति यत् नाट्यशास्त्रे 'महाराष्ट्र:' (१४।३८) तथा नेपाल: (१४।४३) उभयो: शब्दयोरुल्लेख: अस्य रचनातिथिं खिष्टस्य द्वितीयशतकात् पश्चात् सङ्केतयति । (Journal of Andhra Historical Research Society part 12 page 108) यतो हि नेपालशब्दस्य सर्वप्रथमप्रयोग: चतुर्थशतकस्य पूर्वार्द्धे समुद्रगुप्तस्य प्रयागप्रशस्तावेव मिलति तथा महाराष्ट्रशब्दस्य प्रथमोल्लेख: पञ्चमशतकस्य महावंशे तथा ऐहोलशिलालेखे (६३४ खिष्टाब्दे) मिलति ।

नाट्यशास्त्रस्य पूर्वसीमाया: निर्धारणमतिकठिनमस्ति । नाट्यशास्त्रे गृहनिर्माणस्य तथा वास्तुकलाया: आचार्य-विश्वकर्मण: उल्लेखोऽस्ति (२१.७ एवं १२) । नाट्यशास्त्रे रङ्गमञ्चस्याऽपि वर्णनमस्ति । रङ्गमञ्चस्य पर्यायौ प्रेक्षागृहरङ्गशालाशब्दौ प्रथेते । नाटकानि प्रथमतो मुक्ताकाशेऽभिनीयन्ते स्म । यदवधि तथाकरणे विघ्ना: प्रारभ्यन्त ततो गृहस्य प्रयोजनमदृश्यत । तदा भरतोक्ति, अनुसारेण प्रेक्षागृहस्य त्रयो भेदा:—१. विकृष्टम्, २. चतुरस्रम्, ३. त्र्यस्रञ्च । १. विकृष्टम्—१०८ हस्तपरिमितं सर्वतो विशालं देवमात्रार्थम् । प्रायो गोलाकारम् । २. चतुरस्रं—६४ हस्त परिमितायामं ३२ हस्तमित परिणाहश्च । चतुरस्रत्वञ्चास्य स्वनाम सिद्धम् । आदर्शभूतमिदं प्रेक्षागृहं राज्ञां कृते प्रसिद्धम् । (३) त्र्यस्रं—३२ हस्तमित सकलभुजं लघुनाटकोपयोज्यं त्रिकोणम् । एषु प्रेक्षागृहेषु चतुरस्रं नाम प्रेक्षागृहं सर्वोत्तमम् । एतद्वर्णनावसरे भरतस्य वैज्ञानिकं वैदुष्यं प्राचीनत्वञ्च प्रकाशते । आदर्शप्रेक्षागृहनिर्माणकाले दर्शका यथा सर्वमप्यभिनेयं द्रष्टुं ज्ञेयं च श्रोतुं प्रभवेयुस्तत्र प्रभूतं ध्यानं रक्ष्यते स्म । तथा च नाट्यशास्त्रम्—

**यश्चाप्यास्यगतोभावो नानादृष्टिसमन्वित: ।**
**सवेश्मन: प्रकृष्टत्वात् व्रजेदव्यक्ततां पराम् ॥**
**यस्मात्पास्यं च ज्ञेयं च तत्र श्रव्यतरं भवेत् ।**
**प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यमिष्यते ॥** (१।२३-२४)

रङ्गमञ्चस्य सर्वप्रथमोभागे । रङ्गशीर्षपदेनाभिधीयते । रङ्गशीर्षस्य विस्तारो ८X४ हस्तमितो विधीयते स्म । तथाभिनयविघ्नोपशान्तये देवानां पूजनं क्रियते स्म । तदनन्तरं तत्तुल्यपरिमाणं नेपथ्यगृहं निरमीयत । नाट्यमाण्डपस्य द्विभूमता दर्पणवत् समतलता च भारतीयनाट्यशास्त्रप्रसिद्धा: । तथा च भरत: —

**कूर्मपृष्ठं न कर्त्तव्यं मत्स्यपृष्ठं तथैव च ।**
**शुद्धादशंतलाकारं रङ्गशीर्ष प्रशस्यते ॥**
**कार्य: शैलगुहाकारो द्विभूमिर्नाट्यमण्डप: ।**
**मन्दवातायनोपेतो निर्वातो धीरशब्दवान् ॥**

दर्शकानामुपवेशनस्य व्यवस्थापि द्वधा विधीयते स्म । सम्प्रति यथा निम्नोन्नता आसनपरम्परा 'गैलरी' शब्दव्यवहार्या निर्मीयते तादृश्येवासनपरम्परा प्रागपि निर्मीयते स्म । तथा चोक्तं नाट्यशास्त्रे—

**स्तम्भानां बाह्यतस्यापि सोपानाकृतिपीठकम् ।**
**इष्टकादरुचिः' कार्यं प्रेक्षकाणां निवेशनम् ॥**
**हस्तप्रमाणैरुत्सेधैर्भूमिं भागसमुत्थितैः ।**
**रङ्गपीठावलोक्यं तु कुर्यादासनजं विधिम् ॥**

तदित्थं प्राचीनो रङ्गमञ्चः सुव्यवस्थितरूपो भारतीयनाट्यकलायाः स्वोपज्ञतां प्रकाशयति । किञ्चानेन नाट्यशास्त्रीयकालनिर्णयस्य न किमपि तथ्यं स्पष्टं भवति । एते उल्लेखाः नाट्यशास्त्रस्य तिथि-निर्णय-सम्बन्धे कस्याऽपि निष्कर्षोपरि नाभ्युपगच्छन्ति तथाऽपि एतां सम्भावनां प्रति सङ्केतयति यत् नाट्यशास्त्रं खिष्टात् प्राचीनतरं भवितुं न शक्यते । किञ्चोत्तरसीमायाः निर्धारणमपेक्षा कृताधिकनिश्चयेन कर्तुं शक्यते ।

विक्रमोर्वशीये कालिदासस्यैकः श्लोकोऽस्ति (वि० उ० स० २, श्लो० १८) तेन प्रतीतो भवति यद्भरतः खिष्टस्य पञ्चमशतकस्य पूर्वार्द्धे एव नाट्यशास्त्रस्य प्रवर्तकत्वमवाप्नोत् । सहैव ज्ञातो भवति यदयं अष्टानां रसानां प्रतिप्रादनमकरोत् तथा देवतासन्मुखे नाटकस्याभिनयमकारयत् । अनेन सिद्धो भवति यत् तस्मिन् काले प्रथमोऽध्यायस्याख्यायिकायास्तथाषष्ठाध्यायस्य रसपर्यालोचनस्यास्तित्वमासीत् । रघुवंशे खण्डितानायिकायारुल्लेखोऽस्ति (अ० १९, श्लो० २१) । उल्लेखोऽयं नाट्यशास्त्रस्य (३१।१०९-११०) अष्टनायिकां स्मारयति । अनेनैव प्रकारेण रघुवंशे—**'अमसत्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शनम्'** (र० वं० १९।३६) नाट्यशास्त्रस्य—**'सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः'** (वा० शा० २४।९) अस्य पाठस्य स्वरूपमनुहरति ।

'कुट्टनीमतम्' (श्लो० सं० ७५) नाट्यशास्त्रं 'ब्रह्मोक्तम्' निर्दिशति । श्लोकोऽयं नाट्यशास्त्रस्य प्रथमाध्यायं प्रति सङ्केतयति । अनेन प्रकारेण—'भरतसुतैरुपदिष्टं क्षितिपति न दृष्यावरोधनारीणाम्, (कु० म० श्लो० सं० ९४६) उक्तिरियं नाट्यशास्त्रस्यान्तिमाध्यायस्यान्तिमचरणमनुहरति । कुट्टनीमते विविधस्थलेषु विविधविषयाणामुल्लेखोऽस्ति येषां विवेचनं नाट्यशास्त्रस्य विभिन्नाध्यायेषु प्राप्तं भवति । उदाहरणानि यथा—कुट्टनीमतस्य ७९१-९२२ श्लोके खण्डिता तथा कलहान्तरितानायिकायारुल्लेखोऽस्ति । यस्य श्लोकस्य तुलना नाट्यशास्त्रस्य (अ० २२, श्लो० २१६-२१७, श्लोकैः सह कर्तुं शक्यते । ८८१ तथा ९२८ श्लोकेषु प्रावेशिकी एवं नैष्क्रामिकी ध्रुवानामुल्लेखोऽस्ति, यस्य प्रयोगः रत्नावल्याः प्रथमाङ्केऽभूत् । उल्लेखोऽयं स्पष्टतया द्वात्रिंशदध्यायस्य ३३५, ३३६ श्लोकं प्रति सङ्केतयति, यत्रोभयोः श्लोकयोः वर्णनमस्ति । कुट्टनीमतस्य ८०५ श्लोके सात्विकभावानामुल्लेखोऽस्ति एवं तस्य ८०९ श्लोके (सदृशेप्यनुभावगेण करुणरसं विप्रलम्भतो भिन्नम्) नाट्यशास्त्रस्योल्लेखोऽस्ति (ना०शा० भा० ६ पृ० ७३), यत्र सात्विकभावनां चर्चाकृताऽस्ति । अनेन निष्कर्षोऽयमायाति यत् नाट्यशास्त्रस्य प्रथमाध्यायतो नीत्वा

षट्त्रिंशदध्यायपर्यन्तं प्रमुखाः अध्यायाः विद्यमानाः आसन् । ध्वन्यालोके आनन्द-वर्धनस्य कथनमस्ति—'यदि वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनां (पृ० २०२) तथा **'यथा वेणीसंहारे विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतिरस निबन्वबानमुगुणमपि भरतमतानुसरणमात्रेच्छया घटनं'** (पृ० १८५) । अनेन प्रकारेण **'अत एव च भरते प्रबन्धप्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्त्तव्य तथोपन्यिस्तम् (पृ० १८०) तथा एतच्च रसादितात्पर्येण काव्य- निबन्धनं भरतादावपि सुप्तसिद्धमेव' (पृ० २२६),** । नाट्यशास्त्रस्य विंशतितमेऽध्याये, तथा गा० ओ० सी० तृतीयभागस्य द्वाविंशतितमोऽध्याये (द्वितीयसंस्करणे) कैशिकादिवृत्तीनां वर्णनमस्ति तथैकविंशतितमेऽध्याये विलासनामकस्याङ्गस्य वर्णनमस्ति। अष्टादशाध्याये नाटकस्य लक्षणस्वरूपे प्रथमः श्लोकार्द्धः अनेन रूपेणास्ति—'प्रख्यातस्तु विषयं प्रख्यातोदात्त नायकञ्चैव ।' आनन्दवर्धनस्य समयः खीष्टीय नवमशतक-स्योत्तरार्द्धोऽस्ति । वेणीसंहार नाटकस्य रचना आनन्दवर्धनात्पूर्वमेवाभवत् । तस्य रचयिता भरतमेव सर्वश्रेष्ठं मन्यते । अतः इदं वक्तुं शक्यते—यदानन्दवर्धनात् कतिपयशतकाः पूर्वमेव नाट्यशास्त्रे रसनायक-वृत्ति-विलासादीनामिव प्रतिमुखसन्ध्यङ्गाना चर्चा सम्मिलिताः अभवन् ।

काव्यप्रकाशे नाट्यशास्त्रस्य निम्नलिखितानि सूत्राणि उद्धृतानि सन्ति । **'विभावानुभावव्यभिचारि संयोगाद्रसनिष्पत्तिः'** सहैव भट्टलोल्लट-शङ्कुक-भट्टनायक अभिनवगुप्तादिभिः कृताः व्याख्यानां विवेचनमस्ति । अत्राभिनवगुप्तस्य साहित्यिक-जीवनं खीष्टीय ९८० शतकादारभ्य १०३० शतकपर्यन्तमासीत् । श्रीधैर्यतनयः काश्मीरवासी महि-भट्टो ध्वनिविरोधी आचार्यः, अनेन सर्वस्य ध्वनेरनुमानेऽन्तर्भावाकर्त्तुं व्यक्तिविवेकः प्रणीतः—

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥**

अनेन तर्कशास्त्रमाधारीकृत्य ध्वन्यालोकस्य विरोधाय प्रयासः कृतः । अस्मिन् प्रयासे तेनान्यग्रन्थ साहाय्यं न लब्धम् । ध्वनिविरोधे यद्यपि भट्टनायकस्य हृदयदर्पणनामा ग्रन्थस्तदा सद्योनिर्मितोऽभवत् । परमनेन स ग्रन्थो नालोकितः, यथोक्तम्—

**सहसा यशोभिसर्त्तुं समुद्यताऽदृष्टदर्पणा मम धीः ।**

इयमस्योक्तिः स्वग्रन्थस्य नितान्त मौलिकता व्यञ्जनायैव ।

सर्वप्रथमं महिमभट्टः अभिनवगुप्तस्य मतमालोचितवान्, तदनन्तरं मम्मटेनास्य महिम्नोमतमालोचितम् । तदयं महिमभट्टः अभिनवगुप्तात् परवर्त्ती मम्मटात् पूर्ववर्त्ती च सिद्धो भवति । अभिनवगुप्तः १०३० ई० स्थितोः मम्मटश्च १०५० ई० स्थितस्तयोर्मध्ये स्थितस्यास्यैकादशशतक प्रथमचरणेऽनुमीयते । तथा भट्टनायकस्य समयः ई० ९००-९२५ वर्त्तते । शङ्कुकः सम्भवतया स एवास्ति योर्हि भुवनाभ्युदयनामकं ग्रन्थमरचयत् । यस्य राजतरङ्गिण्यामुल्लेखोऽस्ति—

**कविवुधमनः सिन्धुशशाङ्कः शङ्कुकाभिधः ।**
**यमुद्दिश्याकरोत्काव्यं भुवनाभ्युदयाभिधम् ॥** (भागः ४, ७०५)

अतः शङ्कुकस्य समयः प्रायः ८४० ई० मन्यतुं शक्यते । काव्यप्रकाशे शंङ्कुन्रायः अभिनवगुप्तादीनामुल्लेखः तिथिक्रमानुसारेणास्ति । अतोऽनुमीयते-भट्टलोल्लट तस्य पूर्ववर्त्ती आसीत् । सो हि रसविवरणमलिखत् यस्योद्धरणं सोमेश्वरेण दत्तः—

**यमकानुलोमतदितर-चक्रादिभिदा हि रसविरोधिन्यः ।**
**अभिधानमात्रभेद् गद्द(ऽऽ)रिकादिप्रवाहो वा ॥**

(Folio 155 B)

अतः लोल्लटः शङ्कुकस्य पूर्ववर्त्ती वर्त्तते । संभवतया तस्य समयः ७५०-८००ई० वर्त्तते । अतोऽयं कथितुं शक्यते यदष्टमशतके नाट्यशास्त्रस्य षष्ठाध्यायस्य यत्र रसस्य निरूपणमस्ति, तस्यानेकाः व्याख्याः समुपलब्धाः आसन् ।

भवभूतिः (७००-७४० शतके) नाट्यशास्त्रस्य (तौर्यत्रिकसूत्रस्य) रचयिता भरतं तथा रामायणस्य रचयिता वाल्मीकिं समकालीनं मन्यते (द्रष्टव्यः उत्तररामचरितम् ४) ।

बाणभट्टस्तु कादम्बर्यामिकसप्तत्यनुच्छेदे तासां विद्यानां वर्णनमकरोत् यासु विद्यासु चन्द्रापीडः पटुत्वमाप्नोत् । तासु भरतकृतनाट्यशास्त्रस्य गत नृत्यस्याऽपि उल्लेखोऽस्ति । हर्षचरितेऽपि (भा० ३, अनुच्छेद० ५ सङ्गीतस्योल्लेखोऽस्ति यस्मिन् भरतेन निदृष्टपद्धत्याः अनुसरणस्य चर्चाऽस्ति । यथा—

**वंशानुगमविवादि स्फुटकरणं भरतमार्गभजनगुरु ।**
**श्रीकण्ठविनिर्यातङ्गीतमिदं हर्षराज्यमिव ॥**

(हर्षच० भा० १, श्लो० ४)

विवाद्यर्थं द्रष्टव्यं नाट्यशास्त्रं यत्र चतुःप्रकाराणां स्वराणां वर्णनमस्ति-विवादिनस्तु ते येषां विंशतिस्वरमन्तरम् । तद्यथा विभवगान्धारौ धैवतनिषादौ ।' (ना०शा०, अ० २८, श्लो० २१) । एवं (पृ० ३१८) तथाकरणेभ्यः (द्र० : ना०शा०, ९, पृ० १९-२०७) । अन्यत्र हर्षचरितस्य द्वितीयभागस्य चतुर्थपृष्ठे आरभटीवृत्तिकानामभि-नेतृणामुल्लेखोऽस्ति—(रैणवावर्त्तमण्डली रेचकरासरभसारब्धनर्त्तनारभटीनयः) नाट्यशास्त्रे रेचकस्य प्रतिपादनं (४, २४०-२४६) तथा आरभट्याः प्रतिपादनं (२०.६५) तृतीय भागेऽस्ति ।

याज्ञवल्क्यस्मृतौ कथितमस्ति यत्सामगीतानां नियमानुसारेण दोषरहितगेष्णवः ब्रह्मपदमाप्नुवन्ति, तथा ते गायकाः ये वैदिकगीतानां स्थाने अपारान्तकम्, उल्लोप्यकम्, मद्रकम्, प्रकरी-औवेणकम्, सरोविन्दुं तथोत्तरम वैदिकगीतकान्यपि गायन्ति तेऽपि तेऽपि ब्रह्मपदमाप्नुवन्ति । तद्यथा—

**अपरान्तकमुलोण्यं मद्रकं प्रकरी तथा ।**
**औवेणकं संरोबिन्दुमुत्तरं गीतकानि च ॥**

**ऋग्गाथापाणिका दृष्टानिहिता ब्रह्मगीतिका ।**
**गेयमेतत्तदभ्यासकरणान्मोक्ष संज्ञितम् ॥**

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः तत्वज्ञश्च प्रयासेन मोक्षमार्गे नियच्छति । तुलना—(याज्ञ० ३।११३-११५) । सादृश्यम्—ब्रह्मोक्तं सप्तरूपं हि समवेताद् विनिःसृतम् । दैवताराधनं पुण्यमनन्तं गीतवादितम् ॥ ऋग्गाथापाणिकानां च प्रमाणानां तथैव च । अनेनैव विधानेन युग्मौजस्त्वं विभावयेत् ॥ ना०शा० ३१।४१९, ४२१; का०मा० ३१।३२४ । पुनः ३१।५२३; **'ऋग्गाथा पणिका चैव सप्तरूपं प्रकीर्णकम् ।'** तथा ३२-२ **'या ऋचा पाणिका गाथा सप्तरूपाङ्गमेव च ॥'**

बहुभिः प्रमाणैः प्रतीतो भवति—याज्ञवल्क्यस्मृति नाट्यशास्त्रस्यानुकरणं कृतः । अस्मिन् प्रसङ्गेऽनेकाः टीकाकाराः सम्प्रतिपन्नाः सन्ति यत् याज्ञावल्क्यस्य समये गीतवाद्योपरि कोऽपि ग्रन्थः अवश्यमेवोपलब्धः आसीत् । मिताक्षराऽपरार्कौ केवलं भरतस्यैवोल्लेखः कृतवन्तौ स्तः । एतदतिरिक्तः इदमप्युल्लेखनीयमस्ति यदुपरोक्ताः श्लोकाः यज्ञावल्क्यस्मृतानाकस्मिकरूपेण समागताः प्रतीताः भवन्ति । अस्माकं मते याज्ञवल्क्यस्मृतौ संग्रहीताः एतेषां श्लोकानां मूलस्त्रोतं नाट्यशास्त्रमस्ति । एवं विधस्थितौ नाट्यशास्त्रे खीष्ट्रस्य प्रथम द्वितीय शतकात् पश्चात्वर्ती कदापि कथितं न शक्यते ।

सातवाहनः स्वकीयगाथासप्तसत्यां कथितोऽस्ति (गा० वा० सं० ३४४, वेकर-संस्करणे २७) उपगूहनं शृङ्गाराभिनयस्य पूर्वरङ्गोऽस्ति —

**मानवुमपरुसपवणस्य मामि सवङ्गाशिब्बुदिअरस्स ।**
**अवब्धहणस्स भवदंरहनाऽ अपुक्तगरुस ॥**

सत्तसई (सप्तशती) ३४४ एवं ४.४४ नि० सं०)

गाथासप्तशत्त्याः रचना २००-४०० खीष्टाब्देऽभवन् (See—History of (Sanskrit Literature, by Keeth, Page 224).

फ्लीटमहोदयेन सम्पादितस्य प्राचीनसंस्कृतस्य कन्नड़भाषायाश्चाभिलेखेषु (Indian antiquary part 10, page 166-67) पद्वदकलस्थितस्तम्भोपरि उत्कीर्ण श्लोकद्वयस्य निर्देशोऽस्ति (अष्टम-नवम शतकस्य लिप्यामेव) यस्य रचना अचलः अथवा अचलदः नामककविना कृता । अत्र द्वितीयश्लोकमुद्धृतमस्ति येन ज्ञातो भवति केन प्रकारेण भरतस्यानुयायिनः नृत्यशास्त्रस्य कस्याप्यन्य प्रतिद्वन्द्विनः आचार्यस्य शिष्यान् पराजितवन्तः?

**नटसैव्य भरतमतयुंवपठुतरवचनाशनि प्रपातेन ।**
**कुटिलोकातनटशैलः स्फुटिता नतमस्तकः पतति ॥**

अलङ्कारशास्त्रस्य निम्नाङ्किताः लेखका (५९०-६५०) खीष्टाब्दस्य मध्यवर्त्तिनः) भट्टि-दण्डी-भामह-उद्भटादयः त्रिंशदधिकालङ्काराणां परिभाषा कृतवन्तः । किन्तु, भरतेन केवलं सुगमतमं चतुर्णामलङ्काराणा (उपमा, दीपकः, रूपकम्, यमकः) चर्चाकृता-

ऽस्ति । यदि तस्मिन् काले एतदतिरिक्तांलङ्काराणां प्रचलनमासी तदा तेषामपि अलङ्काराणां परिभाषा तेन कथं न कृता? अतोऽस्य भरतस्य समयः एतेभ्यः अलङ्कारिकेभ्यः पूर्व एवासीत् इति निश्चीयते ।

सारभूतेन पौराणिकवंशक्रमानुसारेण व्यासवाल्मीकिभ्यां पश्चाद्वर्त्ती भवन्नपि इतरेभ्यः समेभ्यः संस्कृतभाषायां लेखकेभ्यः भरतः प्राचीनः प्रतीयते । भरतकृतस्य नाट्यशास्त्रस्य राहुलकृताटीकाऽभिनवगुप्तैर्न स्मर्यते । राहुलकस्य नाम तमिलमहाकाव्ये 'मणिमेकलये' (Manimekali) समायातम् । 'मणिमेकलये' नामकस्य तस्य तमिलग्रन्थस्य रचनाकालः चतुर्थ ई०पू० मन्यते, अतो भरतस्य तत्पूर्वकालिकता समायाति । भरतस्य प्राचीनाष्टीकाकारा एवाति प्राचीनास्तस्य प्राचीनतरतां साधयसि । सोऽपि भरतं स्मरतीति तदप्यस्य प्राचीनतां प्रमापयति ।

भरतद्वयं—प्रथमे एको वृद्धभरत वा आदिभरतः । वृद्धभरतस्य कृतिर्द्वादशसाहस्रीशब्देन व्यवहृताः । भरतस्य कृतिस्तु शतसाहस्रीशब्देन व्यवहृता । भरतस्य प्राचीनतयैव तं मुनिमाहुः । प्रतीयते यदुपलब्धं नाट्यशास्त्रं भरतस्यैव कृतिरस्ति, नास्त्यत्र काऽपि विप्रतिपत्तिः । इदं नाट्यशास्त्रं क्वचित्षट्त्रिंशदध्यायात्मकः क्वचिच्च सप्तत्रिंशदध्यायात्मकं कथ्यते । मन्ये लेखकप्रमादात्कोप्यध्यायो विभक्तः स्यात् ।

अभिनवगुप्तः स्वीयायां भरतसूत्रस्य टीकायां सप्तत्रिंशतोऽध्यायां ल्लिखितवान् । प्रत्यध्यायप्रारम्भमसौ श्लोकमेकं शिवनमस्कारात्मकं लिखति, येन कश्मीरक प्रत्यभिज्ञाशास्त्रीय षट्त्रिंशत्तत्वानि निर्दिशितानि भवन्ति, सप्तत्रिंशेऽध्याये चानुत्तरं शिवं स्तौति—

**आकांक्षाणां प्रशमनविधेः पूर्वभावावधीनां**
**धाराप्राप्त स्तुतिगुरुगिरां गुह्यतत्त्वप्रतिष्ठा ।**
**ऊर्ध्वादन्यः परभुवि न वा यत्समानं चकास्ति**
**प्रौढानन्तं सदहमधुनाऽनुत्तरं धाम वन्दे ॥**

इदमपि संभवति यदभिनवगुप्त एतत्वानि अनुत्तरं च निर्देष्टुमिच्छुकमप्यध्यायं विभज्याध्याय संख्यां वर्धितवान् स्यात् ।

प्राप्ते भरतसूत्रे पञ्चसहस्रश्लोकास्तथा कियद्गद्यमपि विद्यते । षष्ठे, सप्तमे, अष्टाविंशे चाध्याये केवले गद्यभागो लभ्यते । इतिहासविदः कथयन्ति यन्नाट्यशास्त्रं नैकस्मिन् काले रचितमपितु दीर्घकालिकस्य साहित्यतत्त्वनिर्णयप्रयासस्य फलमिदं नाट्यशास्त्रम् ।

नाट्यशास्त्रे पूर्वोक्तकथनानुसारेण त्रयोंशाः विद्यन्ते—सूत्रं भाष्यञ्च अयमंशः प्राचीनतमः । कारिका—मूलाभिप्रायं प्रकटयितुं कारिका व्यरच्यन्त । तृतीयांशेऽनुवंश्यश्लोकाः, इमे श्लोकाः भरतादपि प्राचीनैराचार्यै रचिताः, स्वमतं प्रमाणयितुं भरतेनोपन्यस्ता इत्युक्तमभिनवगुप्तेन—

**'ता एता ह्यार्या एकप्रघट्टकतया, पूर्वाचार्यैर्लक्षणत्वेन पठिता, मुनिना तु सुखसंग्रहाय यथास्थानं निवेशिताः ।'** (भा०-१, पृ० ३२८)

भरतो रससम्प्रदायस्यैवाचार्यरासीत् ।

उपर्युक्तपर्यालोचनेन प्रमाणितो भवति यन्नाट्यशास्त्रं ३०० खीष्टाब्दात्पश्चात्वर्त्ती कथितुं न शक्यते । किञ्चास्य नेदं तात्पर्यमस्ति । यदाधुनिकपाठः स्वकीय मूलरूपे तत्कालादेवागच्छति । सहैवास्यापि मतस्य प्रतिवादः कर्त्तुं न शक्यते यत् ३०० खीष्टाब्दात् पूर्व भरतेन रचितः कस्याऽपि ग्रन्थस्यास्तित्वमवश्यमेवासीत्, यस्मिन् ग्रन्थे रससिद्धान्तस्य तथा नाट्यकलायाः विवेचनमासीत् । यतः काव्यशास्त्रस्य सिद्धान्तानां विवेचनकर्त्ता ३०० खीष्टशतकात्प्राचीनः कोऽपि ग्रन्थः अद्यनोपलब्धोऽस्ति । अतः यावत् वर्त्तमानकालिकास्य विषयस्य परिचयस्य प्रश्नोऽस्ति प्रस्तुत् नाट्यशास्त्रमेवास्यालङ्कारशास्त्रस्य प्राचीनतमः ग्रन्थोऽस्ति । इत्येवमेवास्य निष्कर्षः ।

### भरतनाट्यशास्त्रस्य टीकाकाराः

अभिनवगुप्तशार्ङ्गदेवौ निम्नाङ्कितानां नवानां टीकाकाराणां नामोल्लखं कृतवन्तौ— १. उद्भट, २. लोल्लटः, ३. श्रीशङ्कुकः, ४. भट्टनायकः, ५. राहुलः, ६. भट्टयन्त्रः, ७. अभिनवगुप्तः, ८. कीर्त्तिधरः, ९. मातृगुप्ताचार्येत्यादयश्चेति ।

### नाट्यशास्त्रस्य टीकाः

सम्प्रति वयं नाट्यशास्त्रस्य टीकायामुपरि विचारयिष्यामः । तासु टीकासु सर्वाधिक प्रसिद्धा पाण्डित्यपूर्णा चाभिनवगुप्तस्य 'नाट्यवेदविवृत्तिः' नामकस्य टीकास्ति, यां टीकां हस्तलिखितप्रतीनां पुष्पिकासु तथा शकुन्तलानाटकस्य टीकाकारः राघवभट्टादयः 'अभिनवभारतीनाम्ना व्यवहृतवन्तः । यथा—राघवभट्टः—**'सूत्रधारः पठेन्नान्दीं लङ्कृताम्'** (ना०शा० ५.२४-२५,१०६-१०७) । इदमुद्धृत्यलिखति— **'इदं पद्यमभिनवगुप्ताचार्यै भरतटीकायामभिनवभारत्यां व्याख्यातम्'** । यावदहं जानामि सम्पूर्णनाट्यशास्त्रोपरि 'अभिनवभारती' पूर्णरूपेणाद्यपर्यन्तं कुत्राप्युपलब्धो नैवास्ति । तथाऽपि अस्यां टीकायां भरतस्यान्य टीकाकर्तृणां तथान्य नाट्यकलायाः अन्याचार्याणाञ्च विषये बहुमूल्य संभाराः सन्ति । विशेषपरिज्ञानाय डॉ० राघवन-महोदयस्य अस्य विषयस्य निबन्धः दर्शनीयः (Journal of Oriental Research, Madras, Part 6, Pages 149-176 and 199-223) शार्ङ्गदेवकृतरत्नाकरानुसारेण लोल्लट-उद्भट-शङ्कुक-कीर्त्तिधराभिनवगुप्तादयः भरतस्य टीकाकाराः सन्ति । व्याख्याकारो भारतीये लोल्लटोद्भव शङ्कुकाः । भट्टाभिनवगुप्तश्च श्रीमत्कीर्त्तिधराऽपरः । (१.१९) । अभिनवगुप्तस्तु निम्नलिखितेषु स्थलेषूद् भटस्योल्लेखः कृतवान् ।

१. नाट्यशास्त्रे (६।१०) औद्भटसम्प्रदायस्य मतमुद्धतमस्ति । अस्योपरि अभिनवगुप्तस्य मतमस्ति यल्लोलल्टस्तेन मतेन सहसहमतोनैवास्ति । (द्र० अनि० गायकवाड़ ओरियण्टल सिरीज भा० १ पृ० २६६) ।

२. नाट्यशास्त्रस्य सम्बन्धे अभिनवभारत्याः कथनमस्ति यदुद्भः अस्य श्लोकस्य भिन्नपाठः कृतवानस्ति—

**उत्तानोधस्तलस्त्र्यश्रोग्रगोधोमुख एव च ।**
**पञ्चप्रकाराः हस्तस्येति भट्टोद्भटः पठति ॥**

३. समवकारः (एक-प्रकारकस्य रूपकम्) अस्मै रूपकाय नाट्यशास्त्रे पाठोऽस्ति—

**उष्णिग्गायत्राद्यान्यन्यानि च यानि बन्धकुटिलानि ।**
**वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि ॥** (१८।७६)

अभिनवभारत्या-कथनमस्ति यदुद्भटः 'तानि प्रयोज्यानि' पदस्य स्थाने 'नैव प्रयोज्यानि पाठः कृतवानस्ति'—नैव प्रयोजनीत्युद्भटः पठति स्रग्धरादीन्येव प्रयोज्यानि नाल्पाक्षराणीति स व्याचष्टे (अभि० भा०, द्वि० भागः, पृ० ४४१। (२०-८०) अध्याये उद्भट इव समानः पाठोऽस्ति ।

४. वृत्तिचतुष्टयः—भारती-सात्वती-कैशिकी-आरभटीनां सम्बन्धे उद्भटः स्वयमेव भरतस्यालोचना कृतवानस्ति । 'उत्सृष्टिकाङ्कः' नामकस्य नाटकस्य परिभाषाकुर्वन् भरतः कथयति (ना० शा०, अ० २०, पृ० ६६-१००) यदिदं स्त्रिया रोदनेन पूर्णो भवति । तथा भारतीवृत्तिं परित्यज्यान्या काऽपि वृत्तिर्न भवति । किञ्च, करुणरसस्याभिनये यत्र मूर्च्छनस्य वा मृत्योः प्रदर्शनं स्यात् तत्र वाण्याः एवं भारती वृत्याः प्रयोगो न भवति । नाट्यशास्त्रे (२२,२५) तस्य वर्णनं वाक्प्रधानादिरूपेणागतः । अनेन कारणेनोद्भटः वृत्तिचतुष्टयस्य मतं परित्यज्य वृत्तित्रयाणामेव प्रतिपादनं कृतवान् । न्याय चेष्टावृत्तिः, अन्यायचेष्टावृत्तिस्तथा फलसंवित्तिवृत्तिः, मूर्च्छनाय वा मृत्यवे फलवृत्तिः । अभिनवगुप्तः श्लोकमेकमुद्भटस्योद्धृतवानस्ति—

**'तस्मात्फल संवित्त्याख्या वृत्तिः वाक्चेष्टयोः फलानुभव इति यस्याः लक्षणं साभ्युपगन्तव्या । अवश्यं चैतत् अन्यथा मूर्च्छामरणादौ वाक्चेष्टयोरभावे निवृत्तिफलैव स्यात् ॥ .....तस्माच्चेष्टात्मिका न्यायवृत्तिरन्यायवृत्तिर्वाग्रूपा तत्फलभूता फलसंवित्तिरिति त्रयमेव युक्तमिति भट्टोद्भटो मन्यते । यदाहाऽऽद्ये वाक्चेष्टाभ्यां पुरुषार्थचतुष्टयेन चाष्टविधे । षोडशधा फलवृत्तिस्तद्द्वयतोऽनेकधा तु रस भेदात् ।'** (अ०भा०, भा०२, पृ० ४५१) तथा कथ्यते यच्छकलीगर्भनामकस्य कस्याप्याचार्यस्यानुयायिनां मतमस्ति—वृत्तयः पञ्चप्रकारकाः भवन्ति । भरतस्य चतस्रः एव भवन्ति तथा आत्म-संवृत्तिर्नामकस्य पञ्चमावृत्तिरुद्भटस्य फलवृत्तिरेवास्ति । लोल्लटस्तु उद्भटस्य तथा शकलीगर्भस्य मतानां खण्डनं कृतवान् । अभिनवगुप्तस्तु एभिस्त्रिभिरचार्यैः सह सहमतो नास्ति । अयं हि भरतसम्मतवृत्तिचतुष्टयस्य समर्थकोऽस्ति ।

५. एकस्मिन्नवतरणे अभिनवरुद्भटेन प्रतिपादितं अविमर्शनामकस्य चतुर्थसन्धेरुल्लेखस्तथा खण्डनं कृतं (ना०शा० २१।४२) । शकलीगर्भमतखण्डनं यथा—

**'यच्छकलीगर्भमतानुसारिणो मूर्च्छादावात्मसंवित्तिलक्षणपञ्चमीवृत्तिं सकलकार्य**

**निवृत्यनुमेया... आत्मव्यापाररूपं मन्यन्ते... तन्मतं भावनां वाह्यग्रहणस्वभावत्वमुपपादयद्भिः भट्टलोल्लटप्रभृतिभिः पराकृतम् ।'** (अ०भा०, गा०ओ०सी०, भा०२, पृ० ४५२) ।

**'यदाह भटोद्भटः । नासान्वेषण भूभिरवमृष्टिरवमर्श इति तच्चेदं व्याख्यानं लक्ष्यविरुद्धं युक्त्या च** । (द्र० : अ० २८, भा० ३, पृ० १९)

६. उद्भटस्तु नाट्यशास्त्रस्य व्याख्या (२१।१७) अनेन प्रकारेण कृतवानस्ति यन्नाटके विविध सन्धीनां तथा तेषामङ्गानां प्रदर्शनं कर्त्तव्यम् । किञ्च, अभिनवभारत्यां गुप्तेन तस्य खण्डनं कृतं तथा कथितं यनेदं तर्कसङ्गतमस्ति न च कवि परम्परानुकूलमस्ति ।

'पुनरेषामिति पुनःशब्दो विशेषद्योतलक्षण एवायं क्रमो न निबन्धने इति यावत् । तेन यदुद्भटप्रभृतयो अङ्गानां सन्धौ क्रमे च नियममादुस्तद्युक्तयागमविरुद्धमेव पृ० ३६, भा० ३, गा०वा०ओ०सी०सं०) । उपर्युक्तविवरणेन स्पष्टो भवति यदभिनवगुप्तेन नाट्यशास्त्रस्य ६, ९ तथा १९ अध्यायानामुपरि उद्भटस्य टीकायाः उल्लेखः कृतः । प्रतीतो भवति संभवतरुद्भटः सम्पूर्णनाट्यशास्त्रस्य टीका लिखितवानासीत् । उद्भटस्य समयः प्रायः खीष्टस्याष्टमशतकः अस्ति । आत्मसंवित्ति नामकस्य वृत्योपरि, तस्य मतस्य, यस्य लोल्लटेन समालोचनाकृता, शकलीगर्भः स्वीकृतवान् । अतः लोल्लटस्य समयोऽपि प्रायः ८००-८४० खीष्टाब्दस्य मध्यवर्ती आसीत् । भरतस्य रससूत्राणामुपर्यस्य व्याख्यायाः निम्नलिखिताः व्याख्याः सन्ति ।

१. लोल्लटस्य मतानुसारेण रसानां संख्या सीमिताः नैवास्ति ।

तेनानत्येऽपि पार्षदप्रसिद्धयैतावतां प्रयोज्यत्वमिति यद्भट्टलोल्लटेन निरूपितं तदवलेजना परामृश्येत्यलं (अ० भा०, भागः-१, पृ० २९९) अत्र 'परामृश्येत्पलस्य' पदस्यस्थाने—'अवलेपनापरामृष्टेत्यलम्'? इति पाठो भवितव्यम् । अस्यार्थो भवति-लोल्लटं मिथ्याभिमानमभवत् ।

किञ्च घरम्परागत शास्त्राणां मान्यतानुसारेण (मञ्चोपरि) अष्ट वा नव रसानामेव प्रदर्शनं भवति ।

२. प्रतीतोभवति यल्लोलटः निम्नलिखितं श्लोकं नैवाऽपठत् ।

**यः कश्चित् कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम् ।**
**तत्राप्यङ्कच्छेदः कर्त्तव्यः पूर्ववत् तज्ज्ञैः ॥**

(गा०ओ०सी० १८, ३२, अध्या० २०।३० का०मा०सं० १८।३४)

**'अत एवैतद्भट्टलोल्लटाद्यैर्न पठितमेव ।'**

(अ०भा०, भा० २, पृ० ४२३)

३. अभिनवभारत्याः द्वितीयभागे १३४ पृष्ठे ध्रुवतालस्य सम्बन्धे गोपालस्य तथा च लोल्लटस्य मतानामुल्लेखः कृतवानस्ति ।

४. अभिनवगुप्तः नाट्यशास्त्रस्य (१३।१) टीकायां लोल्लटमतस्योल्लेखः कृतवान् ।

५. तस्येदमपि कथनमस्ति (१८।१४) लोल्लटस्त्वस्य श्लोकस्य पाठः अनेन प्रकारेण कृतवान्—'अङ्क इति गूढशब्दो भावैश्च रसैश्च रोहयत्यर्थान्' अभिनवं 'रुढिशब्दो पाठ इत्यभिप्रेतोऽस्ति ।

६. नाट्यशास्त्रस्य (गा० ओ० सी० १८, ६०; चौखम्बा सं० २० । ६३) व्याख्यां कुर्वन् अभिनवगुप्तोऽस्य विषयस्योल्लेखः कृतवान् यल्लोलटमतेन नाटिका षट्पदा भवति तथा शङ्कुकमतेन अष्टपदा भवति ।

'षटपदेयं नाटिकेति संग्रहानुसारिणो भट्टलोल्लटाद्याः, श्रीशङ्कुकस्तु अयुक्तमेतदिव्यभिधायाष्टधेति व्याचष्टे । (अ० भा० भा० २, पृ० ४३६)

७. नाट्यशास्त्रस्य (चौ० सं० २१ । २९) संबन्धे लोल्लटस्य मतमस्ति यत्पताकानायकस्य जीवनस्य तथा कर्त्तव्यानामंशः अनुसंधिः कथ्यते । 'तथा लोल्लटाद्यास्तु मन्यन्ते परार्थे साधयितव्ये पताकानायकस्येतिवृत्तभागा अनुसन्धयः । (पृ० १७, अ० भा०, भा० ३, गा० ओ० सी०) ।

उपर्युक्तविवेचनेन स्पष्टो भवति यल्लोल्लटोऽपि नाट्यशास्त्रस्य कतिपयेष्वध्यायेषु टीका अवश्यमेवाऽलिखत् न तु सम्पूर्ण नाट्यशास्त्रस्येति, यथा (६, १३, १८ तथा २१ अ०) ।

हेमचन्द्रस्तु स्वकाव्यानुशासने (अ० ५, पृ० २१५) लोल्लटस्य द्वौ श्लोकौ उद्धृतवान्—

**यस्तुयरिदद्रिसागरनगातुरगपुरारि वर्णने यत्नः ।**
**कविशक्तिख्यातिफलो विततधियां नो मतः प्रबन्धेषु ॥**
**यमकानुलोमतदितरचक्रादिभिदा हि रसविरोधिन्यः ।**
**अभिमानमात्रमेतद् गड्डरकादि प्रवाहो वा ॥'**

काव्यमीमांसायां प्रथमं श्लोकं अपराजिति नामकस्य कस्याप्यन्य लेखकस्य कृतिः मन्यते स्म । (पृ० ४५) द्वितीयं श्लोकं च सोमेश्वरः काव्यप्रकाशस्य टीकायाँ (Folio 105 b) लोल्लटस्योक्त्वा, तथा नमिसाधु रुद्रटस्योपरि (३।५९) व्याख्यां कुर्वन् रचयितुर्विनैव नाम उद्धृतवान् । माणिक्यचन्द्रः 'काव्यप्रकाश' सङ्केतनाम्नः टीकामलिखत् । तस्य तत्र कथनमस्ति यल्लोल्लटस्य रसविवरणं तथान्याचार्यैः प्रतिपादितस्य रससिद्धान्तस्याध्ययनं कर्त्तव्यं (मैसूरसंस्करणस्य, ८२ पृष्ठे) अस्यैव ग्रन्थस्य १४७ पृष्ठेऽयं लोल्लट-शङ्कुक-नायकानां त्रयाणामाचार्याणां सङ्केतः करोति—

**...न वेत्ति यस्य गाम्भीर्यं गिरि तुङ्गोऽपि लोल्लटः ।**
**तत्तस्य रसपाथोधेः कथं जानातु शङ्कुकः ॥**
**भोगरत्यादि भावानां भोगं स्वस्योचितं ब्रुवन् ।**
**सर्वथारससर्वस्व मर्मास्प्राक्षीन्न नायकः ॥**

प्रतीतो भवति यल्लोलटस्य तर्कः पूर्वमीमांसायारुपरि आधारितोऽस्ति । उदाहरणस्वरूपम्-द्रष्टव्यम्-अभिनवभारत्याः द्वितीयभागस्य १९६ पृष्ठे—

'प्रत्येक प्रसङ्गत्वलाभात् क्रमस्यापदार्थत्वान्नार्थप्रमाणकत्वान्मुख्यश्रौतपदार्थवाचकत्वमयुक्तं श्रुत्या वाक्यप्रमाणस्य बाधनादिति तु भट्टलोल्लटोक्तं प्रकृते सिद्ध्यति विरोधाभावात् अस्मिन्प्रसङ्गे जैमिनेः प्रसिद्धं सूत्रमपि दर्शनीयम्—'श्रुतिलिङ्गवाक्य प्रकरणस्थान समाख्यानां समवाये पारदौर्वल्यम् ।' (३.३.१४)। अनेन विचारेण प्रमाणितो भवति यत् श्राद्धप्रकरणस्य रचयिता लोल्लटः, रसमीमांसकलोल्लट एवास्ति, यतो हि प्रथमः लोल्लटस्य समयः ख्रीष्टस्य नवमशतकात्पश्चाद्वर्त्ती एवास्ति ।

शङ्कुकः लोल्लटस्य पश्चाद्वर्त्ती वर्त्तते । यतोह्ययंलोल्लटस्य रससम्बन्धिसिद्धान्तानामालोचना कृतवानस्ति । (द्र० : अ० भा०, प्रथमभागस्य २७४ पृ०) अनेन प्रतीतो भवति यदसावपिनाट्यशास्त्रस्य टीकामलिखत् ।

(क) अभिनवभारत्याः प्रथमभागस्य पञ्चसप्तति पृष्ठे तृतीयाध्यायस्यैकविंशति श्लोकस्य व्याख्यां कुर्वन् रङ्गपीठोपरि शङ्कुकमतस्यासौ उल्लेखः कृतवान्—'अतः चतुर्हस्तं रङ्गपीठपृष्ठे एव मण्डलमित्युक्तं भवति । शङ्कुकादिभिः षोडशहस्तावकाशः भावः आसनस्वभादिवशादस्मादकृत एव रङ्गपीठे इत्यादि वृथैव बहुतरमुपन्यस्तम् ।'

(ख) नाट्यशास्त्रस्य गायकवाड़ ओरियण्टल सीरीज संस्करणस्य १८-१० अध्याये ४११ पृष्ठे प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकम्' सन्दर्भेऽस्मिन् नाटक विषयेऽभिनवगुप्तेन शङ्कुक-मतस्योल्लेखस्तथा खण्डनञ्च कृतमस्ति ।

(ग) गा०ओ०सी० संस्करणस्यास्मिन् श्लोके—'नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा' अत्र 'नृपतीनां' शब्दस्यार्थ सम्बन्धे शङ्कुकस्य व्याख्यायारूल्लेखस्तथा खण्डनञ्च दर्शनीयमस्ति—'श्रीशङ्कुकस्तु व्याचष्टे विजिगीषुररिर्मध्यमौदासीनो मित्रं मित्रमित्रमिति । एषां चरितमिति बहुवचनेन लभ्यते ।' अत्र द्रष्टव्यः—(History of Dharmsastra, part 3, pages 218-222) विजिगीषु तथाऽन्यविषयकविचाराय अ० भा०, द्वितीय भागस्य अत्रायतः प्रसङ्गोऽस्ति—'नृपतीनां यच्वास्तं नानारस भावचेष्टितं बहुधा । सुखदुःखोत्पत्ति कृतं भवति हि तन्नाटकं नाम ।' शङ्कुकस्तु अस्यैव श्लोकोपरि टीकामलिखत् ।

(घ) नाटिकाविषयेऽपि (१८ । ६० भा० २, पृ० ४३६) लोल्लटस्य चर्चा कुर्वन् शङ्कुकन्मतस्योल्लेखोऽस्ति ।

(ङ) नाट्यशास्त्रस्यैकविंशत्यध्याये चत्वारिंशत्पृष्ठे (का० मा० १९ । ४०) अभिनवगुप्तः प्रतिमुखसन्धेः दिग्दर्शनं कारयन् शङ्कुकेन प्रदत्तोदाहरणानामुल्लेखः करोति—

उद्घाटितत्त्वात् बीजस्य स्तोकमात्रं तु शङ्कुकादिभिरूदाहृतम्, यत्तदेकदेशलक्षणमिति द्रष्टव्यम् । (गा० ओ० सी० संस्करणस्य तृतीयभागे पञ्चविशति पृष्ठे) ।

(च) नाट्यशास्त्रोपरि (२१ । ४२ = काव्यमाला १९ । ४२) अभिनवभारत्यां विमर्श सन्धिविषये शङ्कुकमतं च प्रदर्शितवान् ।

(छ) नाट्यशास्त्रे (२१ । १९ = का० मा०) संस्करणे अभिनवभारत्यां गर्भसन्धेरङ्गविद्धवस्य चर्चां कुर्वन् शङ्कुकेन स्वीकृतपाठस्य तस्य व्याख्यायाश्चोदाहरणानामुल्लेखेऽस्ति—'अन्ये तु शङ्काभयत्रासैः कृतो यः स विद्रव इत्यादि तत्र च विशेष्य पदमन्वेष्यं, समुदाय एव विशेष्यः इति शङ्कुकः, उदाहरति च कृत्यारावणे षष्ठेंऽके गर्भसन्धौ । (गायकवाड़ संस्करणस्य अभिनवभारत्याः द्वितीय भागे, ५२ पृष्ठे) ।

(ज) नाट्यशास्त्रस्य चतुर्विंशतितमाध्याये—काव्यमालायीयाः द्वाविंशतितमाऽध्याये सामान्याभिनयस्य व्याख्यायामपि शङ्कुकमत्तं सविस्तृतमुद्धृतवान् (अभि० भा० गा०, ओ० सी० पृ० १४७) ।

(झ) अभिनवगुप्तः नाट्यशास्त्रेऽपि (२४ । ३८ का मा० २२ । ३) अध्यायेऽपि शङ्कुकस्य व्याख्यां प्रदत्तवान् अव्यक्तरूपमित्यादिकं प्रबन्धं श्रीशङ्कुकादयः इत्थं नयन्ति 'इत्यादयः' । (गा०ओ० सी० संस्करणस्य अभि० भा०, पृ० १५०, भा० ३) ।

(ञ) नाट्यशास्त्रस्य (२४.६६-७१ = का० मा० २२.६६-७१ पृष्ठे अभिनयस्य सम्बन्धेऽभिनवगुप्तेन प्रदर्शितं यत्केन प्रकारेणाभिनयस्य शत भेदाः भवन्ति । तस्मिन्नेव सम्बन्धे तेनेदमपि दर्शितं यत् शङ्कुकस्य मतानुसारेणाभिनयस्य भेदानां संख्या चत्वारिंशत् सहस्राणि भवन्ति । (ननु यथा श्रीशङ्कुकेनोक्तं चत्वारिंशत् सहस्राणि, इत्यादि (गा० ओ० सी संस्करणस्य तृ० भा० १८० पृष्ठे) ।

९. यत्र कुत्रचित् अभिनव-शङ्कुकयोः पाठभेदोऽप्यस्ति । तद्यथा शङ्कुकस्य पाठोऽस्ति—त्रिःशम्योपरि पाणौ त्वेष निर्दिष्टः । ...भूयः शम्यातालानुगुण्यदुत्तरस्तथा द्विकलश्च ।' यदा अभिनवगुप्तस्य पाठोऽस्ति—'तालवित्येवमेककल' तथा 'व्युत्तरस्तथा चैव ।' नाट्यशास्त्रस्य प्रथम भागे रस सूत्राध्याये २९३, २९८, ३१८ पृष्ठे शङ्कुकमुद्धृतम् । उपर्युक्तविवेचनेन स्पष्टो भवति यन्नाट्यशास्त्रस्य तृतीयाध्यायात् नवविंशतिः, अध्यायपर्यन्तं शङ्कुकस्य टीकायाः उद्धरणमस्ति । अतः सहजानुमानं कर्त्तुं शक्यते यच्छङ्कुकः सम्पूर्णनाट्यशास्त्रस्य टीकामलिखत् ।

अभिनवभारत्या भट्टनायकं बाहुल्येन उद्धृतम् । किञ्चायं नाट्यशास्त्रोपरि टीकामलिखत् नवेति स्पष्टो नास्ति । नाट्यशास्त्रस्य चतुर्थाध्यायस्यान्तिमश्लोकस्य व्याख्यायां कीर्तिधरमतस्योल्लेखोऽस्ति । शार्ङ्गदेवस्य कथनमस्ति यत्कीर्त्तिधरः भरत-

ग्रन्थस्य टीकाकारः अस्ति । अयं हि अभिनवगुप्तस्य पूर्ववर्त्ती आसीत् । यतोहि अभिनवस्य कथनमस्ति नाहं स्वयं नन्दिकेश्वरस्य ग्रन्थम् अपश्यम् । अतोऽहं तस्य सम्बन्धे कीर्त्तिधरवर्णनस्याश्रयं गृहीतवान् । अभिनवस्य व्याख्यायां कीर्त्तिधरस्याथवा कीर्त्तिधराचार्यस्य नाट्य-नृत्य-गेयाधिकान् खण्डस्य प्रसङ्गे अनेकान्युद्धरणानि सन्ति । (See, Journal of Oriental Research, B. Raghawan, Part v, 1932, page 198) अनेन प्रतीतोभवति शार्ङ्गदेव इव कीर्त्तिधरस्याऽपि अधिकतरः सङ्गीते एव रुचिरासीत् किञ्चानेनास्य विषयस्य पर्याप्त प्रमाणो नैव मिलति यदयं भरतस्य सम्पूर्णं ग्रन्थोपरि टीकामलिखत् ।

यद्यपि अभिनवगुप्तः संस्कृतकाव्यालङ्कारक्षेत्रे एव टीकामलिखत् तथाऽपि तस्य ग्रन्थोविछत्तायाः, आलोचनात्मकसूक्ष्मतायाश्च कारणेन स्वतन्त्रग्रन्थानामिव मूल्यवानस्ति । काव्यालङ्कारस्य क्षेत्रे तस्य ख्यातिर्ध्वनिसिद्धान्तस्य व्याख्याकरणेनैवास्ति । षट्त्रिंशदध्यायानां भरतरचितग्रन्थोपरि अभिनवस्याभिनवभारती नामक टीकायाः पूर्णपाठः मुद्रित संस्करणरूपे अथवा पाण्डुलिपिस्वरूपे एव कुत्राऽपि उपलब्धो नैवास्ति । सप्तमाष्टमाध्यायोपरि तस्य टीका नैवोपलब्धा भवति । सहैव मध्ये कतिपयाः अध्यायाः पाठाश्च लुप्तप्रायैव सन्ति । अभिनवगुप्तः कस्याऽपि लेखकस्योल्लेखोबहुधा टीकाकारोऽथवाकृतशब्देन करोति नाटकीय कथा-वस्तुनि प्रयुक्ताः आलाप-प्रलाप-उपदेशातिदेशादि द्वादश प्रकारकानां संभाषणस्य चर्चां कुर्वन् अभिनवगुप्तः आक्षिपति यत् टीकाकाराः उपदेशातिदेशोपमानानां व्याख्यां कुर्वन काव्यस्य क्षेत्रे तार्किक-मीमांसकयोः पद्धतिमनुसरन्ति, फलतः कोमलमति पाठकाः भ्रमजाले पतित्वा लक्ष्यभ्रष्टाः भवन्ति । 'अत्रोपदेशातिदेशयोरुपमानस्य च साहित्यविषये तार्किक-मीमांसकविषये विशेष प्रतिपादनं यत् टीकाकारैः कृतं तत्सुकुमारमनोमोहनं वृथा भ्रमणिकामात्रं प्रकृतानुपयोगादिहोपेक्ष्य मेव ।' (२२, ५१-५३ जी० ओ० सी०) । अभिनवगुप्तः पञ्चमाध्यायस्यान्तिमश्लोकस्य व्याख्यामलिखत् । तस्यां व्याख्यायामयं लोचनस्योल्लेखः कृतवान् अतः अभिनवभारत्याः लेखनकालः लोचनात्परवर्त्ती काल एवासीत् ।

अभिनवगुप्तः निम्नाङ्कितेषु स्थानेषु अन्यटीकाकाराण्यमप्युल्लेखः कृतवान् । नाट्यस्य नृत्यस्य च सम्बन्धे अभिनवभारत्याः प्रथमभागस्य २०८ पृष्ठोपरि भट्टनायकस्य चर्चाऽस्ति सैन्धवकनामकस्य लास्याङ्गोपरि (Bhandarker Oriental Research Institute, copy 395) पृष्ठोपरि, प्रियातिथेश्च चर्चाऽस्ति । एकत्रिंशदध्यायस्य ४६-४८ श्लोकानां व्याख्यां कुर्वन् सुमनसमहोदयस्य नामोल्लेखोऽस्ति । (Copy of Bhandarker research Institute,) चौ० संस्करणस्य ५१४ पृष्ठोपरि, भट्टवृद्धेरुल्लेखोऽस्ति । तथा च भट्टवृद्धि तद्वत्तादिपाणितलय मङ्गलक्षणपुस्तकेषु सर्वत्र शता इति प्रस्तारो दृश्यते । पृ० ५१४, किञ्चानुच्छेदोऽयमशुद्धोऽस्ति। अस्य पाठः 'भट्टवृद्धिदत्तिलादि प्रणीतलयः, इत्यधिक सङ्गतः, प्रतीतो भवति। एकत्रिंशदध्यायस्य ४३४ पृष्ठे, (Copy of Bhandarker Oriental Research Institute 46-48) पृष्ठपर्यन्तं त्रिगाथानां व्याख्यां कुर्वन् भट्टसुमस्यः ध्रुवतालस्य वर्णनप्रसङ्गे भट्टगोपालस्य (चौ० सं०, अध्याय ३१, पृ० ५१०, ३५७) रुद्रकस्य

वा रुद्रटस्य, तत्रैव वृत्तप्रकरणस्य सम्बन्धे भगवानशङ्करस्योपासकः भट्टशङ्करस्य, नाटिका-भेदस्य सम्बन्धे घण्टकस्य, उल्लेखो मिलति ।

प्रतीतो भवति यदभिनवगुप्तेन चौखम्बासंस्करणस्य द्वात्रिंशदध्याये ३६० पृष्ठे, (Copy of Bhandarker oriental research Institute page—529) अष्टागमस्य उल्लेखः कृतः । प्रावेशिकीग्रहणमुपलक्षणार्थम् । नृणामिति चेष्टा बाहुल्य सम्भावनात् । अन्ये तु श्रियमपरत्वं व्याचक्षते, तच्चाष्टाङ्गं पक्ष-पक्ष विरुद्धमित्युपेक्ष्यमेव । (पृ० ५२९) । किञ्चेदमवतरणमशुद्धोऽस्ति । अष्टागमस्यार्थो भवति नाट्यशास्त्रोपरि अष्ट प्रमाणिकाः वा परम्परागतग्रन्थाः । शब्दोऽयमस्मदागमस्याशुद्धः पाठोऽस्ति; अथवा लिपिकारस्य भ्रान्त्याऽभवत् राहुलनामकस्य कस्याप्याचार्यस्यानेकधा नामोल्लेखः भरतेन कृताः सन्तिः । अधोलिखितश्लोके भरतस्य नाम्ना उल्लेखोऽस्ति यथा राहुलः—

**परोक्षेऽपि हि वक्तव्यो नार्या प्रत्यक्षवत्प्रियः ।**
**सखी च नाट्यधर्मोऽयं भरतेनोदितं द्वयम् ॥**

(११५ पृष्ठोपरि गा०वा०ओ०सि० प्र० भाग)

तत्र वैशाख रोचितस्याऽपि सम्बन्धे एकः श्लोकोऽस्ति । चतुर्विंशत्यध्याये ५३० पृष्ठे विंशत्याभूषणावामतिरिक्तः मौग्ध्य-भद-भावविकृत-तपनादीन् नवयुवतीनामलङ्काराः मन्यते । यथा—तेन मौग्ध्यमदभावविकृतपारतपनादीनामपि शाक्याचार्यराहुलादिभिरभिधानं विरुद्धमित्यलं बहुना । पृ० १६४, अ० भा० (गाय० भा० ३) सामान्याभिनयप्रकरणम् ।

अभिनवगुप्तः पुष्पनाकस्याथवा पारिभाषिकशब्दस्योपरि मातृगुप्तस्याप्युल्लेखः कृतवान् । 'यथोक्तं भट्टमातृगुप्तेन । पुष्यञ्च जनयत्येको भूयोनुस्पर्शनान्वितः ।' इति । (In Copy of Bhandarker Orental Research Institute page 402) शब्दोऽयं वीणावादनस्यैकां शैलीं प्रकटयति यस्याः वर्णनं नाट्यशास्त्रस्य नवविंशतितमोऽध्यायस्य ९३ पृष्ठेऽस्ति (चौ० सं०) । अनेन प्रतीतो भवति मातृगुप्ताचार्यः नाट्यसङ्गीतयोराचार्यरासीत् । भावप्रकाशने तस्य मतस्य उल्लेखः अनेन प्रकारेणास्तिनाटकस्य कथावस्तु अतीतस्य कस्यामपि घटनायामुपरि आधारितव्यम् । तस्मिन् कथावस्तुनि कविनाकल्पितस्य घटनानां समावेशोऽपि आवश्यकमस्ति । 'पूर्ववृत्ताश्रयमपि किञ्चिदुत्पाद्यवस्तु च । विधेयं नाटकमिति मातृगुप्तेन भाषितम् । (भा० पृ० २३४) । राघवभट्टस्तु अभिज्ञानशाकुन्तलस्य अर्थद्योतनिका नामकस्य स्वकीय टीकायां स्थाने स्थानेऽस्यानेकाः श्लोकाः उद्धृतवान् ।

सागरनन्दी अपि नाटकलक्षणरत्नकोषेऽपि स्वकीयग्रन्थेऽनेकेषु स्थलेषु अमूं मातृगुप्तं सस्मार । (५.१४,२०,२१,२३,५० पृष्ठे) । वक्रोक्तिजीवितेऽपि तमेकः महान् कवि-शब्देनास्मरत् । औचित्यविचारचर्चायामपि तस्य श्लोकाः उद्धृताः सन्ति । (द्रष्टव्यः पृ० १४२) । मातृगुप्तः हर्षविक्रमादित्यस्य राजकविरासीत् ।

**तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षपराभिधः ।**

**एकच्छत्रश्चक्रवर्त्ती विक्रमादित्य इत्यभूत् ॥**

(राजतरंगिणी, तरङ्ग ३, श्लो० १२५)

**नानादिगन्तराख्यातं गुणवत्सुलभं नृपम् ।**
**तं कविर्मातृगुप्ताख्यः सर्वास्थानस्थमासदत् ॥**

मातृगुप्तः भर्तृमेण्ठस्य समकालीनः आसीत् ।

**अन्तरज्ञतया तस्य तादृश्या कृतसत्कृतिः ।**
**भर्त्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोऽर्पणम् ॥**

(रा०त०तु०त०, श्लो० २६२)

हर्षविक्रमस्य पश्चात् पञ्चवर्षपर्यन्तमसौ कश्मीरस्य प्रकाशको भूत्वाऽन्ते वाराणसी ङ्गत्वा संन्यासी बभूवेति ।

**मातृगुप्तो जयति यः कविराजो न केवलम् ।**
**कश्मीरराजोऽप्यभवत् सरस्वतीप्रसादतः ॥** (तत्रैव पृ० ४९८)
**अथ वाराणसीं गत्वा कृतकाषायसंग्रहः ।**
**सर्वं सन्यस्य सुकृती मातृगुप्तोऽभवद्यतिः ॥**

(रा०त०तु०त० श्लो० ३२०)

सुन्दरमिश्रोऽपि (१६१३ ई०) स्वकीय नाट्यप्रदीपे मातृगुप्तस्य चर्चा कृतवानस्ति—

अस्य व्याख्याने मातृगुप्ताचार्यैः षोडशांघ्रिपदापीयमुदाहृता (इडि०आ०हस्त० प्र०सू० भा०३, पृ०३४८, सम्वत् ११९९) किञ्चैकोत्तरकालीनलेखकस्य वक्तव्योऽयमक्षरशः सत्यं मन्यतुं न शक्यते । राजतरङ्गिण्याः आधारोपरि मातृगुप्तस्य समयः खीष्ट्रीय सप्तमशतकात् पूर्वार्द्धं मन्यतुं शक्यते । अभिनवगुप्तेन स्वगुरुणा उत्पलदेवेन सह मतभेदोऽपि प्रकटीकृतः—'उत्पलदेवपादास्तु अस्मत्परमगुरुवो व्याचक्षते ...वयं तु मन्महे ।' (In Copy of Bhandarkar Oriental Research Institute page 436) किञ्चेदं वक्तुं न शक्यते यदसौ नाट्यशास्त्रस्य टीकामलिखत् किम्बा सङ्गीतोपरि कोऽपि स्वतन्त्रग्रन्थः । ध्वन्यालोकस्य टीकाकारेण लोचनेन भरतस्येयं कारिका उद्धृता—

**बहूनां समवेतानां रूपं यस्य भवेद् बहुः ।**
**स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥**

(ना०शा०, भा० वा० श्लो० सि० अ० २०, पृ० ७६, तथा चौ० सं० २२।६८ यत्र 'बहुना' शब्दस्य स्थाने सर्वेषाम्)

कश्मीरेतिहासे मातृगुप्तस्य प्रामाणिक चर्चाऽस्ति । तस्मिन् काले उज्जयिन्यां विक्रमादित्य, इत्युपाधिधरो हर्षोनामैकच्छत्रश्चक्रवर्त्ती राजाऽभूत । सः म्लेच्छान् शकान् विनाश्य नाबा दिगन्तराख्यात आसीत् । अद्भुद्सौभाग्यं गुणवत्सुलभं तं मातृगुप्तो नाम

कविः समाश्रिये । गुणिप्रिये राजनिहर्षे तत्त्वज्ञानां संभृत श्रुतानां सूरीणां च मानगुणयोः पर्याप्तः समादरमासीत् । कस्याऽपि बुद्धेर्वैदग्ध्यबन्ध्यता नासीत् । खलालापास्तत्र युक्तायुक्त विवेक्तरि नावकाशं लेभिरे । विद्वांसः सावद्य दुर्विद्यसमशीर्षिकामनाप्नुवन्तस्याग्रे जीवन्मरणं नानुबभूवुः । विवेकिनोऽस्मात् सम्भावनानुसारेण प्रवृत्तः प्रीतिदायः कस्याऽपि शोचनीयो नाभूत् । गुणानुसारमुचितां प्रतिपत्तिं कुर्वन्नसौ सर्वेषामुत्साहमवर्द्धयत् । सेवया दृष्टकष्टस्य तस्य दाक्षिण्योत्पादने भृत्यैः श्रमो न करणीयोऽभूत् । मिथ्याख्यात-गुणास्तस्यास्थाने आप्तो नाभूत् । आमात्यः कलहप्रियो नासीत् । असत्यसन्धश्च निर्णायकपदेनातिष्ठत् । अश्लीलालापिनः, नर्मोक्तया मर्मभेदिनः, अन्यप्रवेशासहनाः संहताश्च सेवकाः नासन्-इत्यादिरूपेणा गणितगुणगणपूर्णं, सर्वदोषोज्झितं, गम्भीरं गुणनं, स्थिर बुद्धिञ्च त पार्थिवं सावधानतया सेवमानो मातृगुप्तस्तत्र वर्षमेकमत्य-वाहयत् । अथ विविधैः प्रकारैः कृतपरीक्षं तं सम्राट् राजशून्ये काश्मीरराज्येऽभिषेक्तुं विचार्य गूढं पूतांन् व्यज्न्जयदकथयच्च—'मम शासनं यो दर्शयेत् स मातृगुप्तोनिःशङ्कं राज्येऽभिषेक्तण्यः' इति । अथ क्षमापति विक्रमादित्यः स्वशासनं स्वशासनं लेखयित्वा, मातृगुप्ताय दत्वा च तं काश्मीरदेशं प्रति प्रेषयामास। ततः क्रमवर्त्ताभिधे प्रदेशे प्राप्तवान् मातृगुप्तः शूरपुरे स्थितं काम्बुवं ढक्कं समागतान् काश्मीरिकान् महामात्यान् श्रुत्वा नृपतेर्विक्रमादित्य हर्षस्य शासनं तेभ्योदत्तवान् । 'अथप्राङ्मुखसौवर्णभद्रमुख (भद्रपीठ) प्रतिष्ठितः सन्निपत्य प्रकृतिभिः गुप्तोऽभ्यषिच्यत ।' राज्येऽनेकान् सुधारान् कृत्वा धर्मेण नयेन च प्राजाः शासद्—

**गुणी च दृष्ट कष्टश्च वदान्यश्च स पार्थिवः ।**
**विक्रमादित्यतोऽप्यासीदभिगम्यः शुभार्थिनाम्** ॥ (रा०त०, ३।२५८)

मातृगुप्तस्य राजसभायां मनीषिणामतीव समादरोऽभूत् । तत्र मेण्ठः भर्तृमेण्ठो नाम महाकविर्नवं 'हयग्रीववधं' नामकाव्यं निर्मायादर्शयत् । परन्तु समाप्तिपर्यन्त 'साधु-असाधु वा' इति वचोनापत् । ततः पुस्तकं वसमेणबद्धुं प्रवृत्ते मेण्ठे राजा स्वर्णभाजनमेकं पुस्तकस्याधो निदधे । सोऽयं तस्यातीव सम्मान आसीत् । स राजा 'मातृगुप्तस्वामी' इतिनामकं विष्णुमन्दिरं प्रातिष्ठियत्, बहून् ग्रामांश्च प्रादात् । एवं भुवंप्रशासतस्तस्य त्रिमासोनाः सैकाहाः पञ्चवत्सराः (४व० ९मा० १दिनम्) ययुः । ततः परमसौराज्यं त्यक्त्वा वाराणसीङ्गत्वासन्यासित्वेनदशवर्षाणिनिनीव

अनेन प्रमाणितो भवति यत् काश्मीरशासकं वर्णितचरं मातृगुप्तं केचन महाकविं कालिदासं, हर्षविक्रमं च संवदब्दप्रतिष्ठापकं शकारि विक्रमादित्यं मन्यन्ते । परन्तु तेषामयं भ्रम एव । मातृगुप्तस्य कवितां, धार्मिकतां, महानुभावताञ्च मुक्तकण्ठं प्रशंसन्नपि कल्हणो नैकधापितं कालिदासमलिखत् । नवा रघुवंशादीनि तस्य काव्यानि, शकुन्तलादीनि नाटकानि च क्वचिन्निरदिक्षत् । मातृगुप्तः कालिदासोऽभविष्यच्चेत्, कथन्न कल्हणो महत्त्वपूर्णं सर्वमिदमलेखिष्यन्? यच्च—हर्षविक्रमादित्यस्य शकविजय उदलेखि, स संवद्वब्द प्रतिष्ठापयितुरेव समयेऽजनि-इत्यत्र तु नास्ति किमपि प्रमाणम्, तस्मान्न मातृगुप्तः कालिदासः ।

अनेन प्रमाणेन नैवं प्रतीयते यन्मातृगुप्तः नाट्यशास्त्रस्य टीकामलिखत् ।

मातृगुप्तस्तु भागुरिमतस्यान्ते समर्थनं कृतवान् । 'तस्मात् भागुरिरपि किं रसानामपि स्थायिसञ्चारिणामस्तीति आक्षिप्याभ्युपगमे नैवोत्तरमवोचत् वाढमस्तीति' भागुरिरपि भरतस्य टीकाकारः आसीत् । तथ्यमिदं ज्ञातुं कोऽप्यन्याधारो नास्ति ।

नाट्यशास्त्रस्य प्राचीनलेखकानां विषयेऽपि किञ्चित् वक्तव्यमावश्यकमस्ति । एतेषां प्राचीनलेखकानां विषयेऽपि किञ्चित् वक्तव्यमावश्यकमस्ति । एतेषां प्राचीनलेखकानां विषये ग्रन्थाः, अद्याऽपि नोपलब्धाः भवन्ति । सङ्गीतरत्नाकरेऽनेकदैवीगुणसम्पन्न लेखकानामुल्लेखोऽस्ति (अ० १, १५-१८) यथा—सदाशिव-शिव-ब्रह्मा-भरत-कश्यपमुनि-मतङ्ग-याष्टिक-कोहल-विशाखिल-दन्तिल-कम्बल-अश्वतर-नारद-तुम्बर-आञ्जनेय-मातृगुप्त-रावण-नन्दिकेश्वरः रुद्रट-नान्य-भूपाल-भोज-सोमेश्वर-मर्दीजगदेक-महीपव्यादयः । कोहलोऽपि तेष्वेकोऽस्ति । संभवतः असौ नाट्यशास्त्रस्य समस्तांशेषु लिलेख । कोहलः नृत्याचार्यपदेनाभिहितः (शून्यभास्वरविद्युदाद्यभिनयविषये नृत्ताचार्य प्रवाहसिद्धः कोहल लिखितोऽपि हस्तः सङ्गवोभवतीति (ना० ९-४६, भा० २, पृ० २६) । कोहलस्य मतानुप्रयोगे प्रयुक्ताः भाषाणामाधारोपरि रूपकस्यानेक- प्रकाराः भवन्ति । भरतस्याऽपीदमेव मतमस्ति । यतः सैन्धवभाषायां सैन्धवकनाम्नः रूपकस्याऽपि तेन चर्चा कृताऽस्ति—'तेन दशरूपकस्य यद्भाषाकृतं वैचित्र्यं कोहलादिभिरुक्तं तदिह मुनिना सैन्धवाङ्गनिरूपणे स्वीकृतमेव ।' (अभिनवभारत्याः १४६ पृष्ठे) । तथाऽत्र चौ० संस्करणस्य नाट्यशास्त्रमपि द्रष्टव्यम्—

**सैन्धवीमाश्रितं भाषां ज्ञेयं सैन्धवकं बुधैः ।**
**रूपवाद्यादि संयुक्तं सैन्धवं स्यादमोद्धतम् ।।** (का०मा० ३१,३१५)

ये प्राचीनाचार्याः कोहलस्य सिद्धान्तानामनुसरणं कृतवन्तस्तेषां मतानुसारेण-सामान्याभिनयस्य षट्प्रकाराः भवन्ति । कोहलमतानुसारिभिर्वृद्धैः सामान्याभिनयस्तु षोढा भण्यते । तथाहि कोहलः—

**शिष्टं कामं मिश्रं वक्रं सम्भूतमेकयुक्तत्वम् ।**
**सामान्याभिनये यत् षोढा विदुरेतदेव बुधाः ।।** इति ।

मार्कण्डेयरचित 'प्राकृतसर्वस्व' नाम्नः ग्रन्थस्य मङ्गलाचरणस्य तृतीयश्लोके लिखितं यत् शाकल्य-भरत-कोहल-वररुचि-भामह-बसन्तराजादीनामाचार्याणां ग्रन्थाध्ययनं कृत्वा स्वकीय ग्रन्थस्य रचनामकार्षीत् । (प्रा०स० १९२७ विजयापट्टम संस्करणम्) ।

शिङ्गभूपालस्य रसार्गवसुधाकरे (पृ० ८, श्लो० ५२-५४) कथितमस्ति यत् शाण्डिल्य-कोहल-दत्तिल-मतङ्ग विशाखिल-नारद-तुम्बर-रावणादयः भरतपुत्राः नाट्य-शास्त्रोपरि स्वग्रन्थान् रचयामास । कामसूत्रे (१, १.११, भा० ६,२,५५,६,३,४४ पृष्ठे) दत्तकस्योल्लेखो मिलति । अयं हि दत्तकः पाटलिपुत्रस्य गणिकानां प्रार्थनोपरि कामशास्त्रीय वैशिकभागस्य व्याख्यामकरोत् । कविमहोदयस्य कथनानुसारेण दत्तिल-रचितग्रन्थस्य नाम 'गान्धर्ववेदसारोऽस्ति तथा ग्रन्थोऽयमुपलब्धोऽस्ति । (Journal of Historical Society Part 3-page 24) मतङ्गस्योल्लेखः दामोदरगुप्तेन सुषिरस्वर-वाद्यस्याचार्यस्वरूपे कृतः । 'सुषिरस्वरप्रयोगे प्रतिपादन पण्डितो मतङ्गमुनिः' ।

कुट्टिनीमतस्य (कुट्टि० गा० ८७७) अतोऽयमभिनवगुप्तात्प्राचीनोऽस्ति । अभिनव-भारत्यां (३०।१, ४२० पृष्ठे) कथनमिदमस्ति यन्मतङ्गादयो महेश्वरं वंशनिर्मित वेणुना प्रसन्नोऽभवत् । अतः वेणुमात्रस्य नाम वंशोऽभवत् । छिद्रात्मकः खदिरनिर्मित वाद्ययन्त्रोऽपि 'वंश' इत्येवाभिधीयते । 'पूर्वं भगवन् महेश्वराराधनं मतङ्गमुनिप्रभृति-भिर्वेणुनिर्मितं (वेणुना कृतं?) ततो वंश इति प्रसिद्धः; वस्तुतस्तु छिद्रात्मक सुषिरादिभिरभिव्यक्त स्वरविशेष रूप तथैवास्योपयोग इति खादिरादिनिर्मित व्यसनं भवत्येव । तथा चोक्तम्—वंशे सृष्टं यदा पूर्वं वंशसक्ता तु वैष्णवी । वंशास्तु खादिरा रोप्याः शंशवायत्क... इति । अग्रे गत्वाऽस्मिन्नेव संदर्भे कोहलेनोक्तम्—तथाहि मतङ्गमुनिना चत्वारो धातवो वंश इत्यादिना धातुविनियोगोऽपि प्रदर्शित एव । (Bhandarker Oriental Research Institute, Copy 30, 19) सङ्गीतरत्नाकरस्य टीकां कुर्वन् (१.३.२४, ३८ पृष्ठे) कल्लिनाथस्य कथनमस्ति—'सरिगादीनां मतङ्गाभिमतः उद्धारकक्रमः उच्यते ।' मतङ्गेन द्वादशमूर्च्छनानां उल्लेखः कृतः । कल्लिनाथेनाऽपि मतङ्गमतस्य व्याख्याकृताऽस्ति—

**सामवेदे गीतप्रधाने आवृत्तिषु अर्था नाद्रियन्ते इति ।**

(सं० र० २.१.७)

मतङ्गेन सप्तगीतीनां चर्चा कृताऽस्ति, किञ्च, भरतस्तु चतस्रः गीतयः एव मन्यन्ते। अत—ऊर्ध्वं प्रवक्ष्यामि गीतीनामपि लक्षणम् । प्रथमा मागधी ज्ञेया द्वितीयाचार्धमागधी । संभाविता तृतीया च चतुर्थी पृथुला स्मृता । (द्र० नाट्यशास्त्रे २९.७६-७७) । सङ्गीतरत्नाकरेऽप्यासाम् चतसृणामेवोल्लेखो मिलति (सं०र० १,८, १४-१६) तथाऽस्मिन् विषये कल्लिनाथस्य कथनमस्ति—'अस्या मगधदेशो-द्भवत्वान्मागधीति निरुक्तिमतङ्गोक्ता' । कविमहोदयस्य कथनमस्ति यन्मतङ्गः बहुद्देशी नामकस्य ग्रन्थस्य रचयिताऽस्ति, यस्य ग्रन्थस्य (२५०० श्लोकाः) अद्याप्युपलब्धा सन्ति । नान्यदेवकृत भरतभाष्येऽपि अस्य ग्रन्थस्य नामोल्लेखः समायाति । वामनस्य काव्यालङ्कार सूत्रवृत्तौ विशाखिलस्योद्धरणं मिलति (का० सू० वृ० १.३.७) । कुट्टनीमतेऽपि निम्नलिखितश्लोका सन्ति ।

**भरतविशाखिलदन्तिलवृक्षायुर्वेदचित्रसूत्रेषु ।**
**पत्रच्छेदविधाने भ्रमकर्मणि पुस्तसूद शास्त्रेषु ॥** (कु०म०गा० १२३)

अभिनवभारत्याः कथनमस्ति—लास्यगानस्य प्रतिपादनं विशखिलेन कृतः (अभि० भा० १, पृ० १९९) । अस्याः एव कथनमस्ति 'तथा च विशाखिलाचार्याः स्वरपदताल समवाये गान्धर्वमिति' (वा० शा० २८.१०) (Bhandarker Oriental Research Institute, Copy 383) । विशाखिलेन सह भरतः परिचितः आसीत् । एव कारेण चतुष्पहरण सत्रिप्रहरणमङ्गुलीनां विभागो द्वे वृत्ती समलेखा च त्रिलेखा इत्यादिकं विशाखिलाचार्यन्तरप्रोक्तसर्वथैव ध्रुवागानज्ञानवैकल्प्यो प्रयोगान् मयानोक्तमिति सूचयति । विशाखिलस्योल्लेखः ४०८, ४२२, ३०३ पृष्ठेऽभवत्, अतएव शारीरवद्धं श्यानामारोहणमिवारोहणं वेति विशाखिलाचार्यः ४२९, ४३१, ४३२, ४४७ (विशाखिलादिलक्षितं सर्वमेव लास्यगानम्) ।

नाट्यशास्त्रोपरि एकः वार्त्तिकोऽप्यासीत् । अस्य रचना श्रीहर्षेण कृताऽस्ति । वार्त्तिककारस्य दृढोक्तिरस्ति यत् नाट्य-वृत्तयोर्मध्ये न कोऽपि भेदोऽस्ति—

**वाच्यानुगतेऽभिनये प्रतिपाद्येऽर्थे च गात्रविक्षेपैः ।**
**उभयोरपि हि समानः को भेदो नृत्तनाट्यगतः ॥**

(ना०शा० ४।२६७-६८)

नृत्य-नृत्तयोरपि परस्परभेदोऽस्ति—

**अवस्थानुकृति... ... दशधैवरसाश्रयम् ।**
**अन्यद् भावाश्रयं नृत्यं नृत्तं ताललयाश्रितम् ॥**

(दश०रू० १, ७, ९)

**पदार्थाभिनयो नृत्यं डोम्बी श्रीगदितादिषु ।**
**अङ्गविक्षेपपात्रं मल्लयतालसमन्वितम् ॥ तन्नृत्तं**

(भावप्रकाशन, पृ० २९८)

**नटकर्मैवनाट्यं स्यात् इति नाट्यविदां मतम् ।**
**करणैरङ्गहारैश्च निवृत्तं नृत्तमुच्यते ॥** (तत्रैव, पृ० ४५)

अन्यत्राऽपि आर्याछन्दसि अस्य मतस्य दृढतयैव प्रतिपादनमस्ति ।

**एवमवान्तरवाक्यैरुपदेशोरागदर्शनीयेषु ।**
**सिंहादिवर्णकैर्वा क्वचिदप्यार्थान्तरन्यासात् ॥**

(भा० १, पृ० १४७ वार्त्तिके)

उपर्युक्त विवरणेन स्पष्टो भवति यत् हर्षवार्त्तिकः प्रायः सम्पूर्ण नाट्यशास्त्रोपरि टीकामलिखत् । भावप्रकाशने सुबन्धुं नाट्यशास्त्रस्य लेखकः कथितः । (भा०प्र० पृ० २३८) । नाट्यशास्त्रे (२४.४१) शरीराभिनयं षट्भागेषु विभाजितम्, अस्य परिभाषा ४८ गाथायामस्ति । अस्योदाहरणस्वरूपे महाकविसुबन्धुकृत वासवदत्तानाट्याधारं प्रस्तुतमकरोत्—तत्रास्य बहुतरव्यापिनो बहुगर्भ स्वप्नायित तुल्यस्य नाट्यायितस्योदाहरणं महाकवि सुबन्धु निबद्धो वासवदत्ता नाट्याधाराख्यः समस्त एव प्रयोगः । तत्र हि विन्दुसारः प्रयोज्य वस्तुके उदयनचरिते इत्यादि...)—प्रतीतोभवति यत् सुबन्धुकृतास्यैवनाटकस्योल्लेखः अभिनवभारती (भा० ३, ४२७ पृष्ठे) 'वासवदत्तानृत्तधारस्य नाम्नाभिहितः । महाकवि सुबन्धुस्तथा नाट्यग्रन्थस्य लेखकः सुबन्धुः एक एव व्यक्तिरासीत्, संदेहास्पदमिदं कथनमस्ति । (In Bhandarker Oriental Research Institute) हस्तलिखित ग्रन्थानां राजकीय संग्रहोस्ति तस्मिन् एकः हस्तलिखितग्रन्थः उपलब्धोऽभवत्, यस्य निर्देशः हस्तलिखितग्रन्थानां सूची भा० १२, पृ० ३७७-३८३, सं० १११,१८६९-७०) रूपेणोपलब्धोऽस्ति । पुस्तकस्य नाम भरतभाष्यं अथवा सरस्वती हृदयालङ्कारोऽस्ति । अस्य ग्रन्थस्यान्ते प्रदत्तपुष्पिकायां तस्य नाम भरतवाक्योऽपि दत्तः पुष्पिकायां तस्य रचयितुर्नाम नान्यदेवः अथवा नान्यपतिरस्ति । सहैव महासामन्ताधिपति, धर्मावलोकस्तथा मिथिलाधिपतिः विशेषणमस्ति । लेखकः

स्वकीयनाम कीर्त्तिराजस्यानुजः राजनारायणोऽपि अलिखत् । अन्तिम श्लोकस्योत्तरार्द्धे लिखितमस्ति—'तेनायं मिथिलेश्वरेण रचितोऽध्यायो- ऽवनद्धाभिधः ।' क्वचित् क्वचित् स्वकीयमतस्य भरतमतेन सह भेदः प्रकटितोऽस्ति । यथा—**'गान्धारग्रामश्च भरतेना-लौकिकश्चात्रोपदर्शितः । अस्माभिश्चागमानुसारेण प्रदर्शितः । तथा—भरताचार्य-स्यास्य शास्त्रे प्रयोगागता अस्माभिश्च कश्यपमतङ्ग-तुम्बर-विशाखिलाद्याचार्य-निखिल मुनिवचनात् ।**

भरतभाष्यस्य लेखकः नान्यदेवस्य तिथिनिर्णयः अपेक्षाकृत सरलोऽस्ति । अस्य चर्चा पूर्वमेव कृताऽस्ति । अस्य चतुर्थ प्रस्तावितश्लोकोऽस्ति—लक्ष्यप्रधानं खलुशास्त्र-मेतनिःशङ्कदेवोऽपि तदेववष्टि (वक्ति) अस्मिन् श्लोके निःशङ्कदेवस्य चर्चाऽस्ति । अन्यत्राऽपि—नोपाधिदेवस्य विकारभेदं निःशङ्कसूरिः खलुकूटताने । सर्वेषु तास्तेऽपि कृताश्च शुद्धाश्चतुर्दशैवेति मतं मदीयम् । कस्यापि लेखकस्य नाम असाधारण इव प्रतीतो भवति । सङ्गीतरत्नाकरस्य लेखकोऽपि इदमेव नाम अङ्गीकरोति । यत्र तत्रासौ निःशङ्कशार्ङ्गदेवरूपे निर्देशितः । तस्य पितरं सोढलं देवगिरेः यादवनरेश-भिल्लमस्य सिङ्घनस्य च संरक्षणे आसीत् । सिङ्घमस्य राज्यकालः खीष्ट्रस्य १२१०-१२४४ ई० पर्यन्तमासीत् । शार्ङ्गदेवस्य समयः १२३३-१२६० ई० पर्यन्तमस्ति । एवं विधस्थितौ यदिनान्यदेवः निःशङ्कःशार्ङ्गदेवस्योलेखः कृतवान् । तर्हि नान्यदेवस्य समयः १२८०-१३०० ई० भाव्यम् । नान्यदेवस्य पूर्वमेव चर्चाकृता मया । तत्रैवास्य विषये ज्ञातव्यमिति ।

अभिनवगुप्तस्तथान्याचार्याः नाट्यशास्त्रस्य निर्देशः भरतसूत्र-नाम्ना कृतवन्तः । अतः व्याकरण-तर्कशास्त्र-वेदान्तादिशास्त्राणां परम्परानुसारेण प्रस्तुतसूत्रोपरि लिखित टीकानामपि भाष्यवार्त्तिकादि नाम्नैवाऽभिहितोऽस्ति ।

### भरतनाट्यशास्त्रस्य प्रमुख टीकाकाराः

अभिनवगुप्त-शार्ङ्गदेवौ निम्नाङ्कितानां नवानां टीकाकाराणां नामोल्लेखं कृतवन्तौ । तद्यथा—उद्भटः, लोल्लटः, श्रीशङ्कुकः, भट्टनायकः, राहुलः, भट्टयन्त्रः, अभिनवगुप्तः, कीर्त्तिधरः, मातृगुप्ताचार्यश्चेति ।



## मेधाविरुद्रस्य परिचयः

मेधाविरुद्रनामकस्य काव्यशास्त्रकारस्य नामोल्लेखमकार्षुः भामह-नमिसाधु-राजशेखराभिख्या विद्वान्सः । भामहमतानुसारेण मेधाविरुद्रः उपमायाः सप्तदोषाः प्रदर्शितवान्—**'त एते उपमादोषाः सप्तमेधाविनोदिताः'**, (द्वि० भागस्य ४० पृष्ठे) तेनैवोक्तमन्यत्र—**'यथासंख्यमथोत्प्रेक्षामलङ्कारद्वयं विदुः । संख्यानमिति मेधाविनो-त्प्रेक्षाभिहिता क्वचित् ।'** (द्वि० भागस्य ८८ पृष्ठे) उपर्युक्तमुद्रितपाठस्योत्तरार्द्ध-

स्यार्थोऽस्ति—मेधावी कतिपयेषु स्थानेषु उत्प्रेक्षायाः स्थाने संख्याननाम दत्तवानस्ति । किञ्चेदं समुचितं नास्ति । दण्डिनो मतानुसारेणान्यालङ्कारिकाः संख्यानमेव यथा—संख्यस्यापरनाम मन्यन्ते । **'यथासंख्यमिति प्रोक्तं संख्यानक्रम इत्यपि'**—(का०द०, द्वि० भा०, पृ० २७३) भामहेन यदुक्तम्—

**हीनताऽसंभवोलिङ्गवचो भेदो विपर्ययः ।**
**उपमानाधिकत्वञ्च तेनाऽसदृशताऽपि च ॥**
**त एते उपमादोषाः सप्तमेधाविनोदिताः ।**
**सोदाहरण लक्ष्माणो वर्ण्यन्तेऽत्र च ते पृथक् ॥ इति ।**

एतेषामेवोपमादोषाणां विवेचनावसरे नमिसाधू रुद्रटस्य काव्यालङ्कारटीकायां मेधाविरुद्रस्योल्लेखमकार्षीत् । मेधाविरुद्रेण निर्दिष्टानां सप्तदोषाणां विवेचनं भामहः काव्यालङ्कारे काव्यप्रकाशे चाचार्यो मम्मटः अकुरुताम् । वामनः विपर्ययाख्यस्य दोषस्य हीनताधिकतयोरन्तर्भावं चकार । अत एव वामनस्य दृष्टौ उपमायाः षडेव दोषाः भवन्ति । तथा चोक्तं वामनेन—

'अनयोर्दोषयोर्विपर्ययाख्यस्य दोषस्यान्तर्भावान्न पृथगुपादानम् । अतएवास्माकं मते षड्दोषाः इति ।' मम्मटोऽपि वामनस्यैवानुकरणं करोति । नमिसाध्वनुसारेण मेधाविरुद्धः अलङ्कारग्रन्थस्य प्रणेता बभूव । तथाहि काव्यालङ्कारस्य टीकां कुर्वन् (१,२) नमिसाधुनोक्तम्—

**'ननु दण्डिमेधाविरुद्रः भामहादिकृतानि सन्त्येवालङ्कारशास्त्राणि'** । आचार्यो भामह स्वकीये काव्यालङ्कारग्रन्थे वारद्वयं (२।४०, २४८) उल्लेखमकार्षीत् । एतेन स्पष्टो भवति यत् मेधाविरुद्रो भामहात् प्राचीनो वर्त्तते ।

प्रथमोऽयमत्रास्तिप्रश्नः यत् मेधाविरुद्रः एकस्यैव जनस्य नाम अस्ति अथवा 'मेधावी' एवं 'रुद्रः' अलङ्कारशास्त्रस्य द्वौ विभिन्नो लेखकौ स्तः । रुद्रनाम्ना केनाऽपि लेखकेन विरचितः कस्याप्यलङ्कारग्रन्थस्योल्लेखः कुत्राऽपि नोपलभ्यते । रुद्रभट्टस्योपलब्ध शृङ्गारतिलकमेवालङ्कारग्रन्थं कथितुं न शक्यते । अतः संभाव्यतेऽस्य लेखकस्य पूर्णनाम मेधाविरुद्र एवाऽस्ति । धर्मकीर्त्तिः एवं भर्तृहरिरिव मेधाविरुद्रस्यापि केवलं मेधावी नाम्ना एव निर्दिष्टोऽभवत्, (द्र० Journal of Royal Asiatic Society. 1908, page 545), रुद्रटस्य ११, २४ श्लोकोपरि टीकां कुर्वन् नमिसाधुना पुनः मेधाविनमुद्धृतः । यत्रोपमायाः सप्तदोषाणां चर्चा कृताऽस्ति । चर्चायाः शैल्याः प्रतीतो भवति यदुदाहरणञ्च मेधाविनः ग्रन्थादुद्धृतोऽस्ति **'अत्र स्वरूपोपादाने सत्यपि चत्वार इति ग्रहणाद्यन्मेधविप्रभृतिभिरुक्तं यथा लिङ्ग वचनभेदौ हीनताधिक्यमसंभवो विपर्ययोऽसादृश्यमितिसप्तोपमादोषाः... तदेतन्निरस्तम् ।'**

नमिसाधुनोपमायाः सप्त- दोषाणां प्रतिपादयित्री सप्तकारिकारुद्धृतं कृताऽस्ति एवेषु पञ्च भामहस्य काव्याऽलङ्कारे (भा० २,४०,४७,५५,५८,६३ पृष्ठेषूपलब्धाः सन्ति उपमानोपमेययोर्लिङ्गवचनभेदस्य तथा हीनतायाः प्रतिपादयित्री निम्नलिखितस्य कारिकाद्वयस्य भामहः नैवोद्धृतवान्—

**भक्षिताः सक्तवो राजन् शुद्धाकुलवधूरिव ।**
**परमातेव निःस्नेहा शीतला परकार्यवत् ॥**

तथा—

**स्फुरन्ति निखिलानीले तारका गगने निशि ।**
**भास्कराभीशु संस्पृष्टा कृमयः कर्दमे यथा ॥**

नमिसाध्वनुसारेण मेधाविरुद्रः शब्दस्य प्रकारचतुष्टयमेव स्वीकरोति । ते च प्रकाराः सन्ति—'नामाख्यातोपसर्गनिपाताः' रुद्रटस्य (२, २ श्लोकोपरि नमिसाधोः कथनमस्ति यत् मेधाविरुद्रादयः शब्दानां चत्वारो भेदाः कृतवन्तः—'एत एव चत्वारः शब्दविद्या इति येषां सम्यग् मतं तत्र तेषु नामादिषु मध्ये मेधाविरुद्रप्रभृतिभिः कर्मप्रवचनीयाः नोक्ताः भवेयुः ।' त्रिकाण्डशेषः मेधाविनं कालिदासस्य पर्यायशब्दः मन्यते । काव्यमीमांसायाः द्वादशपृष्ठस्य कथनमस्ति—मेधाविरुद्रकुमारदासौ जन्मान्धौ कवी आस्ताम् । सहैव चतुर्दशपृष्ठे कालिदासमपि अलङ्कारिकरूपेणोद्धृतः । अद्यावधि मेधाविनः काऽपि रचना नोपलब्धास्ति ।

राजशेखरानुसारेण मेधाविरुद्रः कविः जन्मान्धश्चासीत् । मेधाविरुद्रस्य नामोल्लेखं राजशेखरः प्रतिभायाः प्रभावनिरूपणप्रसङ्गे करोति स्म । प्रतिभासम्पन्नः कविः किमपि वस्तु स्वचक्षुषाऽनवलोक्यापि प्रत्यक्षमिव तत्पश्यति ज्ञानचक्षुषा । तथा चोक्तं राजशेखरेण—'प्रत्यक्षप्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव यतो मेधाविरुद्रकुमारदासादयो जात्यन्धाः श्रूयन्ते ।'

अनेन विवेचनेनायमर्थो विशिष्टरूपेण स्पष्टो भवति यन्मेधाविरुद्रो भामहपूर्वमेको महनीय आचार्य आसीत् । अस्याचार्यस्य ग्रन्थस्तु साम्प्रतं नोपलभ्यते, किन्तु तस्य मतस्य परिचयस्तु एतेषालङ्कारिकाणां निर्देशैः समुपलभ्यत एव ।



## धर्मकीर्त्तिः

सुबन्धुकृत वासवदत्तायां हालसंस्करणस्य २३५ पृष्ठे निम्नलिखितापङ्क्तिः—'बौद्धसङ्गतिमिवालङ्कार भूषिताम्' अस्ति । अनेन (Aufrecht , Indian Stein part 16, pages 205-207), Hall, Peterson (सुभाषितावल्याः प्रस्तावना ४० पृष्ठे तथा ज० बी० बी० आर० ए० एस० भागः १६, पृ० १७३) तथा तेलङ्गः (ज० बी० बी० बी० आर० ए० एस० भागः १८ पृष्ठे १४८-१५०) प्रभृतयः विद्वान्सः कथयन्ति यत् धर्मकीर्त्तिः अलङ्कारशास्त्रस्यैकः अत्यन्त प्राचीनलेखकोऽस्ति । ते शिवरामस्य व्याख्यायाः अनुसरणं कृतवान् । यत्रालङ्कारं धर्मकीर्त्तेः रचना स्वीकृतवन्तः । किञ्च श्रीरङ्गं संस्करणस्य ३०३ पृष्ठे निम्नलिखितः पाठोऽस्ति—**'सत्कवि काव्यरचनामिवालङ्कारप्रसाधिताम्'** अस्योद्धरणस्यातिरिक्तः न कोऽप्यन्यं प्रमाणमस्ति ।

येन ज्ञातुंशक्यते यद्धर्म कीर्त्तिना कस्याप्यलङ्कार ग्रन्थस्य रचनाकृताऽस्ति । प्राध्यापको बटुकनाथस्तु स्वकीय साहित्य शास्त्रस्य संक्षिप्त परिचय नामके ग्रन्थे (In the Book & Brief Survey & Sahitya Shastra) (Journal of D. of Letters Calacutta part 9. Page 119) केवलं (Aufrecht) महोदयस्य मतस्यैव पुनरावृत्तिं कृतवानस्ति । बौद्धाचार्य: धर्मकीर्त्तिरपि कविरासीत् । वार्त्तेयं तेन संग्रहेणापि प्रकटितो भवति यत्रासौ भदन्तधर्मकीर्त्तिनाम्ना उद्धृतवानस्ति । (शार्ङ्ग० संहिता ९४७) सुभा० ६५७, सुभा० ७३७, १५८७, १६१७, २२४६, ३२३२) । ध्वन्या-लोकस्य २७० पृष्ठे निम्नलिखिता: श्लोका: उद्धृता: सन्ति—

**लावण्यं द्रविणव्ययो न गणित: क्लेशो महानर्जित:**<br>
**स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मित: ।**<br>
**एषाऽपि स्वयमेव तुल्य रमणाभावाद्वराकी हता**<br>
**कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥**

कतिचिदलङ्कारिका: इमौ द्वौ श्लोकौ व्याजस्तुत्या: उदाहरणं मन्यन्ते । किञ्च वस्तुतोऽत्र अप्रस्तुतप्रशंसा अलङ्कार एवास्ति । तदनन्तरं टिप्पणी इयमस्ति—

**'तथा चायं धर्मकीर्त्ते: श्लोक इति प्रसिद्धि: सभाव्यते च तस्यैव ।'**

अत्र युक्तिरियमस्ति यत्प्रस्तुतश्लोकस्य भाव: अन्य श्लोकेऽप्युपलब्धो भवति । तेन च श्लोकोऽयमसंदिग्धरूपेण धर्मकीर्त्तेरेव रचनाऽस्ति । तदनन्तरमुद्धृतोऽयं श्लोक: (ध्वन्या०, पृ० २७२), क्षेमेन्द्रस्य औचित्यविचारचर्चायाम्, सुभाषितावल्याम् तथाऽन्य संग्रहेषु ध्वन्यालोकस्यैवानुसरणमस्ति ।

एवंविध विचारेण कस्याऽपि तथ्यस्योपलब्धिर्भवितुं न शक्यते । प्रो० एस.पी. भट्टाचार्यस्तु स्वकीय 'नयोबुद्धिस्ट न्युक्लियस इन अलङ्कारशास्त्र ज० ए.एस.बी.भा० २२, १९५६, अंश: १, पृ० ४९-६६ नामके निबन्धे आशां करोति यत् कस्मिश्चिंदपि दिने धर्मकीर्त्तिमालङ्कारिकरूपेण स्वीकृतिं लप्स्यते । तेन नाट्यशास्त्रस्य २२, २६-३१, १६९ पृष्ठे (गाय० बा० ओ० सी० ३ भागे) शाक्याचार्य-राहुलस्य तथा शौद्धोदने: कारिकायामुपरि केशवमिश्रेणालङ्कारशास्त्रस्य रचनाया: उल्लेख: कृतोऽस्ति । तेन हि अस्य निबन्धस्य प्रतिपाद्यविषये न कमपि साहय्यं मिलति । अभिनवभारत्या: त्रिषु भागेषु राहुलस्य वारत्रयमुल्लेखो भवति । अस्या: मान्यताया: न कोऽप्याधारोऽस्ति येन तस्य समय: दशमशतकात् पूर्वं मन्यतुं शक्यते। केशवमिश्रस्तु अस्य परवर्त्ती आचार्य: आसीत् । केशवमिश्रास्तु षोडश-शतकस्याचार्य: आसीत् । एतेषां ग्रन्थकाराणां पूर्वमेव संस्कृतस्यालङ्कारशास्त्रं पूर्णतया व्यवस्थितं विकसितञ्चाभवत् ।

# विष्णुधर्मोत्तरपुराणम्

आश्चर्य विषयोऽस्ति यदलङ्कारशास्त्रस्य चर्चां कुर्वन् अग्निपुराणस्योल्लेखः सर्वे आचार्याः कुर्वन्ति किन्तु विष्णुधर्मोत्तरपुराणस्य कोऽपि चर्चां न करोति । अस्य विष्णुधर्मोत्तरपुराणस्य तृतीयखण्डे अलङ्कारशास्त्रस्य तथा नाट्यविषयकविशिष्टतथ्यस्य विश्लेषणमस्ति । डॉ० राघवनमहोदयस्तु नाट्यशास्त्रस्य काव्यालङ्कारस्य च सम्बन्धिविभिन्न विषयाणामुपरि गम्भीरचिन्तन-मननञ्च कृतवानस्ति । सोऽप्यस्मिन् पुराणे आगतानामलङ्काराणामुल्लेखः कतिपयेषु स्थानेषु कृतवानस्ति (द्रष्टव्योऽस्ति तस्य लेखः 'History of swabhavokti' and some concept of Alankarsastra 97 पृष्ठे ) विष्णुधर्मोत्तरे समागतायाः वार्त्तायारूल्लेखः करोति । कविना महोदयेन अभिनवभारत्याः द्वितीयभागस्य प्रस्तावनायां विंशतितमे पृष्ठे वृत्तीनां सम्बन्धे विष्णुधर्मोत्तरस्योल्लेखः कृतोऽस्ति । एतदतिरिक्तेषु चतुर्षु अध्यायेषु (१८, १९, ३२, ३६) गद्ये अस्ति, यत्र निम्नलिखितानां विषयाणां चर्चास्ति—गीत-आद्योत-मुद्राहस्त-प्रत्यङ्गविभागश्चेति ।

अस्मिन् पुराणे नाट्यशास्त्रस्य काव्यालङ्कारश्च सम्बन्धे सहस्त्रश्लोकाः सन्ति । अत्रोल्लेखनीयोऽस्ति यच्चित्रकला-मूर्त्तिकला-नाट्यकलानां तथा काव्यशास्त्रस्य संबन्धे यत्प्रतिपादनं कृतमस्तितत्तु चित्रसूत्रनाम्ना ख्यातोऽस्ति । अत्रेदमप्युल्लेखनीयमस्ति यत् कुट्टनीमते यस्य परिभाषिकचित्रसूत्रस्य चर्चाऽस्ति तस्य प्रारम्भः विष्णुधर्मोत्तरस्य तृतीयाध्यायाद्भवति (३.३५) दामोदरगुप्तोऽपि चित्रकलायामुपरि कस्यापि प्राचीन ग्रन्थस्योल्लेखः कृतवानस्ति । तस्मिन् मते सम्भवतया विष्णुधर्मोत्तरपुराणमेवासीत् । कुट्टनीमतस्य कारिका सं० १२३ निम्नप्रकारेणास्ति—

**भरत-विशाखिल-दन्तिल-वृक्षायुर्वेद-चित्रसूत्रेषु ।**
**पत्रच्छेदविधाने भ्रमकर्मणि पुस्तसूदशास्त्रेषु ॥**

विष्णुपुराणमेकप्रकारकस्य विश्वकोषोऽस्ति । अनेन प्रतीतो भवति यत्तस्याग्रे चित्रसूत्रविषयकस्य कोऽपि ग्रन्थः अवश्यमेवासीत् । विष्णुधर्मोत्तरपुराणस्य प्रथमोऽध्यायः वज्र-मार्कण्डेयमुन्योः सम्वादेन प्रारम्भोऽभवत् । मार्कण्डेयस्य कथनमस्ति यद्देवतायास्तस्यामेव मूर्त्यां देवत्वं निवसति यस्याः रचना चित्रसूत्रस्यादेशानुसारेण भवति तथा या मूर्त्तिः प्रसन्नवदनाभवति । एवं विधैवमूर्त्तिं विद्वान् पूजयेत् । यथा—

**चित्रसूत्रविधानेन देवतार्चां विनिर्मिताम् ।**
**सुरूपां पूजयेद्विद्वान् तत्र संनिहिता भवेत् ॥ ७ ॥**

द्वितीयाध्याये प्रतिपादनमिदमस्ति यच्चित्रसूत्रस्य ज्ञानं विना प्रतिमालक्षणं ज्ञातुं न शक्यते तथा नृत्तशास्त्राध्ययनं विना चित्रसूत्रमपि ज्ञातुं न शक्यते । वातोद्येन विना नृत्तं न भवेत् एवं गीतेन वाद्येपढुता भवितुन्न शक्यते—

**विना तु नृत्तशास्त्रेण चित्र सूत्रं सुदुर्विदम् ।**
**वातोद्येन विना नृत्तं विद्यते न कथञ्चन ॥**

**न गीतेन विना शक्यं ज्ञातुमातोद्यमप्युत ॥** (सं० १०, १.२४)

अस्यापि कथनमस्ति—

**नृत्यं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवृत्ति च ।**

गीतानि च संस्कृत-प्राकृत-अपभ्रंशभाषासु भवन्ति । देशः अर्थात् प्रान्तविशेषेण अपभ्रंशस्यानेकभेदाः भवन्ति ।

**अपभ्रंशं तृतीयञ्च तदनन्तं नराधिप ।**
**देशभाषाविशेषेण तस्यान्तो नेह विद्यते ॥** (अ०२, ९-१०)

पाठ्यन्तु गद्ये-पद्ये च भवति । तृतीय-चतुर्थाध्याययोः क्रमशः छन्दसः वाक्य-परीक्षणस्य च चर्चाऽस्ति ।

पञ्चमाध्याये सूत्रस्य व्याख्या तथा निम्नलिखितविषयाः सन्ति—

अनुमानस्य पञ्चावयवाः, सूत्रस्य षड्व्याख्याः, त्रीणि प्रमाणानि (प्रत्यक्षानुमानाप्त-वाक्यानि) तथा तेषां परिभाषा, स्मृति-उपमान-अर्थापत्तिषु कमाप्तवाच्यं मन्तव्यम्, षष्ठाध्याये तन्त्रयुक्त्योपरि विचारोऽस्ति ।

सप्तमाध्याये एकादशश्लोकाः सन्ति तथा विभिन्न प्राकृतभाषाणां चर्चाः सन्ति । अष्टमाध्याये देवादीनां पर्यायशब्दानां वर्णनमस्ति ।

नवम-दशमाध्याययोः शब्दकोषोऽस्ति । एकादश-द्वादश-त्रयोदशाध्यायेषु लिङ्गनु-शासनमस्ति । प्रत्येकस्मिन् अध्याये पञ्चदशाः श्लोकाः सन्ति । चतुर्दशाध्याये-ऽलङ्काराणां नामानि तथा तेषां परिभाषाः सन्ति । पञ्चदशाऽध्याये काव्यस्य निरूपणमस्ति, तथा तस्य शास्त्रेतिहासाच्च भेदोऽपि प्रदर्शितः (तदेव काव्यमित्युक्त-मुपदेशैर्विना कृतम्) । तथेदमप्युक्तं तेषु नवरसाः अपि भाव्यं (रसैः कार्यं समन्वितं गाथा १४) । षोडशाध्याये पञ्चदशश्लोकेषु एकविंशति प्रहेलिकानां निरूपणमस्ति । सप्तदशाध्याये रूपकाणां तथा तेषां संख्या निरूपणञ्चास्ति, तथा तत्रैव लिखितमस्ति नायकस्य मरणम्, राज्यस्य पतनम्, नगरस्यावरोधस्तथा युद्धस्य प्रत्यक्षप्रदर्शनं नैव कर्त्तव्यम् । एतेषां प्रवेशकेन वार्त्तालापैः प्रदर्शितव्यम् । यथा—

**मरणं राज्यविभ्रंशो नगरस्योपरोधनम् ।**
**एतानि दर्शयेन्नाङ्के तथा युद्धञ्च पार्थिव ॥**
**प्रवेशकेन कर्त्तव्यं तेषामाख्यानकैः बुधैः ॥**

(विष्णु ध० भा० ३,१७,१२-१३, द्रष्ट० ना०शा० २०-२१ गा०ओ० सि०, भा० २ अध्या० १८,३८, तथा भाव प्र० ७ पृ० २१६ ।)

अस्याध्यायस्य ५६-५९ श्लोकेषु अष्टप्रकारकानां नायिकानां निरूपणमस्ति । अष्टादश ध्याये विषयवस्तुप्रतिपादनमधिकतरं गद्ये एवास्ति । अस्मिन् अध्याये गीत-स्वर-ग्राम-मूर्च्छनादीनां निरूपणमस्ति । अस्य द्वौ श्लोकौ याज्ञवल्क्यस्य तृतीयाध्यायस्य श्लो० सं० ११३-१४ इवस्तः ।

**अपरान्तकमुल्लोप्यं मद्रकं प्रकरी तथा ।**
**उवेणकं सरोविन्दुमुत्तमं गीतकानि तु ॥**

(ऋग्गाथेत्यादयः द्वितीय पृष्ठे टिप्पणीं द्रष्टव्यम्)

नाट्यशास्त्रे (३१.२९०) रोविन्दकः पाठोऽस्ति । अस्मिन् स्थाने याज्ञवल्क्य-स्मृतौ विश्वरूपम् एवं मिताक्षरा इव 'सरोविन्दु' पाठोऽस्ति । नवदशाध्यायस्तु पूर्णतया गद्ये एवास्ति अस्मिन् अध्याये निम्नलिखितविषयाणां निरूपणमस्ति । —चतुःप्रकारकं वाद्यम्, विंशतिमण्डलानि, तेषां द्वौ प्रकारकौ भेदाः । षट्त्रिंशदङ्गहाराणां निरूपणम्, यदा नाट्यशास्त्रे (४.२७) द्वात्रिंशदङ्गहाराणामेव निरूपणमस्ति । अष्टोत्तरशत-करणानि च वर्णितानि सन्ति । नाट्यशास्त्रेऽपि तेषां प्रतिपादनमस्ति (भा० ४.६१-१६९) । पिण्डीबन्धस्य, चतसृणां वृत्तीनां प्रवृत्तीनाञ्चाऽपि वर्णनमस्ति । विंशति अध्यायस्य प्रथमश्लोके नाट्यस्यार्थोऽस्ति परस्यानुकृतिस्तथा नृत्तस्यार्थो भवति तस्य संस्कारः शोभां च वर्द्धयति । यथा—

**परस्यानुकृतिर्नाट्यं नाट्यज्ञैः कथितं नृप ।**
**तस्य संस्कारकं नृत्तं भवेच्छोभाविवर्धनम् ॥ १ ॥**

एतदतिरिक्तः अस्मिन् लोकधर्मी एवं नाट्यधर्मी चतुः प्रकारकस्याभिनयस्याऽपि प्रतिपादनमस्ति । एकविंशतिः अध्यायात्त्रयोविंशतिः अध्यायपर्यन्तम् शय्याआसन-स्थानकानाञ्च प्रतिपादनमस्ति । चतुर्विंशतिः अध्यायात् पञ्चविंशतिः अध्याय पर्यन्तं आङ्गिकाभिनयस्य, हास्यस्य, तथाऽन्याङ्गानां सञ्चालनस्य च वर्णनमस्ति। षडविंशोऽध्याये संयुक्तकरस्य त्रयोदशास्तथाऽसंयुक्तकरस्य च द्वाविंशतिः सङ्केतानाञ्च वर्णनमस्ति । अन्ते कथितमस्ति—'**सर्वं करायत्तमिदं हि नृत्तम् ।**' सप्तविंशतिः अध्यायस्तु आहार्यभनयस्य प्रतिपादनं करोति । आहार्याभिनयोऽयं चतुः प्रकारको भवति । प्रस्तः अलङ्कारः, अङ्गरचना तथा सञ्जीवश्चेति । सामान्याभिनयोपरि अष्टाविंशोऽध्यायोऽस्ति अस्मिन् अध्याये द्वाषष्टिः श्लोकाः सन्ति । अन्तिमश्लोकः निम्नरूपेणास्ति—

**'नाट्यं हि विश्वस्य यतोनुकारं, कृत्स्वं ततो वक्तुमशक्यमीश ।'**

नवविंशतितमेऽध्याये गतिप्रचारस्य वर्णनमस्ति । अध्यायेऽस्मिन् विभिन्न पात्राणां गत्याः मञ्चोपरिप्रतिपादनमस्ति । त्रिंशदध्याये रसवर्णनमस्ति । अस्मिन् अध्याये मात्राविंशतिः श्लोकाः सन्ति । अस्य प्रथमः श्लोकोऽस्ति—'**हास्यश्रृङ्गार ... नवनाट्ये रसाः स्मृताः ।**' एकत्रिंशदध्यायेऽष्टपञ्चाशत् श्लोका सन्ति । अस्मिन् अध्याये नवचत्वारिंशत् भावानां वर्णनमस्ति । अस्य त्रयो पञ्चाशत् श्लोकोऽस्ति—

**बहूनां समवेतानां रूपं यस्य भवेद्बहु ।**
**स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणस्तथा ॥**

द्वात्रिंशदध्याये हस्तमुद्राणां निरूपणमस्ति । अत्र छन्दोविचिति वेदाङ्गानामपि हस्तमुद्राभिः प्रदर्शनस्य प्रकारः प्रदर्शितोऽस्ति । त्रयस्त्रिंशदध्याये १२४ श्लोकाः सन्ति। अस्मिन् अध्याये नृत्यशास्त्रस्य मुद्राणाञ्च निरूपणमस्ति । चतुस्त्रिंशदध्याये

नृत्योत्पत्याः वर्णनमस्ति । श्लोक संख्या १० निम्नप्रकारेणास्ति—

**नृत्तेनाराधनिष्यन्ति भक्तिमन्तस्तु मां शुभे ।**
**त्रैलोक्यस्यानुकरणं नृत्ते देवि प्रतिष्ठितम् ॥**

नृत्तेन यः देवताराधनं करोति सः दीर्घजीवनमवाप्नोति, स्वर्गञ्च विन्दति ।

**'देवताराधनं कुर्याद्यस्तु नृत्तेन धर्मवित् ।**
**स सर्वकामानवाप्नोति मोक्षोपायञ्च विन्दति ॥**
**धन्यं यशस्यमायुष्यं स्वर्गलोकप्रदं तथा ।**
**ईश्वराणां विलासं तु चार्त्तानां दुःखनाशनम् ॥**
**मूढानामुपदेशं तत् स्त्रीणां सौभाग्यवर्द्धनम् ॥'**

नाट्यशास्त्रेऽपि एवंविधैववर्णनमस्ति (१. ११०-११३) । पञ्चत्रिंशदध्याये निम्नलिखितानुसारेणोपसंहारः कृतोऽस्ति । नारायणस्तु चित्रसूत्रस्य रचनां कृत्वा विश्वकर्माणं प्रशिक्षितवान् । नृत्यमिव चित्रकलायामपि त्रिलोकस्याप्यनुकरणं भवति । **'यथा नृत्ते तथा चित्रे त्रैलोक्यानुकृतिः स्मृता ।'** (श्लो० सं० ५) शेषाध्यायेषु चित्रकला (३६-४३), मूर्त्तिकला (४४-८५) तथा स्थापत्यकलायाः निरूपणं भवति।

विष्णुधर्मोत्तरेण प्रायः नाट्यशास्त्रस्यानुसरणं कृतम् । नाट्यशास्त्रस्य तुलनायामिदं परवर्त्ती अस्ति नात्र संदेहोऽस्ति । विष्णुधर्मोत्तरस्य दान-श्राद्धादि विषयाणामुपरि येऽध्यायाः सन्ति तेषामुद्धरणानि द्वादशशतकस्य ग्रन्थे मिलन्ति । उदाहरणस्वरूपे अनिरुद्धकृतहारलतायाम् अस्यैकः श्लोकः उद्धृतोऽस्ति (वि०ध०१.१४२,१६-१७)।

'तथा च विष्णुधर्मोत्तरे मार्कण्डेयः । अच्छिन्न नाट्यां कर्त्तव्यं वै श्राद्धं पूर्वजन्मनि । अशौचोपरमे कार्यमथवाऽपि नराधिप ।' (हारल० पृ० १९) हारलतायाः एवं बल्लालसेनस्य कालनिर्धारणार्थं द्रष्टव्यम् (एच०आफ०ध०, भा०-१, पृ० ३३७-३४१) ।

बल्लालसेनस्तु स्वकीयदानसागरस्य प्रस्तावनायां (श्लो० १४) स्पष्टरूपेण लिखति यत् तस्य ग्रन्थः विष्णुधर्मोत्तरे अन्य पुराणग्रन्थानामुपरि आधारितोऽस्ति । तृतीयखण्डस्य पञ्चमाध्याये निम्नलिखितः श्लोकार्द्धोऽस्ति—**सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके । सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् । इति ये वदन्ति तान्प्रत्युच्यते ।** अस्यार्थो भवति विष्णुधर्मोत्तरस्य समयः पञ्चमशतकात् पूर्वं नैवास्ति ।

एकाऽन्याऽपि वार्त्ताऽत्र विचारणीयास्ति । भट्टिकाव्यात्पूर्ववर्त्ती विष्णुधर्मोत्तरोऽस्ति । टीकाकाराणां मतानुसारेण भट्टिमहाकाव्येऽष्टात्रिंशदलङ्काराणामुदाहरणानि सन्ति । दण्डी-भामह-वामन-उद्भट्टादीनामलङ्काराणां संख्या चत्वारिंशत्पर्यन्तमेवास्ति । यदा विष्णुधर्मोत्तरे निम्नलिखिताः सप्तदशालङ्काराणामेव चर्चास्ति । ते चालङ्काराः—

**एकस्यैव तु वर्णस्य विन्यासो यः पुनः पुनः ।**
**अर्थगत्यां तु संख्यातमनुप्रासं पुरातनैः ॥ १ ॥**

अत्यर्थं तत्कृतं राजन् ग्राम्यतामुपगच्छति ।
शब्दासमानानुपूर्व्या[1] यमकं कीर्त्तितं पुनः ॥ २ ॥
आदौ मध्ये तथैवान्ते पादस्य तु तदिष्यते ।
सन्दष्टकसमुद्गाख्यौ तथैव यमकौ मतौ ॥ ३ ॥
समस्तपादयमकं दुष्करं परिकीर्त्तितम् ।
उपमानेन तुल्यत्वमुपमेयस्य रूपकम् ॥ ४ ॥
रूपकाभ्यधिकं नाम तदेवैकगुणाधिकम् ।
गुणानां व्यतिरेकेण व्यतिरेकमुदाहृतम् ॥ ५ ॥
उपमानविरुद्धैश्च गुणैस्तदपरं मतम् ।
द्वित्र्यर्थवाचकैः शब्दैः श्लेष इत्यभिधीयते ॥ ६ ॥
अन्यरूपस्य चार्थस्य कल्पनायाऽन्यथाभवेत् ।
उत्प्रेक्षार्थो अलङ्कारः कथितः सपुरातनैः ॥ ७ ॥
उपन्यासस्तथान्यः स्यात्प्रस्तुताद्यत् क्वचित् भवेत् ।
ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो भवेत् ॥ ८ ॥
उपन्यासेन चान्यस्य यदन्यः परिकीर्त्यते ।
उपन्यासमलङ्कारं तन्नरेन्द्र प्रचक्षते ॥ ९ ॥
हेतुं विना विततता प्राप्ता सा तु विभावना ।
प्रोक्ता चातिशयोक्तिस्तु ह्यतुलै रूपमागुणैः ॥ १० ॥
यथास्वरूपकथनं वाच्येति परिकीर्त्तितम्[2] ।
भूयसामुपदिष्टानां निर्देशः क्रमशस्तथा ॥ ११ ॥
यथासंख्यमिति प्रोक्तमलङ्कारं पुरातनैः ।
विशेष प्रथनायुक्ता[3] विशेषोक्तिस्तथानृप ॥ १२ ॥
या क्रिया चान्य फलदा विरोधस्तु स इष्यते ।
स्तुतिरूपेण या निन्दा निन्दास्तुतिरिहोच्यते ॥ १३ ॥
निन्दास्तुतिस्तथैवोक्ता निन्दारूपेण या स्तुतिः ।
वस्तुनस्तूपमानेन[4] दर्शनं तन्निदर्शनम् ॥ १४ ॥
विना तथा स्यादुपमा तु यत्र तेनैव तस्यैव भवेन्नृवीर ।
अनन्वयाख्यं कथितं पुराणैरेतावदुक्तं लवलेशमात्रम् ॥ १५ ॥

एतेऽलङ्कारा: सन्ति—अनुप्रास-यमक-रूपक-व्यतिरेक-श्लेष-उत्पेक्षा-अर्थान्तरन्यास-उपन्यास-विभावना-अतिशयोक्ति-वार्ता-यथासंख्य-विशेषोक्ति-विरोध-निन्दास्तुति-निदर्शन-अनन्वयश्चेति ।

---

१. पाठान्तरं समानाभिन्नार्थां

२. वेङ्कटसस्करणे तु स्वभावोक्तिः प्रकीर्त्तिता ।

३. वेङ्कटसंस्करणे विशेष प्रापणा० पाठोऽस्ति

४. वे० संस्करणे वस्तुना रूप्यमाणेन पाठोऽस्ति

उल्लेखनीयोऽयमस्ति यद्विष्णुधर्मोत्तरमुपमा परिज्ञाताऽसीत् । तथाऽपि तस्य तत्र निर्देशः नैवाऽस्ति । अनेन प्रमाणितो भवति यद्विष्णुधर्मोत्तरे केवलमष्टादशप्रमुखाऽलङ्काराणामुल्लेख एवास्ति । भामहेन ज्ञातो भवति यत्तस्य पूर्ववर्त्तिनः आचार्याः केवलं पञ्चालङ्काराणामेवोल्लेखः कृतवन्तः । यथा—

**अनुप्रासः स यमको रूपकं दीपकोपमे ।**
**इति वाचामलङ्काराः पञ्चैवान्यैरुदाहृताः ॥** (भामहः २.४)

काव्यालङ्कारसारसंग्रहानुसारेण कतिपयाः पूर्ववर्त्तिनः आचार्याः अष्टाऽलङ्काराणामेवोल्लेखः कृतवन्तः ।

**पुनरुक्तवदाभासं, छेकानुप्रास एव च ।**
**अनुप्रासस्त्रिधा लाटानुप्रासो रूपकं चतुः ॥**
**उपमादीपकं चैव प्रतिवस्तूपमा तथा ।**
**इत्यत एवालङ्काराः वाचां कैश्चिदुदाहृताः ॥** (काव्या०सा०सं० १.२)

उद्भटस्य तिलकाख्य टीकायां—'वर्गैर्वर्गैरलङ्कारोपादानं चिरन्तनालङ्कारकृतामल्पदर्शिनां प्रकटयितुम् ।' (गायकवाड़ ओरियन्टल सीरीज संस्करणस्य प्रथम पृष्ठे) ।

विष्णुधर्मोत्तरस्यैकस्यां दिशि चतुः पञ्च वा अष्टालङ्काराणां वर्णनकर्त्तारः आचार्याः आसन्, अपरस्यां दिशि त्रिंशदलङ्कारादारभ्य चत्वारिंशदलङ्काराणां वर्णनकर्त्तारः आचार्याः आसन् । अतः भरतभामहउद्भटादीनां पूर्ववर्त्ति आचार्याणां पश्चात् तथा भट्टि-दण्डी-भामह-उद्भट-वामनादीनां पूर्वं विष्णुधर्मोत्तरस्य समयः मन्तव्यः । अतः विष्णुधर्मोत्तरस्य रचना कालः ५७५-३५० खीष्टाब्दमध्ये मन्तव्यः । प्रायः अस्मिन् काले एव भट्टिकाव्यस्यापि रचनाकालः मन्यते ।

## भट्टिकाव्यम्

शास्त्रकाव्येषु भट्टिकाव्यं प्रसिद्धतरमस्ति । व्याकरणसम्बन्धिपदप्रयोगनियमानां ज्ञानायान्यशास्त्रीयज्ञानसौलभ्याय च यानि यानि काव्यानि प्रणीतानि तानि शास्त्रकाव्यानि उच्यन्ते । **'दीपतुल्य प्रबन्धोऽयं शब्दलक्षण चक्षुषा ।'** काव्यमिदं भट्टिस्वामिना प्रणीतम् । तन्नाम्नैव शास्त्रप्रसिद्धिरपि जाता । काव्यमिदं रावणवधनाम्नाऽपि प्रथिता ।

अत्र काव्ये द्वाविंशतिः सर्गाः सन्ति, येषु संहत्य १६२९ मिताः श्लोकाः विद्यन्ते । यद्यप्यस्य काव्यस्य निर्माणमुद्देश्यं मनोविनोदेन सह संस्कृतव्याकरणस्य ज्ञानमस्ति । तदिदमुद्देश्यं पूर्वमपि भवति । ग्रन्थेऽस्मिन् चत्वारि खण्डानि सन्ति । १-५ सर्गाः प्रकीर्णकाण्डम्, ६-९ सर्गाः अधिकारकाण्डम्, १०-१३ सर्गाः प्रसन्नकाण्डम्, १४-२२ सर्गाः तिङन्तकाण्डम् । प्रसन्नकाण्डे एव काव्यशास्त्रसम्बन्धिविषयाणां वर्णनमस्ति । दशमे सर्गे पञ्चसप्ततिः श्लोकाः सन्ति, मल्लिनाथानुसारेण चतुःसप्ततिः श्लोकाः सन्ति । एतेषु श्लोकेषु अष्टात्रिंशदलङ्काराणामुदाहरणानि सन्ति । येषु अनुप्रास-यमक नामकौ द्वौ शब्दालङ्कारावपि सम्मिलितौ स्तः । एकादश सर्गे सप्तचत्वारिंशत् श्लोकाः सन्ति । अत्र

माधुर्यगुणस्योदाहरणानि सन्ति । द्वादशसर्गस्य सप्ताशीतिः श्लोकेषु भाविकनामकस्यालङ्कारस्य उदाहरणानि सन्ति यद्भामहः तृतीयाध्यायस्य त्रयोपञ्चाशत्श्लोकद्वारेण तथा दण्डी द्वितीयाध्यायस्य चतुःषष्टिश्लोकद्वारेण प्रबन्धविषयं मन्येते । त्रयोदशाध्याये पञ्चाशत् श्लोकाः सन्ति तत्र च भाषा समस्योदाहरणानि प्रदत्तानि सन्ति । अत्र एवं विध श्लोकाः सन्ति ये संस्कृत-प्राकृत द्वे अपि भाषयोः समरूप एवास्तः । एतेषां चतुर्णां सर्गानां कारणेनैव भट्टिकाव्यस्य नामाऽपि काव्यशास्त्रस्येतिहासे सम्मिलितोऽभवत् तथा तस्य सामान्योल्लेखो भवत्यावश्यकः ।

मल्लिनाथः पञ्चदशशतकेऽभवत् । सः प्रतापरुद्रीय इत्यार्वाचीनग्रन्थानपि प्रमाणं मन्यते । तेन हि प्रायेण विंशतिः स्थानेषु जयमङ्गलायाः मतभेदं प्रकटीकृतोऽस्ति । तस्याः कटु आलोचनाऽपि कृताऽस्ति । उदाहरणस्वरूपे भट्टिकाव्यस्य निम्नलिखितं श्लोकं जयमङ्गला दीपकालङ्कारस्योदाहरणं मन्यते तथा मल्लिनाथेन जयमङ्गला द्वारा प्रस्तुत नाम्नः कटु आलोचना कृताऽस्ति । भट्टिकाव्यस्य श्लोकः निम्नलिखितोऽस्ति—

**गरुडानिलतिग्मरश्मयः पततां यद्यपि समता जवे ।**
**अचिरेण कृतार्थमागतं तममन्यन्त तथाप्यतीव ते ॥**

मल्लिनाथेन कृताऽलोचना निम्नलिखिताऽस्ति —

**'अत्र गच्छन्नित्यादिश्लोकत्रये क्रमाद्यन्तमध्यावसानेषु क्रियापद प्रयोगादाद्यन्तमध्यदीपकानीत्युक्तं जयमङ्गलाकारेण तत्परममङ्गलं लक्षणपरिज्ञानादिति ।'**
कतिपयानामालोचकानां मते भट्टिकाव्यं प्राचीन जावाभाषायामुपलब्धरामायणस्यादर्शः आसीत् । भट्टिकाव्यस्य हस्तलिखितप्रतिलेखे (१०.४४) 'निपुण' नामकस्य अलङ्कारस्योदाहरणमस्ति । किञ्च भामह-दण्डिनौ तत्र स्वीचक्रतुः । भट्टिस्तु श्लेष नामकस्य तथा सूक्ष्मनामकस्यालङ्कारस्योदाहरणं नैव दत्तवान् । दण्डी तं हेतुनामकमलङ्कारं उत्तमालङ्कारं मन्यते । भामहः (२.८६) उपर्युक्तमलङ्कारत्रयत्रैव मन्यते । भट्टिस्तु यमकस्योदाहरणे विंशतिः श्लोकाः लिखितवान् यत्तु नाट्यशास्त्रे तथा काव्यादर्शे च समागता चर्चानुसारेणैवास्ति । किन्तु भामहेन चर्चामिमां संक्षिप्तेन लिखितः । अनेन सिद्धो भवति एतेषु भट्टि-भामह-दण्डिषु न कोऽपि कस्याप्यनुसरणं कृतवान् ।

भट्टिकाव्यस्य तिथिः निश्चि सीमायां कर्तुं शक्यते । अस्य काव्यस्य रचयितुः समयः भट्टिस्वामिनः स्वयमेव स्वग्रन्थे लिखितम्—

**काव्यमिदं लिखितं मया वलभ्यां श्रीधरसेन वरेन्द्रपालितायाम् ।**
**कीर्त्तिरतो भवतां नृपस्य तस्य क्षेमकरः क्षितिपो यतः प्रजानाम् ॥**

श्रीधरसेन नामकाश्चत्वारो राजानः ५०० ई० तः ६५० ई० पर्यन्तमजायन्त, तेषु कतमस्य श्रीधरसेनस्य समये भट्टिजायतेति निश्चेतव्यम् । श्रीधरसेन द्वितीयस्यैकः शिलालेखः प्राप्यते, यत्र भट्टिनाम्ने विदुषे राज्ञाकृतस्य भूमिदानस्य वार्त्ता मिलति । यद्ययं भट्टिर्भट्टिकाव्यस्यैव प्रणेता तदा तस्य समयः ६१० ई० मन्तुं शक्यते । भिन्नभट्टेः कल्पनायामपि भट्टिः सप्तमशतकदूर्ध्वं नानेतुं योग्यः ।

भट्टिः काव्यमिदं किमपि प्राचीनमीदृशं काव्यमालोक्यैव प्रणीतवा॒न् । पातञ्जलमहाभाष्ये कतिपयानि व्याकरणप्रयोगपराणि पद्यान्युद्धृतानि सन्ति । तेन ज्ञायते यत् पतञ्जलेरपि समये किमपि तादृशं काव्यमासीत् तदेव किमपि काव्यमाधारीकृत्य भट्टिना स्वयं काव्यं विरचितं स्यात् ।

भट्टिकाव्यं यद्यपि व्याकरणलक्षणप्रयोगा ज्ञानाय निर्मितमिति प्रतिभाति तथाऽपि काव्यस्यास्य काव्यशास्त्रीयं किमपि वैशिष्ट्यं विद्वद्रञ्जकमेव विद्यते । अत्र कविना काव्यगुणा अपि प्रयस्य समावेशिताः । अस्य काव्यस्य दशमे सर्गे शब्दार्थालङ्काराणां निवेशनेन एकादशे सर्गे माधुर्यगुणस्य समावेशेन चास्य गौरवमेधते ।

अस्य कवेर्वक्तृत्वनैपुण्यम्, काव्यशास्त्रीयसंयोजनम्, अलङ्कारवर्णनेन चावगम्यते । द्वितीयसर्गे शरदो, द्वादशे सर्गे प्रभातस्य च कमनीयं वर्णनमस्ति । अस्य काव्यस्य शरद्वर्णनं नितान्तहृद्यम्—

**तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयं दधन्ति ।**<br>
**सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥**<br>
**विम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः ।**<br>
**कूलानि सामर्षतयैव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥**

एवमेव सूर्योदयवर्णनेऽलङ्कारछटामपि दर्शनीया—

**दुरुत्तरे पङ्कइवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः ।**<br>
**प्रनष्टमूर्त्तिप्रविभागमुद्यन् समुज्जहारेव ततो विवश्वान् ॥**

भट्टिकाव्यस्य निम्नलिखितश्लोकस्तु एकावली नामकस्यालङ्कारस्य प्रसिद्ध-मुदाहरणमस्ति—

**न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीन षट्पदम् ।**<br>
**न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥**

आदिमेषु चतुर्षु सर्गेषु प्रकीर्णविषयाः, तदनु त्रयोदशसर्गान्तमलङ्काराणां निवेशाः ततो द्वाविंशं सर्गं यावल्लङ्कारप्रयोगाश्चेति सर्वात्मना शास्त्रकाव्यमिदमस्ति ।



## भामहः, तदीयः काव्यालङ्कारश्च

भामहः काश्मीर-प्रदेशे समुत्पन्नः प्रसिद्धो विद्वानासीत् । अस्य पितुर्नामरक्रिल-गोमी' इत्यासीत् । तदेतत् 'काव्यालङ्कार' ग्रन्थस्य 'सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम्' इति श्लोकेन परिबोध्यते । गोमिपदं बौद्धसाहित्ये बाहुल्येन प्रयुज्यते 'चन्द्रगोमीत्यादिवत् । किञ्चायं स्वीयस्य काव्यालङ्कारस्यारम्भे सार्वसर्वज्ञस्य स्तुतं कृतवान् इति बौद्धोऽयमासीदिति बहूनां सन्देहः । वस्तुतस्त्वयं सनातनवैदिक

धर्मावलम्ब्येवासीत् । यतोऽनेन यागादीनां सोमपानस्य रामायणीयपात्राणां च प्रशंसा यथाप्रसङ्गं कृतेति । बौद्धस्या पोहवादस्यऽऽलोचनापि साधयति यदसौ सनातन धर्मावलम्ब्येवासीदिति । अनेनालङ्कारशास्त्रविषयकः कश्चित् ग्रन्थो विरचित आसीद्, यस्य विवरणं विदुषा भट्टोद्भट्टेन कृतम् । यस्य च नाम मुद्रिते पुस्तके 'काव्यालङ्कारः' इत्येव लभ्यते । तदेतदुक्तमुद्भटालङ्कारसारसंग्रहलघु वृत्तौ प्रथमे वर्गे प्रतिहारेन्दुराजेन— 'स्पष्टमिदं भामह विवरणे भट्टोद्भटेन कृतम्' । अयं हि भामहः प्राचीनतरः । अतएव प्रतापरुद्रयशोभूषणे विद्यानाथेनोक्तम्—

**पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः ।**
**वक्ष्ये सम्यगलङ्कारशास्त्रसर्वस्वसंग्रहम् ॥**

अलङ्कारसर्वस्वे रुय्यकेणाप्युक्तम्—'भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारकाराः' इति । ध्वन्यालोकलोचने द्वितीयोद्योते—

**श्रुतिदुष्टादयो दोषाः अनित्या ये च दर्शिताः ।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥** (ध्व०द्र०उ० ११)

अस्याः कारिकायाः वृत्तिव्याख्यानावसरे 'उक्तः' इति प्रतीकमुपादाय अभिनवगुप्त-पादाचार्यैरप्युक्तम्—'भामहादिभिरलङ्कारलक्षणकारैः' इति । अपि च—काव्यप्रकाशस्य दशमोल्लासे 'कारणमाला'ऽलङ्कारस्यान्तिमे वृत्तिग्रन्थे **'इत्यत्र काव्यरूपतां कोमला-नुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वालङ्कारकल्पनया इत्येवं रूपे सामाम्नासिषुः'** इति पदमुपादाय 'प्राञ्चो भामहादयः' इति शेषमुपयोजितवन्तः टीकाकाराः । भामहस्य प्राचीनतरात्वादेव मम्मटेनाऽपि स्वोक्तेर्थे संमति दर्शयितुं षष्ठोल्लासे 'रूपकादिरलङ्कारः' इत्यादिः, दशमोल्लासे विषमालङ्कारस्थले च 'सैषा सर्वत्र वक्रोक्तिः' इत्यादिश्च भामहस्य ग्रन्थ उपन्यस्तः ।

भामहकृत काव्यालङ्कारः षट्सु परिच्छेदेषु विभक्तोऽस्ति । अस्मिन् ग्रन्थे प्रायशः चतुःशतश्लोकाः सन्ति । यथार्थतः तेषां श्लोकानां संख्या ३९६ एवास्ति । यत्रान्तिमौ द्वौ श्लोकौ सम्मिलितौ नैवास्तः । तेषु पञ्चप्रमुखविषयाणामुपरि रचित श्लोकानां संख्या एव प्रदत्ताऽस्ति ।

**षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलङ्कृतिः ।**
**पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः ॥**
**षष्ट्याशब्दस्य शुद्धिः स्यादित्येवं वस्तु पञ्चकम् ।**
**उक्तं षड्भिः परिच्छेदै भामहेन क्रमेण वा ॥**

काशी संस्करणस्य षट्परिच्छेदेषु श्लोकानां संख्या क्रमशः निम्नलिखिताऽस्ति ६९,९६,५८,५०,६९,६६ (अन्तिमश्लोकद्वयस्याऽपि सम्मेलनं कृत्वा) सम्पूर्णयोग ३९८ श्लोकाः सन्ति ।

अलङ्कारशास्त्रं कदा केन प्रथममाविष्कृतमिति प्रश्नस्योत्तरविचारे 'अग्निपुराणे' ३४३-३४४ अध्याययोस्तदग्रिमेष्वप्यध्यायेष्वलङ्कारशास्त्रीयविषयाणामुपलम्भेन 'अग्नि-

पुराणम्' एवालङ्कारशास्त्रस्यादिमं मूलमिति यद्यपि वक्तुं शक्यम्, तथाऽपि लौकिककाव्यादिषु तेषामलङ्कारादीनां विषयाणां चिन्तनस्य प्रथा प्रथमं भामहेनैव प्रवर्त्तिता स्यात्, ततः प्राचीनस्यान्यस्यानुपलम्भादिति बहूनां विश्वासः ।

यद्यपि भामहस्य मतमतिचिरन्तनं, तथापि प्रामाणिकाः सर्वेऽप्याचार्यास्तं प्रमाणयन्ति विषयविशेषेषु । तथा च-मम्मटभट्टः काव्यप्रकाशे स्वग्रन्थे क्वचिदविकलाः क्वचित् विकलाश्चाऽपि स्वसूत्रेषु सञ्जग्राहेति ।

भामहस्य समय-विवेचनेऽनेकानि मतानि सन्ति, परन्तु दण्डी-भामहयोर्द्वयोः कः पूर्ववर्त्तीत्यस्मिन् विषये निर्णीते प्रस्तुतविषयोऽपि निर्णीतप्रायः स्यात् । दण्डी तु भामहात्परवर्त्त्येव स्वीकृतो विद्वद्भिः । तर्हि दण्डी सप्तमशतकप्रारम्भकालिको मतः, ततश्च भामहस्य षष्ठशतकवर्त्तित्वं स्वतः सिद्ध्यति । अष्टमशतकोत्पन्नो भट्टोद्भटो भामहकृतं काव्यालङ्कारं व्याख्यातवान्, अतोऽयं तत्पूर्वकालिक इत्यपि पूर्वोक्तमतेऽनुकूलम् । केचन पाश्चात्या विद्वांसो भामहरचनायां न्यासपदप्रयोगं दृष्ट्वा भामहं न्यासकाराज्जिनेन्द्रबुद्धेः परवर्तिनं, सप्तमशतकपरवर्त्तिनञ्च मन्यन्ते । परमिदं कल्पनञ्च निर्मूलम्, अन्यस्यैव न्यासग्रन्थ तेन स्मृतत्वात् ।

भरतकृते नाट्यशास्त्रे अलङ्काराणां विवेचनं गौणरूपेण कृतमासीत् न तु प्रधानरूपेण । भरतमुन्यनुसारेण चतुष्प्रकारकाः भवन्त्यभिनयाः । तत्र वाचिकाभिनयस्य प्रसङ्गे भरतमुनिरलङ्काराणां सन्निवेशमकार्षीत् । आनन्दवर्धनाचार्यानुसारेण भामहो बाणभट्टात् प्राचीन आसीत् । भामहः काव्यालङ्कारस्य पञ्चमे परिच्छेदे न्यायनिर्णयावसरे बौद्धदार्शनिकानां सिद्धान्तेन साकं स्वकीयं प्रगाढं परिचयं प्रकटयामास । अत्र भामहकृतं प्रत्यक्षप्रमाणलक्षणं दिङ्नागमतेन साकं साम्यं विभर्त्ति । दिङ्नागः—**'प्रत्यक्षं कल्पनापोढम्'** इति प्रत्यक्षलक्षणमाह । अत्र कल्पनाशब्देन जातेः नाम्नश्च कल्पनाऽभिधीयते। धर्मकीर्त्तिः अस्मिन्लक्षणे अभ्रान्तपदं योजयित्वा भ्रान्तिरहितं कर्त्तुं प्रयतते स्म। किन्तु भामहो धर्मकीर्त्तेः अनेन लक्षणेन परिचितो नास्ति । अतएव भामहस्य कालो दिङ्नागानन्तरं धर्मकीर्त्तेश्च प्राक् स्वीक्रियते । दिङ्नागस्य कालः ५०० ई० धर्मकीर्त्तेश्च कालः ६२० ई० स्वीक्रियते । अनयोरन्तराले एव आचार्य भामहस्य कालो भवितुमर्हति ।

भामहेन वररुचिकृते प्राकृतप्रकाशे विवरणमप्येकं लिखितं प्रकाशितञ्चानेकैः मुद्रणालयैरुपलभ्यते । अनेकैरालङ्कारिकैर्भामहस्यैवालङ्कारानुसारेण स्वग्रन्थेषु विन्यस्ता अलङ्काराः । यथा भट्टिना—भट्टिकविना हि स्वकाव्ये सर्वेऽप्यलङ्काराः भामहादेव परिगृहीताः । तस्यान्तिमः श्लोकस्तु भामहश्लोकमनुकरोति । दण्डिनाऽपि सुबहवनुकृतम्। भामहस्येयं प्रशंसा श्रूयते—

**'आलङ्कारिक इत्याख्या भामहात् भामविन्दत ।**
**तस्या द्विवचनं जातं जाते दण्डिनि पण्डिते ॥'.**

भामहेन विरचितः काव्यालङ्कार नामा एक एव ग्रन्थः प्राप्यते । वृत्तरत्नाकरे भामहनाम्नालभ्यमानैः श्लोकैरनुमीयते यदनेन कोऽपि छन्दो ग्रन्थोऽपि व्यरच्यत ।

भरतादनन्तरमयमेव ग्रन्थोऽलङ्कारशास्त्रस्य सर्वमान्यः । एतत्पूर्ववर्तितया स्मर्यमाणस्य मेधाविरुद्रस्य कृतिस्तु नोपलभ्यते । काव्यालङ्कारस्य प्रथमे परिच्छेदे काव्यसाधन तल्लक्षण तद्भेदा वर्णिताः । द्वितीये-तृतीये चालङ्काराः विवेचिताः । चतुर्थे भरतोक्ताः दशदोषाः प्रपञ्चिताः । पञ्चमे न्यायविरोधिदोषो मीमांसितः । षष्ठे विवादास्पदपद-शुद्धिर्विचारिता । ग्रन्थेस्मिन् शब्दार्थयुगलस्य काव्यत्वं, भरतोक्त दशगुणानां माधुर्यौजः प्रसादेष्वन्तर्भावः वक्रोक्तेः सकलालङ्कारमूलत्वम् इत्यस्य ग्रन्थस्य विशिष्टसिद्धान्ताः ।

इत्यप्यत्र विचारणीयः—राघवभट्टः शाकुन्तलस्यार्थद्योतनिकायामेतादृशयोः वाक्य-योरुदाहरणमुपन्यस्तवान् ये वाक्ये काव्यालङ्कारे नहि समुपलभ्येते । नारायणभट्टो वृत्तरत्नाकरस्य टीकायामपि भामहस्य नाम्ना निम्नाङ्कितं पद्यमुद्धृतवान् । तथाहि—

**अवर्णात् सम्पत्तिर्भवति मुदिवर्णात् धनक्षता ।**
**व्युवर्णादख्यातिः सरभसमृवर्णाद्धरहितात् ॥**
**तथात्वेषः सौख्यङ्व्रणरहितादक्षरगणात् ।**
**पदादौ विन्यासात् भरवहल हाहा विरचितात् ॥ इति ॥**



## आचार्यदण्डिनः काव्यादर्शः

**जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।**
**कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥**

इत्येवमादिभिः प्राचीनसहृदयवचनैः संस्कृतकाव्यशास्त्रे साहित्यशास्त्रे च दण्डिनो महती प्रतिष्ठानुमीयते । 'दण्डिनः पदलालित्यम्' इत्युक्तिरपि तस्य प्रसिद्धौ प्रमाणम् । काव्यशास्त्रेषु दण्डी स्वं विशिष्टं स्थानं रक्षति । भामहस्यानन्तरम् अलङ्कारशास्त्रस्य प्रधान आचार्यो दण्डी एव स्वीक्रियते ।

दण्डिनो वासदेशस्य निर्णयेऽनुक्रम्यमाणे अवन्तिसुन्दरीकथा एव प्रमाणम् तदनुसारेण दण्डिनः पूर्वपुरुषाः गुर्जरप्रान्तस्थिते आनन्दपुरेऽतिष्ठन् । ततस्ते दक्षिण-देशावस्थितं सम्प्रति 'एलिचपुर' संज्ञया प्रथमानमचलपुरं नाम स्थानमायातस्तदेवं कवेर्दाक्षिणात्यभावः सिद्ध्यति । काञ्ची-कावेरी-चोल-कलिङ्गमलयानिलप्रभृतिदक्षिणप्रसिद्ध-स्थानादीनां दण्डिना कृतो भूयसोल्लेख एव प्रमाणयतयाऽत्रोपस्थाप्यते ।

दण्डिनो दाक्षिणात्यत्वे इदमपि प्रमाणान्तरमुपन्यस्यते, यत् काश्मीरदेशभवाः आलङ्कारिका दण्डिनो मतं प्रायशो नोद्धृतवन्तः, तन्मतं नालोचितवन्तः, अतः सुदूर-दक्षिणवासित्वं निश्चीयते । कौशिकगोत्रोत्पन्नोऽयं स्वप्रपितामहस्य भारवेराश्रय दातुर्नृपस्याश्रये काञ्चीनगरे वसतिस्म । काञ्चीराजे शत्रुभिराक्रमणेन पराभूतोऽयं काननेषु

निलीय स्थितः । सोऽयं विप्लवः ६५५ तमे खीष्टाब्देऽभवत् । तदा दण्डीबाल एवासीत् । एतेन दण्डिनः कालोऽपि प्रकाशमानीयते ।

दण्डिनो वास्तविकनाम न ज्ञायते । यथा भवभूतेर्माघस्य च नामविषये श्रूयते तथैव 'ब्रह्माण्डच्छत्रदण्डः' इत्यादि दशकुमारमङ्गलाचरणस्य दण्डपदप्रयोगेण दण्डि-नाम्नाऽयं ख्यातः ।

दण्डिनः समयनिरूपणमतीव विवादास्पद आस्ते । यद्यपि आनन्दवर्धनाचार्यः स्वकीये ध्वन्यालोके भामहस्य निर्देशमकार्षीत्, किन्तु सः दण्डिनो निर्देशं नह्यकरोत् । सर्वप्रथमं दण्डिनो निर्देशमकरोदाचार्यः प्रतिहारेन्दुराजः । सिङ्घली-भाषायां 'सिय-वस-लकर' (स्वभाषालङ्कारः) ग्रन्थनिर्मातु राजसेन प्रथमस्य नवम शताब्द्याः मध्यभागे समयो विद्यते । ग्रन्थोऽयं काव्यादर्शस्याधारेण निर्मितो विद्यते इति डॉक्टर वार्नेटेन "Journal of The Royal Asiatic Society" नाम्नि पत्रिकायां निर्णीतम् । महावंशानुसारेण तस्य ग्रन्थस्य रचनाकालः ८४६ खीष्टाब्दतः ८६६ खीष्टाब्दो वर्तते । तस्मिन् ग्रन्थे न केवलं काव्यादर्शस्य प्रभावो लक्ष्यतेऽपि तु तत्र काव्यादर्शस्य नामाप्युल्लिख्यते । अस्मात्पूर्वमेव कन्नड़ी भाषायां 'कविराजमार्गा'ख्योऽलङ्कारग्रन्थः काव्यादर्शच्छायया नवशताब्द्याः पूर्वभागे अमोघवर्षेण निर्मित उपलभ्यते । हेत्वतिशयो तथादिषु तु पूर्वरूपेण दण्डिन एव साम्यमवलोक्यतेऽतो नवम शताब्द्याः पूर्ववर्त्येवायमित्यत्र न कश्चन सन्देहलेशः । काव्यदर्शीय—

**अरत्नालोक संहार्यमवार्यं सूर्यरश्मिभिः ।**
**दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥**

इति पद्ये बाणभट्टकादम्बर्यां चन्द्रापीड़ाय शुकनासोपदेशे विद्यमानगद्यस्य छाया समापतति । अपि चाग्रे तत्रैव—

**भिन्नस्तीक्ष्णमुखेनाऽपि चित्रं बाणेन निर्व्यथः ।**
**व्याहारेषु जहौ लीलां न मयूर... ॥**

इति पद्येन मयूरभट्टेन सह बाणस्याऽपि प्रशस्त प्रशंसाकृता । सप्तमशतकपूर्वार्द्धे विद्यमानस्य वाक्यपदीयकर्त्तुः भर्तृहरेरनुसारेण कव्यादर्शे दण्डिनाप्राप्यनिर्वत्यविकार्य हेतूनां विभागः कृतः । एवञ्च सप्तमशताब्द्याः पूर्वार्द्ध एव वर्त्तमानस्य महाकवे-र्बाणस्यानन्तरं सप्तमशतकान्ते तथाऽष्टम शतक प्रारम्भ एव दण्डिनः समयः ।

महाकविनानेन निजग्रन्थस्य काव्यादर्श इतिनाम विधाय भामहापेक्षयाऽधिक-चमत्कारः प्रदर्शितः । एतेन हि काव्यशोभोत्पादकानेवालङ्कारान् **'काव्यशोभाकरान् धर्मानलङ्कारः प्रचक्षते ।'** मत्वा गुणानां विशेष महत्ता प्रदर्शिता । यद्यपि भामहोऽपि-गुणानङ्गीकरोत्येव परन्तु दण्ड्यपेक्षया स्वल्पमेव प्रदर्शितवान् स्वग्रन्थे । अत्र हि यत्र तत्र भामह सिद्धान्तस्य खण्डनमपि दृश्यते, अलङ्कारशास्त्रस्यानुयायी ह्ययं भामहेन तु गौड़ी वैदर्भी रीत्योर्विभाजनं गतानुगतिक न्यायेन समर्थितम्, किन्तु, गौड़ी वैदर्भीरीत्योः पारस्परिकभेदसम्बन्धः सर्वप्रथमं स्पष्टतया प्रदर्शनस्य श्रेयः अस्मिन्नेव विद्वद्वरे इत्यवगन्तव्यम् ।

खीष्ट्र दशमशतकोत्पन्नः अभिनवगुप्तः लोचननामके स्वटीकायां लिखति—'यथाह दण्डी—गद्यपद्यमयीचम्पूः' (तृतीयोद्योते अष्टमीकारिका) । खीष्ट्रदशमशतकं पूर्वार्द्ध-समुद्भूतेन प्रतिहारेन्दुराजेन पूर्वचर्चितेन उद्भटरचितस्य काव्यालङ्कारसारसंग्रहस्य लघुवृत्तौ लिखितम्—'अतएव दण्डिना'—

**लिम्पतीवतमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिनिष्फलताङ्गताः ॥**

कन्नड़भाषायां 'कविराजमार्ग' नामक एकोग्रन्थः राष्ट्रकूटराजकुमारेण अमोघवर्षेण लिखितः । स स्पष्टभावेन काव्यादर्शमाधारीकृत्य प्रणीत इति प्रतीयते । कविराजमार्ग-नामकस्य तस्य ग्रन्थस्य रचनाकालः ८२५ खीष्टाब्दतः ८७५ खीष्ट्राब्दमध्यवर्त्ती मन्यते। अपि च वामनेन काव्यालङ्कारसूत्रे यस्याः रीतेः काव्यात्मत्वमास्थाय विस्तृता विवेचना कृता सा रीतिर्दण्डिनः काव्यादर्शे वर्णिता मार्गपदेन । दण्डिप्रकाशितो मार्ग एव वामनेन रीतिरुक्ता, अतो दण्डीवामनपूर्ववर्त्तितया स्वीकर्त्तव्यो भवति । वामनस्य कालश्च ७७९ खीष्टाब्दतः ८१३ खीष्ट्राब्दो मन्यते ।

विज्जिकानामकस्त्रीकवेरुक्तिरेका प्रसिद्धाः अस्ति—

**नीलोत्पलदलश्यामां विज्जिकां मामजानता ।**
**वृथैवदण्डिना प्रोक्ता सर्वशुक्ला सरस्वती ॥**

यदीयं विज्जिका द्वितीयपुलकेशिनो ज्येष्ठसुतस्य चन्द्रादित्यस्य विदुषीपत्नी विजयभट्टारिका एवासीत् तदा तस्याः समय ६६० तमाब्दनिकस्थित एवासीत् । एभिः प्रमाणैर्दण्डिनः समयस्य परसीमा अष्टमशतकमिति मन्तव्यं भवति । वासवदत्ता नामके सुबन्धु प्रणीते प्रसिद्धे गद्यग्रन्थे 'छन्दोविचित्तिरिव मालिनी सनाथा' ईदृशं गद्यमस्ति । छन्दोविचित्यां सकलस्तत्प्रपञ्चः प्रदर्शितः इति दण्डिनो वाक्येन छन्दोविचिति नामक ग्रन्थस्य दण्डिकृतित्वमास्थातुं शक्यते । तस्य ग्रन्थस्य सुबन्धुना स्मृतत्वे दण्डिनः सुबन्धुपूर्वत्वमायाति । एतेन दण्डिनः समयस्य पूर्वसीमा षष्ठं शतकमिति मन्तव्यं भवति । सर्वमुपरितनं सन्दर्भ विभाव्य मैक्समूलर-वेबर-मैकडोनल- याकोविप्रभृतयः पाश्चात्याः विद्वान्सो दण्डिनः समयं षष्ठशतकं मन्यन्ते । केचित्तु—

**रत्नभित्तिषु संक्रान्तप्रतिमास्ते चकाशिरे ।**
**एकाकिनोऽपि परितः पौरुषेय वृता इव ॥**

काव्यादर्शस्य निम्नलिखितः पूर्वोक्त-श्लोकः—

**'अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः ।**
**दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥'**

**'आभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं हि तमो यौवनप्रभवम्'** इति कादम्बरीगतं गद्यमनुहरति । एतादृश्या तुलनया दण्डिनं माघ-वाण-परवर्त्तिनं मन्यन्ते, परमियतैव सादृश्येन परवर्त्तिता नियमस्यैव पूर्ववर्त्तिता नियमस्याऽपि कर्त्तुं शक्यत्वेन निश्चयस्य कस्यापि कर्त्तुमशक्यत्वात् ।

अन्येऽपि च पुनः—अवन्तिसुन्दरीकथायां दण्डिनो भारविवंशजत्वमुक्तम् । अस्योल्लेखः पूर्वमेव कृतो मया यद्भारवेः पितामहः पूर्वं गुर्जरेष्ववात्सीत् । ततः स्थानात् सः दक्षिणदेशस्थितमचलपुरमागतो यः एलिचपुरनाम्ना सम्प्रत्युच्यते । नारायणस्वामिनो हि पुत्रो दामोदरभारविः तत्पुत्रेष्वन्यतमस्य मनोरथस्य पुत्रो वीरदत्तस्ततो दण्डी गौर्या जनन्यां जातः । कथेयं तत्रोक्ता भारवेः । समयः खीष्ट० ६३४ मन्यते, तदनुसारेण दण्डिनः सप्तम शतकान्त भाग सम्भूतत्वमायाति । काव्यादर्शे—**'इति साक्षात्कृते देवेराजो यद्रातवर्मणः'** इति रातवर्मणः उल्लेखेन पल्लवनरेशो नृसिंहवर्मा स्मर्यते । **'वाराहेणोद्धृता यासौ वराहेरूपस्थिता'** इत्यत्र वराहपदश्लेषेण चालुक्य-वंश्यान्नृपतीनां चिह्नं स्मर्यते । एतेन सर्वेण दण्डिनः समयः सप्तमशतकान्तर्भागः सिद्ध्यतीति ।

**दण्डिनः कृतयस्तु**—'त्रयो दण्डिप्रबन्धाश्च' एतदुक्तिमनुसृत्य 'काव्यादर्शः' 'दशकुमारचरितम्' 'अवन्तिसुन्दरीकथा' इति त्रयो ग्रन्थाः दण्डिनः कथ्यन्ते । केचित्तु—छन्दोविचित्यां सकलस्तत्प्रपञ्चः प्रदर्शितः' इति दण्डिवचनेन 'छन्दोविचित्ति' नामकमपि दण्डिग्रन्थमेकं कल्पयन्ति, परं तत्र युक्तम्, छन्दोविचितिशब्दस्य छन्दः शास्त्रपरत्वात्, अतएव—छन्दोविचितिविषये 'सा विधानौ विविक्षणाम्' इति तच्छास्त्रस्य विधात्वमुक्तम् । एष एव न्यायः कलापरिच्छेदविषयेऽपि बोध्यः । परं, कतिचन जनास्तु छन्दोविचितिमप्येकं ग्रन्थमेव मन्यन्ते, तन्न युक्तम् ।

दण्डिनः काव्यादर्शः भारते, यूरोपे चानेकावसरे मुद्रितोऽभवत् । कलकत्ता महानगरीतः १८३६ खीष्टाब्दे प्रेमचन्द्र तर्कवागीशस्य टीकया सह प्रकाशितोऽभवत् । १८९० खीष्टाब्दे बोथलिकद्वारेण जर्मनभाषानुवादेन सह प्रकाशितोऽभवत् । १९१० खीष्टाब्दे द्वाभ्यां टीकाभ्यां सह प्रो० रङ्गाचार्य द्वारेण मद्रासमहानगरीतः मुद्रितोऽभवत् । १९३८ खीष्टाब्दे वेलवेलकर रङ्गाचार्यशास्त्रीद्वारेण तथा स्वरचितटीकया सह रङ्गाचार्य-रेड्डिद्वारेणाऽपि (Bhandarker Oriental Research Institute) भण्डारकर-संस्थातः प्रकाशितोऽभवत् ।

काव्यादर्शस्य त्रयः परिच्छेदाः सन्ति । रङ्गाचार्यस्य संस्करणे चत्वारः परिच्छेदाः सन्ति । अस्मिन् अन्यसंस्करणस्य तृतीयपरिच्छेदः खण्डद्वये विभक्तोऽस्ति । मद्रास-संस्करणस्य चतुर्थपरिच्छेदे दशविधदोषाणां लक्षणोदाहरणानि सन्ति । कलकत्तासंस्करणे तथा रेड्डीमहोदयस्य संस्करणे श्लोकानांसंख्या षष्ट्युत्तरंषट्शतं (६६०) भवति । मद्रास-संस्करणे त्रयः षष्ट्युत्तरं षट्शतं (६६३) श्लोकानां संख्या वर्त्तते । द्वितीय परिच्छेदस्य प्रसिद्धश्लोकः **'लिम्पतीवतमोऽङ्गानि'** इत्यादि तत्र नैवास्ति । तृतीयद्वितीय-परिच्छेदस्यान्ते तथा चतुर्थपरिच्छेदस्यादावेकः मध्ये चैकः श्लोकोऽस्ति । उदाहरण-स्वरूपे—

**आधिव्याधिपरिताय अद्यश्वो वा विनाशिने ।**
**को हि नाम शरीराय धर्मापेतं समाचरेत् ॥** (३, १६०)

अस्य प्रथमपरिच्छेदे काव्यलक्षणस्य, काव्यभेदस्य, गद्यस्य, भेदद्वयस्य, आख्यायिका-कथाभिधस्य, सर्गबन्धस्य रीतीनां, गुणानां, कवेश्चावश्यकगुणानां,

संस्कृत-प्राकृत-अपभ्रंशमिश्रभाषासु साहित्यविभाजनस्य विस्तृतवर्णनमास्ते । द्वितीय-परिच्छेदे—सुन्दररूपेण पञ्चत्रिंशत् (३५) अलङ्काराणां यथा—स्वभावोक्ति-उपमा-रूपक-दीपक-आवृत्ति-आक्षेप-अर्थान्तरन्यास-व्यतिरेक-विभावना-समासोक्ति-अतिशयोक्ति-उत्प्रेक्षा-हेतु-सूक्ष्म-लेश-यथासंख्य-प्रेयः-रसवत्-ऊर्जस्वि-पर्यायोक्त-समाहित-उदात्त-अपह्नुति-श्लेष-विशेषोक्ति-तुल्ययोगिता-विरोध-अप्रस्तुतप्रशंसा-व्योजोक्ति-निदर्शना-सहोक्ति-परिवृत्ति-आशीः-सङ्कीर्ण-भाविकादीनां लक्षणोदाहरणानि, तत्रोपमालङ्कारस्यचानेकभेदाः निरूपिताः । तृतीयपरिच्छेदे-शब्दालङ्काराणां मध्ये विशेषतया यमकालङ्कारस्य व्यापकरूपेण वर्णनमस्ति । गोमूत्रिका-अर्थभ्रम-सर्वतोभद्र-स्वरस्थानवर्णनियमादीनां चित्रबन्धानाञ्च लक्षणोदाहरणानि च सन्ति । चतुर्थ परिच्छेदे-षोड्श प्रकाराणां प्रहेलिकानां तथा दशविधदोषाणां लक्षणोदाहरणानि च सन्ति ।



## उद्भटस्तथा तस्य काव्यालङ्कारसारसङ्ग्रहः

भट्टोद्भटः, उद्भटभट्टो वा विद्वान् काश्मीरप्रदेशे जनिमलभत । असौ वामन समकालिकः आसीत् । वामनो जयापीड़राजाश्रित आसीदिति राजतरङ्गिणीतः प्रतीयते । यथा—

**मनोरथः राङ्गादत्तश्चटकः सन्धिमांस्तथा ।**
**बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ।। इति ।**

न केवलमियदेव, अपि त्वयं विद्वान् सवेतनः काश्मीराधिपतेर्जयापीडस्य राज्ञः सभायाः पतिरप्यासीदिति । तत्रैव च काश्मीरराजस्य राष्ट्रकूटवंशस्य गोविन्दतृतीयस्य च सभापण्डित-सचिवान्यतमश्चासीत् । अतो जयापीडस्य शासनकालः ख्रीष्ट्र ७७९ शतकमारभ्य ८१३ शतकपर्यन्त इति तत्काल भवत्वं तत्सभापत्तेरस्य भट्टोद्भट्टस्येति च राजतरङ्गिणीतः एव ज्ञायते । तत्र प्रतिदिनं चास्य वेतनं दीनारशतलक्षं (एककोटि-स्वर्णमुद्रा) आसीदिति तत् एव निश्चीयते । तथा चोक्तम्—

**दीनारशतलक्षेण प्रत्यहं कृतवेतनः ।**
**भट्टोऽभूदुद्भटस्तस्य भूमिभर्त्तुः सभापतिः ।।** (राज० ४.४९५)

यदीदं पूर्णतस्तथ्यं तदाऽयं महान् धनाढ्यो भाग्यशालीचेति निश्चप्रचम् । अवगानेकशास्त्रतत्त्वोऽपि मुख्यतयाऽयं वैयाकरणः । अतएवानेन—

**क्रियायाः प्रतिषेधेऽपि यत् फलस्य विभावनम् । ज्ञेया विभावना**

इतिविभावनालङ्कारलक्षणे 'कारणस्य निषेधेऽपि' इति प्रयोक्तव्ये कारणपदस्थाने क्रियापदञ्च प्रयुक्तम् ।

एकस्यैव राज्ञ आश्रये विद्यमानयोरपि वामनोद्भटयो साहित्यक्षेत्रे प्रतिस्पर्द्धित्वं प्रतीयते । यदि वामनो रीतिसम्प्रदायस्यन्नायकस्तदा . चोद्भटोऽलङ्कारसम्प्रदायस्य पिष्टपोषक आसीत् । लोचनादि प्रामाणिकग्रन्थ पर्यालोचनया महानुभावेनानेन भामह-ग्रन्थोपरि 'भामहविवरणनाम्नी व्याख्याप्यकारि, परन्त्वद्यावधि दौर्भाग्येन नोपलभ्यते ।

एतस्यैव मुख्यतयैव 'काव्यालङ्कारसारसंग्रहः' नामकः प्रबन्ध उपलभ्यते । ग्रन्थमेनं कर्नलजैकोबीमहोदयः १८९७ खीष्टाब्दे नागरिलिप्यां प्रस्तुतमकरोत् । ग्रन्थोऽयं (Journal of the Royal Asiatic Saciety), ८२९-८४७ पृष्ठे प्रकाशितोऽभवत् । अस्यैकं संस्करणं १९१५ खीष्टाब्दे निर्णयसागरप्रेस मुंबई-महानगरीतः प्रकाशितमभवत् । अस्मिन् संस्करणे प्रतीहारेन्दुराजस्यैका लघुवृत्ति नामिका टीकाऽप्यस्ति । श्री एन. डी. बनहट्टिमहोदयेनाऽपि ग्रन्थस्यास्य सम्पादनं कृतम् । ग्रन्थोऽयं प्रतीहारेन्दुराजस्य टीकया सह १९२५ खीष्टाब्दे 'बम्बई संस्कृत सीरीज नामकसंस्थातः प्रकाशितोऽभवत् । अयं हि महोदयः अस्य पुस्तकस्योपरि प्रस्तावना-ऽपि लिलेख तथा टिप्पण्यप्यलिखत् । उद्भटेन ग्रन्थस्यास्य विभाजनं षट्वर्गेषु कृतः । अस्य नवसप्ततिः (७९) कारिकाषु एकचत्वारिंशदलङ्काराणां लक्षणानि सन्ति तथा नवत्युदाहरणान्यपि सन्ति । अत्र टीकाकर्तुः प्रतीहारेन्दुराजस्य कथनमस्ति—'अनेन ग्रन्थकृता स्वोपरिचित कुमारसंभवैकदेशोत्रोदाहरणत्वेनोपन्यस्तः । तत्र पूर्व दीपकस्यो-दाहरणानि । तदनुसंधानाविच्छेयात्र उद्देश क्रमः परित्यक्तः । उद्देशस्तु तथा न कृतो वृत्तभङ्गभयात् ।' (पृ० १५-१६, व० सं० सी० संस्करणम्) । येषामलङ्काराणां लक्षणोदाहरणानि च अस्मिन् ग्रन्थे सन्ति तेषां क्रमशः वर्णनं निम्नलिखितरूपेणास्ति ।

**प्रथमे वर्गे—** पुनरुक्तवदाभासः, छेकानुप्रासः, त्रिप्रकाराणामनुप्रासः (परुषा -वृत्तिः उपनागरिका तथा ग्राम्य अथवा कोमला), लाटानु-प्रासः, चतुर्विधानि रूपकानि, उपमा, दीपकश्च (आदिमध्यान्ते च), तथा प्रतिवस्तूपमेति ।

**द्वितीये वर्गे—** आक्षेपः, अर्थान्तरन्यासः, व्यतिरेकः, विभावना, समासोक्तिः, अतिशयोक्तिश्चेति ।

**तृतीये वर्गे—** यथासंख्य-उत्प्रेक्षा-स्वभावोक्तयश्चेति ।

**चतुर्थ वर्गे—** प्रेयस्-रसवत्-ऊर्जस्वि-पर्यायोक्त-समाहितादयश्चेति । द्वौ प्रकारकौ उदात्तौ, तथा शिष्टस्य द्वौ भेदौ ।

**पञ्चमे वर्गे—** अपह्नुतिः, विशेषोक्तिः, विरोधः, तुल्ययोगिता, अप्रस्तुत-प्रशंसा, व्याजस्तुतिः, निदर्शना, उपमेयोपमा, सहोक्तिः, सङ्करस्य चत्वारो भेदाः, परिवृत्तिश्चेति ।

**षष्ठे वर्गे—** अनन्वयः, ससन्देहः, संसृष्टिः, भाविकः, काव्यलिङ्गः, दृष्टान्तश्चेति ।

अयमप्युल्लेखनीयोऽस्ति यदलङ्काराणां गणनायाः क्रमः प्रायः भामह एव अस्ति । भामहस्तु येषामलङ्काराणां लक्षणोदाहरणानि दत्तवान्, उद्भटेन तदतिरिक्तोऽपि

कतिपयानलङ्कारान् सङ्कलितोऽस्ति । उदाहरणस्वरूपे—पुनरुक्तवदाभासः, सङ्करः, काव्यलिङ्गः, दृष्टान्तश्चेति । अयमप्युल्लेखनीयोऽस्ति यदुद्भटः निदर्शनापदस्य स्थाने विदर्शना पदस्य प्रयोगः कृतवान् तथा तस्यैक एव भेदस्योदाहरणं दत्तवान् तथा तस्य-द्वितीयभेदस्योदाहरणाय भामहस्य शरणापन्नोऽभवत् । 'यत्र तु पदार्थसमन्वय उपमानोपमेयभावकल्पनया स्वात्मानमुपपादयति तस्य विदर्शना भेदस्योदाहरणमुद्भट पुस्तके न दृश्यते । तस्य तु भामहोदितमिदमुदाहरणम्' (भामहः ३. १४) ।

**'अयं मन्दद्युतिर्भास्वानस्तं प्रति यियास्यति ।**
**उदयः पतनायेति श्रीमतो बोधयन्नरान् ॥ इति ॥**

(द्रष्टव्य—बम्बईसंस्कृतसीरीजसंस्करणे ६२, ६७ पृष्ठे)

उद्भटस्तु भामहस्य काव्यालङ्कारोपरिः भामहविवरणं अथवा 'भामहवृत्तिः नाम्नः काऽपि टीकां लिलेख । सम्भवतयाऽनेन कारणेनोभयोर्वर्णने एवंविधं साम्यमस्ति प्रतीहारेन्दुराजस्य १३ पृष्ठे कथनमस्ति—'एकदेशवृत्तीत्यत्र हि एकदा अम्मदा ईशः प्रभविष्णुर्योवाक्यार्थस्तद्वृत्तित्वं रूपकस्याभिमतम् । विशेषक्तिलक्षणे च भामहविवरणे भट्टोद्भटेन एकदेश शब्द एवं व्याख्यातो यथेहास्माभिर्निरूपितः । तत्र विशेषक्तिलक्षणं 'एकदेशस्य विणमे या गुणान्तर संस्तुतिः । विशेष प्रथमाथासौ विशेषाक्तिमता यथा ॥' (भामहः ३.२३) एवं प्रतीतोभवति यद्भामहविवरणमेकः विस्तृतः ग्रन्थ आसीत् । तस्यैव संक्षिप्तरूपमलङ्कार सारसंग्रहोऽस्ति । यथाऽस्य नाम्नः प्रतीयते । पश्चाद्वत्तिनो लेखकाः उद्भटस्य भामह विवरणात् अनेकान्युद्धरणानि दत्तवन्तः । उदाहरणार्थं ध्वन्यालोकास्य द्वादशपृष्ठे निम्नलिखिताः शब्दाः सन्ति—

भामहोक्तं 'शब्दछन्दोभिधानार्थम्' (भामहः १, ९) इत्यभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषेशब्दानामभिधानमभिधाव्यापारो मुख्योगुणवृत्तिश्च इति ॥ लोचनस्य सप्तचत्वारिंशत्पृष्ठे 'अनुक्तनिमित्ता विशेषोक्तिः (ध्व० पृ० ४५) अस्योदा-हरणे—निम्नलिखिता कारिकाऽस्ति—

**आहूतोऽपि सहायैरेभीत्युक्त्वा विमुक्तनिद्रोऽपि ।**
**गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति ॥**

अत्र लोचनेनाक्षिप्तः—'शीतकृता खल्वार्त्तिरत्र निमित्तमिति भट्टोद्भटः ।' प्रतीतो भवति । यत् प्रतीहारेन्दुनाऽपि भामहविवरणादुद्धरणं गृहीतम् । अयं हि ब० सं० सी० संस्करणस्य ४९-५३ पृष्ठे लिखति—'एषां च शृङ्गारादीनां नवानां रसानां स्वशबदादिभिः पञ्चभिरवगतिर्भवति । यदुक्तं भट्टोद्भटेन पञ्चरूपाः रसाः' इति । तत्र स्वशब्दात् शृङ्गारा देर्वाचकाः शृङ्गारुदयः शब्दाः । 'अन्तिमे वाक्ये'—स्वशब्द स्थायिसञ्चारिविभाभिनयात्पदम्' (अलङ्कारसारसंग्रहस्य चतुर्थवर्गोपरि प्रतीहारेन्दुराजस्य टीकास्ति—हेमचन्द्रस्य (विवेकः पृष्ठ ११०) स्वशबद... स्पदम् ।' इत्येतद्व्याख्याना-वसरे यद्भटोद्भटेन पञ्चरूपाः रसाः' इत्युपक्रम्य—स्वशब्दाः शृङ्गारादेर्वाचकाः शृङ्गारादयः शब्दाः इत्युक्तं तत् प्रतिक्षिप्तम् ।' अनेन प्रतीतोभवति यद्हेमचन्द्रेणापि केवलं प्रतीहारेन्दुराजस्य शब्दमेवोद्धृतं' कृतवान् । तस्य सन्मुखे भामहविवरणं नासीत् । अत

एव तं 'रसवत्... 'स्पदम्' श्लोकस्य विषये भ्रमोत्पन्नोऽभवत् । वस्तुतः लक्षणमिदमुद्भट्टस्य स्वकीयमस्ति । तथाप्ययं तं लक्षणं भामहस्य मन्यतेस्म, यावत् भामहस्य लक्षणमस्ति—'रसवत् दर्शितस्पष्ट शृङ्गारादि रसं यथा ।' (३.६) माणिक्यचन्द्रकृतकाव्यसङ्केते मैसूरसंस्करणे २६९ पृष्ठेऽपि भ्रमोऽयं विद्यमानोऽस्ति । तेनाऽप्युक्तम्—'एतेन शृङ्गाराद्याः शब्दाः शृङ्गारादेव वाचकाः इत्युद्भटोक्तं निरस्तम् ।' अनेन प्रकारेण सोमेश्वरेणोक्तम्—(Folio 75 क) एतेन रसवत्... स्पदमित्यस्य व्याख्यायां पञ्चरूपा रसा इत्युपक्रम्य तत्र स्वशब्दाः शृङ्गारादयः शृङ्गारादेर्वाचका इति भट्टोद्भटोक्तं निरस्तम् ।' हेमचन्द्रस्य विवेकस्य १७ पृष्ठे कथनमस्ति—'एतावता शौर्यादिसदृशा गुणाः केयूरादितुल्या अलङ्कारा इति विवेकमुक्त्वा संयोग समवायाभ्यां शौर्यादीनां अस्ति भेदः, इह तूभयेषां समवायेन स्थितिरत्यभिधाय—तस्माद्गड्डुरिकाप्रवाहेण गुणाऽलङ्कारभेदः, इतिभामहविवरणे यद्भटोद्भट्टोभ्यधात् तन्निरस्तम् । माणिक्यचन्द्रेणापि तथैवोक्तम्—शब्दार्थालङ्काराणां गुणवत्समवायेन स्थितिरिति भामहवृत्तौ भट्टोद्भटेन भणनमसत् । सोमेश्वरं (Folio 88 क ) । अनेनाऽपि इत्थमेव कृतम् । समुद्रबन्धस्य कथनमस्ति (सर्वस्व० पृ० ८९)—उद्भटेन च काव्यालङ्कारविवृत्तौ सत्कवित्व विरहिताया विदग्धताया अस्थैर्यस्याशोभनस्य च प्रतिपादनाय निर्देशेन द्वयमिति वदत । का श्रीरित्यस्य श्रीरस्थिरेत्यर्थोभिहितः ।'

अलङ्कारशास्त्रोपरि उद्भटस्य गम्भीरः प्रभावोऽस्ति । अलङ्कारशास्त्रस्यायं मुख्यः प्रनिधिरस्ति । अलङ्कारशास्त्रे तस्य नाम्नः अनेकाः सिद्धान्ताः प्रचलिताः सन्ति । कतिपयमहत्त्वपूर्ण सिद्धान्तोपरि भामहेन सहास्य मतभेदाः सन्ति । उदाहरणस्वरूपे प्रतीहारेन्दुराजस्य कथनमस्ति (पृ०१)—'भामहो हि ग्राम्योपनागरिकावृत्तिभेदने द्विप्राकारमेवानुप्रासं व्याख्यातवान् । तथा, रूपकस्य ये चत्वारो भेदा वक्ष्यन्ते तन्मध्यादाद्यमेव भेदद्वितीयं प्रादर्शयत् ।' उद्भटस्तु अनुप्रासस्य त्रयो भेदाः तथा रूपकस्य चत्वारो भेदाः कृतवान् । 'भामहो हि तत्सहोक्ति उपमाहेतुनिर्देशास्त्रिविधं यथा । (भामहः ३.१६) । इतिश्लिष्टस्य त्रैविध्यमाह (प्रतीहारेन्दुः, पृ० ४७) यदोद्भटेन श्लेषस्य द्वौ भेदौ कृतौ । अत्र लोचनस्य कथनमस्ति—'भामहेन हि गुरुदेवनृपतिपुत्र विषय प्रीति वर्णनं प्रेयोऽलङ्कार इत्युक्तं... उद्भटमते हि भावालङ्कार एव प्रेय इत्युक्तः (८७ पृष्ठे) भामहस्तु परुषा, ग्राम्या तथा उपनागरिका नाम्नः त्रिसृणां वृत्तीनां प्रतिपादनं नैव कृतवान् यावदुद्भटेन कृताः (लोचनस्य षष्ठपृष्ठे दृष्टव्यम्) । उद्भटं प्रति प्रदर्शित सम्मानाय द्रष्टव्यं ध्वन्यालोकस्य १३१ पृष्ठे द्रष्टव्यं (तत्र भवद्भिरुद्भटादिभिः) अलङ्कारसर्वस्वस्त तृतीयपृष्ठे (इह तावत् भामहोद्भटप्रभृतयश्चिरन्तालङ्कारकारा ।) व्यक्तिविवेकटीकायाः तृतीयपृष्ठे—'इदं हि चिरन्तनैरलङ्कार तन्त्रप्रजापतिभिर्भट्टोद्भटप्रभृतिभिः शब्दार्थधर्मा एवालङ्काराः प्रतिपादितानाभिधाधर्मः । उत्तरवर्त्तिनोलेखकाः अनेकस्थलेषु उद्भटस्योल्लेखः कृतवानस्ति । उद्भटस्तु कतिपयविशेष सिद्धस्यन्त प्रतिपादनं कृतवान् । तथा हि विशिष्टसिद्धान्तो ह्यस्य—

१. अर्थभेदेन तावच्छब्दाः भिद्यन्ते इति भटोद्भट्टस्य सिद्धान्तः । (प्रतीहारेन्दु० ५५ पृष्ठे) अत्रार्थभेदेन तावत् शब्दाः भिद्यन्त इति ।

२. श्लेषस्य शब्दार्थभेदेन द्वौ भेदौ, किन्तूभयोरप्यर्थालङ्कारत्वम् । एतस्यैव विशिष्टरूपेण खण्डनं मम्मटेन काव्यप्रकाशनवमोल्लासे विश्वनाथेन च दर्पण दशमपरिच्छेदे च कृत—

**'शब्दश्लेषे इति चोच्यते, अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः'**

(का० प्र० ९, उ० पृ० ५२७)

३. अन्यालङ्कारयोगे श्लेषस्य प्रबलता । अत्रोद्भटस्य कथनमस्ति— **'अलङ्कारान्तर्गतां प्रतिभां जनयत्पदैः'** (वो० सी० संस्करणे पृ० ४.५४, ५८) । ध्वन्यालोकस्य ११६ पृष्ठे अस्य मतस्योल्लेखोऽस्ति । मम्मटेनाप्यस्य मतस्य खण्डनं कृतम् ।

४. वाक्यस्य त्रिप्रकारेणाभिधाव्यापारः । काव्यमीमांसायां राजशेखरस्यात्र कथनमस्ति—

**'तस्य (वाक्यस्य) च त्रिधाभिधाव्यापार इति औद्भटाः ।'**

५. विचारितसुस्थाविचारितरमणीयमित्येवं रूपेणार्थस्य द्विविधकल्पना ।

**किन्तु द्विरूप एवास्यौ विचारितसुस्थौऽविचारित रमणीयः ।**
**तयोः पूर्वमाश्रितानि शास्त्राणि तदुत्तरं काव्यानीत्यौद्भटाः ॥**

(का० मी०, पृ० ४४)

व्यक्तिविवेकटीकायां चतुर्थ पृष्ठे उद्भटस्यापि अनेन प्रकारेणैव मतं प्रदर्शितम्—**'शास्त्रेतिहास वैलक्षण्यं तु काव्यस्य शब्दार्थवैशिष्ट्यादेव नाभिधावैशिष्ट्यादिति भट्टोद्भटादीनां सिद्धान्तः ।'**

६. गुणानां सङ्घटनाधर्मत्वम् । 'सङ्घटनाया धर्मो गुणा इति भट्टोद्भटादयः ।'

(लोचन, पृ० ११४)

७. व्याकरणोपरि आधारितस्योपमायाः उत्तरवर्त्तिभेदानां निरूपणं उद्भटेन सविस्तरं कृतं काव्यप्रकाशेऽप्यस्य वर्णनमस्ति (प्रथम वर्गः क, साहित्यदर्पणस्य १०५ पृष्ठेऽपि च द्रष्टव्यः)

८. उद्भटस्य मतमस्ति—शृङ्गारादिरसानामभिव्यक्तिः तत्तच्छब्दद्वारेण तथा चतुरन्यप्रकारैर्भवति—'रसवत्... स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्' । किञ्च मम्मटमतानुसारेण विभिन्न रसानामभिव्यक्त्यर्थ शृङ्गारादिशब्दानां प्रयोगः दोषोऽस्ति । द्र० काव्य प्र० ७।१२ तथा १४, व्यभिचारिरसस्थायिभावानां शब्दवाच्यता... रसेदोषाः स्युरीदृशाः ॥

कर्नल जैकोवमहोदयस्य मतानुसारेण निम्नलिखितश्लोकः उद्भटस्यास्ति । तदनुसारेणोद्भटः काव्यस्यात्मा रसं मन्यते—

**रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः ।**
**कथ्यते तद्रसादीनां काव्यात्मत्वं व्यवस्थितम् ॥**

(See Journal of Royal Asiatic Society 1897 page 847) किञ्चास्य मतस्य विरुद्धे कतिपयाः प्रमाणाः सन्ति । अतो न मान्यमिदमतम् । यतः—**उद्भटादिभिस्तु गुणालङ्कारणां प्रायशः साम्यमेव सूचितम् । ...तदेवमलङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम् ।**

एतत् प्रणीतो भामहविवरणनामा व्याख्याग्रन्थो लोचनादौ स्मर्यते । भट्टाद्भट्टः प्रमुखतया 'अलङ्कारसारसंग्रहः' नामकमलङ्कारग्रन्थजग्रंथ, अस्योपरि प्रतीहारेन्दुराज-नामकेन विदुषा विरचिता वृत्तिरद्याप्युपलभ्यते । तस्यां वृत्तौ प्रतीहारेन्दुराजस्य अनेन ग्रन्थकृता भट्टोद्भटेन स्वोपरिचित कुमारसंभवैकदेशोऽत्रालङ्कारसारसंग्रहे उदाहरणत्वेन उपन्यस्तः इतिलेखेन ज्ञायते यत्—कुमारसंभवनामा कालिदासीयकुमारसंभवव्यतिरिक्तः कश्चित् काव्यप्रबन्धोऽप्यनेन विरचित इति । माणिक्यचन्द्रसरस्वतीतीर्थभट्टवामन प्रभृतिभिर्टीकाकृद्भिरुदाकृतः—

**या शैशिरी श्रीतपसा मासेनैकेन विश्रुता ।**
**तपसा तां सुदीर्घेण दूराद्विदधती मतः ॥**

इत्यत्र गौरीस्तुतौ प्रयुक्तः 'तपसा' इति माघमास कृच्छ्चन्द्रायणरूपार्थद्वये श्लिष्टेन विशेषणे विशेषणेन नौपम्या क्षेत्रे जायमानस्य व्यतिरेकस्योदाहरणत्वेन समुपन्यस्तः कश्चित् श्लोकोऽपि समुपलभ्यते ।

उद्भटस्य यस्मात् कुमारसंभवादुदाहरणानि सन्ति, तस्मात् प्रतीतो भवति यत् कालिदासकृत कुमारसंभव इव कमपि काव्यमासीत् । उभयोः रचनयोर्मध्ये पर्याप्तं साम्यमस्ति । न केवलं शब्दे भावे च साम्यमस्ति, अपितु घटना क्रमेष्वपि परस्परं साम्यमस्ति । उदाहरणस्वरूपे दृष्टव्यम्—

**'प्रच्छन्ना शस्यते वृत्तिः स्त्रीणां भावपरीक्षणे ।**
**प्रतस्थे धूर्जटिरतस्तनुं स्वीकृत्य वाटवीम् ॥'** (उद्भटः २, १०)
**'निवेशकश्चिज्जटिलस्तपोवने' इत्यादि;** (कुमारसंभवे ५-३३)
**अपश्यच्चातिकष्टानि तप्यमानां तपांस्युमाम् ।**
**असम्भाव्यप्रतीच्छानां कन्यानां का परागतिः ॥** (उद्भटः २, १२)
**इयेव... पतिश्च तादृशः ।** (कुमार० ५-२)
**'शीर्णपर्णाम्बु वाताशकष्टेऽपि तपसि स्थिताम् ।'** (उद्भटः २.१७)
**'स्वयं विशीर्णद्रुमपर्णवृत्तिता' इत्यादि ।** (कुमार० ५.२८)

अलङ्कारशास्त्रविकासक्रमे विचार्यमाणे राजानकरुय्यक उद्भटभट्टस्य मतविकेचयन् आह—**'उद्भटादिभिस्तु गुणालङ्काराणां प्रायशः साम्यमेव सूचितम्, विषयमात्रेण भेदप्रतिपादनात् सङ्घटनाधर्मेण चेष्टेः ।'** इति ।

# वामनस्तदीयं काव्यालङ्कारसूत्रञ्च

प्रसिद्ध आलङ्कारिको वामनः काश्मीरे जन्मासमाद । संस्कृतकाव्यशास्त्रस्य क्षेत्रेऽस्याचार्यस्यातिविशिष्टं स्थानमास्ते । अयं हि रीतिसम्प्रदायसंस्थापक आचार्यो-वर्त्तते । अयमुद्भटस्य प्रतिद्वन्दी आस्ते । उद्भटस्तु काव्यस्यैकदेशे अलङ्कारे एव ग्रन्थं लिखित्वा महतींख्यातिमलभत् । किन्तु आचार्यो वामनः आलोचनाशास्त्र समेषां तत्त्वानां त्वसाधारणेन वैदुष्येनालोकनमकार्षीत् । अनया दृष्ट्या वामनस्य तुलना अलङ्कारसम्प्रदायस्य संस्थापकेन भामहेन साकं कर्त्तुं शक्यते । आचार्यो वामनः प्रत्यपीपदत् यत् रीतिरेव काव्यस्यात्मा वर्तते ।

उद्भटवामानावुभावेव काश्मीरवासिनौ आस्ताम् । अथापि उभावेवान्योन्यस्य विषये मौनकलितवन्तौ आस्तामिति आश्चर्यस्य विषयः । तदूद्भटोवामनस्य सिद्धान्तस्य उल्लेखमकरोत् स्वकीये ग्रन्थे न वा वामनः उद्भटस्य सिद्धान्तस्योल्लेखमकार्षीत् काव्यालङ्कार सूत्रवृत्तौ ।

वामनो जयापीडनाम्नः काश्मीरराजस्य राष्ट्रकूटवंशयस्य गोविन्दतृतीयस्य च सभापण्डित सचिवान्यतमस्य श्चासीत् । जयापीडस्य शासनकालश्च ७९४-८१३ खीष्टाब्दः मन्यतेस्म, अतो वामनस्य समयोऽष्टमशतकस्य खीष्टस्य चरमभागो नवम-शतकस्यादि भागश्च निश्चीयते ।

अभिनवगुप्तो वामनं स्वग्रन्थे लोचने 'वामनाभिप्रायेणायमाक्षेपः' इति स्मरति, अतोऽभिनवगुप्त पूर्ववर्त्तिता, वामनश्च कादम्बरीम्, उत्तररामचरितम्, शिशुपालवधञ्चोदा-हरति, अतो वाण-भवभूति-माघ परवर्त्तिता, एवञ्च तन्मध्यकालवर्त्तितेत्यपि पूर्वोक्त समयवर्त्तित्वं वामनस्य समर्थयते ।

आचार्यो वामनः स्वकीये काव्यालङ्कारसूत्रवृत्तिग्रन्थे भवभूतेरेकं पद्यं रूपका-लङ्कारस्योदाहरणरूपेणोद्धृतवान् । अत एव वामनो भवभूतेः पश्चाद्वर्त्ती वर्त्तते इति निश्चीयते । भवभूतेः कालं विचारकाः ७०० खीष्टाब्दतः ७५० खीष्टाब्दं यावत् स्वीकुर्वन्ति । अभिनवगुप्तस्य समीक्षया निश्चीयते यत् आनन्दवर्धनाचार्यात् पूर्ववर्त्ये-वासीत् आचार्यो वामनः । आनन्दवर्धनाचार्यो ध्वन्यालोके निम्नाङ्कितं श्लोकमुद्धृतवान्—

**'अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।**
**अहो दैवगतिश्चित्रा तथापि न समागमः ॥'**

अत्र लोचनकारो लिखति यत् अस्मिञ्छ्लोके वामनाचार्यानुसारेणाक्षेपालङ्कारो वर्त्तते, किन्तु भामहमतानुसारेणात्र समासोक्तिरलङ्कारः । इयमेवाश्रयं हृदिकृत्वा ग्रन्थकारः समासोक्त्याक्षेपयोरुभयोरेवालङ्कारयोः उदाहरणं प्रस्तुतवान् । इत्यभिनवगुप्तपादा-चार्यानुसारेण आचार्यो वामनः आनन्दवर्धनाचार्यस्य पूर्ववर्त्ती वर्त्तते । अतएव वामनाचार्यस्य कालः ७५० ईसवी स्वीक्रियते ।

काश्मीरनरेशस्य जयापीडस्य समयोऽष्टमशतकस्यान्तिमो भागः निश्चितः । वामनोऽयं तस्य सचिवः आसीत् तथा चोक्तम्—

**'मनोरथः शङ्खदत्तश्चटकः सन्धिमास्तथा ।**
**बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥'**

एवञ्च वामनस्याप्ययमेव समयः निर्णीयते । अपरञ्चैतत्सूत्रवृत्तौ तृतीयाधिकरणे द्वितीयाऽध्याये 'शूद्रकादिरचितेषु प्रबन्धेषु' इत्यादिना मृच्छकटककर्त्तुः शूद्रकस्य कवेर्नाम समुपलभ्यते । दृश्यते च दृष्ट्वैकासन सङ्गते (स्थितौ) प्रियतमे' इत्यादि अमरुशतक पद्यानि मृच्छकटिके वाराहमिहिरसिद्धान्तस्योल्लेखो नास्ति । खीष्ट्रस्य ५८९ शतके वाराहमिहिरस्य मृत्युरतः षष्ठशतकात् पूर्ववर्त्ती एव मृच्छकटिककर्त्ताशूद्रक इत्यैतिहासिकानां मतम् । तत्रैवामरुककवेर्नामाऽपि विद्यते । एकविंशत्यधिकसप्तनशतक खीष्ट्राब्दे (७२१ ई०) काल्पीनामक ग्रामे ('जिल्हा' कड़पा) द्रविड़कुले शिवगुरुशर्मणोभार्यायां लब्धजन्मा शरीरिकभाष्यादिकर्त्ता भगवान् शङ्कराचार्यः परकाय प्रवेशविद्यया कस्यचिन्मृतस्यामरुनाम्नो राज्ञः शरीरं प्रविश्य 'अमरुशतकं' काव्यं चकारेति लोकप्रसिद्धम् । उक्तञ्चामरुशतकटीकां कुर्वतागुर्जरदेशीयेन रानेपुरवासिना (राधेरग्रामवासिना) पुरोहितापनाम्ना देवशङ्करेणाऽपि—

**क्व मे मन्दबुद्धिः क्व च रसमयं शङ्कर वचः ।**
**तथापि व्याख्यातुं तरकामनसः शङ्करकृतिम् ॥ इति ॥**

एतेनांप्युक्त समय एव वामनस्येति स्वीकारे न काचन विप्रतिपत्तिः—

**वामनाचार्येण प्रणीतस्य ग्रन्थस्य नाम काव्यालङ्कारसूत्रमास्ते ।**

ग्रन्थोऽयं सूत्रशैल्यां लिखितो वर्तते । अस्य ग्रन्थस्य त्रयोभागाः सन्ति—सूत्रभागः, वृत्तिभाग उदाहरण भागश्चेति । अत्रोपन्यस्तानि उदाहरणानि प्रामाणिकेभ्यो-ग्रन्थेभ्यः स्वीकृतानि सन्ति । (अस्य ग्रन्थस्य वृत्तेरपि प्रणयनं वामन एवाकार्षीत् । तथाचोक्तं वृत्तेर्मङ्गलाचरणे वामनेन—

**'प्रणम्य परमं ज्योतिर्वामिनेन कविप्रिया ।**
**काव्यालङ्कारसूत्राणां स्वेषां वृत्तिर्विधीयते ॥'**

प्रतिहारेन्दुराजः अभिनवगुप्तपादश्चापि ग्रन्थस्यास्य वृत्तिं वामनेन कृतां स्वीकुरुतः। यद्यपि ग्रन्थोऽयमतीव महत्त्वपूर्णमासीत् किन्तु मध्य युगेऽस्य प्रचारो लुप्तप्रायोऽभूत् । अभिधावृत्तिमातृकायाः प्रणेता मुकुलभट्टः कुतश्चिदस्य ग्रन्थस्यादर्श प्रतिं प्राप्योद्धारं कृतवान् । तदुक्तं सहदेवेनास्य ग्रन्थस्य टीकायाम्—

**वेदितासर्वशास्त्राणां भट्टोभून्मुकुलाभिधाः ।**
**लब्ध्वा कुतश्चिदादर्श भष्टाम्नायं समुद्धृतम् ॥**
**काव्यालङ्कारशास्त्रं यत् तेनैतत् वामनोदितम् ।**
**असूया तत्र कर्त्तव्या विशेषालोकिभिः क्वचित् ॥**

अस्य ग्रन्थस्यादर्शप्रति प्राप्तानन्तरमानेकवारमस्य सम्पादनमभवत् । १९०९ खीष्टाब्दे वाणीविलास मुद्रण यन्त्रालयात् प्रकाशितं संस्करणमतीवोत्कृष्टमस्ति । डॉ० केपलरमहोदयस्तु १८७५ खीष्टाब्देजर्मन प्रस्तावनया सह 'जेनात:' संस्करणमेकं प्रकाशितवान् । प्राचीनग्रन्थकारः प्रतीहारेन्दुराजोऽपि सूत्रात् वृत्तेश्चोद्धृतपाठान् वामनकृत एव मन्यते (द्र० ३.११.२ एवं ४.३.८ पृ० ८१) । काव्यालङ्कारसूत्रे 'युवतेरिव-रूपव्यङ्गकाव्यं तथा 'यदि भवतीत्यादि' श्लोकाः ३.१.२ उपरि समागताः । प्रतीहारेन्दुराजः ७६ पृष्ठे रचनेयं वामन कृतं मन्यते तथा—'लक्षणायां हि झगित्यर्थ प्रतिपत्ति क्षमत्वं रहस्यमाचक्षते इत्यादिपाठः काव्यालङ्कारस्य वृत्तौ (४.३.८) उपरि वर्त्तते । वृत्तौ सङ्कलितानि अधिकतरोदाहरणानि सर्वमान्य ग्रन्थेभ्य एवं गृहीतानि सन्ति। वामनस्तु स्वयमेव स्वीकृतवान्—

**एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः ।**
**शब्दवैचित्र्य गर्भेऽयमुपमैव प्रपश्चितः ॥** (४.३.३३१)

वामनस्य वृत्तौ प्रायेण पञ्चाशदधिकद्विशतं श्लोकाः अथवा श्लोकांशाः उद्धृताः सन्ति । अयं हि प्राचीनः प्रामाणिकश्च ग्रन्थकारोऽस्ति । अतोऽनेन प्रदत्तोद्धरणैः विभिन्नग्रन्थकाराणां समयनिर्धारणे विशिष्टमहत्त्वमस्ति ।

वामनप्रणीतोऽयं काव्यालङ्कारसूत्रग्रन्थः पञ्चसु अधिकरणेषु विभक्तो वर्त्तते । ग्रन्थेऽस्मिन् न केवलं सूत्रशैल्याः अनुकरणमस्ति, अपितु तेषामनेकशब्दानां प्रयोगोऽप्यस्ति । प्रत्येकस्मिन्नधिकरणे कतिपयेऽध्यायाः सन्ति । सम्पूर्णेऽस्मिन् ग्रन्थे पञ्चाधिकरणानि, द्वादश अध्यायाः, एकविंशत्युत्तराणि, त्रिशतानि सूत्राणि सन्ति । प्रतीतोभवति यद्वा अनेनाध्यायानां एवं अधिकरणानाञ्च पारस्परिक सम्बन्धस्य परिवर्त्तनं कृतम् । प्रायोऽनेन कौटिल्यस्य अर्थशास्त्रस्य एवं वात्स्यायनस्य च कामसूत्रस्यानुकरणं कृतम् । प्राचीनसूत्रकारः स्वकीयग्रन्थान् अध्यायेषु विभक्तः कृतवन्तस्तथाध्यायान् अधिकरणेषु चेति ।

प्रथमे शारीरनामकाधिकरणे निम्नलिखितविषयाणि निरूपणमस्ति । तत्र प्रथमं काव्यस्य प्रयोजनस्य अधिकारिणश्च वर्णनमास्ते । रीतेः काव्यात्मत्वं प्रतिपाद्य, रीतेः त्रयाणां भेदानां काव्यस्थानेकेषां प्रकारणाञ्च वर्णनमस्ति कृतमित्यत्र । तिस्रः रीतयश्च-वेदर्भी, गौड़ी, एवं पाञ्चाली चेति । काव्यहेतुस्तथा तस्य प्रकारश्चेति ।

द्वितीयेऽधिकरणे पददोषाणां, वाक्यदोषाणां, वाक्यार्थदोषाणञ्च वर्णनं कृतमास्ते ।

तृतीये गुणविवेचनाख्येऽधिकरणे—गुणालङ्कारयोः पार्थक्यस्य विवेचनं कृत्वा दशानां शब्दगुणानां दशानां चार्थगुणानां विवेचनं कृतं वर्त्तते ।

चतुर्थेऽलङ्कारिकाऽभिधेऽधिकरणेऽलङ्काराणां विस्तृतं विवेचनं कृतमास्ते । तत्र यमकअनुप्रासोपमा तथा तस्य षड्दोषास्तथा न्यूनाधिकरूपेणोपमायामुपरि आश्रितानामन्यालङ्काराणामपि निरूपणमस्ति ।

पञ्चमे प्रायोगिकेऽधिकरणे कविपरम्पराणां प्रतिपादनमस्ति । सन्दिग्धानां शब्दानां शब्दशुद्धेश्च समीक्षाकृता वर्त्तते ।

रीतिसम्प्रदायसंस्थापकस्य वामनस्य कानिचन विशिष्टानि मतानि सन्ति तानि संक्षेपेणाधस्ताद् उद्धृत्यन्ते—

१. रीते काव्यत्मत्वप्रतिपादनम्—काव्यशास्त्रे रीतिः सिद्धान्तोऽतीव प्राचीनो वर्त्तते किन्तु रीतेः काव्यात्मत्वं वामन एव प्रतिपादयामास नान्यः कश्चनाचार्यः। एतात्मादेव हेतोः रीतिसम्प्रदायस्य संस्थापको मन्यते वामनः।

२. भामह-दण्डिनौ रीतेः द्वयोरेव वैदर्भीगौड्योः प्रतिपादनं चक्रतुः, किन्तु वामना तृतीयायाः तयोरूपमयोमध्ये विद्यमानायाः पाञ्चाल्याश्चाऽपि रीतेः प्रतिपादनमकार्षीत्।

३. गुणालङ्कारौ उभावेव काव्यस्य शोभाधायकतत्त्वरूपेण प्राक् स्वीक्रियेतेस्म। वामन एव सर्वप्रथमं गुणालङ्कारयोः पार्थक्यं चकार।

४. वामनात् पूर्वं काव्यस्य दश एव गुणाः स्वीक्रियन्ते स्म। वामनः स्वप्रतिभायाबलेन त्रिंशतिगुणानां कल्पनां कृत्वा तेषां विशदं विवेचनं कृतवान्। वामनाभिमतानां शब्दगुणाः दश वर्त्तन्ते दशैव च सन्ति अर्थगुणाः।

५. अयमाचार्यः उपमामेव मुख्यालङ्काररूपेण स्वीकृतवान्। एतमतानुसारेण सर्वेऽलङ्काराः उपमाया एव प्रपञ्चभूताः सन्ति।

६. वामनः आक्षेपस्य भेदद्वयं स्वीकरोति। काव्यप्रकाशकारस्तयोरेकं प्रतीपालङ्काररूपेण स्वीकरोति।

७. वामनः काव्ये रसस्य सत्तायाः पक्षपातीवर्त्तते। अलङ्कारसम्प्रदायस्याचार्याः रसं काव्यस्य बाह्यसाधनरूपेण स्वीकरोति।

अत्र विचार्यते—वामनस्तु (वा० २.१.९२) अष्टाध्यायी-क्रमस्य नैवानुकरणं कृतवान्। उदाहरणस्वरूपे पाणिनेः १.२.६७ तथा ४.१.४८ सूत्राभ्यां ज्ञातो भवति यत् 'रुद्रश्च रुद्राणी च' अस्मिन्नर्थे एकशेषं कृत्वा 'रुद्रौ' शब्दस्य नैव प्रयोगः कर्त्तव्यः। (५.२.१) सूत्रस्य वृत्तौ तस्य कथनमस्ति यत् इन्द्रौ, भवौ, शर्वौ, इत्यादि शब्दानां प्रयोगो नैव कर्त्तव्यम्। प्रतीतोभवति यत् वामनस्यास्मिन् विचारे भामहस्य निम्नलिखितश्लोकः परिलक्षितोभवति—

**सरूपशेषं तु पुमान् स्त्रियाः यत्र तु शिष्यते।**
**यथाह वरुणाविन्द्रौ भवौ शर्वौ मृडाविति॥** (६.३२)

वामनस्य कथनमस्ति (५.२.१५) यद्यपि पाणिनेः 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २.१.५६ सूत्रोपरि विचारयेत्तर्हि विम्बाधरस्य स्थाने अधरविम्बं भवितव्यं किन्तु यदि तं मध्यमपदलोपी समास एव मान्योभवेत् 'तर्हि बिम्बाधरः' शब्दोऽपि शुद्धो भवितुं शक्यते। (विम्बाकारोऽधरः विम्बाधरः)

वामनस्तु येषां ग्रन्थानां वा, ग्रन्थकाराणां नामोल्लेखपूर्वकं स्मारितवान् ते निम्नलिखिता: सन्ति । कविराज: (४.१.१०), कामन्दकीनीति: (४.१.२) कामशास्त्रम्, छन्दोविचिति:, नाममाला (१.३.५), विशाखिल: (कलाशास्त्रस्य लेखक: (१.३.७) शूद्रक: (श्लेषगुण: ३.२.४), हरिप्रबोध: (४.१.३), ३.२.२ सूत्रोपरि वामनस्य कथनमस्ति—'साभिप्रायत्वं यथा—**सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवाजातो भूपतिराश्रय: कृतधियां दिष्ट्या कृतार्थश्रम:** ॥ आश्रय: कृतधिपामित्यस्य (च सुबन्धु ५.१) न सुबन्धुसाचिव्योपक्षेपपरत्वात् साभिप्रायत्वम् ॥' अत्र विवादोऽस्ति उपर्युक्तश्लोके निर्दिष्टे कोऽयं चन्द्रगुप्त:? तथात्र किमस्ति वास्तविक: पाठ:?—वसुबन्धु साचिव्य: या च सुबन्धु साचिव्यो । (Indian antiquary part 40 (1911). page 170) द्रष्टव्य:, तथाग्रे (प्रो० पाठक:) २६४ पृष्ठे (डॉ० हार्नलमहोदय:) (Indian antiquary part 41, (1912, page 1) । (प्रो० डी० आर० भण्डारकर) वसुबन्धुपाठस्य पक्षे एवास्ति (Indian antiquary 1911 page 312) । (प्रो० नरसिंहचर:) (Indian Historical Quarterly, part 1 pages 261 Indian Antiquary 1912, page 15) (म.म. हरप्रसादशास्त्री च सुबन्धुपाठस्य पक्षे एवाऽस्ति ।

पूर्वोक्तश्लोके कस्यैतिहासिक तथ्यस्योल्लेखोऽस्ति । निर्णयोऽयं अस्योपरि-निर्भरोऽस्ति यत्कं पाठं स्वीकरणीयमस्ति । यदि वयं 'वसुबन्धुसाचिव्य:' पाठं स्वीकुर्मस्तर्हि उल्लेखोऽयं चन्द्रगुप्त-समुद्रगुप्तवसुबन्धूनां सम्बद्धो भविष्यति । यदि च सुबन्धु साचिव्य: पाठो मान्यो भवति तर्हि उल्लेखोऽयं चन्द्रगुप्तमौर्यस्तस्य पुत्र: विन्दुसार: तथा तन्मन्त्री सुबन्धो: सम्बन्धिन एव स्वीकर्त्तव्य: । डॉ० शर्मामहोदयस्य मतानुसारेण वामनद्वारेणोद्धृतोऽयं श्लोक: तथा मेहरौलीस्तम्भोत्कीर्ण: लेखस्य तृतीयश्लोके अत्यधिकं साम्यमस्ति । अभिनवभारत्यां (Gayak Bar Oriental Series part three, 172 पृष्ठे निम्नलिखित: पाठोऽस्ति । तत्रास्य बहुतरव्यापिनो बसुगर्भस्वप्नायित तुल्यस्य नाट्यायितस्योदाहरणं महाकविसुबन्धुनिबद्धो वासवदत्तावास्य धाराख्य: समस्त एव प्रयोग: । तत्र हि बिन्दुसार: प्रयोज्यवस्तुत: उदयनचरिते सामाजिकी कृतोऽपि इत्यादि: । द्र० अ० बो० वा० रो० ए० सो०, २३ भाग, १८५-१८७ पृष्ठे प्रो० पाठक महोदयस्य कथनमस्ति यद् वामनस्य प्रस्तुतश्लोके चन्द्रगुप्त द्वितीयस्य (४१३-४५५ खीष्ट्राब्दे) पुत्र: कुमारगुप्तस्योल्लेखोऽस्ति । परमार्थस्य (४९९-५६९ खीष्ट्राब्दे) कथनमस्ति यद्वसुबन्धो: मृत्यु: अशितिवर्षस्यावस्थायामभवत् । तस्मिन् काले बालादित्यस्तत्र शासक: आसीत् । अत: सुबन्धो: समय: ४२०-५०० खीष्ट्राब्दो मन्तव्य: । (Journal of Royal Asiatic Society 1905, Pages 33-53) बाणेन हर्षचरितस्याष्टमे सर्गे वसुबन्धुकृतस्याभिधर्मकोशस्योल्लेख: कृतोऽस्ति । अस्मिन् विषयेऽपि नवाभिधानाय द्रष्टव्यम्—(Indian Historical Quaterly Part 18, Pages 373-75; Part 15 pages 69-72, part 20, pages 85 and 366.)

वामन: येषां ग्रन्थानामुल्लेख: कृतवान् तेषां ग्रन्थानां नाम यद्यपि ग्रन्थकारो नैव प्रदत्तवानस्ति । ते सन्ति—अमरुकशतकम्, उत्तररामचरितं (इयं गेह लक्ष्मी... ४.३.

६) कादम्बरी, किरातार्जुनीयम्, कुमारसम्भवम्, मालतीमाधव-नाटकम्, मृच्छकटिकम् (द्यूतं हि नाम पुरुषस्या सिंहासनं राज्यम्, ४.३, २३) मेघदूतम्, रघुवंशमहाकाव्यम्, विक्रमोर्वशीयम्, वेणीसंहारः, शाकुन्तलम्, शिशुपालवधमहाकाव्यम्, हर्षचरितम्, (यासां बलिः । श्लो० सं० (५,१.३), मृच्छकटिकं (१.९) एवं तथाकथित भासकृत चारुदत्ते (१.२) द्वयोरपि काव्ययोरेक एव श्लोकोऽस्ति । 'यो भर्त्तुपिण्डस्य कृते न युद्ध्यते' श्लोकोऽयं वामनेन व्याकरणदृष्ट्याऽशुद्धोदाहरणास्य प्रमाणे प्रदत्तः । श्लोकोऽयं कौटिल्यस्य अर्थशास्त्रे तथा प्रतिज्ञा यौगन्धरायणेऽप्यस्ति—

**'शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।**
**काशपुष्पलवेने दंसाश्रुपातं मुखं कृतम् ॥'**

श्लोकोऽयं वामनः व्याजोक्तेरुदाहरणस्वरूपे प्रस्तुतमकरोत् । अलङ्काराणां सम्बन्धेऽप्यन्याचार्याणं मतानि प्रस्तुतमकरोत्—उत्प्रेक्षैवातिशयोक्तिरिति केचित्' (४.३. १०) अर्थान्तरन्यासस्य हेतुरूपत्वाद्धतोश्चान्वयव्यतिरेकात्मकत्वान्न ततः पृथग् व्यतिरेक इति केचित् ४.३, २१; उपमानाधिक्यात्तदपोह इत्येके ४,२,१८; अनयोर्दोषयोर्विपर्याख्य यस्य दोषस्यान्तर्भावान्न पृथगुपादानम् । अतएवास्माकं मते षड्दोषा इति ४.२.११ ।

वामनः रीतिसंम्प्रदायस्य प्रवर्त्तकोऽस्ति । तन्मते काव्यास्यात्मारीतिरस्ति । (रीतिरात्मा काव्यस्य । विशिष्टापदरचनारीतिः । विशेषोगुणात्मा । (१.२.६-८) । वामनस्य कतिपयान्यविशेषताः निम्नलिखिताः सन्ति । (१) गुणालङ्कारयोः परस्पर-भेदस्य प्रतिपादनं (काव्शोभायाः कर्त्तारो धर्मां गुणाः । तदतिशयहेतवचस्त्वलङ्काराः । ३.२.१-२) । मम्मटभट्टस्तु काव्यप्रकाशे (८.४७१ पृष्ठे) अस्य मतस्य खण्डनं कृतवान् । (२) रीतेस्त्रयो भेदाः वैदर्भी, गौड़ी, पाञ्चाली चेति । (३) वक्रोक्तेः अर्थालङ्कारेषु गणना तथा 'सादृश्याल्लक्षणा' याः स्वरूपे तस्य लक्षणम् । (४.३.८ उन्मिमीलकमलं सरसीनां कैरवं च निमिमीलमुहूर्तात् । अत्र नेत्रधर्मावुन्मीलननिमीलने सादृश्याद्विकाससङ्कोचौ लक्षयतः) । (४) विशेषोक्तेर्विचित्र लक्षणं एकगुणकविकल्प-नाया साम्यदार्ढ्यं विशेषोक्तिः (४.३-२३) । जगन्नाथाद्यलङ्कारिकानां मते उदाहरणमिदं रूपकस्यास्ति । (५) आक्षेपनामकस्यालङ्कारस्य द्वावर्थौ स्तः । 'उपमानस्य आक्षेपः प्रतिषेधः तुल्यकार्यार्थस्य नैरर्थक्य विवक्षायामाक्षेपः, उपमानस्याक्षेपतः प्रतिपत्तिरित्यपि सूत्रार्थः' यन्मम्मटस्यवैवमत्यालङ्कारिकानां मते द्वौ स्वन्त्रतावलङ्कारौस्तः—प्रतीपस्था-समोक्तिः—

काव्यालङ्कारसूत्रस्य टीकाकर्त्तुः सहदेवस्य कथनानुसारेण ग्रन्थोऽयं लुप्तोऽभवत् । किन्तु, मुकुलभट्टः केनाऽपि प्रकारेणास्य ग्रन्थस्यादर्शं प्रतिं प्राप्य परम्परायाः रक्षामकरोत् ।

**वेदिता सर्वशास्त्राणां भट्टोऽभून्मुकुलाभिधः ।**
**लब्ध्वा कुतश्चिदादर्शं भ्रष्टाम्नायं समुद्धृतम् ॥**
**काव्यलङ्कारशास्त्र यत्तेनैतत् वामनोदितम् ।**

**असूया तत्र कर्त्तव्या विशेषालोकिभिः क्वचित् ॥**

(काव्यमीमांसायां, पृ० ११७)

राजशेखरेण स्वकाव्यमीमांसायां मङ्गलनामकस्य केनाप्यलङ्कारिकस्योल्लेखः कृतोऽस्ति तथा तस्योद्धरणमपि प्रदत्तम् । तथाहि—'ते च द्विधा अरोचकिनः सतृणाभ्यवहारिणश्च इति मङ्गलः । 'कवयोऽपि भवन्ति इति वामनीयाः ।' (पृष्ठ १४) अत्र वामनस्य कथनमस्ति—'अरोचकिनःसतृणाभ्यवहारिणश्च कवयः (१,२,१) अस्य कथनस्य वामनेन स्ववृत्तौ निम्नलिखिता व्याख्या प्रदत्ताऽस्ति—'अरोचकिसतृणाभ्यवहारिशब्दौ गौणार्थौ कोऽसावर्थः—विवेकित्वमविवेकत्वं चेति ।' अत्र 'अरोचकिनः' पदस्यार्थौऽस्ति 'सुधाहीनोजनः' अर्थान्तेजनाः येषां रुचिः विकृतास्ति 'सतृणाभ्यवहारिणः' अस्यार्थौऽस्ति ते जनाः ये तृणोऽप्यदन्ति, अर्थात् ते जना ये कमपि भेदभावं विना समस्तसाहित्यिकप्रकाराणां स्वागतं कुर्वन्ति । राजशेखरेण ११, १६, २० पृष्ठे मङ्गलस्य मतमुद्धृतम् । तस्योपहारः रोचकोऽस्ति । तत्र काव्यपाकस्य विषये प्रश्नोऽपि मङ्गलस्य मतानुसारेण पाकस्यार्थः परिणामोऽस्ति, अयमाशयः नाम्नि क्रियायाञ्च व्याकरणजन्याशुद्धिः । वामनसम्प्रदायस्य मतानुसारेण पाक-पदस्यार्थो भवति, कविना प्रयुक्तशब्दानां स्थानेऽन्यशब्दानां प्रयोगे काठिन्यं किम्वा असम्भाव्यं भवति । राजशेखरस्तु तदाहुः शब्देन सह वामनस्य श्लोकद्वयमुद्धतवान् । इमौ द्वौ वामनस्य वृत्तौ । (१.३.१५) 'अत्र श्लौकौ' शब्देन सह प्रतिपन्नौ स्तः । अस्य प्रसङ्गस्य सम्पूर्णपाठः काव्यमीमांसायाः समानीतोऽस्ति—'कः पुनरयं पाकः इत्याचार्यः । परिणामः इति मङ्गलः । कः पुनरयं परिणामः—इत्याचार्याः । सुपोतिङाञ्च श्रवः सैषा व्युत्पत्तिः, इति मङ्गलः । सौशब्दमेतत् । पदनिवेश निष्कम्पता पाकः— इत्याचार्याः । तदाहुः । आतापोद्धरणे परिग्रहादपि पदस्थैर्य पर्यवसायस्तस्मात् पदानां परिवृत्तिवैमुख्य पाकः—इति वामनीयाः । तदाहुः । यत्पदानि त्यजन्त्येव परिवृत्ति सहिष्णुताम् । तं शब्दन्यायनिष्णाताः शब्दपाकं प्रचक्षते । (काव्यमी०, पृ० २०)। मुद्रितपुस्तके आधानोद्धरणे, पदस्य तथा शब्दन्या सः पाठोऽस्ति (वृत्तिः १.३ १५) सौशब्दस्य तुलनायाम्—भामहः (१.१४-१५) । तथा द्रष्टव्यः—अग्निपुराणः, ३४६, २२ 'उच्चैः परिणतिं काऽपि पाक इत्यभिधीयते । मृद्वीकानारिकेलाम्बुपाकभेदाच्चतुर्विधः । आदावन्ते च सौरस्यं मृद्वीका पाक एव सः ।' दण्डी ओजसः लक्षणं समासबहुलरूपेण कृतवान् । यथा—

**ओजः समासभूयस्त्वमेतदगजस्य जीवितम् ।**
**पद्येप्यदाक्षिणाव्यामाभिदमेकं परायणम् ॥** (काव्यादर्शः१.८०)

अतः वामनस्तु ओजसः व्याख्या 'गाढबन्धत्वम्' (३.१.५) तथा अर्थस्य प्रौढिः (३.२.२) ओजः कथ्यते । माणिक्यचन्द्रस्तु काव्यप्रकाशस्य सङ्केते (मैसू० संस्करणस्य पृ० ३९३) अलिखत्—

दण्डयुक्तं समासदैर्घ्यमोज इत्यपि न । रीतित्रयेऽप्योजसः साधारणत्वात् गौडीया निर्देशो न युक्तमानिति वामनमङ्गलौ । का० प्र० सङ्केतः पृ० २९२ । वामन-मङ्गलयोः परस्परसम्बन्धविषये किमपि कथनमसंभवः प्रतीयते । राजशेखरस्तु वामन

सम्प्रदायहेतवे 'वामनीयाः' लिखति तथा माणिक्यचन्द्रस्तु 'वामन-मङ्गलौ' निर्दिशति, न तु मङ्गलवामनौ, अनेनोद्धरणेन स्पष्टोभवति वामनः मङ्गलात् पूर्ववर्त्ती आसीत् । अतः वामनस्य समयः ९०० ख्रीष्टाब्दात् पूर्वमेव निश्चियते ।



## रुद्रटस्य काव्यालङ्कारः

वामनस्यानन्तरं काव्यशास्त्रस्यैतिह्ये प्रमुखाचार्यरूपेण आचार्यस्य रुद्रटस्य नाम आयाति । अस्याचार्यस्यापरंना शतानन्द आसीत् । किन्त्विदम् तस्य नाम प्रख्यातं नहि बभूव । रुद्रटस्यैव नाम्नाऽयमाचार्यः प्रख्यातो वर्त्तते काव्यशास्त्रस्यैतिह्ये । रुद्रटस्य- पितुर्नाम वामुकभट्ट आसीत् । अयं हि सामवेदी आसीत् । नाम्नैवाभाति यदयं काश्मीरेषु लब्धजन्मा विद्वान् आसीत् ।

आचार्योऽयं स्ववंशस्य परिचयरूपेण निम्नाङ्कित श्लोकं लिलेखः । यस्योद्धरणं अस्य टीकाकार अकार्षीत् ।

**शतानन्दापराख्येन भट्टवामुक सूनुना ।**
**साधितं रुद्रटेनेदं समाजा धीमतां हितम् ॥**

(काव्यालङ्कार टीका ५.१२.१४)

किञ्च, यथार्थतः रुद्रटस्य जीवनवृत्तविषयेऽस्माकं ज्ञानमत्यल्पमस्ति । नाम्नाऽयं काश्मीरनिवासी प्रतीयते । अस्मिन् सन्देहो नास्ति यदधिकतरः काश्मीरनिवासिनो विद्वान्सः टकारान्त नामधारिणः एव भवन्ति । किन्त्वियं निश्चित नियमः स्वीकर्त्तुं न शक्यते । कान्यकुब्जस्य गुर्जरप्रतीहारराजा भोजदेवस्य (समयः ८३६-३७ खीष्टाब्दः) दानपत्रे रुद्रटनाम्नः राज्याधिकारिणः नाम अस्ति—

**रुद्रटेन प्रयुक्तस्य आसमस्य स्थिरायते ।**
**दूतको वालादित्योऽत्र राज्यभट्टारिका सुतः ॥**

(द्रष्टव्यः Epigrophia Indica part 19, page 18, para 15)

अनेन प्रणीतस्य काव्यालङ्कारस्योद्धरणानि राजशेखरेण भोजराजेन प्रतिहारेन्दुराजेन च स्वीयग्रन्थेषु दत्तानि । अस्य मतस्योल्लेखं धनिक-मम्मट-प्रतिहारेन्दुराज- राजशेखरादिका आचार्याः स्वकीयेषु ग्रन्थेषु च कृतवन्तः । राजशेखरः काव्यमीमांसायां **'काकुवक्रोक्तिर्नाम शब्दालङ्कारोऽयमिति रुद्रटः'** इति लिखितवान् । राज शेखरस्य कालः ९५० खीष्टाब्दे स्वीक्रियते । अतएव रुद्रटस्य कालः तस्मात् पूर्वं ८५० ईसवी भवितुमर्हति । एभिः प्रमाणैः नवमशतकोत्तरभागे अवर्त्ततेति कल्पना कर्त्तुं शक्यते । जैकोवीमहाशयो रुद्रटं शङ्करवर्मनाम्नोऽवन्तिवर्म पुत्रस्य समसामयिकं मन्यते । अतोऽपि पूर्वोक्त एव समय सिद्ध्यति ।

काव्यालङ्कारस्यारम्भे गणेशस्य गौर्य्याश्च प्रार्थना अस्ति । ग्रन्थान्ते भवान्याः, मुरारेः, गजाननस्य च स्तुतिरस्ति । अस्य ग्रन्थस्य पञ्चमाध्यायस्य १२-१४ श्लोकानां टीकायां नमिसाधोः कथनमिदमस्ति—'अत्र च चक्रे स्वनामाङ्कभूतोऽयं श्लोकः कविनान्तर्भावितः यथा शतानन्देत्यादि । प्रथमाध्यायस्य नवमश्लोके मयूरभट्टं प्रति सङ्केतोऽस्ति—

**नुत्वा तथा हि दुर्गा केचित्तीर्णा दुरुत्तरां विपदम् ।**
**अपरे रोग विमुक्तिं वरमन्ये लेभिरेऽभिमतम् ॥**

रुद्रटकृतयस्तिस्रः १ काव्यालङ्कारः, २. शृङ्गारतिलकम्, ३. त्रिपुरवध-काव्यञ्चेति । तत्ररुद्रटस्य काव्यालङ्कारो विषयविवेचन दृष्ट्याऽतीवव्यापकोऽस्ति । प्रायः काव्यालङ्कारस्याधिकाः ग्रन्थाः काश्मीरे एव प्रणीताः अभूवन् । ते स्वकाव्यशास्त्रविषयकस्य ग्रन्थस्य नामा काव्यालङ्कार इत्यकार्षुः । तथैव परम्परया रुद्रटोऽपि स्वकाव्यशास्त्रीयग्रन्थस्य नाम काव्यालङ्कार इत्यकार्षीत् ।

रुद्रटप्रणीतोऽयं काव्यालङ्कारग्रन्थः आर्याछन्दसि प्रणीतो वर्त्तते । ग्रन्थेऽस्मिन् षोडशाध्यायाः सन्ति । अत्र ७३४ आर्याः सन्ति । तत्रैकादशाध्यायेषु अलङ्काराणां वर्णनमास्ते अन्तिमोऽध्याये रसानां मीमांसा कृता वर्त्तते । नवमो रसैः साकं प्रयोऽलङ्कारस्य कल्पना कृत्वा अलङ्काराणां संख्या दशकृता वर्त्तते । अत्र नायक-नायिकयोरपि भेदो विस्तरेण विवेचितो वर्त्तते । अयमाचार्यः अलङ्काराणां विभाजनं वैज्ञानिकेनाधारेणाकार्षीत् । अयं हि अलङ्काराणां विभाजकतत्त्वेन वास्तवो-पम्याति-श्लेषान् स्वीचकार । रुद्रटोमतसाम्य-पिहित-भवाग्व्यानां चतुर्णामलङ्काराणां नवीनतया कल्पनामकरोत् ।

संक्षेपेण ग्रन्थस्य विषय-वस्तूनां परिचयो यथा—सर्वप्रथमं काव्यप्रयोजनम्, तदुद्देश्यम्, कवितासामग्री, अलङ्कारः, भाषा, रीतिः, रसाः, वृत्तयः सर्वेऽपीमे विषयाः, अत्र ग्रन्थे विवेचिताः, परमस्य विदुषोऽलङ्कार-सम्प्रदाय-प्रवर्तकान्यतमत्वेनालङ्कारा एव मुख्यतां ग्रमिताः । ये च भामहोद्भटादिभिरलङ्काराः व्याख्यातास्तेष्वनेकानलङ्कारान् परित्यज्य तदर्थं नूतननामानि ग्रन्थे निर्दिष्टानि सन्ति । यथा भामहस्य यो 'व्याजस्तुतिः' अलङ्कारः स रुद्रटस्य 'व्याजश्लेष इति । अभिनवालङ्कारोद्भावनमप्येतेन कृतम् । यद्यपि रसानामतिविस्तरेण निरुपणं वर्त्तते तथाप्यलङ्कारोपर्येव ग्रन्थकृत आग्रहो दृश्यते ।

विस्तरेण च—ग्रन्थोऽयं आर्याच्छन्दसि प्रणीतो वर्त्तते । काव्यप्रकाशस्य टीकायां गोपालमहोदयस्तु रुद्रटस्य आर्याम्प्रति निजानुरागं निम्नलिखितश्लोके श्लेषालङ्कारेण प्रकटयति—

**अतिलोकमलङ्कारनाविभ्रदमृतस्त्रतं (स्तुतम्?) ।**
**आर्यानुरागी सर्वज्ञः सत्यं रुद्रः स रुद्रटः ॥**

(त्रिवेन्द्रं संस्करणे, द्वितीयपृष्ठे)

अत्र सर्वज्ञशब्दः शिवस्यार्थेऽपि प्रयुक्तो भवति । 'आर्या' शब्दस्यार्थोऽस्ति, भगवती पार्वती तथा आर्यानामक-छन्दः । ग्रन्थे यत्रतत्रापवादस्वरूपे, विशेषतः बहुतराध्यायान्तेऽन्येषां छन्दसामपि प्रयोगो मिलति । अस्य ग्रन्थस्य सकलान्युदाहरणानि ग्रन्थकारेणैव रचितानि सन्ति । ग्रन्थेऽस्मिन् श्लोकानां सकलसंख्या (द्वादशाध्यायस्य नायक-नायिका विषयकान् चतुर्दशश्लोकान् विहाय) ७३४ अस्ति । इमे चतुर्दशश्लोकाः प्रक्षिप्ताः सन्ति । त्रयोदशाध्यायः सर्वाधिककनिष्ठोऽस्ति । अस्मिन् अध्याये मात्र सप्तदशश्लोकाः एव सन्ति । सप्तमाष्टमाध्यायश्च सर्वाधिक दीर्घतरौस्तः । अनयोरध्याययोः श्लोकानां संख्या क्रमशः १११ तथा ११० वर्त्तते । षोडशाध्यायानां विषयानुक्रमः निम्नप्रकारेणास्ति—

१. गणेशस्य गौर्याश्च प्रार्थनास्ति । काव्यस्योद्देश्यम्, काव्यस्य प्रयोजनम्, कवितासामग्री—अर्थात् कवयेऽनिवार्यतत्त्वानां शक्ति-व्युत्पत्ति-अभ्यासादीनां निरूपणम् ।

२. काव्यस्य लक्षणम्, वक्रोक्तिः, अनुप्रासः, यमकः, श्लेषः, चित्र-नाम्नां पञ्चालङ्काराणां निरूपणम्, परिगणना चेति, वैदर्भी, पाञ्चाली, लाटीया, गौडीया चेति, चतसृणां रीतीनां लक्षणानि, काव्ये प्रयुक्ताः षण्णां भाषाणामुल्लेखः, ताश्च प्राकृत-संस्कृत-मागध-पैशाची-शौरसेनी-अपभ्रंशाश्चेति । वक्रोक्तेः अनुप्रासस्य च लक्षण-भेदोदाहरणानि च, अनुप्रासस्य पञ्चवृत्तयः—मधुरा-ललिता-प्रौढा-परुषा-भद्रादीनां लक्षणानि । अत्र च—

**वृत्तेः समासवत्यास्तत्र स्यूरीतयस्तिस्त्रः ।**
**पाञ्चाली लाटीया गौडीया चेति नामतोभिहिताः ॥**
**लघुमध्यायत विरचन समासभेदादिमास्तत्र ।**
**...वृत्तेरसमासाया वैदर्भी रीतिरेकैव ॥**

(काव्यालङ्कारः २,३,४,६)

३. अष्टपञ्चाशत् श्लोकेषु यमकस्य विस्तृतं विवेचनम् ।

४. श्लेषस्तथा तस्याष्टप्रकाराः—वर्णं-पद-लिङ्ग-भाषा-प्रकृति-प्रयत्न-विभक्ति-वचनानि चेति भाषाश्लेषस्योदाहरणेषु अर्थात् संस्कृत-प्राकृत-पैशाची-शौरसेन्यादिषु प्राप्त-समानशब्दाः ।

५. चित्रकाव्यम्—चक्रबन्ध-मुरजबन्ध-अर्धभ्रम-सर्वतोभद्र-मात्राच्युतक-प्रहेलिकादीनां निरूपणंम् ।

६. अर्थालङ्काराणां चत्वारि मूलतत्त्वानि-वास्तवम्, औपम्यम्, अतिशयः, श्लेषश्चातोऽलङ्कारश्चतुर्धेति तदीयस्तर्कः ।

७. औपम्योपर्याश्रितैकविंशतिः अलङ्काराणां वर्णनम् ।

८. अतिशयोपर्याधारिताः द्वादशालङ्काराः ।

९. शुद्धश्लेषस्य दशभेदास्तथा सङ्करस्य द्वौ भेदौस्तः ।

१०. नवार्थदोषास्तथोपमादोषाश्चत्वारश्चेति ।

११. दशरसानां निरूपणम्, शृङ्गारस्य लक्षणं तथा तस्य सम्भोग-विप्रलम्भाख्यौ द्वौ भेदौ नायकस्य गुणस्तथा तस्य सहायकानां वर्णनम्, नायक-नायिकाभेदश्चेति ।

१२. संभोगशृङ्गारस्तथा देशकालानुसारेण नायिकायाः विभिन्नचेष्टाणां वर्णनञ्चेति ।

१३. विप्रलम्भशृङ्गारस्तथा दशदशाः खण्डितानायिकां प्रसादनायषडोपायाः—सभ्यः, दानम्, भेदः, प्रणतिः, उपेक्षा, प्रसङ्गभ्रंशश्चेति ।

१४. वीररसस्य तथाऽन्यरसानाञ्च विशेषता ।

१५. काव्यस्य विविधप्रकाराः—कथा, आख्यायिकाः प्रभृतयस्तेषां कथावस्तुजन्य विशेषताः ।

सर्वप्रथमः रुद्रटः निश्चितसिद्धान्तानामाधारोपरि अलङ्काराणां वैज्ञानिकवर्गीकरणस्य प्रयासः कृतवान् । अस्मिन् सन्दर्भे प्राचीनैरुक्ताः कतिपयेऽलङ्कारास्त्यक्ताः, कतिचन नवा उक्ताः, कतीनाञ्च संज्ञा परिवर्त्तिता । तदेवं सर्वथा परिष्कृतोऽलङ्कारमार्गः । अलङ्कारशास्त्रे प्रथमोयमस्योपक्रमः । रुद्रटस्य पूर्वालङ्कारः अतिशयोक्ते- श्चतुर्थभेदोऽस्ति—**'कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः** (काव्यालङ्कारः ९,३) । रुद्रटेन प्रस्तुतः कतिपयानलङ्कारान् अनाचार्यैरनङ्गीकृताः—**'हेतुमता सह हेतोरभिधानमभेदकृत् भवेत् यत्र** (काव्यालङ्कारः ७,८२) । रुद्रटस्तु भावनामकमलङ्कारमुदाहरति—

**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरी सनाथकरम् ।**
**पश्यन्त्या भवति मुदुर्नितरां मलिना मुखच्छाया ॥**

(काव्यालङ्कारः ७, ३८)

**एकाकिनीयदवद्या तरुणी तथाह—**
**मस्मिनगृहे गृहपतिश्च गतो विदेशम् ।**
**किं याचसे तदिह वासमियं वराकी,**
**श्वश्रूर्ममान्धवधिरा ननु मूढ पान्थ ॥**

(काव्यालङ्कारा ७, ४०)

मम्मटेन प्रथमोदाहरणं दत्तं तथा द्वितीयं लोचनेन (पृ० ५३) । अनयोरूदाहरणयोः वाच्यर्थस्यापेक्षया व्यङ्ग्यर्थगुणीभूतमस्ति । अनेन प्रकारेण मतालङ्कारः (काव्यालङ्कारे ८, ६९), साम्यालङ्कारः (काव्यालङ्कारे ८, १०५), पिहितालङ्कारः (काव्यालङ्कारे ९, ५०), रुद्रटस्य पूर्ववर्त्तिनः लेखकानां रचनासु प्राप्ताः न भवन्ति ।

रुद्रटस्य काव्यालङ्कारस्य कतिचनाः विशेषताः अनेन प्रकारेण सन्ति—

१. सर्वप्रथममनेनैवालङ्काराणां विभाजनं वर्गीकरणञ्च कृतम । अलङ्काराणां वास्तवौपम्य (औदार्य)—अतिशय श्लेषाख्यानि चत्वारि मूलतत्त्वानि । ये च भामहोद्भटादिभिरलङ्काराः व्याख्यातास्तेष्वनेकानलङ्कारान् परित्यज्य तदर्थं नूतन नामानि ग्रन्थे निर्दिष्टानि सन्ति । यथा-भामहस्य यो 'व्याजस्तुतिः' अलङ्कारः

स रुद्रटस्य व्याजश्लेष इति । अभिनवालङ्कारोद्भावनमप्येतेन कृतम् ।

२. अयमेव हि नवरसातिरिक्तं प्रेयो (वात्सल्य) नामकं रसमङ्गीकृतवान् । (काव्यालङ्कार १२, ३, १५, १७) ।

३. अस्मिन् ग्रन्थे रीतीनां विशेषमहत्त्वं नैवास्ति ॥

४. गुणानां विशेषविवेचनं नास्ति ।

५. भावनामकालङ्कारस्य प्रतिपादने रुद्रटः व्यङ्ग्यर्थसिद्धान्तस्य सामीप्यं लभते । यतो हि काव्ये व्यङ्ग्यार्थः प्रमुखतत्त्वमस्ति ।

आनन्दाश्रमसंस्करण-सङ्गीतरत्नाकरस्य ८२ पृष्ठे एकः उल्लेखोऽस्ति, यत्र सङ्गीताचार्यरूपेण रुद्रटं स्मारितः, किञ्चास्मै न कोऽपि निश्चितप्रमाणः समुलब्धो न भवति यत् तदेव काव्यालङ्कारस्याऽपि रचयिताऽस्ति ।

रुद्रभट्टकृतशृङ्गारतिलकस्यैका रचनाऽप्युपलब्धाऽस्ति । दीर्घकालपर्यन्तं अस्य विषयोपरि विवादः प्रचलितोऽस्ति यद्रुद्रभट्टस्तथारुद्रटः एक एव लेखकस्य नाम आसीत् अथवा भिन्न-भिन्नोऽयं जनः । रुद्रटरुद्रभट्टयोरेकतायाः सर्मर्थकस्तथा विरोधी समस्तप्रमाणानां परीक्षणोपरान्तमिदं कथितुं शक्योऽस्ति यद् विरोधिनः प्रमाणाः एव प्रबलाः सन्ति । धनपालकृततिलकमञ्जर्यां 'त्रैलोक्यसुन्दरीकथा'याः रचयितास्वरूपेण रुद्रभट्टस्य नामोल्लेखोऽस्ति, किन्तु, इदं कथितु न शक्यते यदयमेव शृङ्गार-तिलकस्यापि रचयिता अस्ति । तिलकमञ्जर्याः श्लोकोऽयमनेन प्रकारेणास्ति—

**'स मदान्धक विध्वंसी रुद्रः कैर्नाभिनन्द्यते ।**
**सुश्लिष्टललिता यस्य कथा त्रैलोक्यसुन्दरी ॥'**

(शृङ्गारतिलकः श्लो० ३५)

रुद्रटस्य काव्यालङ्कारोपरि तिसृणां टीकानामुल्लेखाः समुपलभ्यते । तत्र सर्व-प्रथमं काश्मीरीयः कश्चन बल्लभदेवाभिधो विद्वान् अस्य ग्रन्थस्य टीकामकार्षीत् । द्वितीया टीका नमिसाधोर्वर्त्तते । यः स्वस्य टीकायाः कालं निम्नप्रकारेण निर्दिष्टवान् ।

**पञ्चविंशतिसंयुक्तैः एकादशसमाशतैः ।**
**विक्रमात् समतिक्रान्तैः प्रावृषिदं समर्थितम् ॥**

अनेन श्लोकेन अस्याः टीकायाः कालः ११२५ वैक्रमाब्दः सिद्ध्यति । तृतीया टीकायाः कर्त्ता आशाधराभिधानः कश्चिज्जैनयतिरासीत् । तन्मते रुद्रटः अलङ्कार सम्प्रदायस्याचार्यः आसीत् ।



## आनन्दवर्धनाचार्यस्य ध्वन्यालोकः

काव्यशास्त्रस्याचार्येषु रुद्रटस्यानन्तरं राजानक श्रीमदानन्दवर्धनाचार्यस्य नामायाति । अयमानन्दवर्धनाचार्यो ध्वनिसम्प्रदायस्य संस्थापक आचार्यो वर्त्तते ।

अस्याचार्यस्य पितुर्नाम 'नोणः' इत्यासीत् । इति एतत् प्रणीतात् 'देवीशतक' पुस्तकात् ज्ञायते । अयं काश्मीरेषु खीष्टाब्दीय नवमशतकोत्तरार्द्धे 'अवन्तिवर्म' नाम्नो-महीपते राज्यसमये प्रसिद्ध आसीदिति 'राजतरङ्गिणी ग्रन्थाज्ज्ञायते । एतत्प्रणीता इमे ग्रन्थाः सन्तिः—

१. 'ध्वन्यालोकः' यस्यापरे नाम्नी 'काव्यालोकः' 'सहृदयहृदयालोकः' इत्यासाते।

२. 'देवीशतकम्' इदं सटीकं काव्यमालायाः' नवमे गुच्छके प्रकाशितमभूत् ।

३. 'विषमवाणलीला' (प्राकृतभाषानिबद्धा) ।

४. 'अर्जुनचरितम्' ।

५. 'विनिश्चय' टीकायाः धर्मोत्तमायाः विवृत्तिः (अयं बौद्धग्रन्थः) ।

इह सर्वप्रथममुक्ते 'ध्वन्यालोके'ऽस्त्यंशद्वयम्—

१. ध्वनिनाम्नः कारिका ।

२. आलोकाख्या तद्वृत्तिश्चेति । सत्यप्यनेकमतभेदेद्वयोरंशयोः कर्त्ताऽयमेक एव आनन्दवर्द्धनाचार्यः आसीत् । उदाहरणानि प्रायोऽन्येषामेव महाकवीनाकाव्य-नाटकादिग्रन्थेभ्यः सङ्गृहीतानीति स्पष्टमेव । यद्यप्येतस्मादानन्दवर्धनात् पूर्वमपि वाच्यादतिरिक्तस्यार्थस्य ध्वनिस्तत्वसम्बन्धे विचाराः प्रवृत्ताः आसन् तथापि दृढाभिरूपपत्तिभिः सर्वप्रथमममुनैव तस्य सिद्धान्ता स्थापिताऽसीत् इत्यसौ 'ध्वनिस्थापनपरमाचार्यः इत्युच्यते । अमुस्मात्पूर्वसाहित्ये 'अलङ्कार-सम्प्रदायः' रीतिसम्प्रदायश्च इति द्वावेव सम्प्रदायौ प्रवृत्तावास्ताम् । एतस्य तृतीयसम्प्रादयस्तु 'ध्वनिसम्प्रदायः' इत्युदीर्यते । ध्वनिमार्गसंस्थापक एतस्यैव प्रथमो ग्रन्थो 'ध्वन्यालोकः' अस्ति । तत्राचार्याभिनवगुप्तपादाचार्यरचिता 'लोचन' नामिका टीका सर्वतः प्रथमं मुम्बईनगरात् निर्णयसागर- यन्त्रालयात् प्रसिद्धिमागता प्रचरतिस्म । परन्तु, सेदानी दुर्लभाऽभूत् । परन्त्वधुना काश्चिदन्या एव हिन्दीटीकाः संस्कृतटीकायाश्चाभिनवया सह कृता असह कृताश्चेति । आनन्दवर्धनं महाकविराजशेखर इत्थं प्रशंसति—

**ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।**
**आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥**

लोचनटीकाविषयेऽपि अभिनवगुप्तपादोऽप्येवं लिखति—

**किं लोचनं विनालोको भाति चन्द्रिकयाऽपि हि ।**
**तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥**

श्लोकेनानेनैतदपि प्रतीयते यत्—ध्वन्यालोके काचन चन्द्रिकानाम्नी टीकाऽपि प्रचलिताऽसीअभिनवगुप्तसमये इति ।

अत्र ग्रन्थस्य प्रथमोद्योते ध्वनिस्वरूपनिरूपणे प्रतिज्ञाय तदभावभाक्तत्वनिर्वाच्य-त्ववादिनां मतं निराकृतम्, ध्वनिं लक्षयित्वा समासोक्त्याद्यलङ्कारानन्तर्भावश्च दर्शितः ।

द्वितीयोद्योते—व्यङ्ग्यमुखेन ध्वनेः प्रमोदानां लक्षणोदाहरणानि प्रकाशयता रसादिध्वनि—रसवदाद्यलङ्काराणां मिथो वैलक्षण्यं परिपन्थिस्मयमन्थनपूर्वकं व्यवस्थाप्य गुणाः निरूपिताः ।

तृतीयोद्योते—पुर्नव्यञ्जकमुखेन ध्वनेः प्रकारान् सपरिकरं निरूपयता रीतीवृत्तीश्च प्रदर्श्य भाट्ट-प्रभाकर-तार्किक-वेदान्ति-बौद्धादिन येष्वपि व्यक्तिः स्थापिता ।

चतुर्थोद्योते च ध्वनिसम्बन्धेन प्रागुक्तानामप्यर्थानामपूर्वत्वं निदर्श्य, कविप्रतिभाऽऽनन्त्यं ध्वनिप्रयोजनान्तरं प्रकटतयता शान्तादिरसानां भरतादिप्रबन्धव्यङ्ग्यता व्यवस्थापयता स्वप्रबन्धनामनिर्देशमुपसंहारो विहितः ।

अस्मिन् ध्वन्यालोकग्रन्थे ध्वनिशब्देन बहुत्र गुणीभूतशब्दार्थनिष्ठव्यक्तिप्रयोज्यबोधविषयप्रधानीभूतार्थस्य, कुत्रापि तदर्थव्यञ्जनक्षमशब्दार्थयोः, क्वचित्तादृशार्थबोधनव्यापारस्य च परामर्शः । भक्तिपदेन शुद्धगौणलक्षणयोः, लक्षणापदेन तु गौणलक्षणामात्रस्य प्रतीतिः । शब्दशक्त्युद्भवध्वनेरलङ्कारमात्ररूपतयैकविधित्वमेव । शब्दार्थोभयशक्त्युद्भवध्वनिरप्युपत्यैवोहनीयः । काव्यस्य मुख्यतया ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्वावेव प्रकारौ, चित्रं तु गौणः प्रभेदः । सर्वापेक्षया ध्वनेः प्राधान्यम्, तत्राऽपि विशेषेण रसादिलक्षणस्य । लेखशैली च पातञ्जलमहाभाष्यादिवत् पुनः पुनरुपात्तविषयोपपादिकः नितरामुत्तानप्रायाभिप्रायाभिप्रायापि गभीराशया प्रबन्धप्राचीनतरत्वं द्योतयति । ध्वनेः सर्वतः प्रथमं लक्षणस्य प्रवर्त्तकत्वाद् ग्रन्थकृदयं ध्वनिकारसंज्ञा सम्मानस्य भूमिः । लक्ष्यं तु महर्षि वाल्मीकि-द्वैपायनादिभिरेव प्रसेधितम् । अतएव—

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्या भावं जगदुरपरे भाक्तमाहुस्तमन्ये ।**
**केचिद् वाचां स्थितमविषये तत्त्वमुचुस्तदीयं**
**तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम् ॥ इति ॥**

इति कारिकायां निगम प्ररूढानादिपारस्परिकप्रसिद्धेः सूचयिता समाम्नातशब्द उपक्रम प्रयुक्तः ।

ग्रन्थोऽयं कारिकारूपो ध्वनिनामा, परिकरश्लोक-संग्रहश्लोकसंक्षेपश्लोकघटितवृत्तिरूपश्चालोकनामेति भागद्वयभाक्, ध्वन्यालोकः सहृदयालोकः काव्यालोकश्चेति संज्ञात्रयभाक् चेति ।

ध्वन्यालोकोऽयं यथाजीर्णेऽपि वृक्षे मधुमासे समागते वासन्ती श्रीरभिव्याप्ता भवति तथैव ध्वने-रसस्य च सम्बन्धेन पूर्वकविभिः वर्णितेष्वपि प्राचीनकविकाव्येष्वेव सौन्दर्यमभिव्याप्यते । अत्र ग्रन्थे त्रयोभागाः सन्ति—मूलकारिका भागः, वृत्तिभागः, उदाहरणभागश्चेति । उदाहरणानि तु अन्येभ्यः प्रसिद्धकविग्रन्थेभ्यः स्वीकृतानि सन्ति । किन्तु, मूलकारिकाभागः वृतिभागश्च एकस्यैव ध्वन्यालोककारस्यानन्दवर्धनाचार्यस्य वर्त्तते । किञ्चात्र बहुविप्रतिपत्तयः सन्ति ।

अत्र केचन समालोचकाः विवदन्ते यत् मूलकारिका भागस्य कर्त्ता अन्यः वृत्तिभागस्य च कर्त्ता भिन्नो वर्त्तते । तत्र भिन्नकर्तृत्ववादिनां मतमास्ते यद् ध्वन्यालोक-

लोचनस्य व्याकर्त्ता अभिनवगुप्तेनैव तत्र तत्र स्वशब्दैः प्रतिपादितं तयोरुभयोर्भागयोः भिन्नकर्तृत्वं प्रमाणयति । लोचनादुद्धृताष्टमपाठमवलोक्याश्चर्यम्भवति यद्यपि लोचनकाररुभयोरेकतायां विश्वसति तदा तस्य स्पष्टरूपेण निर्देशः कथन्न कृतवान्—

**'यद्यप्यर्थानन्त्यमात्रे हेतुः कारिकायां नोक्तस्तथापि मयावृत्तौ उक्त एवेतिभावः ।'**

**अस्मिन् विषये लोचनस्य महत्त्वपूर्ण-पाठः निम्नाङ्कितोऽस्ति**

१. अतएव मूलकारिका साक्षातन्निराकरणार्था न श्रूयते । वृत्तिकृत्तु निराकृतमपि प्रमेय-संख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति येपीत्यादिना । .... तेनात्र प्रथमोद्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम् । द्वितीयोद्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान् । तदाशयायानुसारेण वृत्तिकृदत्रैवोद्योते मूलविभागमवोचत् इत्यादि (लोचनस्य ७१-७२ पृष्ठे) ।

२. न चैतन्मयोक्तम्, अपितु कारिकाकाराभिप्रायेणेत्याह तत्रेति । भवतिमूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतमेवेति भावः (७३ पृष्ठे) ।

३. उक्तमेव ध्वनिस्वरूपं ताप्तभासविवेकहेतुतया कारिकाकारोऽनुवदतीत्यभिप्रायेण वृत्तिकृदुपस्कारं ददाति । (१४९ पृष्ठे) ।

४. एतत्तावत् त्रिभेदत्वं न कारिकारेण कृतं वृत्तिकारेण तु दर्शितं न चेदानीं वृतिकारो भेदप्रकटनं करोति । ततश्चेदं कृतिमिदं क्रियत इति कर्तृभेदका सङ्गतिः । (१५०-५१ पृष्ठे) ।

५. कारिकाकारेण पूर्वं व्यतिरेक उक्त । न च सर्वथा न कर्त्तव्योऽपि तु वीभत्सादौ कर्त्तव्य एवेति पश्चादन्वयः । वृत्तिकारेण तु अन्वयपूर्वको व्यतिरेक इति शैलीमनुसर्त्तुमन्वयः पूर्वमुपागतः । (१६० पृष्ठे) ।

६. प्रतिपादितमेवैषामालम्बनम् (ध्व०, १६६ पृष्ठे लोचनकारस्य कथनमस्ति) अस्मन्मूलग्रन्थकृतेत्यर्थः ।

७. एवमादौ च विषये यथौचित्य त्यागस्तथा दर्शितमेवाग्रे (ध्व० १६९-१७०) पृष्ठोपरि लोचनकारस्य कथनमस्ति—दर्शितमेवेति कारिकाकारेणेतिभूतप्रत्ययः ।

८. अन्तिम पाठस्यायमर्थोऽस्ति । यदि कारिकायाः वृत्याश्च रचयिता एक एवास्ति तदाऽग्रिमचर्चाप्रसङ्गे कारिकाकारेण भूतप्रत्ययस्य प्रयोगः 'दर्शितम्' पदस्यस्थाने भविष्यत्कालस्य प्रयोगः कथन्न कृतम् । अनेन प्रमाणितो भवति यत्कारिकाकारः वृत्तिकारात् भिन्नोऽस्ति तथा तस्मात्पूर्ववर्त्ती अस्ति ।

९. ध्वन्यालोकस्य ३, ४ वृत्याः उपरि लोचनकारस्य कथनमस्ति—'यद्यप्यर्थानन्त्यमात्रे हेतुर्वृत्तिकारेणोक्तस्तथाऽपि कारिकारेणोक्त इति (डा० डे० Department of Laters, Calcutta University Part 29) । अस्मिन्

विषये लोचनकारस्य कथनमस्ति—ग्रन्थकृत्समानकालभाविना मनोरथनाम्ना' अनेन सिद्धो भवति आनन्दवर्धनस्य कालस्तथा मनोरथस्य वार्द्धक्यः समकालीनोऽस्ति । किञ्च मतमिदं निराधारमस्ति राजतरङ्गिणीकार इममवन्तिवर्मणः समकालिकरूपेण निर्दिशति । तथा चोक्तं कल्हणेन राजतरंगिण्याम्—

**मुक्ताकणः शिवस्वामी कविरानन्दवर्द्धनः ।**
**प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥** (रा०त० ५.३४)

काश्मीराधिपतेः अवन्तिवर्मणः कालः ८५० ईसवीतः ८८४ ईसवीयं यावत् स्वीक्रियते । अत एवानन्दवर्धनाचार्यस्य कालो नवमः शताब्दः स्वीक्रियते । आनन्दवर्धनाचार्यस्य पूर्वोक्त पञ्चग्रन्थाः प्रख्याताः सन्ति । तेषु पञ्चसु ख्यातग्रन्थेषु ध्वन्यालोकेनैवानन्दवर्धनस्य-प्रख्यातिरास्ते । अस्मिन् ध्वन्यालोकग्रन्थे आनन्दवर्धनाचार्यः प्रत्यपीपदत् यत् ध्वनिरेव काव्यस्यात्मा वर्त्तते ।

एतस्य महाकवेर्नामा काव्यशास्त्रेतिहासे सुवर्णाक्षरेणाङ्कितुं योग्यं रसगङ्गाधरकृतास्तु सत्यमेवेदं कथ्यते यदयमानन्दवर्द्धनः साहित्यशास्त्रस्य मार्गं परिकृतवानिति । तथाहि— **'ध्वनिकृतामालङ्कारिकसरणि व्यवस्थापकत्वादिति** । एतत्समयपर्यन्तं अमरुकशतक-आर्यासप्तशत्यादिमुक्तककाव्यानामेव प्रचार आसीत् । प्रबन्धरसेषु यथा रसपरिपाको भवति न तथा मुक्तककाव्येषु । मुक्तककाव्येषु व्यञ्जनायाः प्राधान्येन सह स्वकीय विशेषता तिष्ठति । अत एवोक्तं—**'अमरुककवेरेकः श्लोकः प्रबन्धशतायते'** इत्यादि ।' अमरुककवेर्नामोल्लेखनं कृतमानन्दवर्द्धनेन, अमरुककाव्यनिर्माण सार्द्धमेव ध्वनेरपि विवेचनमत्यावश्यकमासीत् । आनन्दवर्धनात् पूर्वध्वनिविषये केचिदभाववादं, केचिद् भाक्त (लक्षणा) वादं, केचिच्चानिर्वचनीयवादमङ्गी कुर्वन्तिस्म । आनन्दवर्धनेन तु काव्यस्यात्मानं ध्वनिमेवाभ्युपेत्योपर्युक्तमतं सम्यक्तया खण्डयित्वा व्यञ्जनायाः स्वतन्त्रसत्तां स्वीकुर्वता ध्वनिप्रकाराणां सर्वप्रथमं विवेचनं निजनिर्मित ध्वन्यालोके कृतम् । एतद्ग्रन्थस्य प्रभावोऽवान्तरग्रन्थकाराणामुपर्यप्यधिकरूपेण सञ्जातः ।

ध्वनिशब्दो हि व्याकरणादेव गृहीतो वर्त्तते न तु स्वतन्त्रः, केवलमिदमेव वैशिष्ट्यं सद् वैयाकरणैः स्फोटात्मकस्य शब्दस्यैव ध्वनिरिति व्यवहारः कृतः, परन्त्वालङ्कारिकैस्तु शब्दार्थयुगलस्येति हृदयम् ।

आनन्दवर्धनस्य विरोधिनः समर्थकाश्चासन् । तत्र विरोधिष्वेको वक्रोक्तिजीवितकारः कुन्तलः, यो हि वक्रोक्ति अन्तर्गतमेव ध्वनिमङ्गीकृतवान् । द्वितीयोमहिमभट्टः, अयं हि व्यक्तिविवेकनामक ग्रन्थेऽनुमान एव ध्वनेरन्तर्भावाय प्रयत्नः कृतवान् । तृतीयश्च रसवादीदशरूपककारो धनञ्जयः ।

ध्वनिकारसमर्थकेषु सर्वशक्तिशाली ध्वन्यालोकस्य काव्यालोकलोचनाख्य व्याख्याकृन्नवमशताब्द्यामध्यवर्त्ती श्रीमदभिनवगुप्तपादाचार्यः । अनेन टीकाकर्त्रा रसनिष्पत्ति प्रसङ्गस्य सम्यक्तया विस्तरेण विवरणं कृतम् । ध्वनिकृता यद्यपि ध्वनावेव रसस्यान्तर्भावः प्रदर्शितस्तथाऽपि प्रधानत्वेन रसध्वनिरेवाङ्गीकृतः । एवञ्चालङ्कारवादेन तिरोहितं

रससम्प्रदायवादमुन्मुच्य ध्वनिसम्प्रदायोद्धारे योगः प्रदत्तः । ध्वनिसम्प्रदायस्योत्पत्तिस्त्वित एवेति विभावनीयम् ।

किञ्चानेनैवाभिगुप्तेन यत्र तत्र स्वशब्दैः प्रतिपादितं तयोरुभयोर्भागयोः भिन्नकर्तृत्वं साधितम् । अस्य तथ्यस्य प्रमाणं लोचनकारस्यैव कानिचित् वाक्यानि सन्ति । तद्यथा—

'न चैतन्मयोक्तं अपितु कारिकाकाराभिप्रायेणेत्याह—तत्रेति । भवतिमूलतोद्विभेदत्वं कारिकाकारस्यापि सम्मतमेवेतिभावः ।' (लोचन०)

'उक्तमेव ध्वनिस्वरूपं तदाभासविवेकहेतुतया कारिकाकारोऽनुवदतीत्यभिप्रायेण वृत्तिकृद्युपस्कारं ददाति ।'

उपरिलिखितेषूद्धरेणषु द्वितीय-षष्ठ-सप्तमोद्धरणान्यतीव महत्वपूर्णानि सन्ति एतदतिरिक्ताविवक्षितवाच्यस्यादिकारिकायामुपरि लोचनस्य निम्नलिखितपाठोऽपि दर्शनीयः—

'यस्तु व्याचष्टे व्यंग्यानां वस्त्वलङ्काररसानां मुखेन इति स एवं प्रष्टव्यः एतत्तावत् त्रिभेदत्वं न कारिकाकारेण कृतं वृत्तिकारेण तु दर्शितम् । न चेदानीं वृत्तिकारो भेदप्रकटनं करोति । ततश्चेदं कृतमिदं क्रियते इति कर्तृभेदे का सङ्गति न चैतावता सकल प्राक्तन ग्रन्थसङ्गतिः कृताभवति । अविवक्षितवाच्यादीनामपि प्रकाराणां दर्शितत्त्वादित्यलं निजपूर्वजसगोत्रैः साकं विवादेन ।'

अनेन प्रकारेण तयोरुभयोर्भागयोः भिन्नकर्तृत्ववादिनामनेकानि मतानि सन्ति । ग्रन्थविस्तरभयात् तं विवादमपहाय संक्षेपेण कथितुमुत्सहे । अत्र प्राचीनालङ्कारिकाः कारिकाकारवृत्तिकारयोरेकत्वमेव स्वीकृतवन्तः । तद्यथा—

१. राजशेखरः आनन्दवर्धनस्य मतस्योल्लेखावसरे ध्वन्यालोकस्य वृत्तावुपलभ्यमानं कञ्चन श्लोकमुद्धृतवान् । एतेन सः प्रतीयते यत् राजशेखरः उभयोरेक कर्त्तृत्वं स्वीकरोति । राजशेखर आनन्दवर्धनमेव ध्वनेः प्रतिष्ठापकं स्वीकरोति निम्नाङ्कितेन पद्येन—

**'ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।' इत्यादयः ।**

२. किञ्च वक्रोक्तिजीवितकारोऽपि वृत्तिकारमपि ध्वनिकारशब्देनैवाभिधत्ते । स आनन्दवर्धनस्यैकं पद्यं रूढिवक्रतायाः उदाहरणरूपेणोपन्यस्य स्पष्टरूपेणालैषीष्ट—'ध्वनिकारेण व्यङ्ग्यव्यञ्जकभावोऽत्र सुतरां समर्थितः किं पौनरुक्त्येन ।' अतएव कुन्तकानुसारेण आनन्दवर्धनः एव ध्वनिकारो वर्त्तते ।

३. व्यक्तिविवेकस्य प्रणेतुर्महिमभट्टस्यापीदमेव मतमास्ते । सः व्यक्तिविवेकनामके स्वकीये ग्रन्थे अनेकत्र आनन्दवर्धनाचार्यस्य मूलकारिकां वृत्तिभागञ्चोद्धृतयोः उभयोरपि भागयोरेकमेव कर्त्तारं मनुते ।

४. क्षेमेन्द्रः अभिनवगुप्तपादाचार्यस्य शिष्यः काश्मीरी काव्यशास्त्रीयपरम्परातः पूर्णरूपेण परिचितः आसीत् । सोऽपि ध्वन्यालोकस्य कारिकां स्वकीये ग्रन्थे

औचित्यविचारचर्चायामुद्धृत्य तस्याः कर्त्तारमानन्दवर्द्धनाचार्यस्य मनुते ।

५. हेमचन्द्रोऽपि ध्वन्यालोकस्य कारिकाणां प्रणेतारमानन्दवर्धनाचार्यमेव स्वीकरोति।

६. साहित्यदर्पणस्य कर्त्ता आचार्यो विश्वनाथ कविराजोऽपि ध्वन्यालोकस्य वृत्तिभागस्य कर्त्तारं ध्वनिकारशब्देनाह ।

ऐतेषु सत्सु उभयोरपि, भागयोः एककर्तृत्वप्रतिपादकेषु प्रमाणेषु तयोः भिन्नकर्तृत्वं नैव स्वीकर्त्तुं शक्यते ।

आनन्दवर्द्धनाचार्य कृतस्य ध्वन्यालोकस्य टीकाद्वयी श्रूयते । तत्र प्रथमा ध्वन्यालोकलोचन अभिधाना टीका तु सर्वत्रालङ्कारिकसमवाये प्रख्यातैव । अपरस्याः टीकायाः नाम चन्द्रिका वर्त्तते । सेयं टीका लोचनात्पूर्व। प्रणीता । तस्या अपि प्रणेताः कश्चनाभिनवगुप्तपादाचार्यस्य वंशज एवासीत् । चन्द्रिकायाः मतस्य खण्डनावसरे एकत्र लोचनकरोऽपि लिखति—चन्द्रिकाकारस्तु पठितमनुपठतीतिन्यायेन गजनिमीलकथाव्याचक्षे । ...इत्यलं पूर्ववंश्यैः सह विवादेन बहुना इति ।

सत्यामपि चन्द्रिकायां लोचनाख्य टीकायाः प्रणयनं कस्मादकार्षीत् लोचनकारः इत्यनुयोगस्यैवोत्तररूपेण लोचनकारो लिखति—

**किं लोचनं विनाऽलोको भाति चन्द्रिकयाऽपि हि ।**
**अतोऽभिनवगुप्तोत्रलोचनोन्मीलनं व्यधात् ॥**



## आचार्यराजशेखरस्तथा तस्य काव्यमीमांसा

आचार्यराजशेखरः यद्यपि मुख्यतया नाटककाररूपेणैव प्रख्यातोऽस्ति तथापि काव्यमीमांसा नामकस्य ग्रन्थस्य एतादृशी ख्याति सञ्जाता येन सः अलङ्कारशास्त्रस्याचार्यरूपेणाऽपि गण्यते । एतेन ग्रन्थेनाऽपि अस्याचार्यस्य महती प्रख्यातिः सञ्जाता ।

काव्यमीमांसा नामकग्रन्थोऽयं 'गायकवाड़ओरियण्टल सीरीज नामक संस्थातः प्रकाशितोऽभवत् । तृतीयसंस्करणमिदं १९३४ खीष्टाब्दे प्रकाशितोऽभवत् । अस्य ग्रन्थस्य पाण्डित्य-पूर्ण प्रस्तावना पण्डित आर० ए० शास्त्री, श्री के० एस० रामास्वामी एवं श्री डी० दलाल नाम्नां विद्वान्सः लिखितवन्तः । १९५४ खीष्टाब्दे 'बिहारराष्ट्रभाषापरिषद्' नाम्नः संस्थातः भाषानुवादेन सह प० केदारनाथ शर्मा द्वारेण प्रकाशितोऽभवत् ।

इयमेकाऽपूर्वा रचनाऽस्ति । अस्यां काव्यमीमासायां मुख्यरूपेण रस-गुण अलङ्कारादीनां विवेचनं नैवास्ति । प्रत्युत् अस्मिन् ग्रन्थे कविभ्यः व्यवहारोपयोगिमार्गदर्शिका विज्ञप्तिरस्ति । राजशेखरोऽस्य ग्रन्थस्य प्रणयनं अष्टादशसु अधिकरणेषु चकार । किन्तु, साम्प्रतं प्रथममेव कविरहस्याभिधं प्रकरणं समुपलब्धमास्ते ।

अस्मिन्नेवाधिकरणे अष्टादश अध्यायाः सन्ति । एतेष्वध्यायेषु काव्यस्वरूपस्य, काव्य-प्रकारस्य, काव्यभेदस्य, रीतिनिरूपणस्य, काव्यार्शयोनेः, शब्दहरणस्य, अर्थहरणस्य च विचारः कृतो वर्त्तते । अस्याधिकरणस्य कविरहस्येति यथार्थं नाम यतोऽस्मिन्नधि-करणे कवेरुपयोगिनां सर्वेषामेव विषयाणां संग्रहश्चकारात्रराजशेखरः । स त्वत्र केषाञ्चन विषयाणां नवीनतमोपन्यासं चकार । यथा काव्यपुरुषोत्पत्तिः साहित्यविद्या वध्वा सह तस्य विवाह सम्बन्धश्चेति ।

अस्मिन् ग्रन्थे निहितविषयाणां संक्षिप्तचर्चा निम्नप्रकारेण अस्ति ।

अस्य ग्रन्थस्य प्रथमाध्यायस्य नामशास्त्र संग्रहोऽस्ति । अस्मिन् ग्रन्थे, शिवेन प्रदत्तं काव्यमीमांसायाः ज्ञानं ब्रह्मादीन्केन प्रकारेणाधिगतं कृतं तस्य वर्णनमस्ति । सहैव ब्रह्मणा प्रारब्धगुरुपरम्पारायां विभिन्नाष्टादशग्रन्थकाराः काव्यमीमांसायाः अष्टादश भाषानां केन प्रकारेण विवेचनं कृतवन्तस्तस्यापि निरूपणमस्ति । (प्र० पृ० १) । अन्ते यायावरीय कुलोत्पन्नः राजशेखरः अष्टादशमुनीनां मतसंग्रहः केन प्रकारेण कृतवान्नस्याऽपि विशिष्टवर्णनमस्ति ।

द्वितीयाध्यायस्य नाम शास्त्रनिर्देशोऽस्ति । अस्मिन् वाङ्मयस्य द्वौ भेदौ स्तः । शास्त्रं काव्यञ्चेति । शास्त्रस्यापि द्वौ भेदौ स्तः । पौरुषेयः, अपौरुषेयश्चेति । पौरुषेय-शास्त्रीयवाङ्मये पुराण-आन्वीक्षिकीविद्या-पूर्वोत्तरमीमांसा अष्टादशस्मृतिविद्यास्थानादीनां समावेशोऽस्ति । कतिचिदधिकारिणो विद्वान्सः विद्यायाः संख्या चतुर्दशास्तथा कतिपयाः अष्टादशाः मन्यन्ते । यायावरीयस्तु काव्यं पञ्चदशविद्यास्थानं मन्यते । अस्मिन्नेवाध्याये सूत्रभाष्य-वृत्ति-पद्धति-टीका-समीक्षा-पञ्जिका-कारिकेत्यादीनां शब्दानां अर्थान् स्पष्टयति । विद्यानां संख्याविषये भिन्न-भिन्न मतानि सन्ति । राजशेखरस्य मते साहित्यविद्या पञ्चमी विद्या वर्त्ततेः । अपौरुषेयशार्स्त्रयवाङ्मये चत्वारो वेदाः, चत्वारः उपवेदाः, षड्वेदाङ्गानामन्तर्भावो भवति । यायावरीय मतानुसारेणालङ्कारस्तु सप्तम वेदाङ्गोऽस्ति ।

तृतीयाध्यायस्य नाम काव्यपुरुषोत्पत्तिरस्ति । अस्मिन्नध्याये सरस्वत्याः काव्य-पुरुषसम्बन्धस्य पौराणिकी कथा वर्णिताऽस्ति । काव्यपुरुषस्य वर्णनमनेन प्रकारेणास्ति —शब्दार्थौ ते शरीरम्, संस्कृतं मुखम्, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरोमिश्रंम्, समः प्रसन्नो मधुर उदार ओजस्वी चासि । उक्ति च रङ्ग च ते वचो, रस आत्मा, रोमाणि छन्दांसि, प्रश्नोत्तर प्रवह्लिकादिकञ्च वादकेलिः, अनुप्रासोपमादयश्च त्वामलं कुर्वन्ति । (पृ० ६) । एतदुपरान्तः काव्यपुरुषोत्पत्तिस्तथा साहित्य विद्या वध्वा सह तस्य विवाहः वत्सगुल्म नामकनगरे (योहि सम्भवतः वरारप्रान्तान्तर्गत वर्त्तमान वाशिय ग्रामोऽस्ति) चाभवत् । अस्य वर्णनमप्यत्रास्ति । सहैव प्रवृत्ति-वृत्तिरीत्यादीनां परिभाषाऽपि प्रदत्ताऽस्ति । चतुर्थोऽध्यायस्य नाम पद-वाक्य-विवेकोऽस्ति । प्रथमतः अस्मिन्नध्याये कविभ्योऽपेक्षितगुणानामुपरि विचारोऽस्ति । यायावरीयमतौ काव्यस्यैकमात्र-कारणमस्ति शक्तिः । अनयैव शक्त्या प्रतिभा-व्युत्पत्योः समुद्भवो भवति । यावदन्येषां विचारकाणां मतौ कविर्भवितुं समाधेः अर्थात् चित्तस्य एकाग्रतायास्तथाऽ-भ्यासस्यावश्यकता भवति । तत्पश्चात्कवीनां विभिन्नवर्गाः कृतास्तेन । पञ्चमाध्यायस्य नाम अस्ति काव्यपाककल्पम् । अस्मिन्नध्याये सर्वप्रथमः व्युत्पत्तिपदस्यार्थस्य

विश्लेषणमस्ति । तस्य शास्त्रकविस्तथोभयकविरिति द्वौ भैदौ मुख्यौ स्तस्तथा तेषामुपभेदानां वर्णनमस्ति । कवीनां दशावस्थानाम्, पाकशब्दस्य भिन्नार्थानाञ्च विवेचनमप्यस्ति । षष्ठाध्यायस्य नाम पद-वाक्य-विवेकोऽस्ति । अस्मिन्नध्याये सुप्-तिङ्-समास-तद्धित कृतपञ्चशवृत्तीनां वाक्यलक्षणम्, वैभक्त-शक्त-शक्ति-विभक्ति-मयानां एतत्त्र्याणां वाक्यानां त्रिविधार्थप्रदर्शकशक्तीनां, वाक्यस्य दशप्रकाराणां तथा—**गुणवदलङ्कृतञ्च वाक्यमेव काव्यम्'** अस्य काव्यलक्षणस्य च प्रतिपादनमस्ति । सप्तमाध्यायस्य नाम पाठप्रतिष्ठाऽस्ति । काव्ये देव-अप्सरा-पिशाचादिभिः प्रयोक्तुं भाषा, वाक्य-सरणिः, तथा वैदर्भी, गौड़ी-पाञ्चालीति तिसृणां रीतीनां, साकांक्ष-निराकांक्षौ इति प्रकारद्वयस्य काकोस्तथा तयोरुपभेदास्तथा तेषामुदाहरणानि, भारतस्य विभिन्नप्रान्तीय व्यक्तीनां पृथक्-पृथक् भाषा, तेषामुच्चारणपद्धतीनां चर्चाऽस्मिन् अध्यायेऽस्ति । उदाहरणार्थं राजशेखरस्तु लाट-काश्मीर-पञ्चालदेशीय कवीनां विषये अनेन प्रकारेणोक्तम्—

**पठन्ति लटभंलाटाः प्राकृतं संस्कृतद्विषः ।**
**जिह्वायाललितोल्लापलब्ध सौन्दर्य मुद्रया ॥**
**शारदायाः प्रसादेन काश्मीरः सुकविर्जनः ।**
**कर्णे गुडूची गण्डूषस्तेषां पाठक्रमः किमु ॥**
**...पाञ्चाल मण्डलभुवांसुभगः कवीनाम् ।**
**श्रोत्रेमथ क्षरति किञ्चन काव्यपाठः ॥**

(का०मी० ७, पृ० ३४)

अष्टमाध्याये काव्यविषयः कुत्रतः ग्राह्यं (काव्यार्थयोनयः), अस्य विषयस्यात्र निरूपणमस्ति । अस्याधारः द्वादशाः प्रदर्शिताः श्रुति-स्मृति-इतिहास-पुराण प्रमाणविधा (मीमांसा-तर्कशास्त्रम्)—समयविद्या-राजसिद्धान्तत्रयी (अर्थशास्त्रम्, नाट्यशास्त्रम्, कामशास्त्रञ्चेति) लोकः, विरचना (कवि-मनीषा निर्मितं कथातन्त्रमर्धमात्रं वा विरचना) तथा प्रकीर्णकः । यायावरीयस्तु अस्मिन् चतुरन्योऽपि वर्द्धितवान् । नवमोऽध्यायस्तु अर्थव्याप्तिविषयकोऽस्ति । अस्याध्यायस्य वर्ण्यविषयोऽस्ति—दिव्य-दिव्यमानुष- मानुष-पातालीय-मर्त्यपातालीय-दिव्यपातालीय-दिव्यमर्त्यपातालीयाभवितुं शक्यते । तस्य किमपि स्थानं भवतु, किञ्च तस्य विषयो रसयुक्तो भवितव्यम् । अस्य ग्रन्थस्य पञ्चचत्वारिंशत्पृष्ठे—('रसवत एव निबन्धो युक्ता न नीरसस्येति आपराजितिः । ... आमिति यायावरीयः) वर्ण्यविषयश्चेत् स्वतन्त्रपद्ये अथवा प्रबन्धे एव भवतु, किञ्च प्रत्येकस्य पञ्चप्रकाराः भवन्ति । दशमाध्याये वर्ण्यविषयदृष्ट्या कविचर्य्या, राजचर्य्या चास्ति । नामधातोः आद्यन्तपाठः, अभिधानकोशः, छन्दोविचितिस्थालङ्कारादयश्च मुख्य काव्यविद्याः भवन्ति । चतुःषटि कलास्तूपविद्याः कथ्यन्ते । देशवार्त्ता- विदग्धवाद-लोकयात्रा-विद्वद्गोष्ठ्यादेः कारणेन काव्यस्य निर्माणोभवति । कविर्भवितुं शरीरशुद्धिः, वाक्शुद्धिस्तथा विचारशुद्धिश्चापेक्षिताः भवन्ति । कवेर्निवासस्थानस्य, तस्य परिवारस्य, लेखनसामग्र्यादीनाञ्चास्मिन्नध्याये निरूपणमस्ति । कर्त्तव्यकर्मनिर्धारणं समयविभागानुसारेण कर्त्तव्यम् । स्त्रियोऽपि काव्यरचना कर्त्तुं शक्नुवन्ति । शास्त्रपारङ्गताः एवं

काव्यपटवो विदुषां परीक्षितुं महानगरेषु सभामण्डपस्यापि निर्माणं कारितव्यम् । एवंविधस्य विषयस्याख्यापनाऽस्मिन्नध्याये वर्त्तते ।

एकादशाध्यायात्त्रयोदशाध्यायपर्यन्तं पूर्ववर्त्तिग्रन्थकाराणां ग्रन्थैः शब्दान्, अर्थांश्च कियतांशेन कविरात्मसात्कर्त्तुं शक्यते, अस्मिन् विषयोपरि अत्र विचारोऽस्ति । चतुर्दशाध्यायात् षोडशाध्यायपर्यन्तं देश-वृक्ष-गुल्म-पुष्पादिभिः सम्बद्धः विसमयः अर्थात् कविभिः निश्चित-सङ्केतानां निरूपणं कृतमस्ति । अस्मिन्नध्याये हास्य-गीत्यादि- भावानां स्पृश्यस्तथादृश्यस्वरूपाणां कल्पनां कृत्वा तेषां शुभ्रादिवर्णानां निरूपणस्य या पद्धतिरस्ति तस्य विवेचनमस्ति । सप्तादशाध्याये देशस्य विभिन्नभागानां वर्णनमस्ति । अस्मिन्नध्याये भारतस्य भौगोलिकवर्णनमस्ति । अस्य देशस्य चतसृषु दिक्षु प्रसरिताणां विभिन्नप्रान्ताणाम्, नदीनाम्, गिरिनिर्झराणां निरूपणमस्ति । तत्तत्प्रान्तविशिष्टेषु यानि-यानि च विलक्षणवस्तूनि मिलन्ति तेषां वर्णनं तथा तत्रत्य जनानां वर्णः केन प्रकारेण भवति तस्यापि वर्णनमस्ति । अष्टादशाध्यायस्य नाम कालविभागोऽस्ति अत्र ऋतु-पवन-पुष्प-पक्षीत्यादीनां विवेचनमस्ति । सहैव, विभिन्न ऋतूणामनुरूपापेक्षितस्य काव्यव्यापारस्य निरूपणमस्ति ।

काव्यमीमांसागतैरेतैः विषयैः प्रतीतो भवति यत् ग्रन्थोऽयं विविधविषयाणां सम्बन्धेऽनुज्ञप्तिं ददाति । 'प्रस्तुतकाव्यमीमांसा' ग्रन्थकारेण योजितः समग्रग्रन्थस्यैकांश-मात्रेण प्रतीतोभवति । उदाहरणार्थमेकादशपृष्ठे द्रष्टव्यः—'तमौपनिषदिके वक्ष्यामः—केशवमिश्रस्यालङ्कारशेखरस्यैकादश मरीच्यन्ते राजशेखररचित पद्यद्वयमुद्धृतमस्ति । किञ्चोपलब्धकाव्यमीमांसायां पद्यमिदं नोपलभ्यते । अत्र पद्यमेकमनेन प्रकारेणास्ति—

**'अलङ्कार शिरोरत्नं सर्वस्वं काव्यसम्पदाम् ।**
**उपमा कविवंशस्य मातैवेतिमतिर्मम ।।'**

ग्रन्थोंऽयं कौटिल्यस्यार्थशास्त्रमिव प्रतिभाति । अस्य ग्रन्थस्य भाषाशैली क्लिष्टा-भवन्नपि सशक्ताऽस्ति ।

प्राचीनादेवकालादस्य ग्रन्थस्य भृशं समादरो वर्त्तते । तस्मादेव हेतोः—वाग्भट्ट-हेमचन्द्र-भोजराज-शारदातनयादिका आचार्याः अस्मादनेकान् विषयान् आदाय स्वग्रन्थेषु यथायथरूपेण स्थापयामासुः । किञ्चास्मिन् ग्रन्थे अनेकेषाम् अज्ञातनाम्नामपि आलङ्कारिकाणां निर्देशः कृतो वर्त्तते । राजशेखरः प्राचीनभारतस्य भूगोलस्य ज्ञाता आसीत्, अतएव प्राचीनभारतभूगोलज्ञानस्य प्रचुरासामग्री अत्रोपन्यस्ता विद्यते । मया पूर्वमेवोक्तं अस्य देशस्य कस्य प्रान्तस्य कवयः केन प्रकारेण काव्यपाठं कुर्वन्ति इति काव्यमीमांस्यैव ज्ञातुं शक्यते ।

ग्रन्थेऽस्मिन् कालिदास-अमरुशतक-किरातार्जुनीय-कादम्बरी-मालतीमाधव-वेणीसंहार-शिशुपालवध-सूर्यशतक-हयग्रीववधेत्यादि ग्रन्थानां ग्रन्थकाराणाञ्च चर्चा कृतास्ति । अयं हि राजशेखरः अस्मिन् ग्रन्थे कतिपयानामलङ्कारविषयक ग्रन्थकाराणां मतमुद्धृतवान् । अयं हि आचार्यनाम्ना कतिपय मतानां समुल्लेखः कृतवान् । किञ्चेदं कथितुं कठिनमस्ति यदिमे आचार्याः के सन्ति? मैसूरनगरात्प्रकाशितस्य

काव्यप्रकाशस्य माणिकचन्द्रेण कृता प्रकाश-सङ्केत नाम्नीटीकायां (३०८ पृष्ठे) लिखिता **'अभिप्रायवान् पाठधर्मः काकुः स नालङ्कारी स्यादिति यायावरीयः ।'** वाक्यमिदं काव्यमीमांसायाः ३१ पृष्ठेऽस्ति । सोमेश्वरोऽपि काव्यप्रकाशस्य काव्यदर्शन-नाम्नी टीकायामपि उद्धृतवान् । राजशेखरोऽपि स्वकीयग्रन्थे कतिपय महत्त्वपूर्णमैति-हासिकम्, साहित्यिकञ्च तथ्यं प्रदर्शितवान् । मेधाविरुद्रः, कुमारदासश्च जन्मान्ध-कविरासीत् । (का० मी० पृ० १२) मगधस्य शिशुनागः, कुविन्ददेशस्य शूरसेनः, कुन्तलदेशस्य सातवाहनः, तथा उज्जयिनीदेशस्य साहसाङ्कः प्रभृतयः राजानः स्व-स्वराजसभायां विचित्रनियमाः पपरूः । कर्णकटुसंयुक्ताक्षराणां प्रयोगः वर्जनीयः आसीत् । अनेनैव प्रकारेण संभाषणे पूर्णतः प्राकृतस्यैव प्रयोगोभवति वा पूर्णतः संस्कृतस्यैव । (द्र०का०मी० पृ० ५०) वासुदेव-सातवहान-शूद्रक-सारसाङ्कादिराज्ञां संरक्षणे विद्यावृद्धिरभवत् । उज्जयिन्यां कालिदास-मेण्ठ-अमर-रूपसूर-भारवि-हरिश्चन्द्र-चन्द्रगुप्तादीनां कवीनां परीक्षाऽभवत् । उपवर्ष-वर्ष-पाणिनि-पिङ्गल-व्याडिवररुचि-पतञ्जल्यादीनां विदुषां परीक्षा पाटलिपुत्रेऽभवत् (पृ० ५५) । अयं हि विभिन्नप्रान्तेषु विविधप्राकृत-प्रयोगस्यापि उल्लेखः कृतवान् । अस्य मते अवन्तिदेशे पारियात्रस्य तथा दशपुरे पैशाचीभाषायाः प्रभावः आसीत् ।

राजशेखरः स्वकीय जीवनवृत्तविषये विस्तरेण लिलेख । एवं प्रतीतो भवति यदस्य पूर्वजाः महाराष्ट्रीयः आसन् । बालरामायण नाम्नः नाटके स्वात्मानं अकालद नाम्नः जनात् चतुर्थवंशपरम्परायां प्रदर्शितवान् । अकालजलदभवेन महाराष्ट्रचूडामणिः कथितः । राजशेखरस्य कथनानुसारेण तस्य पितुर्नाम दर्दुकः अथवा दुहिकस्तथाऽस्य मातुर्नाम शीलवती आसीत् । यथा—तदामुष्यायणस्य महाराष्ट्रे चूड़ामणे अकाल-जलदस्य चतुर्थो दौर्दुकिः शीलवती सूनूरुपाध्यायश्रीराजशेखर इत्यपर्याप्तं बहुमानेन । (वालरा० १.१३) तथा विद्धशालभञ्जिकायामप्यस्योल्लेखोऽस्ति 'यायावरेण, दौहिकिना कविराजशेखरेण विरचितायाः विद्धशालभञ्जिका नाम नाटिकाया' तथा 'किमात्थ तत्कालजलदस्य प्रणसुः इत्यादि ।

अस्य कुलं यायावरनाम्ना प्रख्यातमासीदत एव सः स्वं यायावरीयः इत्युपाधिना लिलेख । अकालजलद-सुरानन्द-वरलादिका अनेके कवयः कुलमिदमलंचक्रुः । बालरामायणे (१.१६) तथा बालभारते (१.१२) एक सममेव पद्यमस्ति । अस्यानुसारेण स्वपूर्वजन्मनि वाल्मीकिः मेण्ठः तथा भवभूतिः भवनस्य स्वत्व प्रतिपादनं करोति—

**बभूववाल्मीकि भवककविः पुराततः प्रपदे भुवि भतृमेणात् ।**
**स्थितः पुनर्यो भवभूतिरेखया स वर्त्तसे सम्प्रति राजशेखरः ॥**

(वा० रा० १.१६, वा० भा० १.१२)

प्रचण्डपाण्डवे अथवा बालभारतनाटकस्य प्रस्तावनायामुल्लेखोऽस्ति यत् राजशेखरः कस्यापि श्रेष्ठामात्यपुत्रः आसीत् (उक्तं हि तेनैव महासुमन्त्रिपुत्रेण यशःप्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमाष्टि (१.४) । अयं हि राजशेखरः चौहान- वंशीयायाः अवन्तिसुन्दरी नाम्न्याः क्षत्रियायाः विदुष्याः कस्याश्चन नार्याः पाणिं

जग्राह। सेयमवन्तिसुन्दरी संस्कृत-प्राकृतभाषयोः विदुषी आसीत् । अलङ्कारशास्त्र-स्याऽपि विषये तस्याः मौलिकाः विचारा आसन् । तस्या विचाराणां उल्लेखं यत्र तत्र चकार राजशेखरः काव्यमीमांसाग्रन्थे—

चाहुआनकुलमउलियालिया राजसेहरक इन्द्रगेहिणी । भन्तुण्डो किदि भवन्ति सुन्दरी सा पउजाइदुभेदमिच्छदि । (डॉ० घोषसंस्करणस्य कर्पूरमञ्जर्याम् १,१०) ।

राजशेखरः स्वपत्न्याः इच्छानुसारेण प्राकृतशाटकस्य कर्पूरमञ्जर्याः रङ्गमञ्चोपरि अभिनयं कृतवान् । बालरामायणे (१.१२) तस्य रचनायारुल्लेखोऽस्ति । 'यद्यस्ति स्वस्ति तुभ्यं भव पठन रुचिर्विद्धि नः षट्प्रबन्धान् । तृतीयं पदं बालरामायणे (का० मा० सी०) । अनेन प्रमाणितो भवति यद्बालरामायणस्य रचना तस्य प्रौढावस्था-याभवत् । 'कर्पूरमञ्जर्याम्' अयमुल्लेखोऽप्यायाति यन्मृगाङ्कलेखायाः रचयिता आपराजितस्तं राजशेखरं बालकविः, कविराजस्तथा राजानिर्भयस्य राज-गुरुरूपेण निर्दिष्टवान् । अनेन प्रकारेणैव राजशेखरः क्रमशः प्रतिष्ठितपदमलभत् । 'वयिण-दोज्जेव तक्काल कईणं मज्झमि म अङ्कलेहाकहाकारेण अवराइएण । जघा-बालकई कइणाओ णिब्भरराअस्स वह उवज्झाओ इहजस्स पएहिं परंपराय माहप्पमारूढम् ॥ (कर्पूर० १.८, का० मी० पृ० १९), अत्र राजशेखरमतानुसारेण कविराजपदस्य स्थानं महाकविना पदेनाऽपि श्रेष्ठतरमस्ति । कर्पूरमञ्जर्याः (१.५) तः स्पष्टोभवति यद्राजशेखरः राजा महेन्द्रपालस्य गुरुरासीत् ।

**'रघुकुलतिलको महेन्द्रपालः सकलकलानिलय स यस्य शिष्यः ।'**

बालरामायणस्य प्रथमोवाक्यात्तथा बालभारतात् (१.६) स्पष्टोभवति यत्पूर्वोक्त-नाटकः राजा-महेन्द्रपालस्य महोदयस्थित राजसभायां विद्वन्मण्डल्याः समक्षे अभिनीतोऽभवत् । महोदयस्य सामान्यतः अर्थोभवति कान्यकुब्जः । (द्र० ई० आई०) सप्तमप्रति पृ० २३,३०,४३ । महोदयः एकः स्कन्धावारः आसीत् । राजा महेन्द्रपालः राजशेखरस्य शिष्यः आसीत् । तेनैव हेतुनः राजशेखरः सपरिवारः महाराष्ट्रं परित्यज्य काव्यकुब्जे न्यवसत् । अतोऽस्य महापुरुषस्य कर्मक्षेत्रं कान्यकुब्ज-प्रदेश एवासीत् । अतोऽयं निश्चितरूपेण प्रतीहारवंशीयस्य नरेशस्य कान्यकुब्जाधि-पतेर्महीपालस्य गुरुरासीत् । बहुभाषाविदयमासीत् तथा तं प्राकृतभाषयासहातीवानुरागः आसीत् । महोदयम्प्रतिराजशेखरस्य निष्ठाऽपि अपूर्वा एवासीत् । अस्य विचारानुसारेण कस्यापि प्रदेशस्य दिक्षुनिर्धारणं महोदयस्याधारोपरि एव कर्त्तव्यम्—**'तत्राऽपि महोदयं मूलमवधीकृत्येति यायावरीयः'** (का०मी० पृ० ९४) स्वकीय पूर्वपुरुषस्य अकालजलदस्य श्लोकद्वयेऽयं मुक्तकण्ठेन प्रशंसितवान्—

**अकालजलदेन्दोः सा हृद्या वदनचन्द्रिका ।**
**नित्यं कविचकोरैर्या पीयते नतु हीयते ॥**
**अकाल जलदश्लोकैश्चित्रमात्मकृतैरिव ।**
**जातः कादम्बरीरामो नाटके प्रवरः कविः ॥**

(सूक्ति मु० पृ० ४६, पृ० ८३,८४)

राजशेखरस्य विषये शङ्करवर्णन लिखितपद्यानि प्रारम्भिक सङ्कलने समुद्धृतानि सन्ति ।

**पातुं कर्णरसायनं रचयितुं वाचः सत्तां सम्मताम् ।**
**व्युत्पत्तिं परमाजनाप्तुमवधिं लब्धुं रसस्रोतसः ॥**
**भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकम् ।**
**तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधा स्यन्दिनीः ॥**

(विद्र०शा०भ० १, ७ तथा बाल० रा० १, १७ सदुक्ति० कर्णा० ५, २७, पृ० २९६ एवं सूक्ति मु० पृ० ४८) ।

अनेन विदितो भवति यद्राजशेखरेण विसुरानन्दं स्वपारिवारिकसदस्यरूपेण स्वीकृतमस्ति । अयं विसुरानन्दः चेदिराज्ये समागत्यावसत् ।

**नदीनां मेकलसुतानृपाणां रणविग्रहः ।**
**कवीनाञ्च सुरानन्दश्चेदिमण्डलमण्डनम् ॥**
**यायावरकुलश्रेणेर्मुक्तायश्चेष्टेश्च मण्डनम् ।**
**सुवर्णवन्धरुचिरस्तरलतरलो यथा ॥**

(सूक्ति मु०, पृ० ४७, ८८-८९)

अतोऽनुमीयते सुरानन्दः महाराष्ट्रात् मध्यभारते समागतः तत्रतोऽप्यग्रे राजशेखर उत्तरस्यां दिशि भारते प्रविवेश । कान्यकुब्जस्य राजसभायां विद्यमानत्वेन राजशेखरः महोदयस्य कवीनां तथा तत्रत्य सुन्दरीणाञ्च वेशभूषाम्प्रति विशेषासक्तिं प्रदर्शितवान् । 'वेशं नमस्यत्, महोदय सुन्दरीणाम्' (काव्य मी० पृ० ८) 'पाञ्चालास्तव पश्चिमेन त इमे वामा गिरा भाजनाः ...यमुनां त्रिस्रोतसं चारान्तरां (वा० रा० १०.८६) ।

तस्य पत्न्याः अवन्तिसुन्दर्याः काऽपि रचना समुपलब्धा न भवति । काव्यमीमांसायाः षट्चत्वारिंशत्पृष्ठे अवन्तिसुन्दरी मतस्याल्लेखोऽस्ति ।

राजशेखरस्य कालनिर्धारणे न कमपि काठिन्यं वर्त्तते । राजशेखरः रुद्रटस्य काव्यालङ्कारस्य (का० मी० ३१ पृष्ठे), आनन्दवर्धनस्य वृत्याः (१६ पृष्ठे) उद्भट-सम्प्रदायस्य (२२, ४४ पृष्ठे) तथा वामनसम्प्रदायस्य चोल्लेखः कृतवान् । अतस्तस्य समयः निश्चयेन ८७५ खीष्ट्राब्दात् पश्चाद्वर्त्ती वर्त्तते । ९५९-६० खीष्ट्राब्दे रचित यशस्तिलकस्य चतुर्थोच्छ्वासे (का० मा० संस्करणस्य द्वितीयभागस्य ११३ पृष्ठे) अनेकानां कवीनामुल्लखोऽस्ति, तेषु राजशेखरस्याप्युलेखोऽस्ति । प्रायः १००० खीष्ट्राब्देरचितस्य धनपालस्य तिलकमञ्जर्यां यायावरस्य पद्याशमशंसीत् । (समाधिगुण-शालिन्यः प्रसन्न परिपक्यिमाः । यायावर कवेर्वाचो मुनीनामिव वृत्तयः ।' (पद्यं ३३) । उदयसुन्दरी कथायाः लेखकोऽप्यस्य राजशेखरस्य प्रशंसामकरोत् । (अष्टमोच्छ्वासः, पृ० ५५८) (यायावरः प्राज्ञवरो गणज्ञैराशंसितः सूरिसामजवर्यैः' शोधालस्यास्याः रचनायाः कालः (१०२६-५०) खीष्ट्राब्दो वर्त्तते । अतः राजशेखरः ९५० खीष्ट्राब्दात् पूर्वमेवाऽभवत् । अस्मिन् विषये शिलालेखस्याऽपि साहाय्यं मिलति ।

सियोद्दोनीशिलालेखेन ज्ञायते यत् महेन्द्रपालस्य राज्यकालः ९०७ ईसवीयं यावदासीत्। अस्यैव समसामयिकत्वात् राजशेखरस्याप्ययमेव कालो बभूव । इत्थं राजशेखरस्य कालो दशमस्य शतकस्य पूर्वार्द्धो वर्त्तते । अस्य तथ्यस्य सम्पुष्टिः अभिनवगुप्तद्वारेण राजशेखरस्य कर्पूरमञ्जर्यारुल्लेख एव करोति । 'तथाहि शृङ्गाररसे सातिशयोपयोगिनी प्राकृतभाषेति सट्टकः कर्पूरमञ्जर्याख्यो राजशेखरेण तन्मय एव निबद्धः ।' नाटय०शा० भा० ३, अध्या० १९, पद्य सं० १३०. १७२ पृष्ठे, गा० ओ० सी० द्रष्टव्यम् । युवराजदेवद्वितीयस्य बिलहारीशिलालेखस्य अन्ते पद्यमेकमायाति, यस्मिन् पद्ये राजशेखरमशंसीत् ।

**सुश्लिष्टबन्धघटनाविस्मित कविराजशेखरस्तुत्या ।**
**आस्तामियमाकल्पं कृतिश्च कीर्त्तिश्च पूर्वा च ॥** (पृ० २६२)

यद्यप्यस्यास्तिथिः न स्पष्टाऽस्ति तथापि अस्य सम्पादकस्यानुसंधानेन राजशेखरस्य स्थितिकालो दशमशतकस्य पूर्वार्द्धो निश्चीयते ॥



## आचार्य मुकुलभट्टस्तथा तदीयाऽभिधावृत्तिमातृका च

अयं मुकुलभट्टः काश्मीरिकस्य भट्टकल्लटस्य सूनुरासीत् । एतेन 'अभिधावृत्तिमातृका' नामको ग्रन्थोनिर्मितो यो मुद्रितः समुपलभ्यते । १९१६ खीष्टाब्दे निर्णयसागरप्रेसात् मुद्रितः ग्रन्थोऽयं पर्याप्तलघुरस्ति । अस्यैकमात्रं ग्रन्थोऽयं विद्यते । प्रतीहारेन्दुराजोऽस्मादेव गुरोरधीतवान् । तदुक्तं तेनैव 'उद्भटालङ्कारसारसंग्रहवृत्तौ प्रारम्भ एव—

**विद्वदग्र्याम्मुकुलकादधिगम्य विविच्यते ।**
**प्रतीहारेन्दुराजेन काव्यालङ्कारसंग्रहः ॥ इति ॥**

स्वकृतस्य 'अभिधावृत्तिमातृका' नामकस्य ग्रन्थस्य समाप्तौ मुकुलेन स्वयमपि स्वस्य परिचयो दत्तः—

**भट्टकल्लटपुत्रेण मुकुलेन निरूपिता ।**
**सूरिप्रबोधनायेयमभिधावृत्तिमातृका ॥ इति ॥**

अतिलघुकायेऽभिधावृत्तिमातृकाभिधानेऽस्मिन् ग्रन्थे केवलं पञ्चदश संख्याका एव कारिकाः सन्ति । आसा कारिकाणां वृतिरपि स्वयं मुकुलेन कृता वर्त्तते । अयं ग्रन्थो ध्वनिसिद्धान्तस्य व्यञ्जनावृत्तेश्च विरोधीग्रन्थोवर्त्तते ।

व्यञ्जना वादिनः आचार्यः शब्दः अभिधालक्षणाव्यञ्जनेति सिद्धः वृत्तीः स्वीकुर्वन्ति। किन्तु मुकुलभट्टः केवलं शब्दस्याभिधावृत्तिमेव स्वीकरोति । लक्षणापि मुकुलभट्टानुसारेणाभिधाया भेदविशेष स्वरूपावर्त्तते । व्यञ्जना वृत्तिं तु अयं स्वीकरोत्येव

नहि । मुकुलभट्टेन स्पष्टतयाभिहितं ग्रन्थस्यास्योपसंहारे—

**'इत्येतद्भिधावृतिं दशधाऽत्र प्रकीर्त्तितम् ।' इति ॥**

यद्यपि अभिधावृत्तिमातृकायाः आकारस्तु लघुवर्त्तते । किन्तु, क्लिष्टताऽत्र नूनं वर्तते । इयमेव ग्रन्थमाश्रित्य मम्मटभट्टः काव्य-प्रकाशकारः अभिधालक्षणयोर्विभागमकार्षीत् । अस्य ग्रन्थस्यानुसारेणैव मम्मटः शब्दव्यापारविचारनामकस्य ग्रन्थस्य प्रणयनमकार्षीत् । अतएव काव्यप्रकाशपङ्क्तीनां रहस्यज्ञानायाभिधावृत्तिमातृकाया ज्ञानमनिवार्यमास्ते ।

मुकुलभट्टस्य शिष्येणोपस्थापितेन स्वाचार्यस्य परिचयेनैव ज्ञायते यन्मुकुलभट्टः अनेकेषां विषयाणां प्रख्यातो विद्वान् आसीत् । किन्तु मीमांसाशास्त्रस्यायं लब्धप्रतिष्ठो विद्वान् बभूव स अलेखीत्—

**मीमांसा सारमेथात् पदजलधिविधोस्तर्कमाणिक्य कोशात् ।**
**साहित्य श्रीमुरारेर्बुधकुसुममधोः शौरिपादाब्जभृङ्गात् ॥**
**कृत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात् कीर्त्तिवाल्यालवालात् '**
**काव्यालङ्कारसारे लघुपि वृतिमधात् कोङ्कणः इन्दुराजः ॥**

मुकुलभट्टस्य समयः नवमः शताब्दः स्वीक्रियते । कल्हणो राजतरङ्गिण्यां अवन्तिवर्मणः समकालिकमाह मुकुलभट्टः । तथाहि—

**अनुग्रहाय लोकानां भट्टाश्री कल्लटादयः ।**
**अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ॥** (राजत० ५.६६)

राज्ञः अवन्तिवर्मणः कालः ८५५ खीष्ट्राब्दतः ८८४ खीष्ट्राब्दं यावत् स्वीक्रियते। अस्यैवावन्तिवर्मणः काले आनन्दवर्धनोऽपि स्वजनुषां भारतभुवं समलञ्चकारं । एतेनाप्याभाति यत् मुकुलभट्टस्य पिता आनन्दवर्धनस्य समकालिकमासीत् । अनेनानुमीयते यदभिधावृत्तिमातृकायाः रचनाकालः खीष्ट्राब्दस्य नवमशतकस्यान्तिमचरणे वा दशमशतकस्य प्रारम्भिककाले एव भवितुं शक्यते ।



## भट्टतौतः, तदीयं काव्यकौतुकम्

भट्टतौतः अथवा तोतः अभिनवगुप्तस्य गुरुरासीत् । अयं हि काव्यकौतुकाख्यं ग्रन्थं रचयामास । भट्टतौतस्य काव्यकौतुकग्रन्थस्य विवरणमभिनवगुप्तेन व्यरचि इत्यपि अभिनवगुप्तपाद एव स्वग्रन्थे निर्दिशति भट्टतौतकृत नाट्यशास्त्रविषयकव्याख्यानगतवाक्यस्य समुद्धरणमुखे न प्रस्तौत्यभिनवगुप्तपादः ।'

**'सद्विप्रतोतवदनोदित-नाट्यवेदतत्त्वार्थमर्थिजनवाञ्छितसिद्धिहेतोः ।**
**माहेश्वराभिनवगुप्तपदप्रतिष्ठः संक्षिप्तवृत्तिविधिना विशदी करोति ॥'**

भट्टतौतस्य सिद्धान्तः आसीत् यच्छान्तरसस्य मोक्षफलप्रदत्वेन सर्वेषुरसेषु श्रेष्ठतमोऽस्ति—'मोक्षफलत्वेन चायं (शान्तो रसः) परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः । सचायमस्मदुपाध्याय भट्टतौतेन 'काव्यकौतुके अस्माभिश्च तद्विवरणे बहुतर कृत निर्णयः, पूर्वपक्षसिद्धान्त इत्यलं बहुधा ।' (लोचने २२१ पृष्ठे, कारिका ३. २६) । एकस्यान्य सिद्धान्तस्य लोचने वर्णनमस्ति, अस्मिन् वर्णने तौतभट्टस्याभिनवगुप्ताचार्यस्य गुरोः सिद्धान्तस्य वर्णनमस्ति—'प्रीत्यात्मा च रसस्तदेव नाट्यं नाट्य एव च वेद इत्यस्यदुपायः ।' तौतभट्टप्रणीतकाव्यकौतुकात् कतिपयो- दाहरणानि अभिनवभारत्यां दर्शनीयानि सन्ति—यथा भरतस्य तस्मान्नाट्यरसास्मृताः (नाट्य शा० ३.६६, जी०ओ०एस०) । अस्य कथनस्योपरि अभिनवगुप्तस्याकथभिवतमनेन प्रकारेणास्ति—रससमुदायो हि नाट्यम् । न नाट्य एव च रसः काव्येऽपि नाट्यायमान एव रसः, काव्यार्थ विषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदय इत्युपाध्यायाः ।' तदातुः काव्यकौतुके—प्रयोगत्वमनापन्ने काव्ये नास्वादसंभवः इति । वर्णनोत्कलिकभोग प्रौढोक्त्या सम्यगर्पिता । उद्यानकान्ता चन्द्राद्याः भावाः प्रत्यक्षवत्स्फुटाः । (प्र० भा० पृ० २९१-९) किञ्चाभिनवगुप्तपादाचार्येण सर्वत्र ग्रन्थनामानि नोपन्यस्तानि । भरतस्य पद्यमेकमुपरि तत्रैव भट्टतौतस्य कथनमस्ति—यदा करुणरसः विप्रलम्भोपरि निर्भरो न भवति तदा तस्य स्थितिः सर्वेषु प्राणिषु समानरूपेण भवति—'तदुक्तमस्मदुपाध्याय भट्टतौतेन—स्वातन्त्रेण प्रवृत्तौ तु सर्वप्राणिषु सम्भवः ।' धर्मिणः उपरि तस्याध्यापकस्यापद्यमेकमुद्धृतमस्ति—यथोक्तमुपाध्यायैः—यदत्रास्ति न तत्रास्य कवेर्वर्णनमर्हति । यत्रासंभवि तत्र स्यातसम्भव्यत्र तु धर्मतः (भा० २, पृ० २१६) । पद्यमिदं तथाऽन्यमेकमपि पद्यमुद्धृतमभिनवगुप्तपादेन । भरतस्य नाट्यशास्त्रस्य पञ्चदशाध्यायस्यान्तिमपद्येऽभिनवगुप्तेनैकं रहस्यमुद्घाटितं तदनुसारेण महाकवीनां कर्त्तव्यं निर्द्धारितमस्ति तदनुसारेण प्रभावशाली नाटक-निर्मातुं तत्रोपयुक्तक्रमस्य तथा पद्धत्याश्चावश्यकरूपेणानुपालनीयम् । स एव क्रम इत्युपाध्यायाः । यदाहुः । महाकवीनां पदवीमुपात्तांमारुरुक्षताम् । नासंस्मृत्य पदस्पर्श सम्पत्सोपानपद्धति ॥ इत्यादयः ॥ (भा० २ पृ० २९२) । अत्राभिनवगुप्तस्य कथनमस्ति यद्रसः चमत्कारप्राणः, आनन्दैकघनम्, तथा लोकोत्तरश्च भवति । अस्यानुसारेण काव्ये कस्याऽपि प्रकारकस्य भाषायाः, अथवा नाटके कस्याऽपि प्रकारकस्य रसस्य प्रयोगोपरि न कोऽपि प्रतिबन्धोऽस्ति । किञ्च प्रकरणानुसारेण सैन्धवभाषायाः प्रयोगः कर्त्तव्यः । 'यत्र भाषा नियमः नोक्तस्तत्र प्राथम्यात् संस्कृतैव, यथेच्छमित्यन्ये स्त्रीपुंभावाश्रयत्वात् प्राकृतभाषैवेत्यपरे सैन्धव्येव प्रकरणादिति भट्टतौतः । यदाह काव्यकौतुके—न भाषा नियमः पात्रे काव्ये स्यात् सैन्धवीमिति ।' (Bhandarker Oriental Research Institute, Copy page 558) तथा च भट्टतोतेनोक्तम्—कामावस्था न शृङ्गारः क्वचिदासां तदङ्गता । (तत्रैव) तत्रैवेकमति महत्त्वपूर्णं किञ्चाशुद्धः पाठोऽस्ति—तथा च डोम्बिकासु स एवार्थः प्रधानभूत इति चूडामणौ स्पष्टमेवोक्तं चोरि अमि... तथा च चिरन्तनेयं... दयप्रवादं पण्डमचूडामणिआ इति । तदेतत् भट्टतौतेन काव्यकौतुके विविच्य दर्शितम् । (अध्या० ३१ पद्य सं० ४७८ चौखम्बा संस्कृत सीरीज)

अनेन प्रमाणितोभवति यद्भट्टतौतेनाभिनवगुप्ताचार्यः पूर्णतः प्रभावितः आसीत्तथा-

ऽभिनवगुप्तेन रससिद्धान्तः प्रभावितोऽस्ति । उपर्युक्तोदाहरणेन स्पष्टोभवति यत् काव्य-कौतुकस्याधिकांशभागः पद्यात्मकोऽस्ति । ग्रन्थेऽस्मिन् नाट्यशास्त्रसम्बद्धप्रकरणस्य व्याख्याकृताऽस्ति । किञ्चास्मिन् विषये पूर्णज्ञानाभावात् दृढतापूर्वकं किमपि कथितुं न शक्यते । षट्त्रिंशल्लक्षणानां विषयेऽभिनवभारत्याः षोडशाऽध्यायस्य चतुर्थपृष्ठे सङ्केतोऽयं मिलति—'पठितोद्देशक्रमस्तु अस्मदुपाध्यायपरम्परागतः ।' अनेन स्पष्टोभवति यत् भट्टतौतः नाट्यशास्त्रस्य भाष्यकर्तृषु जनेषु सम्प्रदायविशेषस्य प्रतिनिधिरासीत् ।

अग्रे स्पष्टो भविष्यति यदभिनवगुप्तस्य साहित्यिकः कार्यकालः ९८० खीष्ट्राब्दात् १०२० खीष्ट्राब्दपर्यन्तमासीत् । अतस्तस्य गुरोः भट्टतौतस्य साहित्यिककालः ९५० खीष्ट्राब्दात् ९८० खीष्ट्राब्दपर्यन्तमासीत् । अतः समयश्चास्य भट्टतौतस्याभिनवगुप्तपादोपाध्यायत्वेन खीष्ट्राब्दस्य दशमीशताब्दीति निश्चीयते । भट्टतौतस्य काव्यकौतुकादन्यस्य ग्रन्थस्य सूचना न क्वाऽपि प्राप्यते । इति ।



## भट्टनायकः, तदीयः हृदयदर्पणश्च

आचार्यो भट्टनायको दशमशताब्दस्यातीव प्रख्यात आचार्य आसीत् अयं हि काश्मीरवासी कश्चित् सांख्याचार्य आसीत् । विशेषरूपेण परिचयस्तावन्नोपलभ्यतेऽस्य महानुभावस्य । रुय्यक-जयरथ-महिमभट्ट-अभिनवगुप्तादिद्वारा भट्टनायकस्य मतमुद्धृतमस्ति । एतैश्च विद्वद्भिः 'हृदयदर्पण इति नामकः कश्चनग्रन्थ आसीद्भट्टनायकस्येति निर्णीयते । सूक्ष्मगवेषकः डॉ० एस. के. डे. मतानुसारेण हृदयदर्पणो हि न स्वतन्त्रो-ग्रन्थः किन्तु कस्याप्लङ्कारशास्त्रस्य टीकैवासीत् इतिप्रतीयते । महद्दौर्भाग्यं यद्यापि न लभ्यते कैरपि । अयं हि भट्टनायकः प्रधानतः लोल्लट-शंकुक-कुन्तक महिमभट्टवदभिधावाधैव । रसविषये चायं भुक्तिवादी, साधरणीकरणसिद्धान्तस्य सर्वप्रथम प्रवर्त्तकश्चेति । एतस्यैव विस्तारोऽभिनवगुप्ते नैव कृतः । रससम्बन्धिसिद्धान्ते चानेन स्वकीयः सांख्यदर्शनस्यैवाधारो गृहीतः ।

अस्याचार्यस्य मुख्यः सम्बन्धो नाट्यशास्त्रेण साकं वर्त्तते न तु काव्यशास्त्रेण । भरतमुनेर्नाट्यशास्त्रानन्तरं नाट्यशास्त्रविषयकोऽयं सर्वाधिकः प्रख्यातोग्रन्थो वर्न्तते । नाट्यशास्त्रं तु नाट्यस्य विश्वकोषो विद्यते । नाट्येन सम्बद्धानां सर्वेषां विषयाणामत्र सङ्कलनं कृतमास्ते भट्टनायकः, नायकभट्टो वा तेषु चतुर्षु रसविवेकेषु एकोऽस्ति, यो हि भरतमुनेः नाट्यसूत्रस्य 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इत्यस्य व्याख्या सांख्यमतानुसारेण कृताऽनेन । अस्योल्लेखः काव्यप्रकाशस्य चतुर्थोल्लासेऽस्ति । तस्य रसविषयकमतमनेन प्रकारेणास्ति—'न ताटस्थ्येन नात्मगत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते अपितु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना

भावकत्वव्यापारेण भाव्यमानः स्थायीसत्वोद्रेकप्रकाशानन्दमय संविद्विश्रान्ति सतत्वेन भोगेन युज्यत इति भट्टनायकः (का० प्र० च० ९० पृष्ठे) वस्तुतस्त्वयमस्ति भुक्तिवादी । अस्य रसविषयेविचारोऽयमस्ति—रसस्य निष्पत्तिनानुकार्य न चानुकर्त्तार भवति स तु सामाजिकेनानुभूयते । रसस्यानुकार्यगतताया वानुकर्त्तृगतताया: अङ्गीकारेण तु सम्बन्धः सामाजिकेन सह स्थापित एव न भवितुमर्हेत् । एवं स्थिते सामाजिकस्तस्मात् कं लाभं लभेत्? तदुत्पत्तिः सामाजिकगतेत्येतदपि स्वीकरणं नोचितम्। तदुत्पत्तेः सीतादिविभावजन्यत्वात् । सीतादिकाः रामम्प्रतिविभावादिका भवितुं शक्नुवन्ति न च समाजिकान् प्रति । साधारणीकरणव्यापारेण सीतारामादि-सम्बद्धव्यक्तित्वं दूरीभवति तत्र (सीतारामादौ) सामान्यकान्तात्वादिरूपमेवावशिष्यते, तस्मात् तेऽनुकार्याः सीतारामप्रभृतयोऽपि—विभावादिकाः भवितुं सामाजिकानां कृतेऽपि सामर्थ्यमश्नुवन्ति । इदं हि साधारणीकरण्यं भावकत्वव्यापारेण निष्पद्यते । साधारणी-करण्यात् यदा सामाजिकान् प्रतिपरकीयाः परकीयत्वविहीना भवन्तः स्वकीयत्वे परिणमन्ते तदा भोजकत्वव्यापारात्ते सामाजिकास्तं विभावादिकं भोक्तुमारभन्ते । इत्थं हि रसः सामाजिकानुभूतिगतो जायते । रसमुद्दिश्य भट्टनायकस्येदमस्ति मतम् । सांख्यशास्त्रानुगामी एष आचार्यः इति तु पूर्वमेव सूचितम् ।

भट्टनायकस्य रसविषयकं विस्तृतविवेचनं लोचनस्य ८२-८३ पृष्ठे द्रष्टव्यम् । अस्य मतानुसारेण काव्यस्य नाटकस्य चाभिधाभावनाभोगीकृतिश्च भवति । तत्तु कार्यत्रयस्य सम्पादको भवति । भोगीकृतिः पदस्यार्थो भवति रसचर्वणा वा भोगः । लोचनस्य द्वयशीति पृष्ठेऽस्यास्य मतस्यऽनया रीत्या उल्लेखः समायाति—

**'प्रतीयते, नोत्पद्यते, नाभिव्यज्यंते काव्येन रसः । किन्त्वन्य शब्दवैलक्षण्यं काव्यात्मनः शब्दस्य त्र्यंशताप्रसादात् । तत्राभिधायकत्वं वाच्यविषयं भावकत्वं रसादिविषयं भोक्तृत्वं सहृदयविषयमिति त्रयोंशभूताः व्यापाराः ।'**

अत्र प्रथमो व्यापारः अभिधा तु शास्त्राय परिकल्प्यते । द्वितीयः कार्यभावनातः विभावादिस्वरूपत्वेन सीतादीन् पाठकानां दर्शकानाञ्च समक्षेऽनेन प्रकारेण प्रस्तुतो-भवति, येन तेषां व्यक्तिगताऽस्तित्वमेव समाप्तप्रायोभवति तथा ते निर्वैयक्तिकस्वरूपे एव तेषां सन्मुखे समायाति—अत्र सीता एका पवित्रा तथा हृदयसंवेद्या नारी एवाव-शिष्यते । तृतीय-कार्यस्य सम्बन्धः प्रेक्षकानां पाठकानाञ्चान्तिमानुभूत्या सहैवास्ति । अनुभूतिरियं ब्रह्मानन्दसहोदर इव स्वसंवेद्यो भवति । शब्देनास्य व्याख्याकर्त्तुं न कोऽपि शक्यते । शब्दान्तरेण रसनिष्पत्तेर्विषये भट्टनायकस्य स्वतन्त्रो विचारो वर्त्तते । काव्यप्रकाशकारो भट्टनायकस्य रसनिष्पत्तिसूत्रव्याख्यायाः अनुवादमप्यकरोत् स्वकाव्य-प्रकाशे । तस्यां व्याख्याया अभिधालक्षणाभ्यां भिन्नयोः शब्दस्य भावकत्वभोजकत्व व्यापारयोः कल्पनामकरोत् । तत्र भावकत्वव्यापारेणानुकार्ययोः साधारणीकरणं भवति, भोजकत्वव्यापारेण च सामाजिको रसास्वादनं करोति । अस्यार्थस्य प्रतिपादकयोः श्लोकयोः निम्नाङ्कितयो हेमचन्द्रः काव्यानुशासनविवेकाभिधाने ग्रन्थे उल्लेखमकार्षीत्—

**अभिधाभावना चान्या तद्भोगीकृतिरेव च ।**<br>
**अभिधा धामतां याते शब्दार्थालङ्कृती ततः ॥**

**भावनाभव्य एषोऽपि शृङ्गारादिगणो मतः ।**
**तदभोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः ॥**

जयरथेनास्मिन् पद्येऽर्द्धांशमधिकं सम्वर्द्धितम्—

**'दृश्यमानाऽथवा मोक्षे यात्यङ्गत्वमियं स्फुटम् ।'**

एभिरनेकैः प्रमाणैः सिद्धोभवति यद्भट्टनायकस्यैव हृदयदर्पणः कृतिरस्ति । लोचनेऽपि भट्टनायकस्य कतिचित्पद्यानि सन्ति । एषु पद्येषु 'शास्त्राख्यनयोः पारस्परिकमन्तरं तथा काव्यस्याभ्यन्तरञ्च प्रदर्शितमस्ति ।

**शब्दप्रधानमाश्रित्य तन्त्रशास्त्रं पृथग् विदुः ।**
**अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः ॥**
**द्वयो गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥** (लो० ३२ पृष्ठे)

अलङ्कारसर्वस्वेऽपि भट्टनायकमतस्य सारांशं प्रदत्तमस्ति—

'भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्यांशत्वं ब्रुवतान्यग्भावित शब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम् । तत्राप्यभिधाभावकत्वलक्षण-व्यापारद्वयोत्तीर्णो रसचर्वणात्मा भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतयाङ्गीकृतः ।' (अ०स०१०.११ पृष्ठे) अस्य काथनस्याधारोपरि जयरथोऽपि भट्टनायकमेव हृदयदर्पणस्य कर्त्ता मन्यते । (तत्रैव पञ्चदशपृष्ठे)

साम्प्रतं हृदयदर्पणस्योपलब्धिर्न हि भवति । किन्तु तस्य ग्रन्थस्येयमनुपलब्धि-रतीव प्राचीना वर्त्तते । व्यक्तिविवेकस्य प्रणेता महिमभट्टः एकादशशताब्दस्थः अपि नोपलब्धवान् ग्रन्थमियम् । येन प्रकारेण भट्टनायको ध्वनिसिद्धान्तस्य खण्डनमकार्षीत् तेनैव प्रकारेण महिमभट्टोऽपि । तदात्वे सः हृदयदर्पणाभिधानं ग्रन्थमवलोकयितुमियेष किन्तु नोपलब्धवान् सः तं ग्रन्थम् । तेनानेन कथितं यत् हृदयदर्पणमपठित्वैव ध्वन्यालोकस्य खण्डनं कर्तुं यशोऽभिलाषीभूत्वा व्यक्तिविवेकस्य उपोद्घाते लिखतिस्म—

**सहसा यशोऽभिसर्तुं समुद्यताऽदृष्टदर्पणाममधीः ।**
**स्वालङ्कारविकल्पकल्पने वेति कथमिवावद्यम् ॥**

अस्मिन् श्लोके श्लेषालङ्कारो वर्त्तते । अत्राभिसर्तुपदस्यार्थः, अभिसारिकेव-ऽगमनाय समुद्यता तथा दर्पणस्य मुकुरोऽप्यस्ति । अस्य श्लोकोपरि टीकायाम्—'दर्पणोहृदयदर्पणाख्यो ध्वनिध्वंसग्रन्थोऽपि (तत्रैव प्रथमपृष्ठे) । व्यक्तिविवेकस्य टीकायां त्रयोदश पृष्ठे हृदयदर्पणात् श्लोकार्द्धमेकं समुद्धृतं तेन—'तत्कर्त्ता च कविः प्रोक्तो भेदेऽपिहि तदस्ति यत् ।' इति काव्यमूलं कवित्वं प्रतिपादितम् । अत्र श्लोके महिमभट्टस्याभिप्रायो वर्त्तते यत्, ध्वनिविरोधिग्रन्थप्रणयनायोद्यतस्तु अस्मि किन्तु, हृदयदर्पणाख्यस्य ग्रन्थस्य इदानीं यावदवलोकनमेव मया नहि कृतम्, अत एवास्मिन् ग्रन्थे कीदृशीत्रुटिरस्ति इति कथं ज्ञास्यामि? उपर्युक्तश्लोकेन ज्ञातोभवति यत् भट्टनायकः ध्वनिसिद्धान्तस्य खण्डनार्थमेव हृदयदर्पणं व्यरचयत् । ध्वनिप्रतिभटभूतोयं

हृदयदर्पणाख्योग्रन्थः निश्चितरूपेण भट्टनायकेनैव निबद्धः ।

अयमाचार्यो ध्वनिविरोध्याचार्येषु अन्यतमासीत् । ग्रन्थाऽभावेऽपि तदुत्तरवर्त्तिनिसाहित्ये हृदयदर्पणस्य प्रभूतमात्रायां चर्चा कृता वर्त्तते । अयं हि भट्टनायकः स्वकीये ग्रन्थे ध्वन्यालोकस्य सिद्धान्तानां खण्डनमकार्षीत् । तेनैव सिद्ध्यति यदरयमाचार्यः आनन्दवर्द्धनाचार्यस्यानन्तरं बभूव ।

भट्टनायकस्य ध्वनिविरोधिनां विचाराणां खण्डनं ध्वन्यालोकस्य व्याख्याकार अभिनवगुप्तपादाचार्य अकार्षीत् । एतेनायमप्यर्थः सिद्ध्यति यद्भट्टनायकः अभिनवगुप्तस्य पूर्ववर्त्ती वर्त्तते । फलतो भट्टनायकस्य कालो दशमः शताब्दो निश्चीयते समीक्षकैरिति ।

स्वतीरवर्तिनामालङ्कारिकाणां ग्रन्थेषु भट्टनायकस्य ख्यातिः हेतुद्वयेन सञ्जाता सर्वप्रथमः ध्वनिविरोध्याचार्योऽयमासीत्, द्वितीयस्तु अनेन रसनिष्पत्तिविषयकः सिद्धान्तो निर्धारितः । अनयोरुभयोरेव विषये भट्टनायको नूतनं सिद्धान्तमुपस्थापयामास । अत एव सः समालोचकानां समालोचनायाः विषयो बभूव ।

भट्टनायकस्यानन्तरमेवाभिनवगुप्तस्य कालः आयाति । अतएव सः ध्वन्यालोकलोचनेऽभिनवभारत्याञ्च भट्टनायकस्य मतस्य कट्वालोचनमकार्षीत् भट्टनायकस्य सर्वाधिको विरोधी अभिनवगुप्तपादाचार्यो वर्त्तते । भट्टनायको ध्वनिसिद्धान्तस्य खण्डनं तु करोतिस्म किन्तु, सः काव्ये नाट्ये च रसस्य स्थितिञ्च स्वीकरोत्येव । अतएव भट्टनायककृतस्य ध्वनिविरोधस्योपहासं कुर्वन्नाचार्योऽभिनवगुप्तपादो लिखति ध्वन्यालोकलोचनें—**'वस्तुध्वनिं दूषयता रसध्वनिस्त तनुग्राहकः समर्थ्यत इति सुष्ठुतरां ध्वनिध्वंसोऽयमिति ।'**

भट्टनायको मीमांसक आसीत् । मीमांसकगोष्ठ्यां वेद एव परमं प्रमाणं भवति । वेदश्च काव्यप्रकाशस्य शब्दे प्रभुसम्मितो भवति । राजाशायां व्यञ्जनायाः कृते कश्चनावसर एव न हि भवति । अत एव मीमासकाः शब्दस्य व्यञ्जनां वृत्तिं स्वीकुर्वन्त्येव नहि । अभिधयैव सर्वे अर्थाः तत्र निस्सरति । ध्वन्यालोके अत्यन्ततिरस्कृतव्याच्यध्वनेः उदाहरणरूपेण—निःश्वासान्ध इवादर्शश्चन्द्र भावप्रकाशते ।' इति श्लोकार्धः उपन्यस्तो वर्त्तते । अस्मिन् वाक्ये दर्पणस्य विशेषणं अन्धः पदं प्रयुक्तमास्ते । चक्षुरिन्द्रियविहीनतैवान्धशब्दवाच्या भवति । किन्तु, दर्पणस्य चक्षुरिन्द्रियरूपस्यान्धत्वस्यासंभवात् अन्धपदमत्र प्रकाशराहित्यातिशयत्वं सूचयित्वा अत्यन्ततिरस्कृत वाच्यध्वनेरुदाहरणं भवति ।

भट्टनायकः अस्यार्थस्य खण्डनं कृत्वा वाक्यस्यार्थमन्यथा करोति । तत्राभिनवगुप्तपादाचार्यो व्यङ्ग्यमर्यादयोपहसति—'जैमिनि सूत्रे ह्येवं योज्यते न काव्येऽपि । इति ।

आनन्दवर्धनाचार्यकृतस्य ध्वनिर्लक्षणे 'व्यङ्क्तः' इति द्विवचनान्तं पदं समागतमास्ते । अस्य द्विवचनत्वस्य खण्डनमकरोत् भट्टनायकः । तस्य समालोचनां कुर्वन् अभिनवगुप्तपादाचार्यो लोचने लिखति—तेन भट्टनायकेन द्विवचनं दूषितं

तद्गजनिमीलिकयैव ।' इति । आचार्योऽभिनवगुप्तो भट्टनायकस्य मतस्यापि खण्डनं करोतिस्म ।

यद्यपि रसनिरूपणप्रस्तावे तन्मतोलेखादनन्तरं काव्यप्रकाशेऽभिनवगुप्तपादाचार्य मतोल्लेखात्तन्मतं खण्डितमिवाभाति, तथाऽपि पण्डितराजजगन्नाथस्य रसगङ्गाधरग्रन्थालोचनात् परिज्ञायते यत्—तत्र केवलं भावकत्वनाम्नो व्यापारान्तरस्य कल्पनमेव सिद्धान्तरूपात् अभिनवगुप्तपादाचार्यमताद् विशेष:, अन्यत्तु सर्वं समतुल्यमेव ।

अयं हि आनन्दवर्द्धनादर्वाचीनो लोचनकारादभिनवगुप्तपादान् प्राचीन आसीत् । आनन्दवर्द्धनस्य समयो हि ८५५-८८४ खीष्टाब्दमित: अभिनवगुप्तस्य तु ९५१-१०२० मित: द्वयोर्मध्ये भवस्तु भट्टनायक: । अत: स्पष्टत: भट्टनायकस्य काल: ९०० खीष्टाब्दात् १००० खीष्टाब्दपर्यन्तमस्ति । इति ।



## कुन्तककृत वक्रोक्तिजीवितम्

कुन्तक: काश्मीरिको विद्वान् आसीत् । 'वक्रोक्ति काव्यजीवितम्' इति वदन्नसौ वक्रोक्तिजीवितन्नाम ग्रन्थं न्यबध्नादित्यसौ' वक्रोक्तिजीवितकार:' इति नाम्नैव सर्वत्र विख्यातोऽभूत । अयं कुन्तको ध्वनिकारादानन्दवर्द्धनादनन्तरभाव्यपि चिरन्तनमतानुयायीति विमर्शिन्यां जयरथ: । अतएवासौ ध्वनिप्रस्थानस्य ध्वन्यालोकतल्लोचनाभ्यां परिष्कृतत्त्वेऽपि तद्विरोधाय स्वग्रन्थं निबध्य प्राचीनस्य वक्रोक्त्यलङ्कारस्यानुसरणेन तत्संप्रदायं प्रावर्त्तयत् ।

किञ्च ग्रन्थोऽयं बहुकालपर्यन्तमनुपलब्ध एवासीत् । अस्य स्थितेर्ज्ञानमलङ्कार-सर्वस्व-साहित्य-दर्पणादिग्रंथेषूल्लिखितोद्धरणादेवाऽभवत् । अस्य ग्रन्थस्यापूर्णहस्तलिखितप्रत्यपि मद्रासनगरे एवासीत् । किञ्च दैवदुर्विपाकादद्यावध्यपि समग्रग्रन्थोप्ययन्नोपलभ्यते । यावानेवांशो लोचनगोचरीभूतस्तावतैव कवे: सूक्ष्मविवेचन शैल्या: परिचय: पर्याप्तरूपेण प्राप्यते ।

ग्रन्थेऽस्मिन् चत्वार उन्मेषास्सन्ति यत्र वक्रोक्तेरेव साङ्गोपाङ्गविवेचनमस्ति । ग्रन्थकर्त्राहि काव्यस्य व्यापको गुणो वक्रोक्तिरिति स्वीकृतम् । साधारणपुरुषमार्गात् कविमार्गोभिन्नरूपेणैव भवतीति नाविदितं केषाञ्चिदपि । कविशब्दावल्यां कल्पनाया: पुट: संलग्नस्तिष्ठति । स हि कमलं कमलरूपेण न वर्णयति किन्तु सरसी नेत्ररूपेण। एवमुषामपि नोषारूपेण वर्णयति किन्तु, भगवच्चरणरक्तिमरूपेण । अत एव कुन्तलेन वक्रता वैचित्र्यरूपेण तथा वैदग्ध्यभङ्गी भणितिरूपेण वर्णिता । वक्रोक्तेर्व्यापकतानयनाय कविना षड्विधा वक्रोक्तिरङ्गीकृता । तथाहि १. वर्णविन्यासवक्रता २. पदपूर्वार्द्धवक्रता ३. परार्धवक्रता, ४. वाक्यवक्रता ५. प्रकरणवक्रता ६. प्रबन्धवक्रतेति ।

ग्रन्थकृता हि सर्वेषामलङ्काराणां वाक्यवक्रतायामेवान्तर्भावो दर्शितः—तथा चोक्तम्—

**'वाक्यस्य वक्रभावोऽन्यो विद्यते यः सहस्रधा ।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति ॥'** (व०जी० १.२१)

रसस्यान्तर्भावस्तु प्रेय-ऊर्जस्विनोरलङ्कारयोर्मध्ये कृतोऽस्ति । किन्तु, रसप्राधान्यमनङ्गीकुर्वताऽपि नितान्तगौणत्वं रसस्य न स्वीकृतम् । अन्यालङ्कारापेक्षया रसवदलङ्कारस्यालङ्कार्यत्वन्तु स्वीकृतमेव । यत्र च कविः स्वकल्पनयेतिवृत्ते परिवर्त्तनं कृत्वा सरसतामापादयति तत्कविकर्मणः प्रकरण-प्रबन्धवक्रतयोरन्तर्भावो बोध्यः । वक्रोक्तेर्बीजं तु भामहेनैव 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः' (का० ल० १.१६) 'कोऽलङ्कारोऽनया विना' (का०ल० २,८५) इत्यादिसूत्रेणोपन्यस्तम् । एवञ्च या मूलकल्पना वक्रोक्तेर्भामहेन प्रदर्शिता तस्या एव व्यापकसाहित्यिकतत्त्वरूपेण विकासः कुन्तकस्य स्वीयविशेषता । समस्त साहित्यिकतत्त्वानि सम्मिलितानि कृत्वा कुन्तकेनैतादृशविदग्धतायाः परिचयोदत्तः, येन मर्मज्ञा साहित्यिकाः सर्वदानुरक्ता एव स्थास्यन्तीति ।

आचार्यस्य कुन्तकस्यैक एव वक्रोक्तिजीविताऽभिधानो ग्रन्थो वर्त्तते । किन्त्वनेनैव ग्रन्थेन कुन्तकः प्रख्यातेः परां काष्ठामचुम्बत् । साहित्यसौदामिन्यभिधाने गोपालभट्टः कुन्तकस्य प्रशंसायां लिखति—

**'वक्रानुरञ्जिनीमुक्तिं शुक इव मुखे वहन् ।**
**कुन्तकः क्रीडति सुखं कीर्त्तिस्फटिकपञ्जरे ॥**

वक्रोक्तिजीवितस्य त्रयो भागाः सन्ति—कारिकाभागः, वृत्तिभागः, उदाहरणभागश्चेति । कारिकावृत्ती उभे कुन्तकलिखिते वर्त्तेते । उदाहरणानि च प्रसिद्धेभ्यः काव्यग्रन्थेभ्यः सङ्गृहीतानि सन्ति ।

तत्र चतुर्षु उन्मेषेषु विभक्तस्यास्य ग्रन्थस्य प्रथमोन्मेषे काव्यस्य प्रयोजनलक्षणे निरूप्य प्रतिपाद्यविषयस्य षड्विध वक्रतायाः सामान्यः परिचयः समुपस्थापितो वर्त्तते । प्रथमोन्मेषस्यारम्भे लिखितमस्ति—

**वन्दे कवीन्द्रवक्त्रेन्दुलास्यमन्दिरनर्त्तकीम् ।**
**देवीं सूक्तिपरिस्पन्दसुन्दराभिनयोज्ज्वलाम् ॥**
**वाचो विषयनैयत्यमुत्पादयितुमुच्यते ।**
**आदिवाक्येऽभिधानादि निर्मितेमनिसूत्रवत् ॥**
**लोकोत्तरचमत्कारकारि वैचित्र्यसिद्धये ।**
**काव्यस्यायमलङ्कार कोऽप्यपूर्वो विधीयते ॥**
**धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।**
**काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ॥**

पद्यद्वयोपरान्तस्य वृत्तिरनेन प्रकारेणास्ति—

**कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् ।**
**आत्साद्यमृतवत्काव्यमविवेकगदापहम् ॥**
**आयन्त्यां च तदात्वे च रसनिष्यन्दसुन्दरम् ।**
**येन संपद्यते काव्यं तदिदानीं विचार्यते ॥ १.७ ॥**
**अलङ्कृतिरलङ्कारमुपोद्धृत्य विवेच्यते ।**
**तदुपायतया तत्त्वं सालङ्कारस्य काव्यता ॥**

इदमपि द्रष्टव्यमस्ति यदनेनाऽपि भामह इव काव्यस्य प्रयोगः (धमार्थ ... काव्यनिबन्धनम्) प्रदर्शितोऽस्ति । स्वीयग्रन्थस्य नाम काव्यालङ्कार एव कृतः । प्रथमोन्मेषस्य वृत्तेः प्रारम्भोऽनेन प्रकारेणास्ति—

**जगत्त्रितय वैचित्र्यचित्रकर्मविधायिनम् ।**
**शिवं शक्तिपरिस्पन्दमात्रोपकरणं नुमः ॥**
**साहित्यार्थसुधासिन्धोः सारमुन्मीलयाम्यहम् ।**
**येन द्वितयमप्येत्त तत्व निर्मितिलक्षणम् ॥**
**तद्विदामद्भुतामोदं चमत्कारं विधास्यति ॥**

भामहस्य (शब्दार्थौ सहितौ काव्यम् १.१६) इति लक्षणमनुसृत्य कुन्तकेनाऽपि काव्यस्य परिभाषाऽनेन प्रकारेण कृता—

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ॥**

(व्यक्तिविवेकस्याष्टाविंशतितमपृष्ठात्तथा समुद्रबन्धस्याष्टमपृष्ठात्समुद्धृतेयं परिभाषा) अस्य कथनस्य तात्पर्यमिदमस्ति यत्कवेः कल्पनाकुशलतायाः शब्दार्थस्य संयोगेन या चमत्कृतिपूर्णरचना भवति तस्या एव नाम काव्यं भवति । अनयोक्त्या ध्वनितो भवति यत्काव्यस्यास्तित्व विनाऽप्यलङ्कारं संभाव्यते । कस्याऽपि रचनायाः काव्यत्वाय निम्नलिखिताः गुणाः अपेक्षिताः भवन्ति—'वक्रता विचित्रगुणालङ्कारसम्पदां परस्पर-स्पर्धाधिरोहः (दशमपृष्ठे)

तत्रैवायं काव्यस्योदाहरणमनेन प्रकारेण कथितम्—

**ततोरुणपरिस्पन्दमन्दीकृतवपुः शशी ।**
**दध्रेकामपरिक्षाम कामिनीगण्डपाण्डुताम् ॥** (का० प्र० उद्धृतः)

तत्पश्चादनेन वक्रोक्तेः कार्यस्य निरूपणं कृतम् ।

**'शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि ।**
**अर्थः सहृदयाह्लादकारी स्वस्पन्दसुन्दरः ॥**
**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः ।**
**वक्रोक्तिरेव वैदग्ध्य भङ्गीभणितिरुच्यते ॥'**

(कारिका १, १०-११)

सामान्यसांलापिक भाषायाः भिन्नस्तयोच्चकोटेश्चमत्कृतिजनकं वर्णनमेव वक्रोक्तिर्भवति । अस्यां वक्रोक्त्यां कविकुशलताजन्योक्तिः सहृदयजनान् मन्त्रमुग्धं करोति । अग्रे वक्रोक्तिजीवितस्य वृत्तावनेन प्रकारेण कथनमस्ति—'वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा वैदग्ध्यं कविकर्मकौशलं तस्य भङ्गी विच्छित्तिः तथा भणितिः'। कुन्तकः रघुवंशमहाकाव्यस्य 'तामभ्यगच्छत्... (१४,७०) तथा बालरामायणस्य 'सद्यः पुरीपरिसरे... (६-३४) । इति द्वे उदाहरणे चोपस्थाप्य प्रदर्शितवान् यत् प्रथमः सहृदयाह्लादकारीकाव्यस्योदाहरणमस्ति तथा द्वितीयो नास्ति । सहैवेदमपि प्रदर्शितं यत् द्वितीयोदाहरणे शब्दानां परिवर्त्तनेन केन प्रकारेण रमणीयताऽनेतुं शक्यते । येषामलङ्कृतानां मते स्वभावोक्तिरलङ्कारो भवति तेषामुपहसन् कुन्तको वदति—

**'अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः ।**
**अलङ्कार्थतयातेषां किमन्यदवतिष्ठते ॥'**
**'...स्पष्टे सर्वत्र संसृष्टिरस्पष्टे सङ्करस्ततः ।'** (का० १,१२,१६)

शब्दार्थयोः साहित्यस्य व्याख्याऽनेन प्रकारेणास्ति—'तत्र वाचकस्य वाचकान्तरेण साहित्यमभिप्रेतम्' अर्थात् साहित्ये यत्साहचर्यमस्ति तद्वाचकस्य वाचकान्तरेण तथा वाच्यस्य वाच्यान्तरेण सह भाव्यं तथा वाचकस्यान्यवाच्येनाथवा वाच्यस्यान्य वाच- केन सह साहचर्यं न भवितव्यम् ।

**शब्दार्थौ सहितावेव प्रतीतौ स्फुरतः सदा ।...**
**साहित्यमनयोः शोभाशालितां प्रतिकाऽप्यसौ ॥**
**अन्यूनानतिरिक्तत्वं मनोहारिण्यवस्थितिः ।** (कारिका १.१७-१८)

तदनन्तरमस्यां वृत्याम्—

**मार्गानुगुण्यसुभगो माधुर्यादिगुणोदयः ।**
**अलङ्करणविन्यासो वक्रतातिशयान्वितः ॥**
**वृत्यौचित्तमनोहारि रसानां परिपोषणम् ।**
**स्पर्धया विद्यते यत्र यथां स्वमुभयोरपि ॥**
**सा काप्यवस्थितिस्तद्विदाह्लादैकनिबन्धनम् ।**
**पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते ॥** (वृत्यां २६ पृष्ठे)

त्रिवेन्द्रमसंस्करणस्य 'साहित्यमीमांसायाः' चतुर्दश पृष्ठेऽस्योल्लेखः समायाति ।

कुन्तकानुसारेण वक्रोक्तिरेव काव्यस्यात्मा भवति । वृत्तेः सप्तविंशतितमपृष्ठानुसारेण तात्पर्यमिदमस्ति—

**'शरीरं जीवितेनैव स्फुरितेनैव जीवितम् ।**
**विना निर्जीविता येन वाक्यं याति विपश्चिताम् ॥**
**यस्मात् किमपि सौभाग्यं तद्विदामेव गोचरम् ।**
**सरस्वती समभ्येति तदिदानीं विचार्यते ॥'**

तत्पश्चात् वक्रतायाः व्याख्याऽपि कृता निम्नप्रकारेणानेन—'वक्रत्वं प्रसिद्धप्रस्थान-व्यतिरेकि वैचित्र्यम्' (कारिका १, १९, पृ० २७)। तदनन्तरं कविव्यापारवक्रतायाः सामान्यः परिचयः समुपस्थापितो वर्त्तते। वर्णविन्यासवक्रता, पदपूर्वार्धवक्रतेत्यादयः।

**वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता।**
**वक्रतायाः परोप्यस्ति प्रकारः प्रत्ययाश्रयः॥**
**वाक्यस्य वाकभावोऽन्यो विद्यते यः सहस्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति॥**
**वक्रभावः प्रकरणे प्रबन्धे प्यस्ति यादृशः।**
**उच्यते सहजाहार्य सौकुमार्य मनोहरः॥** (कारि० १, २०-२३)

पदपूर्वार्द्धस्यार्थो भवति—'पदस्य सुबन्तस्य तिङन्तस्य वा पूर्वार्द्धं प्रातिपदिकं धातुर्वा (२८ पृष्ठे द्र०)। कुन्तकेन एतेषां पदानां सोदाहरणं निरूपणं कृतम्।

कविव्यापारवक्रता जीवितमुच्यते। वक्रोक्तिं विना काव्यस्यास्तित्वमेव भवितुं न शक्यते। आवश्यक-कल्पनाशक्त्याभावे कविषु वक्रोक्तेरुत्पत्तिर्न भवति। अतः काव्ये कविव्यापारस्य महत्ता वर्त्तते। वैचित्र्यसम्बन्धेऽप्यस्य कथनमस्ति—

**विचित्रो यत्र वक्रोक्ति वैचित्र्यं जीवितायते।**
**परिस्फुटति यस्यान्तः सा काप्यतिशयाभिधा॥**

(कारि० १,२७,३८ पृ०)

अस्य प्रथमार्द्धभागः जयरथेनोद्धृतः (पृ० ८)। तत्पश्चात्तेन वैचित्र्यस्य कतिपयानां गुणानां विवेचनं कृतम्। अस्य वैचित्र्यस्य माधुर्य-प्रसादलावण्याभि-जात्यादयः विशिष्टाः गुणाः भवन्ति। लावण्याभिजात्ययोः परिभाषाकृता तेनानेन प्रकारेण—

**अत्रालुप्तविसर्गान्तैः पदैः प्रोतैः परस्परम्।**
**ह्रस्वैः संयोग पूर्वैश्च लावण्यमितिरिच्यते॥**

(पाण्डुलिप्यैकादशतः योगेश्वरेणोद्धृतोऽयं श्लोकः)

**यत्राति कोमलच्छायं नातिकाठिन्यमुद्वहत्।**
**अभिजात्यं मनोहारि तदत्र प्रौढिनिर्मितम्॥**

(कारि० १, ३१-३२)

एतेषां सर्वेषामुदाहरणानि प्रदर्शितानि सन्ति।

**किं तारुण्यतरोरियं रसभरोद्भिन्ना नवाबल्लरी,**
**बेलाप्रोच्छलितस्य किं लहरिका लावण्यवारां निधेः।**
**उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः,**
**किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः॥**

(सा० द० दशमपरिच्छेदे संदेहालङ्कारस्योदाहरणम्)

लावण्यस्योदाहरणम्—

**श्वासोत्कम्पतरङ्गिणिस्तनतटे धौतञ्जनः श्यामलाः,**
**कीर्यन्ते कणशः कृशाङ्गीकिममीवाष्पाम्भसां विन्दवः ।**
**किञ्चाकुञ्चित कण्ठरोधकुटिला कर्णामृतस्यन्दिनः,**
**हुङ्काराः कलपञ्चम प्रणयिनस्त्र्युत्स्यन्ति निर्यान्ति च ॥**

(तत्रैव, ४८ पृष्ठे)

कुन्तकानुसारेण त्रयोमार्गाः सन्ति, तच्च वैचित्र्यमार्गः, सुकुमारमार्गस्तथा सौकुमार्यवैचित्र्यसंवलितमार्गश्चेति । एतेष्वन्तिमो मार्गः मध्यममार्गेण ख्यातोऽस्ति—

**मार्गोऽसौ मध्यमो नाम नानारुचिमनोहरः ।**
**स्पर्धया यत्र वर्त्तन्ते मार्ग द्वितीय सम्पदः ॥**

(कारि० १, ३५, पृ० ५०)

**द्वितीयोन्मेषः**

द्वितीये उन्मेषे षड्विधासु वक्रतासु वर्णविन्यासवक्रतायाः विवेचनमस्ति । तन्मतेऽस्याः परिभाषाऽनेन प्रकारेणास्ति—

**एको द्वौ बहवो वर्णाः बध्यमानाः पुनः पुनः ।**
**स्वल्पान्तरास्त्रिधासोक्ता वर्णविन्यासवक्रता ॥**
**वर्णान्तयोगिनः स्पर्शाद्विसक्तास्तलनादयः ।**
**रेफादिभिश्च संयुक्ता प्रस्तुतौचित्यशोभिनः ॥**

(का० २. १-२, पृ० ६०-६१)

अनेन ज्ञातो भवति यद्वर्णविन्यासवक्रता पुरातनैरलङ्कारिकैः निरूपितानुप्रासस्य रूप एवास्ति । 'एक एकस्य द्वयोर्बहूनां च' इत्यस्य चोदाहरणम् यथा—

**भग्नैलाबल्लरीकास्तरलित कदलीस्तम्भताम्बूलजम्बू-**
**जम्बीरास्तालतालीतरलतरल तालासिका यस्य जह्वुः ।**
**वेल्लतकल्लोलहेलाविस्कलनजड़ाः कूलकुञ्जेषु सिन्धोः-**
**सेनासीमन्तिनीनामनवरतरताभ्यासवन्द्रीं समीराः ॥**

तथा शब्दचित्रस्योदाहरणं काव्यप्रकाशे—

**प्रथममरुणच्छायदतावत्ततः कनकप्रभ-**
**स्तदनुविरहोत्ताभ्यत्तन्वीकपोलतलद्युतिः ।**
**उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखेः-**
**सरसविसिनी कन्दच्छेदच्छविर्भृङ्गलाञ्छनः ॥**

(का० प्र० ६.१४०)

इत्यपि वर्णविन्यासवक्रताया एवोदाहरणमस्ति । कुन्तकस्तु एक एव पद्येऽलङ्काराणां बहुलता नोचितं कथ्यते ।

**अलङ्कारस्य कवयोः यत्रालङ्करणान्तरम् ।**
**असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत् ॥**
**नातिनिर्बन्धविहिता नाप्यपेशलभूषिता ।**
**पूर्वावृत्तपरित्यागनूतनावर्तनोज्ज्वला ॥**

प्रथमपद्यस्तु व्यक्तिविवेकस्य टीकायां ४३.४४ पृष्ठात् समुद्धृतः

तथा वक्रोक्ति जीविते त्रुटिपूर्णोऽयं श्लोकोऽस्ति । अस्य मते उपनागरिका तथा उद्भट्टादि प्राचीनैराचार्यैः नियमिताऽन्याः वृत्तयः वर्णविन्यासवक्रता इव भवन्ति ।

**वर्णच्छायानुसारेण गुणमार्गानुवर्त्तिनी ।**
**वृत्तिवैचित्र्ययुक्तेति सैव प्रोक्ता चिरन्तनैः ॥** (का० २.५. पृ० ६६)

यमकोऽपि वर्णविन्यासवक्रतायाः एव एकः प्रकारोऽस्ति ।

**यमकं नाम कोऽप्यस्या प्रकारः परिदृश्यते ।**
**स तु शोभान्तराभावत् इह नाति प्रत्यन्यते ॥**

(का० २.७, पृ० ६७)

वर्णविन्यासवक्रताया वर्णनान्तरं पदपूर्वार्द्धवक्रतायामुपरि विचारितवानयम्, तथा तस्य रूढिवैचित्र्यवक्रतादिप्रकारोऽपि वर्णितवान् । (रूढेरत्र तात्पर्यमस्ति, रूढिप्रधान-शब्दः)

**यत्र रूढेरसंभाव्यधर्माध्यारोपगर्भता ।**
**सद्धर्मातिशयारोप गर्भत्वं वा प्रतीयते ॥**
**लोकोत्तरतिरस्कार श्लाघ्योत्कर्षाभिधित्सया ।**
**वाच्यस्य सोच्यते कापि रूढिवैचित्र्यवक्रता ॥**

(का० २.८-९, पृ० ६८)

यथा प्रथमपद्यानुसारेण रूढिवैचित्र्यस्य द्वौ प्रकारौ स्तः यथा—प्रथमप्रकारस्योदाहरणमस्ति—विषमवाणलीलायम्—

**ताला जाअन्ति गुणा जाला दे सहि अएहिं धेप्पन्ति ।**
**रहकिरणानुग्गहि आइँ होन्ति कमला इँ कमला इँ ॥**

अत्र कमला इँ शब्द ध्वन्यालोकः द्वि०उ०पृ० १७८ तथा पृष्ठ १७५ पृष्ठे तत्रैव—

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना ।**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ॥**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे ।**
**वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥**

'अत्र 'राम' शब्दः' अर्थात् रामशब्देनानुपयुज्यमानार्थेनेति भावः । रूढिवैचित्र्यस्य द्वितीयप्रकारकस्योदाहरणं यथा—(विद्यमानधर्मातिशयवाच्याध्यारोपगर्भ इव) अस्ति ।

ततः प्रहस्याह पुनः पुरन्दरं (रघु० ३.५१ रघुं शब्दोऽत्र) पदपूर्वार्द्धस्य द्वितीयः प्रकारः पर्यायवक्रताऽस्ति (पर्यायप्रधानः शब्दः पर्यायः) ।

**अभिधेयान्तरतमस्तस्यातिशयपोषका ।**
**रम्यच्छायान्तरस्पर्शात्तदलङ्कर्तुमीश्वरः ॥**
**स्वयं विशेषणेनाऽपि स्वच्छायोत्कर्षपेशलः ।**
**पर्यायस्तेन वैचित्र्यं ॥** (का० २. ११-१२, पृ० ७२)

अनेन प्रकारेण पर्यायवक्रतायाः व्याख्याऽस्ति, एवमस्योदाहरणमिदमेवास्ति—

**'नाभियोक्तुमनृतत्त्वभिष्यसेकस्तपस्विविशिखेषु चादरः ।**
**सन्ति भूभृति हि नः शराः परे ये पराक्रम वसूनि वज्रिणः ॥**

अत्र 'वज्रिणः' इति पदस्य स्थाने यदि 'इन्द्रस्य' पदस्य प्रयोगो भवति तदा एवंविध सशक्तः तथा रमणीयः श्लोकोऽयं भवितुं न शक्यते । पदपूर्वार्द्धस्यैको-ऽन्यस्तथा महत्त्वपूर्णः प्रकारः उपचार वक्रतावर्त्तते । तस्याः व्याख्याऽनेन प्रकारेणास्ति—

**यत्र दूरान्तरेऽस्मात् सामान्यमुपचर्यते ।**
**लेशेनाऽपि भवत्कांश्चित् वक्तुमुद्रिक्तवृत्तिताम् ॥**
**यन्मूला संरसोल्लेखारूपकादिरलङ्कृतिः ।**
**उपचार प्रधानाऽसौ वक्रता काचिदुच्यते ॥**
(कारि० २, १३-१४, पृ० ८०)

उपचार वक्रतायाः निम्नलिखितोदाहरणानि सन्ति । 'न स्निग्धश्यामलेत्यादि, गच्छन्तीनां रमणवसतिं (पू० मेघे, ३८) तथा ग अणं च मत्तमेहं धारालुलिअज्जुणाईं अ वणईं । लिरहङ्कारमिअङ्का हरन्ति नीलाओं वि णिणओ ।'

अत्र प्रथमश्लोकः ध्वन्यालोके अर्थान्तरसंक्रमितवाच्यध्वनेरुदाहरणमस्ति तथा चान्तिमः अत्यन्ततिरस्कृतवाच्यध्वनेरुदाहरणमस्ति । अतः वक्रोक्तिजीवितकार-मतस्य सारांशं प्रस्तुतन् अलङ्कारसर्वस्वकारेणैवं कथितः—उपचारवक्रतादिभिः समस्तो ध्वनि-प्रपञ्चः स्वीकृतः ।' जयरथेन 'ग अणं च मत्तमेहं' कुन्तकनिर्मितास्य मतस्योल्लेखं कृत्वा कथितः 'अत्र मदनिरहङ्कारत्वे औपचारिके इति उपचारवक्रतादीनामपि ग्रहणम् ।' जयरथस्य विचारे कुन्तकमपि तेषु ग्रन्थकारेषु स्थापयितव्यं ये ध्वनिं भाक्तममंसत । ध्वन्यालोके भाक्तशब्दः भक्तिशब्दात् गृहीतोऽस्ति । अस्यार्थः लक्षणा अथवा गुणवृत्ति-रेवास्ति । आनन्दवर्धनोऽप्यस्य प्रयोगः अस्मिन्नेवार्थे कृतवान् । 'भाक्तमाहुस्तमान्ये' ध्व० द्वि० उ० पृ० २९ । लोचनकारोऽपि—

**अभिधेयेन सामीप्यात् सारूप्यात्समवायतः ।**
**वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥** (ध्व०लो०, पृ० ३१)

अलङ्कारसर्वस्वोपरि नवं पृष्ठे जयरथस्य मतमस्मिन् विषये अनेन प्रकारेणास्ति— 'इदानीं' यद्यपि अन्यैरस्य भक्त्यन्तर्भूतत्त्वमुक्तं तदपि दर्शयितुमाह—वक्रोक्तिजीवितकारः

पुनर्वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधो वक्रोक्तिमेव इत्यादि ।

पदपूर्वार्द्धवक्रताया: विशेषणवक्रता-संवृत्तिवक्रतेति द्वे भेदो स्त: । यथा—

**विशेषण माहात्म्यात् क्रियाया: कारकस्य वा ।**
**यत्रोल्लसति लावण्ये सा विशेषण वक्रता ॥**
**यन्तु संव्रियते वस्तु वैचित्र्यस्य विवक्षया ।**
**सर्वनामादिभि: कैश्चित् सोक्ता संवृत्तिवक्रता ॥**

(कारि० २, १५-१६, पृ० ८३-८५)

अस्य लक्षणस्य क्रमश: उदाहरणं यथा—

**शुचिशीतलचन्द्रिकाप्लुताश्चिर नि:शब्दमनोहर: दिश: ।**
**प्रथमस्य मनोभवस्य वा हृदितस्याप्यथहेतुतां ययु: ॥**

तथा—'निवार्यतामालि किमप्ययं बटु:... (कुमारसम्भव: सर्ग:—५ श्लो० सं० ८३)' अत्र कुन्तकेन कथित:—'...भगवदपभाषणं च न कीर्त्तनीयतामर्हतीति संवरणे न रमणीयतां नीतम् । पदपूर्वार्द्धवक्रताया: वृत्तिवैचित्र्यवक्रताभाववैचित्र्यवक्रता लिङ्ग-वैचित्र्य-वक्रता-कर्मन्तरङ्गविचित्रता-क्रियावैचित्र्यवक्रता-कालवैचित्र्यवक्रता-कारकवैचित्र्यवक्रता-संख्यावैचित्र्यवक्रता-पुरुषवैचित्र्यवक्रता-उपग्रहवैचित्र्यवक्रतादय: अनेका: उपभेदा: भवन्ति। एतासु वक्रतासु वृत्ते: कृत्तद्धितसमासैकशेषसन्नतादय: पञ्च भेदा: भवन्ति तथा लिङ्गवक्रताया: इदमुदाहरणमस्ति—'त्वं रक्षसाभीरुगतोपनीता तं मार्गमेता: कृपया लता ये इत्यादय: (रघु० १३-२४) अत्र वृक्षाय लताशब्दस्य प्रयोग: अतीवाकर्षकोऽस्ति । अनेन प्रकारेण सांख्यवक्रताया:, उदाहरणं—'वयं तत्त्वान्वेषान् मधुकर हतास्त्वं खलुकृती' (अभि० शा० १) उग्रहवैचित्र्ये उपग्रहशब्दस्यार्थोभवति—'धातूनां लक्षणानु-सारेण नियपराश्रय: प्रयोग: पूर्वाचार्याणामुपग्रह—शब्दाभिधेयताप्रसिद्ध: ।' तथाऽस्यो-दाहरणमनेन प्रकारेणास्ति—तस्यापरे स्वपि मृगेषु शरान्मुमुक्षो: कर्णान्तमेत्यविभिदे निविडोऽपि मुष्टि: । (रघु० ९, ५८, अत्र विभेदे, भिद्यतेऽस्य स्वयमेवेति कर्म-कर्तृकत्व आत्मनेपदमिति चमत्कारकारि ।) अस्मिन् प्रसङ्गे उपग्रहशब्दस्यार्थ: परस्मैपदमथवाऽत्मनेपदमस्ति । महाभाष्यस्येदं कथनमपि द्रष्टव्यम्—तिङभिहितेन भावेन कालपुरुषोपग्रहाभिव्यज्ञन्ते कृदभिहितेन पुनर्न व्यज्यन्ते ।' इति ।

**तृतीयोन्मेष:**

तृतीये उन्मेषे वाक्यवक्रताया: विस्तारपूर्वकं विवेचनं कृतमास्ते । अस्यामेव वक्रतायां समेषां कुन्तकाभिमतानां वक्रतानामन्तर्भावो भवति । वाक्यवैचित्र्य वक्रतया सह वस्तुवक्रताया: अपि विवेचनकृतमस्ति । वस्तुवक्रता सहज: अथवा आहार्योऽपि भवितुं शंक्यते । (कविशक्ति: व्युत्पत्ति परिपाकपैढ:) तृतीये तथा चतुर्थ उन्मेषे कारिकानां स्वरूपनिर्धारणं कठिनं भवति । यतो हि तेषामन्तर्भाव: वृत्तावैवाभवत् तथा ता: वक्रता: पूर्णत: उल्लिखिता: अपि नैव सन्ति ।

**उदार स्वपरिस्पन्दसुन्दरत्वेन वर्णनम् ।**
**वस्तुनो वक्रशब्दैकगोचरत्वेन वक्रता ॥**

कुन्तकेनास्मिन् स्थाने ध्वन्यालोकस्य श्लोकोऽयमुद्धृतः—

**अपारे काव्यसंसारे कविरेकः प्रजापतिः ।**
**यथास्मै रोचते विश्वं तथेदं परिवर्त्तते ॥**
**शृङ्गारीचेत्कविः काव्ये जातं रसमयं जगत् ।**
**स एव वीतरागश्चेत् नीरसं सर्वमेव तत् ॥**
**भावानचेतनानपि चेतभवच्चेतनान चेतनवत् ।**
**व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥**

(ध्व० ३ उ०, पृ० ५३०)

अस्मिन्नेव प्रकरणे पूर्वग्रन्थकारैः निरूपितानां रसवत्-प्रेय-ऊर्जस्वि-समाहित-उदात्तादीनामलङ्कारणां विषये विवेचनं कृत्वा एतेषामलङ्कारत्वमेव नाङ्गीकृतमनेव । तन्मते इमानि नालङ्काराणि, अपितु अलङ्कार्याण्येव भवन्ति । (पा० लि० १०४) अलङ्कारो न रसवत्० ...स्वरूपादतिरिक्तस्या परस्या प्रतिभासनात् ॥ ...ऊर्जस्व्युदात्ताभिधयोः पौर्वापर्यप्रणीतयोः । अलङ्करणयोस्तद्वत् भूषणत्वं न विद्यते ॥ कुन्तकेन रसवद-लङ्कारस्य निम्नलिखित परिभाषायाः समालोचना कृताऽस्ति । ततु यथा—'रसवद्दर्शित-स्पष्ट शृङ्गारादि रसं यथा (भमहः ३.६), रसवद् रससंश्रयात्' रसवद् रसपेशलं (काव्यादर्शः २.२७५) प्रभृतयः । तद्यथा—'दर्शिताः स्पष्टाः अस्पष्टाश्च शृङ्गारादयो यत्रेति व्याख्याने काव्यव्यतिरिक्तो न कश्चिदन्यः समासार्थभूत संलक्ष्यते योऽसावलङ्कारा (पा०लि० १०६) यद्यपि रसवद्रससंश्रयात् इति कैश्चिल्लक्षणमकारि तदपि न सम्यक् समाधेयतामधितिष्ठति तथाहि रसः संश्रयो यस्यासौ रसः संश्रयः तस्मात्कारणादयं रसवदलङ्कारः सम्पद्यते । तथापि वक्तव्यमेव कोऽसौ रसव्यतिरेकवृत्तिरन्यः पदार्थः । काव्यमेवेति चेत्तदपि पूर्वमेव प्रत्युक्तम् । तस्य स्वात्मेति क्रिया विरोधादलङ्कारत्वानुप-पत्तेः । ...रसपेशलमितिपाठे न किञ्चिदत्रातिरिच्यते । (पृ० २३२)

कुन्तकेन द्वौ श्लोकौ ध्वन्यालोकादुदाहृतौ—

**तन्वीमेघजलार्द्रपल्लवतया धौताधरे वाश्रुभिः ।**
**शून्ये वाभरणैस्वकालविरहाद्विश्रान्तपुष्पोद्गमा ॥**
**चिन्ता मौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते ।**
**चण्डीमामवधूय पादपतितं जातानुतापेव सा ॥** (विक्रमो०)

**तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणि रशना,**
**विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।**
**यथाविद्धं याति स्खलितमभिसंधाय बहुशो,**
**नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥** (विक्रमो०)

तथा अनयोः श्लोकयोः ध्वनिकारिकायां (२.५) विवेचनञ्च कृतम् । 'प्रधानेऽन्यत्रे' त्यादयः कुन्तकेन ध्वन्यालोकस्य रसवदलङ्कारेण सबद्धः 'किं हास्येन म मे प्रयास्यसि पुनः प्राप्तिश्चिरादर्शनम्... । (ध्वन्या० हि० उ० पृ० २०३) तथा 'क्षिप्तो हस्तावलग्न प्रसभमभिहतोऽप्यादददानोंशुकान्तमित्यादि (ध्व०लो० द्वि०उ० पृ०

२०६ चौ०वि०भ०सं०) अनयोरुदाहरणयोः विवेचनं कुर्वन् ध्वन्यालोकमतस्य खण्डनं कृतमस्ति । उद्भटः भामहस्तथा दण्डीप्रभृतिभिराचार्यैः प्रतिपादितं प्रेयसः ऊर्जस्विनश्चालङ्काराणां परिभाषायाः खण्डनं च कृतं कुन्तकेन । अस्य मतानुसारेण रसवदलङ्कारस्य निम्नलिखितोदाहरणानि सन्ति—

समासोक्तौतावत्—

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।**
**यथा समस्तं तिमिरांशुकं तथा पुरोऽपि रागाद्गलितं न लक्षितम् ॥**

(ध्वन्या०, प्र० उ०, पृ० १०९)

**चलापाङ्गा दृष्टिं स्पृशसि बहुशो वेपथुमतिम् ।**
**रहस्याख्यायीव स्वनसि मृदुकर्णान्तिकचरः ॥**

(अ० शा० १, २१)

**ऐन्द्रं धनुः पाण्डयोधरेण शद्वधानार्द्र नखक्षताभम् ।**
**प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरत्यधिकं चकार ॥**

(सा० द०, पृ० ७६०, अलङ्कारसर्वस्व, पृ० ९२)

भामहेन दीपकालङ्कारस्य यत्त्रिविधाव्याख्याः प्रस्तुतास्तदपि कुन्तकस्य मते सदोषाः एव सन्ति । भामह-उदाहरणस्य निरूपणं कृत्वाऽयमुद्भटनिरूपित 'अन्तर्गतोपमा धर्माः' एतेषां शब्दानामपि तेष्वन्तर्भावः कर्त्तुमुपयुक्तः मन्यते । कुन्तकेषु उद्भटं 'अभियुक्ततरैः' अर्थात् 'अत्यधिको विद्वान्' इति विशेषणेन सम्बोधितः । अयं हि दीपकस्य वास्तविकोदाहरणं 'असारं संसारं... विधातुं व्यवसितः । (मालतीमाधवः ५) अत्र विधातुं व्यवसितः कर्त्ता संसारादीनामसारत्वप्रभृतीन्धर्मानुद्द्योतयन् दीपकालङ्कारमवाप्तवान् (पा० प्र०, पृ० १२७) तदुपरान्तः कुन्तकेन रूपक-अप्रस्तुतप्रशंसा-पर्यायोक्त-व्याजस्तुति-उत्प्रेक्षा-अतिशयोक्त्यादीनामलङ्काराणां लक्षणस्य परीक्षणं कृत्वा निजदृष्ट्याऽपि तेषां स्पष्टीकरणं कृतम् । तेन हि **'लिम्पतीव तमोऽङ्गानि वर्षतीवाज्जनं नभः'** इत्यादिश्लोकमुत्प्रेक्षायाः उदाहरणस्वरूपे उपस्थापितं तथा लिखितम्—(अत्र दण्डिना विहितमिति पुनर्न विधीयते) । परि वृत्यलङ्कारोपरि विचारं कुर्वन् दण्डिनः इदमुदाहरणं दत्वा—'शस्त्रप्रहारं ददताभुजेन तत्र भूभुजाम् । चिरार्जितं कृतं तेषां यशः कुमदपाण्डुरम् ।' (काव्या० द० २.३५६) लिखति—'तथा च लक्षणकारेणात्रैवोदाहरणं दर्शितम् ।' स्वकीयग्रन्थस्य १६१ पृष्ठे ध्वनिकारिका याः— (१.१३) तथा आनन्दवर्धनस्य 'श्लाघ्याशेषतनुमित्यादयः (ध्व०पृ० ११७) पद्यस्योल्लेखः कृतः । कुन्तकश्चतुर्थोन्मेषस्य प्रारम्भे लिखति—एवं सकल साहित्य- सर्वस्व कल्प वाक्यवक्रताप्रकारप्रकाशनान्तरमवसरप्राप्तामित्यादि ।'

**चतुर्थोन्मेषः**

चतुर्थे उन्मेषे प्रकरणवक्रतायाः प्रबन्धवक्रतायाश्च विवेचनं कृतमास्ते । प्रकरणवक्रतायाः उदाहरणस्वरूपे—'किं वस्तु विद्वन् गुरुवे प्रदेयम्, यावद्यते साधयितुं

तवार्थम्' इत्यादयः । रघुवंशस्य पञ्चमसर्गात् कतिपयानि पद्यानि समुद्धृतानि सन्ति तथा तेषां पद्यानामुपरि 'कुवेरं प्रतिसामन्त संभावनया जयाध्यवसायः कामपि सहृदयाह्लादकारितां प्रतिपद्यते ।' (प्र० लि० पृ० १७९) । अनेन प्रकारेण स्वाभिमतं प्रदर्शितं तेनेति । अनेन प्रकारेणाभिज्ञानशकुन्तले दुर्वासा-मुनेः शापस्य नियोजनं प्रकरण-वक्रतायाः सुष्ठूदाहरणमस्ति । द्वितीयोदाहरणं रघुवंशगतस्य मृगयाप्रकरणमस्ति, यस्य विस्तृतं विवेचनङ्कृत्वा कुन्तकेनकथितम्—'दशरथेन राज्ञा स्थविरान्धतपस्विबालवधो व्यधीयतेति एकवाक्यशक्यप्रतिपादनः पुनरयमप्यर्थः परमार्थसरससरस्वती सर्वस्वायमान-प्रतिमाविधानकलशेन तादृश्या प्रकरणवैच्छित्या विस्फारितश्चेत न चमत्कारकरणतामधि-तिष्ठति (पाण्डुलिपि १९०) प्रधानवस्तुनिष्पत्यै वस्त्वन्तर विचित्रता । यत्रोल्लसति-सोल्लेखासापराऽप्यस्य वक्रता ॥ (अस्य प्रकरणस्य) मुद्राराक्षसनाटकस्य षष्ठाङ्के प्रस्तुतमिदं कथागतवाक्यम्—'ततः प्रविशति रज्जुहस्तः पुरुषः' प्रकरण- वक्रतायाः परिभाषा (हस्तलिपि पृ० २०३) अनेन प्रकारेण प्रदत्तोऽस्ति—

**'इतिवृत्याऽन्यथावृत्तरससम्पदपेक्षया ।**
**रसान्तरेणरम्येण यत्र निर्वहणं भवेत् ॥**
**तस्या एव कथा मूर्त्तेरामूलोन्मीलितश्रियः ।**
**विनेयानन्द निष्पत्यै सा प्रबन्धस्य वक्रता ॥'**

रामायण-महाभारतौ प्रबन्धवक्रतायाः उदाहरणस्वरूपौस्तः । ('रामायणमहा-भारतयोश्च शा ताङ्गित्वं पूर्वसूरिभिरेव निरूपितम् ।') (पाण्डुलिपिः पृ० २०४) । प्रबन्धवक्रतायाः एकोऽन्योऽपिप्रकारः अस्मिन् रूपेवर्णितोऽस्ति—

**'त्रैलोक्याभिनवोल्लेखनायकोत्कर्षपोषिणा ।**
**इतिहासैकदेशेनप्रबन्धस्य समापनम् ॥**
**तदुत्तरकथावर्त्ति विरसत्वजिहासया ।**
**कुर्वीतयत्रसुकविः सा विचित्रास्य वक्रता ॥'**

अस्योदाहरणं किरातार्जुनीयं महाकाव्यमस्ति । महाकविः निजरचनायाः नामकरणे तथोदाहरणेष्वपि निजकल्पनाचमत्कारं प्रदर्शयति ।

**'आस्तां वस्तुषु वैदग्ध्यं काव्ये कामपि वक्रताम् ।**
**प्रधान संविधानाङ्गं नाम्नाऽपि कुरूते कविः ॥'**

कुन्तकेनोदाहरणस्वरूपेऽभिज्ञानशाकुन्तल-मुद्राराक्षस-प्रतिमानिरूद्ध-मायापुष्पक-कृत्या रावणादेरूल्लेखः कृतोऽस्ति । सहैव हयगीव-शिशुपालवध-पाण्डुवाभ्युदयरामानन्दराम-चरितादेः नामानि सौन्दर्यविहीनाः पदर्शितास्तेन । समानकथानकेऽपि कविप्रतिभागुणेन तेषु पार्थक्यं भवत्येव—

**कथोन्मेषे समानेऽपि वपुषीव निजैर्गुणैः ।**
**प्रबन्धाः प्राणिन इव भासन्ते हि पृथक्-पृथक् ॥**

(हस्तलिपिः २०९)

आचार्यः कुन्तकः अभिधावाद्याचार्योवर्त्तते । सः लक्ष्यार्थव्यङ्ग्यार्थयोरन्तर्भावं करोति वाच्यार्थे एव । कुन्तकेनाभिहितम्—'यस्मादर्थप्रतीतिकारित्वात् उपचारात् तावपि वाचकावेव । एवं द्योत्यव्यङ्ग्ययोरर्थयोः प्रत्येयत्वसामान्यादुपचारात् वाच्यत्वमेव' । इति । अयमाचार्यः 'कविविवक्षिविशेषाभिधानक्षमत्वमेव तावकतत्वलक्षणम् इति वाचकत्वस्यार्थः ।



## कुन्तकस्यकालः

कुन्तकस्य कालः आनन्दवर्द्धनाचार्यस्यानन्तरं राजशेखर महिम भट्टयोः पूर्वंच वर्त्तते । कुन्तकोध्वनिसिद्धान्तस्य खण्डनकर्त्ता आचार्यः आसीत् । अयं ध्वनेः समेषां भेदानां अन्तर्भाव वक्रोक्तावेवाकार्षीत् । आचार्य कुन्तको वक्रोक्तिजीवितेलिखति—'यस्मादत्रध्वनिकारेण व्यङ्ग्यष्टाङ्गकभावोऽत्र सुतरां समर्पितः तत् किं पौनरुक्त्येन' । किञ्चास्मित्रे व ग्रन्थेऽन्यत्र लिखति—'भवभूतिराजशेखरविरविरचितेषु बन्धसौन्दर्येषु, मुक्तकेषु परिदश्यते ।' आभ्यां वाक्याभ्यां वक्रोक्तिजीवितकारः आनन्दवर्द्धनाचार्य-राजशेखरयोरूल्लेखं स्वपूर्ववर्त्तिरूपेणाकार्षीत् । एतेमकुन्तकः आनन्दवर्द्धनराजशेखरयोः परवर्त्ती सिद्ध्यति ।

व्यक्तिविवेककारोमहिमभट्टः स्वकीयेग्रन्थे कुन्तकस्योल्लेखमकार्षीत् । निम्नाङ्किते श्लोके—

> **'काव्यकाञ्चनकशणश्ममानिना कुन्तकेन निजकाव्य लक्ष्मणि ।**
> **यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो यथा ॥'**

अस्मिन् श्लोके कुन्तकस्य स्पष्टरूपेणोल्लेखात् कुन्तको महिमभट्टस्य पूर्ववर्त्ती सिद्ध्यति । राजशेखरस्य कालो दशमशताब्दः स्वीक्रियेते । यतो राजशेखरः कान्यकुब्जेश्वरस्य महेन्द्रपालस्य गुरुरासीत् । महिमभट्टस्य कालः खीष्टाब्दस्य एकादशाब्दः स्वीक्रियते । अतएव कुन्तकस्य तयोरन्तराले कालोदशमशताब्दस्योत्तरार्द्ध-भागः स्वीकरणीयः ।



## अभिनवगुप्तपादाचार्यस्य परिचयः

अभिनवगुप्तपादाचार्यः काश्मीरजः शैव आसीत् अयं हि भरतमुनि प्रणीतनाट्य-शास्त्रस्याभिनवभारताख्यव्याख्याया आनन्दवर्धनकृतध्वन्यालोकस्य लोचनाख्य व्याख्यायाः शैव शास्त्रस्य नाट्यलोचनस्य कर्त्ता । अभिनवगुप्तपादानामविषये त्विदं रहस्यमव-गन्तव्यम्—'पुरा किल काचित् बलभी पठतां बहूनां ब्राह्मणबालकानामध्ययन-शालाऽसीत् । तत्र पठन् कश्चित् गौड़वालोऽति सौबुध्यान्मुखरत्वाच्च निखिलबालानां

भयप्रदत्वेनं बालबलभी भुजङ्ग इति गुरुणा व्यपदिष्टः । स आचर्यतामुपगतः इति सकल- रहस्याभिज्ञः श्रीवाग्देवतावतारो (मम्मटः) गूढमेतन्नामाभिनवगोपानसीगुप्तपाद इति वैदग्ध्य मुखेनाभिव्यनक्तीति ।

सः यद्यपि काश्मीरीय आसीत् किन्तु, तस्य पूर्वजाः सर्वथा काश्मीरवासिन एव नासन् । अभिनवगुप्तस्य जन्मतः प्रायः २०० वर्षाणां पूर्वमेव तस्य पूर्वजाः उत्तर-प्रदेशस्य कान्यकुब्जनगरस्य निवासिनः समभवन् । तदात्वेतन्नगरं समृद्धेः पराकाष्ठाम् चुम्बत् । श्रूयते एतस्य पूर्वजेषु कश्चित् अत्रिगुप्तः (अभिगुप्तः), योऽन्तर्वेद्यामवात्सीत् । अन्तवेदीगङ्गायमुनयोः प्रान्ते कान्यकुब्जेष्ववर्त्तिष्ठ, यत्र यशोवर्मणः (७३०-७४० खीष्ट्राब्दे) शासनमभवत् । अत्रिगुप्तः सर्वेषु शास्त्रेषु निष्णातो विख्यातश्चाविद्यत । काश्मीरराजोललितादित्योऽस्य पाण्डित्यमवलोक्य नितरां तुतोष, प्रभावितश्च बभूव । कान्यकुब्जेश्वरं यशोवर्माणञ्च पराजित्य ललितादित्योऽत्रिगुप्तमेनमात्मना सहैव काश्मीरान् आनिनाय सानुरोधम् । अस्य च काश्मीरेश्वरस्यादेशेन वितस्तातीरेऽत्रिगुप्तस्य (अभिगुप्तस्य) आवासाय सितांशुमालिमन्दिरस्य पृष्ठतो भव्यं भवनं निरमाप्यत । भवनेन सह चास्मै भूयसी भूमिसम्पददीयत् । अत्रिगुप्तादनन्तरं शतं वर्षाणि यावज्जातानां तद्वश्यानां किञ्चिदैतिह्यं नोपलभ्यते । अनन्तरं तु दशम्याः शताब्द्याः प्रारम्भेऽभिनवगुप्तपादस्य पितामहो वराहगुप्तः समभवत् । अयं वराहगुप्तोऽपि महापण्डितः परमशैवश्चासीदिति विश्रुतम् । तथा चोक्तमपि अभिनवगुप्तपादाचार्येण स्वकीये तन्त्रालोकाभिधाने ग्रन्थे—

**निःशेषशास्त्रसदनं किल मध्यदेश-**
**स्तस्मिन्नजायत गुणाभ्यधिको द्विजन्मा ।**
**कोऽप्यत्रिगुप्त (अभिगुप्त?) इतिनामनिरुक्तगोत्रः ।**
**शास्त्राविधचर्वणकालोद्यदगस्त्यगोत्रः ॥**
**तमथ ललितादित्यो राजा निजं पुरमानयत् ।**
**प्रणयरभसात् काश्मीरराज्यं हिमालयमूर्धजम् ॥**
**तस्मिन् कुबेरपुरचारि सितांशुमौलि ।**
**साम्मुख्यदर्शनविरूढपवित्रभावे ॥**
**वैतस्तरोदधि निवास सम्बुष्व चक्रे ।**
**राजा द्विजस्य परिकल्पितभूरिसम्पत् ॥**

अस्मिन्नेव तन्त्रालोकग्रन्थे स्वपितुः पितामहस्य च नाम्नो निर्देशं कुर्वताऽभिनव-गुप्तपादाचार्येणाभिहितम्—

**तस्यान्वये कोऽपिं वराहगुप्तनामा बभूव भगवान् स्वयमन्तकाले ।**
**गीर्वाणसिन्धुलहरीकलिताग्रमूर्धा यस्याकरोत् परमनुग्रहमाग्रहेण ॥**
**तस्यात्मजः चुखुलकेति जने प्रसिद्धः चन्द्रावदातधिकरणो नरसिंहगुप्तः ।**
**यं सर्वशास्त्ररसमं जनशुभ्रचित्तं माहेश्वरी परमलङ्कुरुतेस्म भक्तिः ॥**

अनेन प्रतीतो भवति यदभिनवगुप्तस्य पिता नरसिंहगुप्तः 'चुखलनाम्ना कुखुलकनाम्ना वा व्यपदिश्यते स्म । चुखुलः परममतिमान् सकलशास्त्रनिष्णातः शिवभक्ताग्रणीश्चावर्त्तत । अभिनवगुप्तस्य माता 'विमला' अथवा विमलकला पुण्यात्मा धर्मपरायणा महिलाऽऽसीत् ।

**'विमलकलाश्रयाभिनवसृष्टिमहाजननीभरित तमुश्च जननी पञ्चमुख गुप्तरुचिर्जनकः'**

—तन्त्रालोकस्य प्रथमोऽयं श्लोकः

अभिनवभारत्यास्तृतीयभागस्य सप्तविंशतितमोऽध्यायस्यान्तेऽभिनवगुप्तस्य पितुर्नामसुखलोऽथवा नृसिंहगुप्तोऽप्यायाति । मालिनीविजयवार्त्तिकस्यारंभेऽभिनवगुप्तेन स्वयं लिखति—

**गुरुभ्योऽपि वरीयांसं युक्तं श्रीचुखुलाभिधम् ।**
**वन्दे यत्कृतसंस्कारः स्थितोऽस्मि गलितग्रहः ॥**

(त० लो०, ५ श्लोकः)

**नृसिंहगुप्तायतिनेत्थमत्र वृत्तिस्वरूपं प्रकटं धायि ।**
**यत्त्रिनेत्रेणहृददन्तरात्मस्वरूपमेव प्रकटं व्यधायि ॥**

(अभि० भा०, अ० २०, पृ० १०७)

तन्त्रालोके जयरथेनोक्तम्—'अस्य हि ग्रन्थकृतः श्रीनरसिंहगुप्तविमलाख्यौ पितरौ इतिगुरवः' (तन्त्रालोकः—१-१ सं० २३, पृ० १४)

अभिनवगुप्तस्य पितृव्यो वामनगुप्तः, अनुजो मनोरथगुप्तश्चास्ताम् । सकलोऽपि चायं परिवारः पुष्पमयोवैदुष्यमयश्चाभूत् । अभिनवगुप्तस्यैकः गुरुः लक्ष्मणगुप्तरासीत् । अभिनवगुप्तेनोक्तम्—तस्य पितुर्दौहित्रदेहनः यशोरागनाम्नः कोऽपि प्रसिद्धः विद्वान् आसीत्—

**इति षोडशमध्यायं ग्रन्थनिर्ग्रन्थिकं व्यधात् ।**
**यशोराशेर्यशोराग नाम्नो दौहित्र देहजः ॥**

(अ० भा० आ० १, पृ० २९७)

अयमाचार्यो विद्याव्यसन्यासीत् । तदात्वे कश्मीरे काश्मीरस्य सविधे च ये ये विद्वांसः प्रख्याता आसन् तेषां समेषां सविधेगत्वाऽयं तस्यास्तस्याविद्यायाः अध्ययनमकरोत् । अत एवास्यभित्रानां शास्त्राणां गुरवो भिन्नाः भिन्नाः अभूवन् । तेषां सूची निम्नप्रकारेणास्ते—

१. ध्वनिसिद्धान्तस्य गुरुः—इन्दुराजभट्टः ।
२. व्याकरणशास्त्रस्य गुरुः—अभिनवगुप्तस्य पितास्वयं नरसिंहगुप्तः ।
३. ब्रह्मविद्यायाः गुरुः--भूतिराजः ।
४. नाट्यशास्त्रस्य गुरुः—भट्टतौतः ।
५. द्वैतवादिनः शैवसम्प्रदायस्य च गुरुः—भूतिराजतनयः ।

६. द्वैताद्वैततन्त्रस्य गुरुः—वामनाथः ।

७. प्रत्यभिज्ञाक्रम-त्रिकदर्शनानां गुरुः—लक्ष्मणगुप्तः ।

पूर्वोक्तलिखितानां गुरुणामुल्लेखमभिनवगुप्तपादाचार्यः स्वाधीतशास्त्रैः साकमकार्षीत्। एतेभ्यो व्यतिरिक्तानां त्रयोदशसंख्यकानां गुरुणां नाम निर्देशं सः निम्नाङ्कितश्लोक अकार्षीत्—

**श्रीचन्द्रभवभक्तिविलासयोगानन्दाभिनन्दशिवशक्तिविचित्रनाथाः ।**
**अन्येऽपि धर्मशिववामनकोद्भट-श्रीभूतेशभास्करमुखप्रमुखामहान्तः ॥ इति ॥**

दशम्यामेकादश्याञ्च शताब्द्यां काश्मीरराज्यस्य वातावरणं धार्मिकीभिर्भावनाभिर्भरित प्राचमासीत्, सर्वाः प्रजाधर्मे बद्धश्रद्धा अभवन् । यथा राजा स्वराज्यस्य विस्तारमैच्छत्, तथा छात्रः स्वज्ञानस्य । पितरौ सुयोग्यं पुत्रमाकाङ्क्षताम्, वणिजश्च वाणिज्य-विकासम् । स्व स्व कामसिद्धये च धार्मिकास्तांस्तान् देवानुपासते स्म । विमलकला-शक्तिम्, नरसिंहगुप्तश्च शिवं समुपासाताम् । एतया ह्युपासनया पितराविच्छानुरूपां सन्ततिं लेभाते । एतादृशीञ्च सन्ततिः 'योगिनीभू'रिति कथ्यते । योगिनीभूखे बालकः शैवरहस्य मधिगन्तुं प्रभवतीति च शैवानां प्रवादः । जयरथेन तूक्तं यद् 'योगिनीभ्योऽप्यभिनवगुप्तस्य विचारा स्वभूत्वमेवाश्रिता आसन्' । इति ।

अयं हि आचार्यः प्रतिभावान् प्रभाववांश्चासीत् । अयं बालब्रह्मचारी विद्वानासीत् । भगवतः शिवस्यायं परम-भक्तश्चासीत् । ज्ञानप्राप्त्यर्थं प्रतिभा-विकासाय चायं अनेकानामाचार्याणां चरणेष्वध्ययनमकरोत् । तस्य समग्ररचनाः कतिपयेषु वर्गेषु विभक्ताः सन्ति । तेषु तन्त्रविषयको वर्गाऽप्येकोऽस्ति । अत्रैका तन्त्रालोकाख्यैका विशालरचनाऽस्ति । अस्मिन् तन्त्रालोके आगमतन्त्राणां विवेचनमस्ति । यथा—

**दशाष्टादशवस्वष्टभिन्नं यच्छासनं विभोः ।**
**तत्सारं त्रिकशास्त्रं हि तत्सारं मालिनीमतम् ॥**
(तन्त्रा० १.१८, भा० २२, पृ० ३५)

अस्मिन् भागे मालिनीविजयवार्त्तिकः, परात्रिंशिकाविवरणम्, तन्त्रालोकसारेत्यादयः सन्ति ।

अयं हि प्रतिभावान् विद्वान् स्वकीय बाल्यकाले सतीर्थेभ्यः प्रतिभाबलेन भयं जनयन्नेव गुरुभिर्गुप्तपादः, अभिनवोगुप्तपादः इत्याख्यां लम्भित इत्यपि अनुश्रूयते । भरतमुनि प्रणीतस्य नाट्यशास्त्रस्य व्याख्यया तन्त्रालोकग्रन्थरचनया चायं साहित्य-व्याकरणयोः परमाचार्यतया स्मर्यते । न केवल साहित्य-व्याकरणयोः, अपितु तन्त्रादिषु रहस्यमयेषु शास्त्रेष्वपि स सम्यगधीती विनयेन भक्त्या च गुरुजनान् तथा समप्रीणयत् यथा तेऽस्मै गुह्यात् गुह्यतराण्यपि रहस्य वस्तूनि समुपादिशन् । परमविदुषे चास्मै 'सर्व विद्यापारङ्गत 'आचार्य' इति विरुदमुपाहरन् ।

ज्ञानपिपासानिवृत्तयेऽसौ देशान्तराण्यपि अयासीत् । तत्र कौलिकाद् शम्भु-नाथाच्चायं तज्ज्ञानं लब्धवान्, येनात्मदर्शनजन्यां शान्तिं प्राप्यातितरां कृतार्थ-

ममन्यतात्मानम् । पितुः श्रीनरसिंहगुप्ताद् व्याकरणं, मुख्यतया श्रीवामनाथात् द्वैताद्वैत-तन्त्रम्, भूतिराजतनयाद् शैवागमम्, भूतिराजाद् ब्रह्मविद्याम्, लक्ष्मणगुप्तात् कर्मकाण्डं त्रिकदर्शनञ्च, इन्दुराजात् ध्वनिम्, भट्टतौतात्, नाट्यशास्त्रम् चाधीतवतोऽस्य सुविदित-मेवाभूद् अखिलमपि वेदितव्यम् ।

अथाध्यात्मिकज्ञानस्य योगानुभूतेश्चानुरूपम्, जागतिकेभ्यो विषयेभ्यो विरज्याभिनव-गुप्तपादः परिव्रज्यामग्रहीत् । येन प्रबृद्धात्मशक्तिरयं सुकुमारवस्तुनि साहित्ये तर्ककर्कशेषु च दर्शनेषु समभावेनैव लेखनीं व्यापारयामास । अद्यापि शैवसाहित्ये तदीयं महत्त्वपूर्णस्थानं तदीयात्मशक्तेरुत्तमं निदानम् ।

श्रीलक्ष्मणगुप्तगुरोः प्राप्तया प्रत्यभिज्ञयाचान्तः सन्तोषमवाप्यैष ग्रन्थलेखन रूपं कर्म सम्पाद्य शैवसिद्धान्तानुरूपं त्रिके कुलायाञ्च चेतो दधौ । येनायमद्भुद्शक्ति-युक्तानां महापुरुषाणां पञ्चलक्षणान्यवाप । तद्यथा भवेभक्तिं मन्त्रसिद्धिम्, तत्त्वनियन्त्रम्, कामदमनम्, सकलशास्त्रज्ञानोदयञ्चेति ।

अभिनवगुप्तपादैः प्रणीताः निम्नाङ्किताः एकचत्वारिंशत्संख्यकाः ग्रन्थाः सन्ति । तद्यथा—बोधपञ्चदशिका, परात्रिंशिका, मालिनीविजयवार्त्तिकम्, तन्त्रालोकः, तन्त्रसारः, तन्त्रवटधानिका । ध्वन्यालोकलोचनम्, अभिनवभारती, भगवद्गीतार्थसङ्ग्रहः, परमार्थ-सारः, ईश्वरप्रत्यभिज्ञाविमर्शिनी बृहती, क्रमस्तोत्रम्, देहस्थदेवताचक्रस्तोत्रम्, ईश्वर-प्रत्यभिज्ञाविमर्शिनीलघ्वी, भैरवस्तोत्रम्, परमार्थद्वादशिका, अनसवनिवेदनम्, परमार्थ-चर्चा, महोपदेशविंशतिका, अनुत्तरशतिका, तन्त्रोच्चयः, चटखर्परकुलकवृत्तिः, क्रम-केलिः, शिवदृष्ट्यालोचनम्, पूर्वपञ्चिका, पदार्थप्रवेशनिर्णयटीका, प्रकीर्णकविवर्णनम्, कथामुखटीका, प्रकरणविवरणम्, काव्यकौतुकविवरणम्, लघ्वीप्रक्रिया, भेदवाद-विदारणम्, देवीस्तोत्रविवरणम्, तत्त्वार्थप्रकाशिका, शिवशक्त्यविनाभावस्तोत्रम्, विम्बप्रति-विंबत्ववादः, परमार्थसङ्ग्रहः, अनुत्तरशतकम्, प्रकरणस्तोत्रम्, नाट्यालोचनम्, अनृनत्वविवविमर्शिनी चेति ।

अभिनवगुप्तेनोक्तम्—यदयं ज्ञानान्वेषणे तार्किकश्रौतबौद्धार्हत् वैष्णवादि पण्डिता-नामाश्रयं गृहीतवान्—

**अहमप्येत एवाधः शास्त्रदृष्टिकुतूहलात् ।**
**तार्किकश्रौतबौद्धार्हद्वैष्णवादीनसेविषि ॥**

(का०सं०सं० तन्त्रालोक १३, आह्नि० श्लो० ३४५-४६ पृ० २०६)

अयं हि विद्वान् यौगिकाभ्यासे कुशलः आसीत् । तस्यानुचिन्तनमासीत् यदयं शिवं परमसत्यञ्चालभत् । तस्यायमपि विश्वासः आसीत् यदनेनाध्यात्मिकतत्त्वान्वेषकान् सर्वसाधारण जनान्नपि मुक्तिं मार्गं शिवाज्ञया दर्शयितुं शक्यते । सत्यप्ययं विद्वान् स्वयं सिद्धः परोपकारार्थमनेकानां ग्रन्थानां रचनां चकार । यथा—

**'शिवरस्मृतिकृतार्थोऽपि परार्थं चुखुलात्मजः ।'**

(अभि०भा०, द्वि०भागः, ११७ पृ०)

**'यज्ज्ञेयसतत्वं दर्श्यते तच्छिवाज्ञया ।**

**मया स्वसंवित्सत्तर्कपतिशास्त्रत्रिकक्रमात् ॥'**

(तन्त्रालोकः प्रथमाह्निके श्लो० स० १०६)

स्वसंवितस्वानुभवः सत्तर्कोयुक्तिः पतिशास्त्रं भेदप्रधानं शैवं त्रिकं परादिशक्ति-त्रयाभिधायकं शास्त्रं क्रमः चतुष्ट्यार्थः (जयरथरचित विवेके दर्शनीयः) ।

प्रत्यभिज्ञाविमर्शिन्याश्चान्तेऽभिनवगुप्तेनोक्तम्—'शिवदृष्ट्यां । गुरुभिः निरूपितमार्गं तेन सरलः सर्वग्राह्यश्च कृतः । योऽपि जनः अस्य मार्गस्यानुसरणं करोति सः पूर्णो भवति, शिवलिङ्गे समाहितोभवति । अभिनवगुप्तः शिवचरणे स्थित्वा अध्यात्मज्ञानं प्राप्तवान् । 'शिवचरणस्मरणदीप्तेन धूतशब्दः' (पर० सा० श्लो० १०५) अस्य व्याख्या यथा—उपदेष्टुः समाविष्ट महेश्वरस्वभावोऽनेन वाक्येनोक्तः स्यात्—योगेश्वरः ।

पूर्वोक्तैकचत्त्वारिंशत्तमेषु ग्रन्थेषु केवलं त्रय एव ग्रन्थाः काव्यशास्त्रेण सम्बद्धाः सन्ति ध्वन्यालोकलोचनम्, अभिनवभारती, काव्यकौतुकाभरणञ्चेति ।

अभिनवगुप्तो हि यद्यैकतः शैवदार्शिनिकस्तद्यपतः साहित्ये व्यञ्जनवादी तथा ध्वनिवादी । अतएव रसपरक सिद्धान्तो तयस्य शैवदर्शनव्यञ्जनावादयोराधारभित्तौ-स्थापितो विद्यते । रसो हि व्यङ्ग्य इत्येतन्मतम् । भरतरससूत्रास्थ 'संयोगात्' इत्यस्थ 'व्यङ्ग्यव्यञ्जकभावरूपात् 'इति निष्पत्तिः' इत्यस्य 'अभिव्यक्तिः' इत्यर्थ इत्येवंरूपेण वर्णयति । एतदतिरिक्तं शान्तरसस्य स्थापनामप्यभिनवरूपेणैव कृतवान् । नाट्य-शास्त्रोहि यद्यप्यष्टरसा नामेव निर्देशोवर्त्तते किन्त्वयमभिनवगुप्तः स्वकीयभारत्यां भरताधारेणैव नवमशान्तरसमपि स्थापितवान् । रसविषयकसमीक्षा चैतस्य नितान्त वैज्ञानिका युक्तियुक्ताचेति । यद्य यमाचार्यो नाभविव्यत्तदानूनं नाट्यशास्त्रध्वन्यालोकयो-स्तथ्यानामिदानीन्तनसमयेऽवबोधः कथमपि न भवेदिति सार्वजनीनोविश्वासः । एतत् प्रदर्शित रससिद्धान्तव मम्मटादारभ्य पण्डितराजस्पै जगन्नाथ पर्यन्तं मान्यमासीत्। नाट्यशास्त्रालङ्कारशास्त्रयोर्मध्येऽभिनवगुप्तस्य सर्वप्रथममाचार्येषु गणनास्तीतिसर्वमन-वद्यम् ।

अस्य कालनिर्धारणे नातिकाठिन्यमस्ति । ईश्वर प्रत्यभिज्ञविवृत्त विमर्शिन्यामनेनैव-लिखितम्—

**इति नवतितमेस्मिन् वत्सरेऽन्ते युगांशेतिथिशशिजलधिस्थेमार्गशीर्षावसाने ।**
**जगति विहितबोधामीश्वरप्रत्यभिज्ञाव्यवृणुतपरिपूर्णा प्रेरितः शम्भुपादैः ॥**

(ई० प्र० विम० श्लो० १५, पृ० ४०७ का सं० सी० सं० ६५)

अस्य तात्पर्यमिदमस्तियदियं रचना ४११५ कलिवर्षे, १०१४ ख्रीष्ट्राब्देमार्ग-शीर्षस्यान्ते पूर्णाऽभवत् । भैखस्तवस्यान्तेऽनेनास्य रचनायास्तिथेः निर्देशमनेन प्रकारेण कृतः—

**वसुरसपौषेकृष्णदशम्यामभिनवगुप्तः स्तवमिमकरोत् ।**
**येन विभुर्भव मरूसन्तापं शमयति सटित जनस्य दयालुः ॥**

(बु० क० रिपो० पृ० १२)

**षट्षष्टिनामकेवर्षे नवम्यामसितेऽहनि ।**
**मयाभिनव गुप्तेनमार्गशीर्षे स्तुलः शिवः ॥**

(अभि० पृ० ४१२, by Panday)

अभिनवगुप्तस्य स्वकीयानां परकीयाणाञ्च ग्रन्थावलोकनेन ज्ञायते यथा ९९५ खीष्ट्राब्दे तेन साहित्यनिर्माणकार्यं प्रारब्धमासीदिति । अनेन विदुषा विभिन्नानां गुरूणामन्तिके विभिन्नानां शास्त्राणामध्ययनं सम्पादितमभूत् । एतेनानुमीयते यद् तस्य जन्म ९९५-१०२० खीष्ट्राब्दयोरन्तर्भवदिति ।



## धनञ्जयः, तदीयं दशरूपकञ्च

धनञ्जयः, दशरूपककर्त्ता 'विष्णु' पुत्रः मालवापरमारवंशमुञ्जराजस्य राजकविः (९७४-९७५ ई०) दशमशतकोत्तरार्धसमये आसीत् । स्वपित्रादीनां नामानि स्वयमेवोक्तानि । तद्यथा—

**विष्णोः सुतेनाऽपि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः ।**
**आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत् ॥**

धनिकोहि धनञ्जयानुजो दशरूपकावलोककर्त्ता । तथा चोक्तम्—

**'इतिश्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके रसविचारोनाम चतुर्थप्रकाशः ।'**

अवलोकातिरिक्तमेतस्य साहित्यशास्त्रोपरि **'काव्यनिर्णयाख्य'** मेकोग्रन्थः ।

आचार्य-धनञ्जयस्य मुख्यः सम्बन्धो नाट्यशास्त्रेण साकं वर्त्तते न तु काव्यशास्त्रेण । अत्र दशरूपकस्योल्लेखोऽनेन कारणेनावश्यकोऽस्ति, यतोह्यस्मिन् ग्रन्थे रससिद्धान्तस्य विवेचनमप्यस्ति । भरतमुनेर्नाट्यशास्त्रानन्तरंनाट्यशास्त्रविषयकोऽयं सर्वाधिक प्रख्यातोग्रन्थो वर्त्तते । नाट्यशास्त्रं तु नाट्यस्य विश्वकोशो विद्यते । नाट्येन सम्बद्धानां सर्वेषां विषयाणामत्र सङ्कलनं कृतमास्ते । नाट्येन सम्बद्धानां विषयाणांमध्ययनस्य दुष्करत्यमेवाकलय्याचार्यो धनञ्जयो दशरूपकग्रन्थस्य निर्माणमकरोत् । अस्मिन् ग्रन्थे धनञ्जयो नाट्येन सम्बद्धानां सर्वेषां विषयोपविषयाणां नाट्यशास्त्रात् सङ्कलनं चकार । नाटकस्य लक्षणादीनां संक्षेपेणोपस्थापनमेवास्य ग्रन्थस्य प्रयोजनमास्ते ।

दशरूपकोऽयं ग्रन्थः कारिकारूपेण लिखितो वर्त्तते । अस्मिन् प्रायः ३०० कारिकाः सन्ति । आंग्लभाषायां यस्मिन्नर्थे (Drama) शब्दस्य प्रयोगोभवति, तस्मिन्नेवार्थे संस्कृतसाहित्ये 'रूपक' शब्दस्य प्रयोगो भवति । बहुधा ड्रामाशब्दस्यार्थः

नाटक शब्देन व्यक्तो भवति । किञ्च संस्कृत साहित्ये नाटकन्तु रूपकाणामेकः प्रभेदोवर्त्तते । रूपके तत्तपात्र विशेषस्य नटोपरि आरोपो भवति । यथा—

**अवस्थानुकृतिर्नाटय रूपं दृश्यतयोच्यते ।**
**रूपकं तत्समारोपात् दशथैव रसाश्रयम् ।।**

(दशरूपकम् प्र० प्र० श्लो० ७)

'नटे रामाद्यवस्थारोपेण वर्त्तमानत्वाद्रूपकं मुखचन्द्रादिवत्, इत्येकस्मिन्नर्थे प्रवर्त्तमानस्य शब्दत्रयस्य 'इन्द्रः पुरन्दरः शक्रः' इतिवत्प्रवृत्तनिमित्तभेदो दर्शितः'

(दशरूपकावलोकऽतत्रैव)

तान्नेव रूपकान् दशभेदानुद्दिशति—

**नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।**
**ईहामृगाङ्कवीथ्यः प्रहसन् मितिरूपकाणिदश ।।**

(दश० प्र० प्र० श्लो० ८)

अस्मिन् ग्रन्थे चत्वार प्रकाशाः सन्ति । तत्र प्रथमे प्रकाशे मङ्गलाचरणं तथा ग्रन्थस्य प्रयोजन विवेचनम्, 'नाट्यानां किन्तु किञ्चित्प्रगुणरचनयालक्षणं संक्षिपामि' (द० प्र० श्लो० ४) । इति वाक्ये नोपदर्श्य नाटकस्य पञ्चसन्धीनां पताकास्थानकादीनाम्, अर्थप्रकृतीनाम्, अवस्थानां सन्धिमुखसन्ध्यादीनां लक्षणानि, अङ्गगर्भसन्धिलक्षणम्, अङ्गनिर्वहणसन्धिलक्षणम्, अङ्गअवमर्शसन्धिलक्षणम्, तथा आख्यानवस्तुनो भेदादिकञ्च प्रदर्शयामास ।

द्वितीयप्रकाशे—नायकस्य लक्षणम्, तस्य चत्वारोभेदाः, धीरललित-धीरशान्त-धीरोदात्त-धीरोद्धतानां लक्षणानि, शृङ्गारीनायकस्य चत्वारोभेदाः—दक्षिण-शठ-धृष्ट-अनुकूलानां लक्षणानि तेषां सहायकाः विट-विदूषकप्रतिनायकानाञ्च लक्षणम्, नायकस्य सात्विकगुणवर्णनम्, नायिकाभेदः—स्वीया-परकीया तथा सामान्या, मुग्धा-मध्याप्रगल्भा, ज्येष्ठा-कनिष्ठादीनां त्रयोदशभेदाः नायिकायाः विंशत्यलङ्काराः, नायकस्य धर्मादिकार्येषु सहायकाः, कैशिकादीनां वृत्तीनाञ्च वर्णनं कृतमास्ते ।

तृतीयप्रकाशे नाटकलक्षणस्य प्रस्तावनायाः अङ्कसंविधानस्य, कथाभागस्योचित्यानुसारेण परिवर्त्तनस्य, नाटकस्य प्रधानरसस्य, पात्राणां सङ्ख्यायाः प्रवेशनिर्गमनादिकस्य, च वर्णनकृतमास्ते ।

चतुर्थप्रकाशस्य सम्बन्धो मुख्यतया रसैः साकं वर्त्तते । रसस्य स्थायिभावस्य व्यभिचारिभावस्य च विवेचनम्, सामाजिके रसनिष्पत्तिप्रकारस्य, रसास्वादनप्रकारस्य, नाट्ये शान्तरसस्यानुपयोगितायाः, अन्येषां रसादीनां स्थितेश्च विवेचनं कृतमास्ते ।

संस्कृतनाट्यशास्त्रस्य विषये त्रयाणां महत्त्वपूर्णग्रन्थानां रचनाऽभवत् । एषु ग्रन्थेषु भरतस्य नाट्यशास्त्रम्, अवलोकसहितं दशरूपकम्, तथा साहित्यदर्पणस्य च नाम विशेषरूपेणाल्लेखनीयमस्ति । भरतेनोक्तम्-काव्यं नाट्यञ्च समानार्थिनौ शब्दौ स्तः—

**काव्यबन्धास्तु कर्त्तव्या षट्त्रिंशल्लक्षणान्विताः ।**

**षट्त्रिंशल्लक्षणान्येवं काव्य बन्धेषु निर्दिशेत् ॥**

(ना० शा० १६. १६९)

वामनमतानुसारेण काव्यरचनायां दशरूपकानां स्थानमतिमहत्वपूर्णमस्ति । तद्यथा—

**अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।**
**रूपकं तत्समारोपात् दशधैव रसाश्रयम् ॥** (दश० १.७)

धनञ्जयेनोक्तम्—यन्नाटकन्त्वन्यनाटक-प्रभेदानां निर्माणे मूलाधारस्य कार्यं करोति । तद्यथा—

**प्रकृतित्वादथान्येषां भूयो रसपरिग्रहात् ।**
**सम्पूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ॥** (दश० ३.१)

काव्यनिर्णय नामक ग्रन्थे धनिकेनाप्युक्तम्—'न रसादीनां काव्येन' सह व्यंग्य-व्यञ्जकभावः किं तर्हि भाव्यभावकसम्बन्धः । काव्यं हि भावकम्, भाव्यारसादयः । (४-७) । अनेन ज्ञातो भवति यद्धनिकस्यमान्यता भट्टनायकेन सह मिलति ।

धनञ्जयेन स्वप्रतिभयैवेतत्कृतमिति तु कदापि न भ्रमितव्यम्, प्रमुखनायिका-भेदातिरिक्तं शृङ्गाररसविषयातिरिक्तं च समस्तं विषयजालं भरतनाट्यशास्त्रादेव संक्षेपेणेह गृहीतम् । तथा पुनश्चोक्तं तेनैव—**'नाट्यानां किन्तु किञ्चित् प्रगुणरचनयालक्षणं संक्षिपामि'** (द० १)

धनञ्जयस्तथा धनिकः उभावपि भाट्टमीमांसकद्वारात्यधिकं प्रभावितौ । एतौ हि अभिधालक्षणा—तात्पर्याभिधामेव वृत्तिं स्वीकृतवन्तौ न तु व्यञ्जनाख्यां तुरीयां वृत्तिम् । भाट्टमीमांसका हि व्यञ्जनावृत्तिगम्यप्रतीयमानार्थप्रतीतिं तात्पर्यवृत्त्यैव स्वीकुर्वन्ति । ध्वनिवादिनः 'रसो व्यङ्ग्यः' इति मन्यन्ते तथा तत्प्रतीतये एव व्यञ्जनावृत्तिं कल्पयन्ति । धनिको हि दशरूपकचतुर्थप्रकाशे मतमेनं खण्डयन्-स्थायीभावः (रसोऽपि) विभावादि-द्वाराप्रतीतवाक्यार्थ एव यथा कस्मिन्नपि वाक्यरूपे अभिहिताऽथवा प्रकरणादिना बुद्धिस्था क्रिया कारकैर्युक्ता वाक्यार्थं निष्पादयति तद्वत् । तथाहि—

**वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।**
**वाक्यार्थः कारकैर्युक्ता स्थायीभावस्तथेतरैः ॥**

(दश०च० प्र०का० ३७ पृ० १४५.४६)

वाक्यस्याभिधाशक्तिस्तद्विभावादिप्रतिपादनं करोति तथा तद्द्वारारसरूपे पर्यवसिता भवति । काव्यादिशब्दार्थानां पदार्था विभावादयः तथा वाक्यार्थः स्थायीभाव एवं रसस्तात्पर्यार्थः । तथाचोक्तम्—

**'तात्पर्य व्यतिरेकाच्चव्यञ्जनीयस्य न ध्वनिः ।**
**किमुक्तं स्यादश्रुतार्थ तात्पर्येऽन्योक्तिरूपिणि ॥'**

(दश०च० प्र०श्लो० १, पृ० २४९)

**तात्पर्यानतिरेकाच्च व्यञ्जनीयस्य न ध्वनिः ।**
**किमुक्तं स्यादश्रुतार्थ तात्पर्येऽन्योक्तिरूपिणी ॥**

(दश०च० प्र०अ० श्लो० १, पृ० २४९)

रसस्य व्यङ्ग्यत्वं खण्डयन्तौ विभावादौ तथा रसे भाव्य-भावकसम्बन्धे इति मन्येते । एतन्मते काव्यं विभावादिर्वा भावकः रसादिर्भाव्यः । भाव्य-भावक सम्बन्ध-कल्पना च भट्टनायकमतप्रदर्शित, भावकत्व भोजकत्व, व्यापारयोर्मध्ये । भावकत्व-व्यापाराधारेण । पूर्वोक्त निष्पन्तिरित्यस्यैतन्मते भावना-अर्थः । भावो हि—सामाजिकान् शृङ्गारादि रसानां कारयत्यतो 'भाव' इत्युच्यते ।

**'भावाभिनयसम्बन्धान् भावयन्ति रसानिमान् ।**
**यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥**

(तत्रैव, चौ०सं० पृ० २५३)

सामाजिकाः नटकादिषु नटद्वारा अर्जुनाद्यभिनयं दृष्ट्वा तानर्जुनादीन् मत्वा तेभ्यः उत्साहादीनामास्वादानुभवं तथैव कुर्वन्ति यथा मृगगजाश्वादिभिः क्रीडन्तो बालकास्तेभ्यो रसं प्राप्नुवन्ति ।

**क्रीडतां मृन्मयैर्यद्वद्बालानां द्विरदादिभिः ।**
**स्वात्साहः स्वदतें तद्वच्छ्रोतृणामर्जुनादिभिः ॥**

(दश०च० प्र०का० ४१-४२ पृ० २५६)

नाट्यशास्त्रदृष्ट्या दशरूपके शान्तत्रोपयुक्तरसं मन्यते तथा शान्तस्य स्थायीभावं 'शमं' नैवाङ्गीकृतम् । यथा—

**'रत्युत्साह जुगुप्सा क्रोधो हासः स्मयो भयं शोकः ।**
**शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य ॥'**

(दश०च० प्र०का० ३५)

अस्योपरि धनिकेनानेकमतानामुल्लेखं कृत्वा लिलेख—सर्वथा नाटकादावभिनयात्मनि स्थायित्वमस्माभिः निषिध्यते । तस्य समस्तव्यापारप्रतिलयरूपस्याभिनयायोगात् ।' अस्य कथनस्य विपरीतेऽभिनवगुप्तस्तु शान्तमपि महत्त्वपूर्णरसरूपेण स्वीचकार । (अभि०भा०, भा० १ पृ० ३४०) । एतेनपूर्वकथनेन रससिद्धान्ते धनिक-धनञ्जययोस्त्रीणिवस्तूनि मिलति—

१. रसोऽव्यङ्गीभूय काव्यस्य तात्पर्यार्थः ।

२. रसस्य भावना भवति, रसविभावादौ परस्परं भाव्य भावक भावः ।

३. नटादयः सामाज़िकनिमित्तं तद्वदेव रामादयो भवन्ति यद्वत् बालकार्थं मृत्तिकायाः हस्त्यश्वादयो वास्तविक हस्त्यश्वादयः सञ्जायन्ते ।

अत्रेदं पुनरप्यनुसंधेयम्—दीर्घदीर्घतराभिधाव्यापारजन्यो व्यङ्ग्यार्थ इति लोल्लट-मतम् । धनञ्जयमते प्रथमांशोपरि लोल्लटस्य प्रभावः । द्वितीयांशेभट्टनायकस्य प्रभावः ।

यद्यपि स हि 'निष्पत्ति-रित्यस्य 'मुक्तिः' इत्यर्थं करोति न भावनाम्, तथाऽपि तन्मते प्राप्ता भवति भावना । एतन्नवीनीकरणमेव धनञ्जयस्य कार्यम् । तृतीयेंशे श्रीशंकुकस्य प्रभावः । नटद्वारा रामाद्यनुकार्याभिनयं दृष्ट्वा सामाजिकास्तान् रामादीनेव मन्यन्ते । रङ्गमञ्चे चागतनटतुलना चित्रतुरगन्यायेन श्रीशंकुना दर्शिता । इत्थं रससम्बन्धे धनिकधनञ्जयो न नवीन कल्पना किन्तूक्तत्रयाचार्यमतसंमिश्रणमेवेति ।

दशरूपस्य रचना मुञ्जस्य शासनकालेऽभवत् । दशरूपकस्य रचनाकाल निर्धारणाय वाक्पतिराज द्वितीयापराभिधानस्यमालवपरमारवंशमहीपतेः मुञ्जस्य काल-निर्धारणमप्यावश्यकमस्ति । यतोह्ययं तस्य मुञ्जस्य सभापण्डित आसीत् । मुञ्जस्य राज्य कालः ९७४ ईसवीयं यावत् स्वीक्रियते । नवसाहसाङ्कचरितोपरि बूहलर-महोदयस्य तथा जकारीमहोदयस्य च लिखितलेखे वाक्पतिराजमुञ्जस्य वर्णनं मिलति । (अनूदितः आई० ए० भा० ३६ पृ० १४९-१७२) । १०३१ सं० अर्थात् ९७४ खीष्ट्राब्दस्य वाक् पतिराजस्य एकः शिलालेखोमिलति । अस्मिन् लेखे लिखितमस्ति यत् अहिच्छत्रादगतः धनिक पण्डितस्य पुत्रः वसन्ताचार्यः भूदानमलभत् । (आई० ए० भा० १४ पृ० १५९-६१) अनेनैव ज्ञातोभवति यद्वाक्पतिराजः देवीभट्टेश्वरीं नाम्ना उज्जयिन्यां ग्राममेकं दानमकरोत् । इदमपि ज्ञातोभवति यत्तैलापद्वितीयः मुञ्जं पराजित्य तस्य वधमकरोत् । (आई० ए० ३३, पृ० १७०-१९३) खीष्ट्राब्दे राजा-मुञ्जस्य शासनकाले अमितगतिः 'सुभाषित-रत्नसन्दोह' नाम्नः ग्रन्थस्य रचनामकरोत् । अतः मुञ्जस्य शासनकालः ९७४ ईसवीयं यावत् स्वीक्रियते । धनञ्जयः मुञ्जस्य सभापति आसीत् । अतः दशरूपकस्यापि रचनाकालः ९७४-९६ खीष्ट्राब्दयोर्मध्ये निश्चियते ।



## राजानकमहिमभट्टस्य प्रणीतो व्यक्तिविवेकः

काश्मीरेषु लब्धजन्मा न्यायाचार्यो महिमभट्टः (भट्टोपाधिकोमहिमा नाम) 'व्यक्ति विवेक नामग्रन्थं व्यरचयत् । अयमाचार्यः ध्वनिविरोधी आसीत् । अनेन सर्वस्य ध्वनेरनुमानेऽन्तर्भावं कर्त्तुं व्यक्तिविवेकः प्रणीतः । ग्रन्थरचनायाः उद्देश्यं तेनैव श्लोकेनैकेन प्रकाशितम्—

**अनुमानेनान्तर्भावं सर्वस्यैवध्वनेः प्रकाशयितुम् ।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥**

(इति व्य० वि ग्रन्थारम्भे)

अयं हि महिमभट्टो महता संनाहे स्वकीयं ग्रन्थं निबन्धन्, ध्वनिमनुमानेऽन्त-र्भावयितुमेवं युक्तिमुपस्थापयति—

**अर्थान्तराभिव्यक्तो या सामग्री संनिबन्धनम् ।**
**सैवानुमितिपक्षे नो गमकत्वेन संमता ॥** (तत्रैव)

'तत्त्वोक्तिकोश' नामान्योऽपि ग्रन्थो महिमभट्टस्यादिति तदुक्त्यैव ज्ञायते । उक्तं हि तेन—

**'इत्यादि प्रतिभातत्त्वमस्माभिरुपपादितम् ।**
**शास्त्रे तत्त्वोक्तिकोशाख्ये इतिनेह प्रपञ्चितम् ॥**

(व्यक्तिविवेक द्वि० वि० ९११)

अनेन तर्कशास्त्रमाधारीकृत्य ध्वन्यालोकस्य विरोधाय प्रयासः कृतः । अस्मिन् प्रयासे तेनान्यग्रन्थसाहाय्यं न लब्धम् । ध्वनिविरोधे यद्यपि भट्टनायकस्य हृदयदर्पण नामा ग्रन्थस्तदा सद्योनिर्मितोऽवर्त्तत, परमनेन स ग्रन्थो नालोचिता, यथोक्तम्—

**'सहसा यशोऽभिसर्त्तुं समुद्यताऽदृष्टदर्पणा मम धीः ।'**

इयमस्योक्तिः स्वग्रन्थस्य नितान्त मौलिकता व्यञ्जनायैव ।

महिमभट्टेन ध्वन्यालोकेनिरूपितान् शब्दान् तिसृषु शक्तिषु, अभिधा-लक्षणा-व्यञ्जनासु मात्र व्यञ्जनायाः खण्डनं कृतम् । सहैव तेनाचार्येणास्य कथन-स्यापि खण्डनं कृतम् यत् व्यञ्जनाशक्त्या भावोऽपि ध्वनितोभवति । अस्याचार्यस्य मते शब्दानामेकमात्रशक्तिरभिधैवास्ति । प्रतीयमानार्थस्य यद्बोधोभवति तद्वाच्यार्था देवानुमानितो भवति । शब्दार्थयोः व्यङ्ग्यव्यञ्जकभावयोर्मान्यता नैवोपयुक्तताऽस्ति । रस एव काव्यस्यात्माऽस्ति, अस्य मतस्य, विरोधोनैव कृतोऽनेन । यथा ध्वन्यालोके—

**'वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ।**
**सम्बन्धतः कुतश्चित्सा काव्यानुमितिरित्युक्ता ॥** इति ।'

एतच्चानुमानस्यैवलक्षणं नान्यस्य । यदुक्तं—'त्रिरूपरङ्गाख्यान परार्थानानुमानम् ।' इति । केवलं संज्ञा भेदा । काव्यस्यात्मनि संज्ञिनि रसादिरूपे न कस्यचिद्विमतिः । संज्ञायां सा केवलमेषाऽपि व्यक्तयोगतोऽस्य कुतः ॥ (व्यक्तिविवेकस्य २२ पृष्ठे) । अस्यान्तिमश्लोकोऽनेन प्रकारेण—

**'प्राणभूताः ध्वनेर्व्यक्तिरिति सैव विवेचिता ।**
**यत्यन्यत्तत्र विमतिः प्रायो नास्तीत्युपेक्षितम् ॥'**

'अर्थान्तराभिव्यक्ता' वित्यादिश्लोकस्यायमाशयः—'ननुवाच्यादसम्बद्ध' तावन्न-प्रतीयते, यतः कुतश्चित् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवञ्च सम्बन्धात् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्यापतत्त्वेन, नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गात् लिङ्गिज्ञानमनुमानं यत्, तद्रूपः पर्यवस्यति' इति काव्यप्रकाशे-पञ्चमोल्लासे 'यद्यप्यनुमितौ नियतसम्बन्धस्यापेक्षणीयत्वम्, व्यञ्जनायान्तु तदनैयत्यम्, संभावनमात्रादपि तदुपपत्तेः, तथापि मया तत्रापि व्याप्तिः साधनीयां' इति महिमभट्टस्य दृढोऽभिमानः ।

परन्तु, काव्यप्रकाशकृता मम्मटेनातिशयप्रबलाभिर्युक्तिभिर्महिमभट्टमतं प्रत्याख्याय-ध्वनेः स्थापना कृता । काव्यप्रकाशस्य पञ्चमोल्लासे एतत्सर्वं विशेषरूपेण द्रष्टव्यम् । 'अलङ्कारसर्वस्व' नामकग्रन्थस्य पञ्चदशपृष्ठे उल्लिखितं 'वाच्यस्तदनुमितोर्वेति' श्लोकं

जयरथेन' व्यक्तिविवेकादेव गृहीतम् । अस्य सिद्धान्तस्य प्रथमपुरस्कर्त्ता महिमभट्टमेव-कथितुं न शक्यते । पूर्वपक्षीयरूपेणास्य मतस्य ध्वन्यालोके पूर्वमेवाल्लेखं कृत्वोत्तर-पक्षस्य निरूपणमस्ति—'अस्त्यभिसंधानावसरे व्यञ्जकत्वं शब्दानां गमकत्वं तच्च लिङ्गत्वमतश्च व्यङ्ग्यप्रतीति लिङ्गप्रतीतिरेवेतिलिङ्गिलिङ्गिभाव एव तेषां व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित्... न पुनरयं परमार्थो यद् व्यञ्जकत्व लिङ्गत्वमेव सर्वत्र व्यङ्ग्यप्रतीतिश्च लिङ्गप्रतीतिरेवेति ।... काव्यविषये च व्यङ्ग्यप्रतीतीनां सत्या सत्यनिरूपणस्याप्रयोजकत्व-मेवेति तत्र प्रमाणान्तरव्यापारपरीक्षोपहासयैव सम्पद्यते । तस्माल्लिङ्गि प्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरिति न शक्यते वक्तुम् ।'

व्यक्तिविवेक भक्तिवादिनः (अर्थात् गुणवृत्तिवादिनः, उपचारोऽथवा लक्षणावादिनः) तर्कानां व्याख्या कृताऽस्ति तथा व्यञ्जकत्वमपि तस्माद्भिन्नं न मन्यते । (तस्मादन्यो-ध्वनिरन्या च गुणवृत्तिः ध्व० पृ० ५९, ६७) । मल्लिनाथस्यानुसारेण शंकुकोऽप्यनु-मानवादी एवासीत् । महिमभट्टस्य मतस्य 'अलङ्कारसर्वस्वे (पृ० १५, १६) तथैकावल्यां कटु-आलेचना कृताऽस्ति । यथैकावल्याम्—'यत्पुनरनुमानतो नातिरिच्यते-ध्वनिरित्याचष्ट महिमभट्टस्तदपि पलालयमानः (अर्थान्निःसारः) अनुमानस्य चाङ्गव्याप्तिः तथेयं स्थापना कृताऽस्ति यत् शब्दार्थसाधने तथा ध्वनौ न किमपि सतत् सम्बन्धमस्ति ।

महिमभट्टस्यैक एव व्यक्तिविवेकाभिधानो ग्रन्थः समुपलभ्यते । अत्र व्यक्तिशब्देन व्यञ्जना गृह्यते, विवेकशब्देन च समीक्षणम् । व्यञ्जनायाः समीक्षणमस्य ग्रन्थस्य नामार्थे भवति । व्यक्तिविवेकग्रन्थे त्रयो विमर्शाः सन्ति—प्रथमेध्वनेरनुमानप्रकारत्वं व्यवस्थापितम्, द्वितीयेऽर्थविषयकानौचित्यं निरूपितम्, तृतीये बहिरङ्गानौचित्यं विवेचितम् । मम्मटेन ध्वनेरनुमानप्रकारतां खण्डयताऽपि दोषप्रसङ्गे महिमभट्टस्य सिद्धान्तः प्रचुरमादृतः ।

विस्तरेण प्रथमे विमर्शे व्यञ्जनायाः मार्मिकं खण्डनमास्ते । महिमभट्टानुसारेण लक्षणातो नातिरिच्यते ध्वनिः । अयमनुमानेन द्वारा समेषां ध्वनिभेदानां विशदं विवरण-मुपस्थाप्य स्वकीयं पाण्डित्यं प्रदर्शयामास । प्रथमविमर्शस्य प्रथमश्लोके ग्रन्थकारेणानेन प्रकारेण प्रतिज्ञा कृतास्ति—'अनुमानान्तर्भावमित्यादि ।' अत्र 'ध्वनिशब्दस्य व्याख्यानेन प्रकारेण कृतास्ति—यथार्थः शब्दो या समर्थ व्यङ्ग्यः ।' (१,१३, पृ० १९९ ध्वन्यालोके) ।

ध्वन्यालोकस्यास्यां परिभाषायामुपरि महिमभट्टस्य प्रथमाक्षेपोयमस्ति यच्छब्दार्थयोः 'उपसर्जनीकृतात्मत्वमिति विशेषणं नोपयुक्तम् । द्वितीयाक्षेपोऽस्ति यदुपर्युक्त लक्षणे 'शब्दः' इतिपदस्य प्रयोगोनोचितम् । यतः शब्दस्याभिधातिरिक्तः कोऽप्यन्यो व्यापारो नैव भवति । तृतीयाक्षेपः काव्यावयवसन्दर्भे एवास्ति । 'काव्यविशेषः' अथवा समासगतविशेषः' एतेषामपि शब्दानामुपरि तेनापत्तिः प्रदर्शिताऽस्ति । यतो हि ध्वनिकारस्य मतानुसारेण काव्ये आत्मरूपेणकाऽपि स्थितिर्भवति । (ध्व०लो० पृ० २५६ द्रष्टव्यम्) । महमभट्टस्य मते 'सूरिभिः' शब्दोऽपि अनावश्यकः एवाऽस्ति । तेनोक्तम्—'अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तदः पुंस्त्वम् । द्विवचनं वा शब्दौ च

व्यक्तिर्ध्वनिर्नाम काव्यवैशिष्ट्यम् ।। वचनं च कथन कर्तुः कथिताध्वनि- लक्ष्मणीति दशदोषाः । (व्य०वि० पृ० २१-२२) । तस्य कथनस्यायमाशयः—सर्व एव हि शाब्दो व्यवहारः साध्यसाधनभावगर्भतया प्रायेनानुमानरूपोऽभ्युपगन्तव्यः, तस्य परमवृत्तिनिवृत्तिनिबन्धनत्वात् तयोश्च सप्रत्ययासप्रत्यामात्मनोरन्यथा कर्तुमशक्यत्वतः (व्य० वि० पृ० ३) तथेदमपि कथितम्—'अर्थोऽपि द्विविधो वाच्योऽनुमेयश्च । तत्र शब्दव्यापारविषयो वाच्यः । स एव मुख्यः उच्यते । ...तत एव तदनुमिता द्वालिङ्गभूताद्यर्थान्तरमनुमीयते सोऽनुमेयः । स च त्रिविधः वस्तुमात्रमलङ्कारा रसादयश्चेति । तत्राद्यौ वाच्यावपि संभवतः । अन्यस्त्वनुमेय एवेति वक्ष्यते । (व्य० वि० पृ० ७) महिमभट्टस्य मतानुसारेण शब्दस्य वाच्यानुमेयौ द्वावर्थौ स्तः । अन्यलेखकद्वारेण निरूपितालक्षणाऽनुमानस्यैवान्तर्गते समायाति । यथोदाहरणम्—'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः' (ध्व०लो० पृ० ५८) अविवक्षितवाच्य-ध्वनेरुदाहरणमिति । 'पत्युः शिरश्चन्द्रकलामनेनः' (ध्व०लो० पृ० २६७) एवं वादिनि देवर्षौ (ध्व०लो० पृ० १२४) एतेषु श्लोकेषु प्रतीयमानार्थः अनुमानस्यैवान्तर्गतो भविष्यति । 'अत्रहि सर्वत्र सुलभाः विभूतयः शूरादीनामित्ययमर्थोऽनुमीयत इत्येतद्वित-निष्यते ।' (व्य०वि० पृ० ९) । वाच्यार्थे एवं प्रतीयमानार्थे लिङ्गलिङ्गिभावो भवति । अतः वाच्यात् प्रतीयमानपर्यन्तं गमनप्रक्रियायास्तात्पर्यम् अनुमान एवास्ति । 'वाच्यप्रतीयमानयोर्वक्षमाणक्रमेण लिङ्गलिङ्गिभावस्य समर्थनात् सर्वस्यैवध्वनेरनुमानान्त-र्भावः समन्वितो भवति तस्य च तदपेक्षया महाविषयत्वात् (व्य० वि० पृ० १२) । तत्तु ध्वनिकारस्यास्य कथनस्योपरि बलं ददाति, यद्यदा मुख्यार्थ एव ध्वनिर्भवति तदाऽसावधिकरमणीयो भवति—साररूपो ह्यर्थः स्व शब्दानभिधेयत्वेन प्रकाशितः सुतरां शोभामावहति' (ध्वन्यालोके १५७ पृष्ठे) । ध्वन्यायालोके निरूपितेष्वनेकेषूदाहरणेषु प्रदर्शितेषु तात्पर्यभूतो व्यङ्ग्याः सुगमतया वाच्यार्थत्वेन सूचितो न भवति प्रत्युत् वक्रगत्या वाक्यार्थ-व्यङ्ग्यार्थयोर्मध्यस्थानुमानस्य कतिपय शृङ्खलामुल्लंघ्य तत्रोपसर्पति । यथोदाहरणम्—'वाणि अ अ तत्थिदन्ता०' (ध्वन्यालोकस्य १५७ पृष्ठे) । 'गौर्वाहीकः काले तात्पर्यार्थस्य प्रतीतिः अनुमानेनैव भवति । यतोहि 'वाहिकस्तथा बलदः, वस्तुतः एकोभवितुं नैव शक्यते, अतस्तयोः समानधर्म एवास्ति, तात्पर्यमिदमनुमानैव प्रतीतोभवति । 'तस्माद्योयं वाहीकादौ गवादि साधर्म्यावगमः सः तत्वारोपान्यथानुपपत्ति परिकल्पितोऽनुमानस्यैव विषयः न शब्दव्यापारस्येति स्थितं (पृ० २४) । द्रष्टव्यम्—ध्वनिकारिकागतान् शब्दान् स्तोकमपि भिन्नार्थस्वीकरणे ध्वनेरप्यर्थः भक्तिरेवभवति—'भक्त्या विभर्त्ति चैकत्वं रूपाभेदादयं ध्वनिः । न च न नाव्याप्यतिव्याप्त्योर भावाल्लक्ष्यते तया ।। सुवर्णपुष्पामित्यादौ न चाव्याप्तिः प्रसज्यते । अर्थान्तरप्रतीत्यर्थः प्रकारः सोऽपि शिष्यते ।। (व्य० वि० पृ० २६) । महिमभट्टस्य निश्चितमिदं मतंमस्ति यदभिधैव शब्दस्यैकमात्रार्थद्योतिका शक्तिरस्ति नान्येति । 'नाऽपिशब्दस्याभि-धाव्यतिरेकेण व्यापारान्तरमुपपद्यते येनार्थन्तर, प्रत्याययेत्, व्यक्तेरनुपपत्तेः सम्बन्धान्तरस्य चासिद्धेः (पृ० २९) । यद्यपि ध्वनिकारेण सामान्यतः काव्यलक्षणं न कृतं काव्यस्य प्रकारद्वयस्य (ध्वनिः गुणीभूतव्यङ्ग्ययोः) सविस्तरं विवेचनं कृतम् । अस्य कथनस्योपरि महिमभट्टेनोपहसितम्—किञ्च काव्यस्य स्वरूपमुत्पादयितुं कामेन

मतिमता तल्लक्षणमेव सामान्येनाख्यातव्यम्... यत्तु तदनाख्यायैव तयोः प्रधानेतरभाव-कल्पनेन प्रकार इयमुक्तं तदप्रयोजकमेव (व्य०वि० ३२ पृ०) । महिमभट्टेन ध्वनिकारनिरूपितमविवक्षितवाच्यं तथा विवक्षितान्यपरवाच्य संज्ञकमपि सदोष एवोक्तम् ।

द्वितीये विमर्शे अनौचित्यस्य मुख्यकाव्यदोषत्वं प्रतिपाद्यतस्य विभिन्नानां प्रकाराणां विस्तरेण विवेचनमुपस्थापितमस्ति । अनौचित्यं द्विप्रकारकं भवति अर्थविषयकम्, शब्दविषयकञ्चेति । अर्थविषयकमनौचित्यं तदा भवति यदा विभावानुभावव्यभिचारि-भावानां नियोजनमनुपयुक्तरीत्या सम्पाद्य रसनिष्पत्तेः प्रयासो भवति । वस्तुतः अन्तरङ्गानौचित्ये रस दोषाः एव समाविशन्ति ।

वाह्यानौचित्यं पञ्चप्रकारकं भवति—१. विधेयाविमर्शः, २. प्रक्रमभेदः, ३. क्रमभेदः, ४. पौनरुक्त्यम्, ५. वाच्यावचनञ्चेति । एतेषामेव वाह्यानौचित्यानां विस्तृतं विवरणमस्मिन् विमर्शे वर्त्तते । सम्पूर्णद्वितीये विमर्शे (पृ० ३७ तः १७२ पृ० पर्यन्तम्) एतेषां पञ्चदोषाणां सोदाहरणव्याख्याकृतास्ति तेन । प्रथमो दोषो विधेया-विमर्शस्य विवेचनं (पृ० ३७ तः पृ० ५८ पर्यन्तमभवत्) । अयं हि वक्रोक्ति-जीवितस्य निम्नलिखितं श्लोकं निर्दुष्टकाव्यस्योदाहरणस्वरूपे प्रस्तौति—

**संरम्भः करिकीटमेव शकलोद्देशेन सिंहस्य यः,**
**सर्वस्यैव स जातिमात्रनियतो हेवाकलेशः किल ।**
**इत्याशाद्विरदक्षयाम्बुदघटाबन्ध्येप्यसंरब्धवान्,**
**योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिका-केसरी ॥**

अस्मिन् श्लोके महिमभट्टानुसारेण वारत्रयं विधेयाविमर्शदोषः समायान्ति । प्रथमःदोषोऽयमस्ति यदस्मिन् श्लोके 'असंरब्धवान्' इत्यत्रानुपयुक्तोऽस्ति नञ् समासः । द्वितीयः दोषोऽयमस्ति यदत्र सम्बन्धवाचकः सर्वनाम 'योऽसौ' इत्यस्ति तस्य सम्बन्ध-दर्शकः 'सः' शब्दस्य श्लोकेऽस्मिन्नभावोऽस्ति । तृतीयदोषोऽयमस्ति यदस्मिन् श्लोके 'अम्बिका-केसरी' समासः अनुपयुक्तोऽस्ति । यतोहि 'अम्बिका' शब्दः समस्तपदे गौणो भवति । अतोऽत्रास्यशब्दस्यार्थोऽपि गौण एवास्ति । अस्य दोषस्य दूरीकरणाय तेन पठनक्रममुपदिशति । (पृ० ५७) । विधेयाविमर्शस्य विषयेऽस्य विचारः संक्षिप्त-रूपेण यथा—तदिदमत्रतात्पर्ययत् कथंचिदपि प्रधानतया विवक्षितं न तन्नियमेनेतरेण सह समासमर्हतीति । इतरच्च विशेष्यमन्यद्वास्तु न तत्र नियमः ।' (पृ० ५२) । प्रकमभेदस्य विवेचनं पृ० ५८ तः, ६६ पर्यन्तमभवत् । 'प्रक्रमभेदोऽपि-शब्दानौचित्यमेव । स हि यथा प्रक्रममेकरसप्रवृत्तायाः प्रतिपत्तिप्रतीतेरुत्खात् इव परिस्खलन खेददायीरसभङ्गाय पर्यवस्यति ।... सचायमनन्तप्रकारः संभवति प्रकृति-प्रत्ययपर्यायादीनां तद्विषयभावाभिमतानामानन्त्यात्' (व्य०वि० पृ० ५८) तथा यथोद्देशं हि प्रतिनिर्दोषस्य विषयः (पृ० ५९) दोषस्योदाहरणानि निम्नलिखतानि सन्ति । ते हिमाः... सिद्धश्चास्मै निवेद्यार्थ तद्विशिष्टाः खमुद्यमुः (कु० स० ६.२४) । अत्र 'अस्मै' पदाय 'तत्' स्थाने तद्वत एवान्य 'सर्वनाम' पदस्य प्रयोगः कर्त्तव्यः । उदन्वच्छिन्ना भूः स च विधिरपां योजनशतं' भर्तृहरि (मिता भूः पत्यापां स च पतिरपां) इत्यादिद्यधिक उपयुक्तोऽस्ति । 'गाहन्तां महिषा' (शा० २.६) 'अभ्यस्यतु

तथा लभताम्' आभ्यां कर्तृरूपाय तृतीयचरणेऽपि इदमेवरूपं भवितव्यम् । अतः कुर्वन्त्वस्तभियोवराहतयोगुस्ता० पाठः उपयुक्तो भविष्यति । पुनरपि कर्त्तुप्रक्रमभेदः (अर्थात् प्रथम-मध्यम पुरुषाभ्यां अन्यपुरुषस्य प्रयोगः) दोषाणां स्थाने गुण एवास्ति । उदाहरणं यथा—'अयं जनः प्रष्टुमनास्तपोधने (अत्र 'अहं' पदाय एव प्रयोगोऽस्ति; कुमार० ५) अत्र प्रथमभेदस्य विवेचनं पृ० ६६ तः ६९ पृ० पर्यन्तमस्ति । अस्योदाहरणमस्ति—'कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्र कौमुदी ।' (कुमा० स० ५.७१) अत्र द्वितीय चकारस्य प्रयोगः 'त्वं' पदस्य पश्चात् कर्तव्यमस्ति ।

पौनरुक्तस्य विवेचनं पृ० ६९ तः पृ० ८४ पर्यन्तमस्ति । यदा शब्दानां आशयः पृथक् पृथग्भवति तदा तत्र शब्दपुनरुक्तजन्य दोषो न भवति । अस्योदाहरणाय—'हसति हसति स्वाभिन्नयुच्चैः रूदत्यपि रोदिति' अत्र 'हसति' शब्दस्य पुनरुक्तिरस्ति ।

अत्र प्रथम 'हसति' शब्दः तृतीयपुरुषस्यैकवचनस्य रूपमस्ति । द्वितीयस्तु सप्तम्याः एकवचनस्य रूपमस्ति । अतोऽत्र पौनरुक्त्याभावः । यद्येकार्थकस्य शब्दस्य पुनरावृत्तिर्भवति तदपि दोषाभाव एव भवति । यतस्तत्रापि लाटानुप्रासस्य स्थितिर्भवति । अन्योदाहरणं यथा—

**वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसङ्काशकाशाः ।**
**काशाभाभान्ति तासां नवपुलिनगता श्रीनदी हंस हंसाः ॥**

(वामनीय वृत्तिः ४.१.१०)

आर्थपौनरुक्त्यस्योदाहरणं यथा—'विसकिसलयच्छेदपाथेयवन्तः' (मेघ०), 'त्वगुत्तरासङ्गवतीमधीतिनीम् (कुमार० ५.१६) अत्र वत् प्रत्ययः, अनावश्यकोऽस्ति । यतो ह्ययमाशयः वहुव्रीहिसमासेनाऽपि ग्रहणं कर्त्तुं शक्यते । 'गेयस्य' पदस्य पश्चात् प्रयुक्तः 'इव' शब्दोऽपि अत्रानावश्यक एव प्रतिभाति । यथा—

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।**
**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥** (पृ० ७२)

अस्मिन् स्थाने उपयुक्तपाठस्य प्रकारोऽयमनेन प्रकारेण कथयति—

**'गेयस्य वाङ्मयस्याहो अपर्यन्ता विचित्रता ।'**

वाक्यार्थविषय पौनरुक्त्यस्योदाहरणम्—'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्' । (किरात० २.३०) । अत्र द्वितीयार्द्धांशः 'अविवेकः परमापदां पदम्' इत्यस्यापि तथैवाशयोऽस्ति । तथा—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥** (गीता० ४.७)

अत्राऽपि पुनरुक्तत्वमस्ति । यतोहि 'अभ्युत्थानमधर्मस्याप्यर्थः धर्मस्य ग्लानिरेवास्ति । पुनरुक्तस्य विषये महिमभट्टेनोक्तम्—'न च सामर्थ्य सिद्धेऽर्थे शब्द-

प्रयोगमाद्रियन्ते सत्कवयः' (व्य० वि० पृ० ७७) तथा सा (प्रतीतिः) यावद्भि-रूपजायते तावतामेव प्रयोगो युक्तो नातिरिक्तानाम् । (पृ० ७८) । अस्य कथनस्य टीकायाम्—'नहीदं वाक्यं लक्षणशास्त्रं येन मात्रालाघवं चिन्त्यते । तत्राऽपि वा नियमेन लाघवमाश्रितं महद्भिः । (पृ० ४४) । अनेन प्रमाणितो भवति यन्महिमभट्टस्य मते यत्रकुत्राऽपि पौनरुक्त्या विशिष्टार्थस्य बोधोभवति, तत्र पुनरुक्ति-दोषो नैव भवति । यथा—'कुर्या हरस्यापि पिनाकपाणेः' (कु० सं० ३.१०)।

पञ्चमो दोषः वाच्यावचनस्य विवेचनं पृ० ८४ तः १०९ पर्यन्तमस्ति । अस्योदाहरणमस्ति—'कमलमनंभसि, कमले कुवलये' इत्यादि । अत्र कमलस्य स्थाने 'तस्मिंश्च कुवलये' सर्वनामपदस्य प्रयोगः कर्त्तव्यः । यतः उभाभ्यां कमलाभ्यां एकस्यैव वस्तुनः बोधोभवति । यत्रैकोऽलङ्कारः सरलतया समागतस्तत्र सप्रयत्नान्यालङ्कारस्य समायोजनमस्य मते वाच्यावचनदोषोभवति । यथा 'यत्रान्यालङ्कारस्य विषयेऽलङ्कारान्तर निबंधः सोऽपि वाच्यावचनं दोषः' (पृ० ८६) । अस्योदाहरणमस्ति—'भैरवाचार्यस्तु दूरादेव दृष्ट्वा राजानं शशिनमिव जलनिधिश्चचाल (हर्ष च० ३.२०) । अत्र 'राजानम्' शब्दात् 'शशिनम्' पदस्यार्थावबोधो भवति । इदं श्लेषालङ्कारस्य न तूपमा-ऽलङ्कारस्य स्थानमस्ति । यथा कविना प्रदर्शितम् । श्लेषालङ्कारस्य विषये महिमभट्टस्य मतमिदमस्ति—

**'तस्मादर्थान्तरव्यक्तिहेतौ कस्मिंश्चनासमि ।**
**यः श्लेषबन्धनिर्बन्धः क्लेशायैव कवेरसौ ॥** (व्य०वि० पृ० ८९)

श्लेषाय श्लेषस्य रचनाऽस्य मते वाच्यावचनदोषाय भवति । अयं हि आनन्द-वर्द्धनस्य—

**सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ।**
**चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥**
(ध्व० द्वि० पृ० चौ० सं०)

ध्वन्यालोकस्यास्मिन्पद्येऽपि वाच्यावचनदोषः प्रदर्श्यते । ध्वन्यालोके प्रदर्शितेषु शब्दशक्तिमूलध्वनेरनेकेषूदाहरणेष्वयं वाच्यावचनदोषान् प्रख्यापयति । स्वकीय कथन-स्योपसंहारं कुर्वन् अयमलेखीत् महाकवयोऽपि अत्र दोषमुक्ताः न भवन्ति । यथा—'उमावृषाङ्कौ शरजन्मना यथा' (रघु० ३.२३) । अत्र पौनरुक्त्य—प्रक्रमभेद-अवाच्यवचनञ्चे त्रयोदोषाः प्रदर्शिताः । प्रथमध्वनिकारिकायाः पद्यमप्यनेन सदोषं दर्शितम् । यथा—

'काव्यस्यात्माध्वनिरिति बुधैर्यः समाम्नात् पूर्वः' इत्यादि । अत्रानेकान् दोषान् प्रदर्शयन् तेषां शुद्धपाठस्यापि महिमभट्टेन निरूपणकृतमन्ते च दृढतयासहानेसंक्षेपेण स्वमतस्य प्रतिपादनं निम्नरूपेण कृतम् । प्रथम-ध्वनिकारिकायाः शुद्धपाठो यथा—'तेनवरमयमत्र पाठः श्रेयानलादोषत्वात्—

**काव्यस्यात्मेत्यमलमतिभिर्योध्वनिर्नामगीतः,**
**तस्याभावं जगदुरपरे भक्तिरित्येव मन्ये ।**

**केचित् वाचां विषय इति प्रस्फुरत्तत्त्वमन्त-**
**स्तेन ब्रूमः सहृदयजन प्रीतये तत्स्वरूपम् ॥ इति ॥...**

...तस्मात् स्थितमेतद्यथा शब्दस्याभिधानमन्तरेण न व्यापारान्तरं सम्भवतीति । गमयन्त्यर्थमुखेन हि सुप्तिङ् वचनादयोऽपरानर्थान् । तेनव्यक्तिलक्षविधौ । शब्दग्रहण-विफलमेव । इति संग्रहार्या: ।'

तृतीयविमर्शे ध्वन्यालोककारो ध्वनौ कठिनं प्रहारं करोति । ध्वन्यालोकस्य चत्वारिंशत संख्यानि ध्वनेकादाहरणानि आदायानेन साधितं यदिमानि सर्वाणि ध्वनेरेव प्रकारभूतानि सन्ति, तथैतेषामन्तर्भावः अनुमाने एव संभवति । उदाहरणन्तु—

**भमधम्मिअ वीसत्थो सो सुणओ अज्ज मारिओदेण ।**
**गोलाणइकच्छकुडङ्गवासिणा दहिअसीहेण ॥**

(ध्व०लो० प्र०उ० पृ० ५२)

**भ्रम धार्मिक विस्रब्धः स शुनकोऽद्यमारितस्तेन ।**
**गोदावरीनदीकूल लतागहनवासिना दृप्तसिंहेन ॥**

(गा०स० २/७६)

'केवलं योऽसौ भ्रमणविधौ हेतुभावेन दृप्तपञ्चाननव्यापारस्तत्रोपात्तः स एव विमृश्यमानः परम्परया धार्मिकस्य तन्निषेधे पर्यवस्यति तयोर्बाध्यबाधकभावेना-वस्थानात् ।' (व्यक्ति० वि०, पृ० ११३)

काव्यप्रकाशकारो मम्मटभट्टः काव्यप्रकाशे दोषाणां विवेचनावसरे महिमभट्टस्य पूर्णतयानुसरणं चकार । यद्यपि दोषदर्शने मम्मट' इति ख्यात्यनुसारेण दोषाणां विवेचने मम्मटभट्ट एव प्रख्यातो वर्त्तते, किन्तु महिमभट्टेन साकं तुलना कृतायां महिमभट्ट एव निपुणो आभाति । किञ्च काव्यप्रकाशकृता मम्मटेनातिशय प्रबलयुक्तिभि-र्महिमभट्टस्य मतं प्रत्याख्याय ध्वनेः स्थापना कृता । रसविषयेऽपि तेनोक्तं यत्तस्यानुभूति अनुमानस्यान्तर्गते एवाऽऽयाति—याऽपि विभावादिभ्योरसादीनां प्रतीतिः सानुमान एवान्तर्भाव- मर्हति । विभावानुभाव व्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते । (पृ० ११९) महिमभट्टेन स्वमतस्योपसंहारोऽनेन प्रकारेण कृतोऽस्ति—

**'तदेवं सर्वस्यैव ध्वनेरनुमान्तर्भावाभ्युपगमः श्रेयान्निति ।'** (पृ०१३७)

व्यक्तिविवेकस्यैकेवटीका समुपलभ्यते । साऽप्यपूर्णैवास्ति । तस्याः टीकायाः प्रणेतुर्नामापि न ज्ञायते । किन्तु आभ्यन्तरैः प्रमाणैः परीक्षणैश्च ज्ञायते यदस्याः टीकायाः प्रणेता अलङ्कारसर्वस्य कर्त्ता रुय्यक एवास्ति । वृत्तिकारेणाभिहितो भवति यदयं साहित्यमीमांसायाः नाटकमीमांसायाश्च प्रणयनमकार्षीत् । तौ च ग्रन्थौ रुय्यकस्यैवास्तास् । इयं टीकाप्यतन्त पाण्डित्यपूर्णा विद्यते ।

सर्वप्रथमं महिमभट्टः अभिनवगुप्तस्य मतमालोचितवान् । तदयं महिमभट्ट अभिनवगुप्तात् परवर्त्ती मम्मटात् पूर्ववर्त्ती च सिद्धो भवति । अभिनवगुप्तः १००० ई० स्थितोः मम्मटश्च १०५० ई० स्थितस्तयोर्मध्ये स्थितस्यास्यैकादश शतकप्रथम-चरणे स्थितिरनुमीयते ।

स्वपितापुत्रादीनां नामानि स्वयमेव महिमभट्टेनोक्तानि 'व्यक्तिविवेक' समाप्तौ—

**आधातुं व्युत्पत्तिं नप्तृणां क्षेमयोगभाजानाम् ।**
**सत्सु प्रथितनयानां भीमस्यामितगुणस्य तनयानाम् ॥ १ ॥**
**श्रीधैर्यस्याङ्गभुवामहाकवेः श्यामलस्य शिष्येन ।**
**व्यक्तिविवेको विदधे राजानकमहिमकेनायम् ॥ २ ॥**

श्लोकद्वयेऽस्मिन् महिमभट्टेन स्वपितुः 'श्रीधैर्यः' इति, गुरोः श्यामल इति, पुत्रस्य भीमः, इति, पौत्राणां च क्षेमः, योगः, भाजः इति नामानि निर्दिष्टानि ।

खिष्ट्राब्दैकादशशतकस्थितेन क्षेमेन्द्रेणौचित्यविचारचर्चायां 'न तु यथा श्यामलः' सुवृत्ततिलके च 'विपरीता यथा भट्टश्यामलस्य' इत्येवमादिना स्मर्यमाण एव श्यामलोऽस्य गुरुरासीत् इति तर्क्यते । एतदप्यस्यैकादशशतकपूर्वार्द्धस्य स्थितिं लक्षयति ।

'व्यक्तिविवेकस्य' व्याख्याता राजानक रुय्यक एवासीत् । लोचनस्येव वक्रोक्तिजीवितकारस्याऽपि खण्डनं महिमाचार्यभट्टेन 'सहृदयमानिनः केचित्' 'केचिद् विद्वन्मानिनः' इत्यादि शब्दैकरूपक्रान्तम् । अतो महाकविः श्रीहर्षः स्वकीये 'खण्डनखण्डखाद्य' ग्रन्थेऽमुं महिमभट्टं बहुतरं प्रशशंस, यथा—

**दोषं व्यक्तिविवेकऽमुं कविलोकविलोचने ।**
**काव्यमीमांसिषु प्राप्ति महिमा महिमादृतः ॥ इति ॥**

किञ्च लोचनवद् मूलध्वन्यालोकस्यापि खण्डनं महिमभट्टो विदधे ।

रुय्यकः महिमभट्टस्य मतस्योल्लेखमकार्षीत् 'अलङ्कारसर्वस्वे' अतएव महिमभट्टेन ११०० ईसवीयतः पूर्ववर्त्तिना भाव्यम् । किञ्च यतोऽयं बालरामायणस्य पद्यानि उद्धृतानि चकार, वक्रोक्तिजीवितस्य लोचनस्य च सिद्धान्तानां खण्डनं चकार । तेन ज्ञायते यदयमाचार्यः १००० ईसवीयतः अनन्तरमेव बभूव । फलतो महिमभट्टस्य काल एकादश शताब्दस्य पूर्वार्द्धः स्वीक्रियते ।



## भोजराजरचितसरस्वतीकण्ठाभरणम्-शृङ्गारप्रकाशश्चेति

महाराजो भोजो धारानगरस्य सुव्यवस्थितशासकः परमारवंशयश्चासीत् । अयं हि संस्कृत कविपण्डितानाञ्च न केवलमाश्रय एवासीत्, प्रत्युत् सः स्वयमपि संस्कृतकाव्यशास्त्रस्यैको मर्मज्ञो विद्वान् तथा सुविज्ञ समालोचकश्चासीत् । अयं हि सरस्वतीकण्ठाभरणरामायणचम्पूशृङ्गारप्रकाशादि ग्रन्थानां कर्त्ता आसीत् । सरस्वतीकण्ठाभरणशृङ्गारप्रकाशकौ द्वौ चालङ्कारग्रन्थौ विशालकायौ स्तः ।

सरस्वतीकण्ठाभरणे च गुणदोषालङ्काराणां सम्यक्तया विवेचनं विद्यते । वस्तुतोऽयं ग्रन्थो विदुषां कण्ठाभरण एवास्ति। ग्रन्थोऽयं रत्नेश्वरस्य टीकया सह ग्रन्थमालायां प्रकाशितमभूत् । अयं ग्रन्थः पञ्चसु परिच्छेदेषु प्रविभक्तो वर्त्तते । प्रथमे परिच्छेदे तत्र गुणदोषयोः विवेचनमास्ते, तत्र काव्यप्रयोजनम्, काव्यलक्षणम्, काव्यभेदवर्णनञ्च वर्णिताः सन्ति । भोजराजः पदवाक्यवाक्यार्थानां प्रत्येकेषां षोडश-षोडश दोषान् गणयति स्म । शब्दस्यार्थस्य चोभयोः चतुर्विंशति चतुर्विंशतिगुणान् प्रावोचदयं ग्रन्थकारः ।

द्वितीयपरिच्छेदे सरस्वतीकण्ठाभरणस्य चतुर्विंशति संख्याकानां जाति-रीति-वृत्ति-छाया-मुद्रा-गुंफना-शय्या-यमक-श्लेष-प्रहेलिकादीनां वर्णनं कृतमास्ते । तृतीये परिच्छेदे चतुर्विंशति संख्याकानां जाति-विभावना-हेतु-अहेतु-सूक्ष्म-उत्तर-विरोध-संभव-अन्योन्य-परिवृत्ति-निदर्शन-भेद-समाहित-भ्रान्ति-वितर्क-मीलित-स्मृति-भाव-प्रत्यक्ष-अनुमान-उपमान-आगम-अर्थावृत्ति-अभावादीनामर्थाऽलङ्काराणां विवेचनमकार्षीत् भोजराजः । चतुर्थे परिच्छेदे चतुर्विंशति संख्याकानामुभयालङ्काराणामुपमा-रूपक-साम्य-संशय-अपह्नुति-समाधि-समासोक्ति-उत्प्रेक्षा-अप्रस्तुतप्रशंसा-तुल्ययोगिता-लेश (व्याजस्तुति इव)—सहोक्ति-समुच्चय-आक्षेप-अर्थान्तरन्यास-विशेषोक्ति-परिकरदीपक-क्रम-पर्याय-अतिशयोक्ति-श्लेष-भाविक-संसृष्ट्यादीनां सन्निवेशञ्चकार भोजराजः । पञ्चमे परिच्छेदे रसानां, भावानां, नायक-नायिकानां तासामुपभेदानां, पञ्चसन्धीनां, चतसृणां वृत्तीनाञ्च वर्णनं सः अकरोत् ।

भोजराजः सरस्वतीकण्ठाभरणे पञ्चदशशतानि (१५००) अन्येषां श्लोकानामुदाहरणानि उपन्यस्तवान् । ग्रन्थेऽस्मिन् ६४३ कारिकाः सन्ति । भोजस्यात्र स्पष्टतः समन्वयात्मिका दृष्टिः वर्त्तते । सः स्वमतस्य पुष्ट्यै अन्येषामलङ्कारिकानामुदाहरणानि मतानि चोद्धृतान्यकरोत् । एतेषु कतिपयान्युदाहरणानि यथावत् स्वरूपे काव्यादर्शात्, ध्वन्यालोकात् तथाऽन्याभिः रचनाभिः संगृहीतानि सन्ति। सर्वेभ्यः आलङ्कारिकेभ्यः आचार्यो दण्डी अस्य प्रियतम आलङ्कारिको वर्त्तते । अयं काव्यादर्शस्यार्द्धभागं स्वमतपुष्ट्यै सरस्वतीकण्ठाभरणे समावेशितवान् । अतः ग्रन्थोऽयं संस्कृतसाहित्यस्य कालानुक्रमणिकया दृष्ट्या अतीव महत्त्वपूर्णोऽस्ति । सरस्वतीकण्ठाभरणस्यैतदर्थ-मप्यधिकं महत्त्वमास्ते । यदस्यैव ग्रन्थस्य साहाय्येन संस्कृतसाहित्यस्यानैकेषां कवीना-माचार्याणाञ्च कालस्य निरूपणं कर्त्तुं शक्यते । अत एवास्य ग्रन्थस्यैतिहासिकं महत्त्वमधिकमास्ते ।

**शृङ्गारप्रकाशः**

अलङ्कारविषयिणी भोजराजस्यापराकृतिः शृङ्गारप्रकाशो विद्यते । यद्यपि ग्रन्थोऽयं प्रकाशितो नास्ति तथाऽपि डॉक्टर राघवन् महोदयस्य शोधप्रबन्धेन द्वारा अस्य प्रबन्धस्य ज्ञानं विपुलं जायते । काव्यशास्त्रीयग्रन्थेष्वयं ग्रन्थः सर्वेभ्यो ग्रन्थेभ्योऽधिकं विपुलकायो वर्त्तते । भोजराजमते शृङ्गार एवैको रसः अन्ये रसा अस्यैव विकाराः । अयं ग्रन्थश्चित्रकाव्यनिरूपणाय नितान्तं प्रथते । तत्र व्यापकतया मार्मिकतया च रसनिरूपणं शृङ्गारप्रकाशेऽस्ति । शृङ्गार एव सर्वरसानां मूलभूत आदिमः प्रकृत रसः,

अन्ये च रसाः एतद्विकाररूपा एव इति ग्रन्थकर्त्ता मतम् । रसस्य वैज्ञानिकप्रस्तुतकरणे भोजेन हि स्वकीया सूक्ष्मविवेचनशक्तिः प्रदर्शिताः प्रस्तुतग्रन्थे ।

शृङ्गारप्रकाशे नाट्यशास्त्रस्य काव्यशास्त्रस्य चोभयोर्विवेचनमस्ति । परवर्त्तिनोः साहित्यदर्पण-प्रतापरुद्रयशोभूषणयोः ग्रन्थयोः अस्यैव ग्रन्थस्यानुकरणमस्ति । शृङ्गार-प्रकाशे '**शब्दार्थौ सहितौ काव्यम्**' इति काव्यलक्षणमस्ति । मतमिदमेव भामहस्या-ऽप्यस्ति । (१.१६) अत्रेदमपि प्रतिपादितमस्ति यदभिमानाहरयोः प्रतीकमस्ति शृङ्गाररस एवेति । ग्रन्थेऽस्मिन् षट्त्रिंशत्प्रकाशाः सन्ति । प्राथमिकेषु अष्टेषु प्रकाशेषु शब्दार्थ-विषयकारणामनेकेषां वैयाकरणसिद्धान्तानां विवेचनं कृतमास्ते । तत्तु संक्षेपेण—

१. प्रथमे प्रकाशे काव्यस्य शब्दार्थयोश्च परिभाषाकृताऽस्ते । तेषां प्रत्येकेषां द्वादशकार्याण्यप्युल्लिखितानि सन्ति ।

२. प्रातिपदिकम् तस्य भेदोपभेदाः वर्णिताः सन्ति ।

३. तृतीये प्रकाशे पदस्य, वाक्यस्य, अर्थस्य च लक्षणं तथा तेषां प्रकाराः ।

४. चतुर्थे प्रकाशे अर्थस्य द्वादशप्रकाराः तथा तेषां प्रत्येकेषां वर्णनं कृतमास्ते यथा—क्रिया-काल-कारकादयः ।

५. पञ्चमे प्रकाशे उपाधेरर्थस्य वर्णनम् ।

६. षष्ठे प्रकाशे विभक्तेरर्थस्य प्रतिपादनम् ।

७. सप्तमे प्रकाशे शब्दशक्तेः प्रतिपादनम्, यथाऽभिधा, विवक्षा, तात्पर्येत्यादयः ।

८. अष्टमे प्रकाशे—अन्यशब्दैः सह सम्बन्धेन शब्दशक्तीनां विकासः यथा व्यपेक्षा-सामर्थ्यादयः । नवमदशमप्रकाशयोः गुणानां दोषाणाञ्च विवेचनं कृतमास्ते ।

९. नवमे प्रकाशे काव्येषु दोषाणां परित्यागस्य गुणानामाधानस्योपायः वर्णितः आसीत् ।

१०. दशमे प्रकाशे शब्दालङ्कारस्य, अर्थालङ्कारस्य, तथोभयालङ्कारस्य च सोदाहरणं वर्णनमस्ति एकादशद्वादशप्रकाशयोः महाकाव्यनाटकयोः क्रमशो विवेचनमास्ते ।

११. एकादशप्रकाशे रसस्य सूक्ष्म वैज्ञानिकरूप प्रदर्शने स्वकीया विलक्षण प्रतिभायाः प्रदर्शनमकार्षीत् ।

१२. द्वादशे प्रकाशे नाटकस्य वैशिष्ट्यं वर्णितमस्ति तथा तस्य चतुःषष्टि विशेषतायाः क्रमिक विश्लेषणं कृतमस्ति । अन्तिमेषु चतुर्विंशति संख्याकेषु रसानां सोदाहरणानां साङ्गोपाङ्गं विवेचनं कृतमास्ते ।

१३. त्रयोदशप्रकाशे—रति-मोक्षशृङ्गार-धर्मशृङ्गार-वृत्ति-रत्यादीनां विवेचनं कृतमास्ते ।

१४. चतुर्दशे प्रकाशे हर्षस्य तथाऽष्टचत्वारिशद्भावानां विश्लेषणं कृतमास्ते ।

१५. पञ्चदशे प्रकाशे रत्यादीनायालम्बनविभावस्य वर्णनम् ।

१६. षोडशेंप्रकाशे रत्यादीनामु- द्दीपनविभावस्य वर्णनम् ।

१७. सप्तदशे प्रकाशे अनुभावस्य विश्लेषणम् ।

१८. अष्टादशे प्रकाशे धर्मश्रृङ्गारस्य वर्णनमस्ति ।

१९. ऊनविंशतितमे प्रकाशेऽर्थश्रृङ्गारस्य वर्णनं कृतमस्ति ।

२०. विंशतितमे प्रकाशे कामश्रृङ्गारस्यातिसूक्ष्मविवेचनमस्ति ।

२१. एकविंशतितमे प्रकाशे मोक्ष-श्रृङ्गारस्य, नायक-नायिका विभागस्य, तथा नायक-नायिकानाञ्च गुणस्य वर्णनमस्ति ।

२२. द्वाविंशतितमे प्रकाशे अनुरागस्य (सामान्य प्रेम्णः) वर्णनमस्ति ।

२३. त्रयोविंशतितमे प्रकाशे विप्रलम्भ-संयोगश्रृङ्गारयोः वर्णनम् ।

२४. चतुर्विंशतितमे प्रकाशे विप्रलम्भस्यैव वर्णनमस्ति

२५. पञ्चविंशतितमे प्रकाशे पूर्वानुरागविप्रलम्भस्य च वर्णनमस्ति ।

२६. षड्विंशतितम-प्रकाशः अनुपलब्धोऽस्ति ।

२७. सप्तविंशतितमेप्रकाशेऽभियोगविधेर्वर्णनमस्ति ।

२८. अष्टाविंशतितमे प्रकाशे दूती-विशेषदूतकर्मोपवर्णनम् ।

२९. नवविंशतितमे प्रकाशे दूतसंप्रेषणम्, सन्देशदानादिकञ्चेति ।

३०. त्रिंशत्प्रकाशे भावस्वरूपवर्णनम् ।

३१. एकत्रिंशत्प्रकाशे प्रवासोपवर्णनमस्ति ।

३२. द्वात्रिंशत्प्रकाशे करुणरसस्य विनिर्णयोऽस्ति ।

३३. त्रयःत्रिंशत्प्रकाशे संभोगस्य स्वरूपवर्णनमस्ति ।

३४. चतुस्त्रिंशत्प्रकाशे प्रथमानुरागानन्तरं सम्भोगस्य वर्णनम् ।

३५. पञ्चत्रिंशत्प्रकाशे मानप्रवासकरुणानन्तरसंयोगस्य वर्णनमस्ति ।

३६. षट्त्रिंशत्प्रकाशेचतसृणां संभोगावस्थानां वर्णनम् ।। अस्मिन् श्रृङ्गारप्रकाशे ४६७ उदाहरणानि सन्ति । तेषु २५१ श्लोकाः प्राकृतभाषायां सन्ति । द्वाविंशे प्रकाशे सकलश्लोकानां त्रिचतुर्थांशभागाः प्राकृतोदाहरणैः परिपूरिताः सन्तिः । अतएव श्रृङ्गारप्रकाशः अलङ्कारशास्त्रस्य विश्वकोशो वर्त्तते इति साधु वक्तुं शक्यते ।

भोजः अनेकानां ग्रन्थानां रचयिता आसीत् । एवं प्रतीतोभवति यदयं धर्मशास्त्रोऽपि लिलेख । मिताक्षराप्रायः धारेश्वरनाम्ना तथा दायभागेऽपि अस्योल्लेखः

समागतोऽस्ति । योगसूत्रस्य टीकायां राजमार्तण्डेऽनेन प्रकारेण वर्णनमस्ति— 'शब्दानुशासनं विदधतापातञ्जले कुर्वतावृत्ति राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके । वाक् चेतो वपुषां मलः फणभृतां भर्त्रैव येनोद्धृतस्तेन श्रीरणरङ्गमल्लनृपतेवाचो जयन्त्युज्ज्वला ।। (श्लो० ४ भूमिका) । साहित्यशास्त्रस्येतिहासे भोजराजः समन्वय-वादी आलङ्कारिक आसीत् । प्राचीनानामालङ्कारिकाणां मतमादाय सः परस्परं समन्वयस्य प्रयासमकार्षीत् । काव्यस्य विविधानामङ्गानां विषयेऽस्य स्वकीयं नवीनं मतमास्ते । भोजराजानुसारेण श्रृङ्गार एव रसराजो वर्त्तते । तथा चोक्तं तेन—

**श्रृङ्गारवीरकरुणाद्भुतवीरहास्य**
**वीभत्सबत्सलभयानकशान्त नाम्नः ।**
**आम्नासिषुर्दश रसान् सुधियो वयं तु**
**श्रृङ्गारमेव रसनाद्रसमामनामः ।।**

किन्तु भोजराजाभिमतः श्रृङ्गारः सामान्यात् श्रृङ्गारात् भिद्यते । तन्मतानुसारेण श्रृङ्गारोऽभिमानात्मको वर्त्तते । अस्यैव मतस्य समर्थनाय भोजराजो श्रृङ्गारप्रकाशस्य विपुलकायस्य ग्रन्थस्य प्रणयनमकार्षीत् ।

भोजराजस्य स्थितिकालस्तु खीष्ट्र ९९६ सम्वत्सरादारभ्य १०५१ वत्सरपर्यन्त इति सकलविद्वज्जन प्रसिद्ध एवेति । मुञ्जराजस्यानन्तरं भोजराजस्य पिता सिन्धुराजो राजा बभूव । भोजराजस्यैकस्य दानपत्रस्य कालः १०२१ ईसवीयो वर्त्तते । भोजराज-स्योत्तराधिकारिणः जयसिंहस्य १०५५ ईसवीयस्यैकः शिलालेखः उपलब्धो- ऽस्ति । अनेन सिद्ध्यति यद्भोजराजस्यान्तिमः कालः १०५४ ई० भवितुमर्हति । तेन हि भोजस्याविर्भावकालः खीष्ट्रस्यैकादश शताब्दस्य प्रथमार्द्धः स्वीकर्त्तुं शक्यते । शेषगिरिशास्त्रिणो लिखन्ति—यदयं भोजो धारातः स्वां राजधानीमुज्जयनीमानीतवान् इति तु 'आईने अकबरी' नामकपुस्तके लिखितमस्ति । तेन हि अयं १०१८ ईसवीये सिंहासनारूढो भूत्वा १०६३ ई० पर्यन्तं राज्यमकरोत् । काश्मीरिक कह्लणकवि कृतायां काश्मीरेतिहासराजतरङ्गिण्यां सप्तमे तरङ्गे—

**स च (अनन्तराजश्चेत्यर्थः) भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ ।**
**सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कवि बान्धवौ ।।**

इति श्लोकेऽपि १०२९ मिते ख्रिष्टाब्दे कश्मीरदेशे राज्यपदाधिष्ठितस्या-नन्तराजस्य मालवाधीशस्य भोजराजस्य च समकालत्वं दानशूरत्वं विद्वत्वं च प्रतिपादयन् भोजराजस्य पूर्वोक्तमेव स्थितिकालं प्रत्यायति । योगसूत्रस्य टीकायां राजमार्त्तण्डे—

**शब्दानामनुशासनं विदधता पातञ्जले कुर्वता,**
**वृत्तिराजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके ।**
**वाक्येतो वपुषां मलः फलभृतां भर्त्रैव येनोद्धृतः,**
**तस्य श्रीरणरङ्गमल्लनृपते वाचो जयन्त्युज्ज्वला ।।**

(श्लो० ४ भू०)

अनेन प्रमाणितोभवति यद्राजमृगाङ्कस्य रचना प्रायः १०४२-१०४३ खीष्टाब्देऽभवत् । अस्य मूलतिथिः शकसम्वत् ९६४ वर्त्तते ।

**शाके वेदर्त्तु नन्दनो रविघ्नो मांससंयुतः ।**
**अधो देवान्वितो द्विस्थस्त्रिवेदघ्नस्तयोर्हृतः ॥**

(राजमृगा० डी०सी०ह० लि० न० १०५-१८७३-७४, श्लो० २)

एवं भोजराजस्य हस्ताक्षर सहितं खीष्ट १०२२ मिते वत्सरे भट्टगोविन्दसुताय धनपतिभट्टाय ब्राह्मणाय दत्तं दानपत्रमपि निम्नलिखितं दर्शनीयमस्ति । धरानगराधिपतेः सुप्रसिद्धस्य भोजराजस्य दानपत्रम्—

**जयतिव्योमकेशोऽसौ यः सर्गाय विभर्त्तिताम् ।**
**ऐन्दवीं शिरसालेखां जगद्बीजाङ्कुराकृतिम् ॥**
**तन्वन्तु वः स्मरारातेः कल्याणमनिशं जटाः ।**
**कल्पान्तसमयोद्दामतडितवलय पिङ्गलाः ॥**

परमभट्टारकमहाराजाधिराजपरमेश्वर श्रीसीयकदेवपादानुध्यातपरमभट्टारकमहाराजाधिराज—परमेश्वर श्रीवाक्पतिदेवपादानुध्यात—परमभट्टारकमहाराजाधिराज—परमेश्वरश्रीसिन्धुराजदेवपदानुध्यातपरमभट्टारकमहाराजधिराजपरमेश्वर श्रीभोजदेवः कुशलीनागह्रदपश्चिमपथकान्तः पाति... इति सम्बत् १०७८ चैत्रसुदि १४ स्वयमाज्ञा मङ्गलं महाश्री । स्वहस्तोऽयं भोजदेवस्य । मम्मटेनाऽपि च काव्यप्रकाशस्य दशमोल्लासे उदात्तालङ्कारोदाहरणतयोपन्यस्तः—

**मुक्ताकेलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः,**
**प्रातः प्राङ्गण सीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षमरुणः ।**
**दूरादाडिमबीजशङ्कितधियः कर्षन्ति कैली शुकाः,**
**यद्विद्वद्भवनेषु भोजनृपतेस्तत्याग लीलायितम् ॥**

(का० प्र० द० उ० श्लो० ५०५ पृ० ५३१)

इति पद्ये भोजराजनामस्पष्टमेवोल्लिखितम् । एवञ्च मम्मटात्प्राचीन एव भोजराजः अतः भोजराजस्य पूर्वोक्तमेव स्थितिकालमेकादशशतकं स्पष्टमावेदयति ।



## क्षेमेन्द्रस्य औचित्यविचारचर्चा तथा कविकण्ठाभरणञ्च

विभिन्नविषयाणां विपुलकाव्य राशिलेखको महाकविः क्षेमेन्द्रः काश्मीर देशे जनिं लेभे । अयं हि अलङ्कारजगति औचित्यसम्प्रदायस्य संस्थापकरूपेण प्रख्यातो वर्त्तते । सः प्रायः चत्वारिंशत्संख्याकानां ग्रन्थानां प्रणयनमकरोत् । राजतरङ्गिण्याम् (१, १३) क्षेमेन्द्ररचितनृपावल्यारुल्लेखः समायाति—

**केनाऽप्यनवधानेन कविकर्मणि सत्यऽपि ।**
**अंशोऽपि नास्ति निर्दोषः 'क्षेमेन्द्रस्य' नृपावलौ ॥** (रा०त० १, १३)

किञ्चाद्यावधिपर्यन्तं ग्रन्थोऽयमनुपलब्ध एवाऽस्ति । काव्यशास्त्रे तस्यावदान-मत्यल्पमस्ति, तथाऽलङ्कारशास्त्रेऽपि तस्य प्रभावो नैव परिलक्ष्यते । अयं क्षेमेन्द्रः छन्दसामुचितप्रयोगे सङ्केतं दत्त्वा इदं प्रदर्शितं यत् के-के कवयः केषां-केषां छन्दसां प्रयोगे पटवः सन्ति । यथा—अभिनन्दः अनुष्टुप् प्रयोगे पटुरस्ति, पाणिनिः उपजात्याः प्रयोगे कुशलोऽस्ति, भारविः वंशस्थप्रयोगे निपुणोऽस्ति, कालिदासस्य मन्दाक्रान्ता विलक्षणोवर्त्तते तथा रत्नाकरः वसन्ततिलका प्रयोगे, भवभूतिः शिखरिणी प्रयोगे, राजशेखरः शार्दूलविक्रीडितप्रयोगे च श्रेष्ठाः सन्ति ।

क्षेमेन्द्रस्य चापरं नाम 'व्यासदासः' इत्यप्यभूदिति स्वयमेव तेनानेकत्र प्रोक्तम्—

**तस्यात्मजः सर्वमनीषिशिष्यः श्रीव्यासदासापरपुण्यनाम ।**
**क्षेमेन्द्र इत्यक्षयकाव्य कीर्त्तिश्चक्रे तथौचित्यविचारचर्चाम् ॥ इति ॥**

तदीयस्य पितामहस्य नाम 'सिन्धुः' इत्यासीत्, पितुश्च नाम 'प्रकाशेन्द्रः इति । प्रकाशेन्द्रः इति प्रकाशेन्द्रो धनिको दाता ब्राह्मणानां रक्षकश्चासीदिति क्षेमेन्द्रो लिखति—

**आसीत् प्रकाशेन्द्र इति प्रकाशः काश्मीरदेशे त्रिदिशेश्वरश्रीः ।**
**अभूद्गृहे यस्य पवित्रसत्रमच्छिन्नमग्रासनमग्रजानाम् ॥**
**यः श्री स्वयंभूभवने विचित्रे लेप्यप्रतिष्ठापितमातृचक्रः ।**
**गोभूमिकृष्णाजिन वेश्मदाता तत्रैव काले तनुमुत्ससर्ज ॥ इति ॥**

प्रागसौ शैव आसीत्, अनन्तरं सोमाचार्योपदेशात् वैष्णवो बभूव । क्षेमेन्द्रस्य शास्त्राध्यापकास्य यो विद्वांसोऽभूवन्—अभिनवगुप्तपादः, गङ्गकः, सोमाचार्यश्चेति । अत एव क्षेमेन्द्र 'सर्वमनीषिशिष्य' इति ब्रूते ।

क्षेमेन्द्रः काश्मीरराजस्यानन्तस्य सभापण्डित आसीत् । अनन्तस्य शासनकाले असन्तोष, षड्यन्त्र-रक्तपातादिविविधोपद्रवोपद्रुतेषु पस्परं वैमनस्याप्लुतान्तः करणेष्वपि क्षेमेन्द्रस्तान् प्रजाजनात् सत्यपथमानेतुं विविधानि काव्यानि व्यरचयत् ।

अयं हि क्षेमेन्द्रः जीवनस्यान्तिमावस्थायां सोमाचार्यस्य सविधे वैष्णवीं दीक्षामवाप । साहित्यशास्त्रस्य विषये अयमभिनवगुप्तपादाचार्यस्य साक्षात् शिष्य आसीत् । तथा चोक्तं तेन बृहत्कथामञ्जर्याम्—

**श्रुत्वाभिनवगुप्ताख्यात् साहित्यं बोधवारिधेः ।**
**आचार्यशेखरमणेर्विद्या निवृति कारिणः ॥**

सः स्वकीयेषु ग्रन्थेषु तेषां रचनाकालस्यापि उल्लेखमकरोत् । तेन निम्न-लिखिताः ग्रन्थाः प्रणीताः—१. दशावतारचरितम्—त्रयोदशश्लोकात्मकं स्तुतिकाव्यम्, २. रामायणमञ्जरी, ३. भारतमञ्जरी, ४. शशिवंशमहाकाव्यम्, ५. अमृततरङ्गकाव्यम्, ६. अवसरसारः, ७. चित्रभारतनाटकम् ८. कविकर्णिका, ९. नृपवती (राजवती),

१०. कर्ममाला ११. मुक्तावली १२. लावण्यवती, १३. देशोपदेशः, १४. पवन-पञ्चाशिका, १५. पद्यकादम्बरी, १६. वात्स्यायनसूत्रसारः १७. विनयवती, १८. बौद्धावदानकल्पलता १९. नीतिकल्पतरुः, २०. नीतिकल्पलता, २१. लोकप्रकाश-कोशः, २२. सेव्यसेवकोपदेशः, २३. विनयबल्ली, २४. दर्पदलनम्, २५. कविकण्ठाभरणम्, २६. क्षेमेन्द्रप्रकाशः, २७. कनकजानकी, २८. व्यासाष्टकम्, २९. बृहत्कथामञ्जरी, ३०. चतुर्वर्गसंग्रहः, ३१. समयमातृका, ३२. कलाविलासः, ३३. औचित्यविचारचर्चा, ३४. सुवृत्ततिलकम्, ३५. चारूचर्या, ३६. मुनिमतमीमांसा, ३७. ललितारत्नमाला, ३८. क्षेमेन्द्रप्रकाशः, ३९. नीतिमाला ।

पूर्वोक्तेष्वेतेषु ग्रन्थेषु बृहत्कथामञ्जरीतिनामधेयास्य ग्रन्थस्य बृहत्कथा संक्षेप-रूपत्वं गमयति । क्षेमेन्द्रस्य रामायणकथामञ्जरी भारतमञ्जरी चेति ग्रन्थद्वयं लोके प्रसिद्धं तयोरध्ययनेन सिद्धमिदं तत् क्षेमेन्द्रो मूलोक्त कथां रक्षन् ग्रन्थं संक्षिपति । संक्षेप-करणादेवास्य ग्रन्थाः क्वचित् क्वचित् शुष्का निष्प्राणाश्च जायन्ते । इमामर्योऽस्य प्राथमिक कृतयः । बृहत्कथामञ्जरी १०६३ ख्रीष्टाब्दे प्रारब्धा १०६६ ख्रीष्टाब्दे निर्माय समापिता । वर्णनवस्तुदृष्ट्या बृहत्कथामञ्जरी कथासरित्सागरमनुकरोति, परमाकारे महदन्तरम् । यत्र कथासरित्सागरे २१३८८ श्लोकास्तत्र बृहत्कथामञ्जर्यां केवलम् ७५०० श्लोका सन्ति । छन्दसां विषये क्षेमेन्द्रस्य सुवृत्ततिलकाभिधानोऽतिरमणीयो ग्रन्थो वर्त्तते ।

अलङ्कारजगति अस्य महाकवेः कृतिद्वयीविराजतेतराम्—औचित्यविचारचर्चा, कविकण्ठाभरणञ्चेति । अस्य ग्रन्थकर्त्तुः मौलिको ग्रन्थः औचित्यविचारचर्चाभिधानो-वर्त्तते । अस्मिन् ग्रन्थे औचित्यसिद्धान्तस्य समीचीना व्याख्या कृता वर्त्तते । काव्येषु औचित्यस्य कल्पनायाः सर्वप्रथमो निर्देशो नाट्यशास्त्रे समुपलभ्यते । तदनन्तरं ध्वन्यालोककार आनन्दवर्धनाचार्यः औचित्यस्य विशदं विवेचनमकार्षीत् । ध्वन्या-लोकादेव प्रेरणामवाप्य महाकविः क्षेमेन्द्रः औचित्यविचारचर्चायां औचित्यस्य नाना-प्रकाराणां वैशिष्ट्यानां विवेचनमकरोत् ।

तच्चौचित्यं बहुधा भिन्नं पदवाक्यप्रबन्धार्थगुणालङ्कार = रसक्रियाकरण—लिङ्गेषु औचित्यं विचार्य रसस्य जीवनभूतः प्राणः औचित्यमेव' इति स्वयं समुद्घोषितं तेन । तन्मते औचित्यं रससारोऽस्ति—

**औचित्यस्य चमत्कारकारिण्यश्चारुचर्वणे ।**
**रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥** (कारिका ३)

किमिदमौचित्यमिति जिज्ञासायां यो यत्सदृशः येन परस्परं सम्मिलनं भवेत् तदेवोचितम् । अथ चोचितस्य भावः औचित्यम् । तथा चोक्तमनेनैव—

**उचितं प्राहुराचार्याः सदृशं किल यस्य तत् ।**
**उचितस्य यो भावस्तदौचित्यं प्रचक्षते ॥** (कारिका ७)

अस्यौचित्यस्य पूर्वोक्तपद-वाक्यार्थरसकारकलिङ्ग—वचनाद्यनेकस्थलेषूदाहरणानि प्रदर्श्य एतद्भावस्थान्यत्र-तिष्ठ प्रदर्श्य साहित्यरसिकानां महानुपकारः कृतः क्षेमेन्द्रेण ।

औचित्यस्य मूलतत्त्वमानन्देनैवोद्घाटितं ध्वन्यालोके—

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।**
**प्रसिद्धौचित्य बन्धुस्तु रसस्योपनिषत्परा ॥** (ध्व०लो० पृ० १८०)

वक्रोक्तिजीवितेऽपि कथितमस्ति यद् औचित्यमुल्लिखितानां भागत्रयाणां विशिष्टगुणम् अस्ति—

**यत्र वक्तुः प्रमातुर्वा वाच्यं शोभातिशायिना ।**
**आच्छाद्यते स्वभावेन तदप्यौचित्यमुच्यते ॥** (कारिका १,३७-३८)

काव्यस्येदं मूलतत्व ध्वन्यालोकात्पूर्वमेव सिद्धान्तरूपेणाङ्गीकृतमासीत् । भरतेन नाट्ये पात्रेभ्यः देशस्यावस्थायाश्चानुरूपेण वेशविन्यासस्योपदेशं दत्वैतत्तत्वोपर्यैव विशेषाग्रहः प्रदर्शितः । तथाहि—

**अदेशजो हि वेशस्तु न शोभाजनयिष्यति ।**
**मेखलोरसिबन्धे च हास्यायैवोपजायते ॥** (ना०शा० २३।६९)

एतत् कारिकाया भाष्यरूपमेव क्षेमेन्द्रस्याधोलिखितपद्यं दृश्यते—

**कण्ठेमेखलया नितम्ब फलके तारेण हारेण वा-**
**पाणौ नूपुरबन्धनेन चरणे केयूर पाशेन वा ।**
**शौर्येण प्रणते रिपौ करुणया नायन्ति के हास्यता-**
**मौचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणः ॥**

इतः पूर्ववर्तिभिरालङ्कारिकैः तत्त्वमेनमादाय स्वग्रन्थस्य प्रणयनं कृतम् । अतः क्षेमेन्द्रस्यैव नेयमुद्भावना किन्तु पूर्वपूर्वाचार्यैः सूचिता या भावना तामेव स्वग्रन्थे स्पष्टरूपेण प्रदर्शयामास । तत्र भवानाचार्यः क्षेमेन्द्रः ।

अयं च महानुभावः काश्मीरस्थो बहुग्रन्थान् रचयामास । अयं हि औचित्यविचारचर्चायामनेकानां ग्रन्थकर्त्तृणां तथा तेषां रचनायाः समुल्लेखः कृतवान् । औचित्यविचारचर्चायां तेन 'कविकर्णिका काव्यालङ्कारस्याप्युल्लेखः कृतः । किञ्चेयं रचनाऽद्यावधिनोपलब्धाऽस्ति । कविकण्ठाभरणं कविशिक्षाविषयको ग्रन्थो वर्त्तते । ग्रन्थोऽयं पञ्चसु सन्धिषु विभक्तो वर्त्तते । अत्र पञ्चपञ्चाशत् (५५) कारिकाः सन्ति । एतासां सन्धीनां विषयास्तु निम्नरूपेण सन्ति—

**तत्राकवेः कवित्वाप्तिः शिक्षाप्राप्तगिरः कवेः ।**
**चमत्कृतिश्च शिक्षाप्तौ गुणदोषोद्गतिस्ततः ॥**
**पश्चात्परिचय प्राप्तिरित्येते पञ्च संधयः ।** (१,३४)

अत्र च कवित्वप्राप्तेरुपायस्य, कवीनां भेदस्य, कवीनां गुण-दोषयोश्च संक्षेपेण विवेचनं कृतमास्ते । अयं हि शिष्यान् त्रिवर्गेषु विभाजनं कृतम् । कविजनानप्ययं- छायोपजीवीपदकोपजीवी-पदोपजीवी-सकलोपजीवी-भुवनोपजीव्यादिषु भेदेषु विभक्तः कृतवान् । तथा नाट्य-तर्क व्याकरणशास्त्रादीनामध्ययनविषयेऽत्युपयोगिनं सङ्केतमप्य-

करोत् । अयमाचार्यः कविकर्णिकानामकमलङ्कारविषयकं ग्रन्थमपि लिखितवान् । अस्य ग्रन्थस्योल्लेखः औचित्यविचारचर्चायाः द्वितीये श्लोके समुपलभ्यते ।

क्षेमेन्द्रः स्वकीयेषु ग्रन्थेषु तेषां रचनाकालस्थाऽप्युल्लेखमकरोत् । औचित्य विचारचर्चा-कविकण्ठाभरणयोः रचना सः काश्मीराधिपतेरनन्तस्य राज्यकालेऽकरोत् । तेनैवाह—'तस्य श्रीमदनन्तराजनृपतेः काले किलाऽयं कृतः । (कविन्क०२) अनन्तस्य राज्यकालः १०२८ ईसवीयतः १०६३ ईसवीय यावत् स्वीक्रियते । १०६३ खीष्टाब्देऽयं स्वकीयपुत्रस्य राज्याभिषेकमकरोत् । एकषष्टिवर्षावस्थायां सः राज्यभारं पुत्रं समर्प्य स्वर्गं जगाम । ततश्च राज्ञोऽनन्तस्य यः काल, स एवामुष्य क्षेमेन्द्रस्येति सुनिश्चितम् । अतएव क्षेमेन्द्रस्य कालः एकादशशतकस्योत्तरार्द्धः स्वीक्रियते ।

क्षेमेन्द्रस्य पितुर्नामप्रकाशेन्द्रः पितामहस्य नामसिन्धुरासीत् । अस्य परिवारः अति सम्पन्नश्चासीत् । पिता च दानी तथोदारश्चासीत् । अस्मिन् विषये दशावतारचरितस्यान्ते द्वितीयः श्लोकः दर्शनीयः—

**काश्मीरेषु बभूव सिन्धुरधिकः सिन्धोश्च निम्नाशयः**
**प्राप्तस्तस्य गुण प्रकर्षयशसः पुत्रः प्रकाशेन्द्रताम् ।**
**विप्रेन्द्रप्रतिपादितान्नदानधनभूगोसङ्घकृष्णाजिनैः ।**
**प्रख्यातातिशयास्य तस्य तनयः क्षेमेन्द्रनामाऽभवत् ॥**



## मम्मटस्य काव्यप्रकाशः

साहित्यगगनचन्द्रस्य वाग्देवतायाः अपरावतारभूतस्य मम्मटाचार्यस्य स्थानं संस्कृतसाहित्येऽतीव महत्त्वपूर्णं वर्त्तते । आचार्योऽयं खीष्टब्दीयस्यैकादशशतकोत्तरार्ध-भागे काश्मीरभुवमलञ्चकार इति विद्वद्भिर्निश्चितम् । मम्मटात्पूर्वं काव्यशास्त्रस्य क्षेत्रे ये सिद्धान्ताः निर्धारिता अभूवन् तेषां सर्वेषां सिद्धान्तानां विवेचनं कुर्वन् काव्यस्वरूपस्य तस्याङ्गानां च विशदं विवेचनमकरोत् काव्यप्रकाशे मम्मटाचार्यः । अयं ग्रन्थः तथा विधोवर्त्तते मूलस्त्रोतो रूपेण यस्मात् काव्यस्य विभिन्नाः धाराः निस्सृता भवन्ति । आनन्दवर्धनाचार्यकृतायाः ध्वनेरुद्भावनाया अनन्तरमाचार्यो भट्टनायको महिमभट्टश्च ध्वनिसिद्धान्तध्वंसाय याः याः युक्तीः समुपास्थापयामासुः तासां सर्वासां युक्तीनां खण्डनं कृत्वाऽऽचार्यो मम्मटो ध्वनिसिद्धान्तं प्रतिष्ठापितमकार्षीत् । अतएव मम्मटाचार्योध्वनिप्रतिष्ठापनपरमाचार्यस्य विरुदा विभूषितो बभूव ।

मम्मटरचितस्य काव्यप्रकाशस्य निदर्शनाख्य टीकायाम्—**'इति शिवागमप्रसिद्ध्या षट्त्रिंशत् तत्त्वदीक्षाक्षपित सकलमलपटलः, प्रकटित सत्स्वरूपचिदानन्दघनः, राजानककुलको मम्मटनामा दैशिकवरः'** इत्येवमेकोलेख उपलभ्यते । तेन प्रतीयते यत्—मम्मटकाश्मीरप्रसिद्ध शैवागमानुयायीति ।

काव्यप्रकाशस्य सुधासागराख्यटीकाकर्त्ता भीमसेनो लिखति—'अयं मम्मटः काश्मीरदेशीयः, जैयटपुत्रः, वाराणसीमागत्याधीतशास्त्रः । अस्य च मम्मटस्य पतञ्जलिप्रणीत व्याकरणमहाभाष्य टीकाकर्त्ता कैयटः, वेदचतुष्टय भाष्यकर्त्ता उव्वटापरनामा औवटश्चेति द्वावपि कनिष्ठौ भ्रातरौ' इति । श्लोकैश्चापि मम्मटं स्तौति भीमसेनः—

**शब्दब्रह्मसनातनं न विदितं शास्त्रैः क्वचित् केनचित्,**
**तद्देवी हि सरस्वती स्वयमभूत् काश्मीरदेशे पुमान् ।**
**श्रीमज्जैयटगेहिनी सुजठराज्जन्माप्य युग्मानुजः;**
**श्रीमन्मम्मटसंज्ञयाश्रिततनुं सारस्वतीं सूचयन् ।।**
**मर्यादां किल पालयन् शिवपुरीं गत्वा प्रपठ्यादरात्,**
**शास्त्रं सर्वजनोपकाररसिकः साहित्यसूत्रं व्यधात् ।**
**तद्वृत्तिञ्च विरच्य गूढमकरोत् काव्यप्रकाशं स्फुटम्,**
**वैदग्ध्यैकनिदानमर्थिषु चतुर्वर्गप्रदं सेवनात् ।।**
**कस्तस्य स्तुतिमाचरेत्कविरहो को वा गुणान् वेदितुम्,**
**शक्तः स्यात्किल मम्मटस्य भुवने वाग्देवतारूपिणः ।**
**श्रीमान् कैयट औवटो ह्यवरजौ यच्छात्रतामागतो;**
**भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिङ्गतः ।।'**

अर्थादयं मम्मटः काश्मीरदेशीयः जैयटपुत्रः वाराणसीमागत्याधीतशास्त्रः, अस्य च मम्मटस्य व्याकरणमहाभाष्यस्य प्रदीपटीकायाकर्त्ता कैयटः, वेदचतुष्ट्यभाष्यकर्त्ता उव्वटापरनामा औवटश्चेति द्वौ च कनिष्ठौ भ्रातरौ बभूवतुरिति ।

परमिदं भीमसेनोक्तं न सर्वांशे प्रमाणत्वेन संभावयितुं शक्यते । मम्मटस्य कनिष्ठभ्राता उव्वटापरनामा औव्वट इत्याद्यंशे संशयोदयात् । तथाहि औब्बटकृतस्य वाजसनेयसंहिताभाष्ये—

**ऋष्यादींश्च पुरस्कृत्य अवन्त्यामुव्वटो वसन् ।**
**मन्त्रभाष्यमिदं चक्रे भोजे राष्ट्रे प्रशासति ।।**

इति पद्यं प्राप्यते । तस्यैव भाष्यस्य पुस्तकान्तरेऽन्यदेकं पद्यमन्यथैवोपलभ्यते—तद्यथा—

**आनन्दपुरवास्तव्य बज्रटाख्यस्य सूनुना ।**
**मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ।। इति ।।**

इति पद्यमपि मिलति । अनेन पद्यद्वयेन औब्बटस्य बज्रटपुत्रत्व भोजसमकाल-कत्वञ्च प्रतिपाद्यते । यद्ययमौब्बटो भीमसेनोक्तरीत्या मम्मटस्य भ्राता स्यात् । तदा मम्मटस्य जैयटपुत्रत्व वर्णनात् मम्मटः भ्रातुरौब्बटस्याऽपि जैयटपुत्रत्वमेव स्यात् । तदा च जैयटपुत्रत्वमेव स्यात् तदा च जैयट पुत्रस्य औब्बटस्य वज्रट पुत्रत्वं भोज समकालत्वं च कथं सङ्गच्छेत् । यद्यपि काश्मीरदेशीयस्य जैयटगोत्रस्य वज्रटाख्यस्य

दत्तकपुत्रोऽयमिति कल्पनायामिति जैयटपुत्रस्याऽपि औब्वटस्य वज्रटपुत्रत्वमुपपद्यते, तथाऽपि भोज समकालकत्वम्, अनुपपन्नमेव । यतो ज्येष्ठभ्रातुर्मम्मटस्य भोजराजादर्वाक्तनत्वे स्थिते तत्कनिष्ठभ्रातुरुब्वटस्य सुतरां भोजराजादर्वाक्तनत्वमिति विभावनीयम् । अतः भीमसेनस्येयं कल्पना प्रामाणिकतामवगाहते ।

अपि चायं वाराणस्यामागत्याधीतवानिति कथमपि न युक्तिसङ्गतं प्रतिभाति, यतो हि तस्मिन् समये वाराणस्याः साहित्यशास्त्रदृष्ट्या न किमपि महत्त्वमासीत्; प्रत्युत् काश्मीरप्रदेश तदानीं विद्यायाः केन्द्रमासीत् । केवलं दण्डी-राजशेखर-भोजराजान् विहाय सर्वेऽपि शास्त्रज्ञाः काश्मीरदेशीया एवासन् । अपिच दण्ड्यादीनामपि काश्या सह न कोऽपि सम्बन्धो बभूव । अतः काश्मीरान् विहाय मम्मटस्य शिवपुर्यामागमनस्य न किमपि प्रयोजनं प्रतीयते ।

राजानकमम्मटस्य सुप्रसिद्धः पाण्डित्यपूर्णो ग्रन्थः 'काव्यप्रकाशः' । अन्योऽप्येकः 'शब्दव्यापारविचारः' इत्याख्यो ग्रन्थः पुण्यपत्तन(पूना)स्थदक्षिणकालेज संज्ञकसंस्थातः प्रकाशितः समुपलभ्यते । काव्यप्रकाशग्रन्थो मम्मटेन परिकरालङ्कारपर्यन्त एव रचितः; अवशिष्टस्तु अल्लटसूरिणा पूरित इति टीका कृतां प्रवादः । तथाहि ते समुदीरयन्ति—

**कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः ।**
**प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥**

इति निदर्शनाख्यायां काव्यप्रकाशटीकायामानन्द कविः । अयमेव कविर्दशमोल्लास-समाप्तिटीकायामपि 'इत्येषमार्गो विदुषाम्' इतिश्लोकव्याख्यानावसरे प्रजल्पयति—

**काव्यप्रकाश इह कोऽपि निबन्धकृद्भ्याम्,**
**द्वाभ्यां कृतेऽपि कृतिनां रसतत्त्वलाभः ।**
**लोकेऽस्ति विश्रुतमिदं नितरां रसालम्,**
**बन्धप्रकारचितस्य तरोः फलं यत् ॥ इति ॥**

राजानकमम्मटभट्टस्य पाण्डित्येन प्रायः सर्वे एव टीकाकारा मुग्धाः सन्ति । तेष्वनेके तं 'वाग्देवतावतारः' इत्युपाधिना मण्डयन्ति । अपिच—काव्यप्रकाशस्य शैथिल्यमापादयतो मैथिलस्य काव्यप्रदीप कर्त्तुर्गोविन्दठक्कुरस्य मतं प्रत्याचक्षाणैर्भीमसेनादिभिरतीवदार्ढ्येन मम्मटस्य समर्थनं क्रियते । मम्मट भट्टनिर्मितस्य काव्यप्रकाशस्य महत्त्वमेतेनैव सूच्यते यद्—एतस्य षट्चत्वारिंशट्टीका झलकीकरोपाह्व भट्टवामनाचार्येण स्वटीकाया बालबोधिन्याः पूर्वं जाताः परिगणिता अभूवन् ।

काव्यप्रकाशे दश उल्लासाः सन्ति । अत्र ध्वनिविरोधिनां मतं खण्डयित्वाऽयमाचार्यः सुचारुरूपेण ध्वनिनिरूपणं तथाकृतवान् यथा तत्परवर्त्तिनः कस्याप्याचार्यस्य ध्वनिविरोधे साहसो नाभूत । अत एव हि एष मम्मटः 'ध्वनिप्रस्थापनपरमाचार्य' इत्युपाधिनाऽलङ्कृतोऽवान्तरविद्वद्भिः । अयं खलु बहुश्रुतोऽपि मुख्यतया वैयाकरण एव वैयाकरणानां सरणिरेवानुसरणात् । तेम हि सूत्रात्मिका एवास्य लेखनशैली । अत एव

साम्प्रतमुपलब्धास्वपि काव्यप्रकाशटीकासु ग्रन्थाभिप्रायोदुर्गम एवास्तीति न तत्प्रगोचरतां विदुषा मनाक् सन्देहलेशः ।

अस्य ग्रन्थस्य त्रयोंशाः कारिकावृत्तिरुदाहरणञ्चेति । अस्य ग्रन्थस्य कारिकैव सूत्रनाम्ना व्यपदिश्यते । अत एव काव्यप्रदीपविषमालङ्कारे गोविन्दठक्कुरादिभिः सूत्रे विभाग उपलक्षणपरः' इत्याद्युक्तम् । तत्र कारिकावृत्त्युदाहरणेषु मध्ये सर्वासामपि कारिकाणां परिकराऽलङ्कारपर्यन्ताया वृत्तेस्तत्पर्यन्तोदाहरणोपन्यासस्य च कर्त्ता मम्मट एव । परन्तूदाहरणानि प्रायोऽन्यदीयान्येव गृहीतानि नतु स्वकृतानि । अवशिष्टभागस्य तु राजानकजयानकसूनुः रत्नाकर कविप्रणीतस्य हरविजयाख्य काव्यस्य यत् विषयद्योताभिधं टिप्पणङ्कर्त्ता अल्लटः (अलकः) सूरिणापूरितः ।

काव्यप्रकाशस्य पूर्वोक्तोल्लासाभिधेया, दशविभागाः सन्ति । ते च **'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वाऽपि'** इति काव्य लक्षणं विधाय तदनुरोधेनैव निर्मिताः । तथाऽपि प्रथमे उल्लासे मङ्गलाचरणान्तरं यथाक्रमं काव्यस्य फलं कारणं 'तददोषौ' इत्यादिना स्वरूपं च निरूपितम् । अर्थात् प्रथमे उल्लासे काव्यलक्षणस्य, काव्यप्रयोजनस्य, काव्यकारणस्य, काव्यस्यानुबन्धचतुष्टयस्य, काव्यभेदस्य च निरूपणं कृतमास्ते । द्वितीये उल्लासे शब्दशक्तीनां विस्तरेण विचार कृतो वर्त्तते । अर्थादनन्तरं काव्यभेदस्य जिज्ञासितत्त्वादुत्तम—मध्यामाधमरूपविविध भेदोऽपि प्रतिपादितः । अतः **'शब्दार्थौकाव्यम्'** इत्युक्तत्वात् शब्दार्थभागादेऽपि जिज्ञासितत्त्वेनास्मिन् उल्लासे शब्दार्थविभागः आर्थी व्यञ्जनावाचकः शब्दः मतभेदेन सङ्केतितार्थः अभिधालक्षणामूला व्यञ्जना च प्रतिपादिताः । तृतीयोल्लासेऽर्थस्य व्यञ्जकता कथमिति जिज्ञासायामर्थस्य व्यञ्जकता प्रतिपादिता । चतुर्थे उल्लासे सर्वेषां ध्वनिभेदानां रसानां भावानाञ्च विस्तरेण विवेचनं कृतमास्ते । अत्रोत्तमकाव्य प्रभेदानामाकांक्षितत्वात् १०४५५ संख्यका ध्वनिकाव्य प्रभेदाः रसभावादयश्च विशेषेण प्रतिपादिताः । ततो मध्यमकाव्यप्रभेदानां जिज्ञासितत्त्वात् पञ्चमे उल्लासे ४५१५८४ संख्याका गुणीभूतव्यङ्ग्य काव्यप्रभेदाः प्रसङ्गात् व्यञ्जनावृत्ति संस्थान युक्तयश्च प्रतिपादिताः । षष्ठे चित्रकाव्यस्य समान्यः परिचयो वर्त्तते । तद्यथाऽधमकाव्य प्रभेदजिज्ञासायां षष्ठेऽस्मिन् उल्लासे चित्रकाव्य प्रभेदयोः स्वरूपं प्रतिपादितम् । ततः काव्यलक्षणे दोषाणां पूर्वप्रतिपादनात्, सप्तमे उल्लासे सप्ततिसंख्याकाः (१६ पददोषाः, २१ वाक्यदोषाः २३ अर्थदोषाः रसदोषाः १०) दोषाः प्रतिपादिताः । कुत्रचित्तेषां प्रतिप्रसतोऽपि (अदोषताऽपि) प्रतिपादितः । अष्टमे उल्लासे 'सगुणौ' इति विशेषणात् गुणनिरूपणस्य जिज्ञासिततया गुणलक्षणं 'गुणालङ्कारयोः नास्ति भेदः' इति प्रतिपादयतां केषांश्चिन्मतं निराकर्त्तुं अलङ्कारलक्षणं माधुर्यौजः प्रसादाख्यास्त्रयो गुणाः वामनोक्तदशविधगुणानां स्वोक्तगुणेष्वन्तर्भावश्चेत्येतानि प्रतिपादितानि । ततः काव्य लक्षणे 'अनलङ्कृती' इति विशेषणात् अलङ्काराणां जिज्ञासितत्त्वात् तत्राऽपि शब्दस्य प्राथम्यात् काव्य लक्षणे पूर्व ग्रहणाच्च नवमे उल्लासे वक्रोक्त्यादयो रीतिसहिताः षट्शब्दालङ्काराः प्रतिपादिताः । दशमे उल्लासे अर्थालङ्काराणामुपस्थितत्वात् उपमादयः ६१ एकषष्टि संख्याका अर्थालङ्काराः प्रतिपादिताः वामनाद्युक्तानामलङ्कारदोषाणां स्वोक्तेषु दोषेष्वन्तर्भावश्च प्रतिपादितः ।

अनेन विषयसङ्कलनेन ज्ञातोभवति यत् मम्मटाचार्येण केवलं नाट्यशास्त्रं विहाय काव्यशास्त्रस्य सर्वेषां विषयाणां केन प्रकारेण विवेचनं कृतमास्ते । अस्य विवेचनस्य क्षेत्रमपि व्यापकमस्ति । अन्येभ्यो लेखकेभ्यः प्रायः ६२० श्लोकान् गृहीत्वा स्वमतस्यायं स्पष्टीकरणमकरोत् । प्राचीनामाचार्याणां मतस्याप्यनेन खण्डनं कृतम् । यथा—श्लेषालङ्कारविषये—'श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते' इति । अत्र भट्टोद्भटादीनां मतमालोच्य दार्ढ्येन स्वमतस्य स्थापनाकृताऽनेन । तथा च सप्तमोल्लासष्वात्के—

**सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।**
**किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥**

(ध्व०लो० सृ०उ० पृ० ३२३)

सदोषोऽयं श्लोकः इति कथितो मम्मटेन । तन्मतेऽस्य श्लोकस्यार्द्धांशे शृङ्गारस्य विभावैरारम्भो भवति तथा द्वितीयार्द्धभागे शान्ते पर्यवसितोभवति । तथाऽपि श्लोकेऽस्मिन् विरोधो नैवास्ति, यतोत्यत्र शृङ्गारेण श्रोतारमुपदेशाय प्रेरितः करोति । अनेन प्रकारेण श्लोकेऽस्मिन् काव्यसौन्दर्यस्याधानो भवति । तथाप्यस्य रुद्रटात् भिन्नमतमस्ति । उदाहरणार्थम्—मम्मटस्य समुच्चयोपरि उक्तिरियम्—'धुनोति चासिं तनुते च कीर्त्तिमित्यादेः, कृपाण पाणिश्च भवान् रणक्षितौ । स साधुवादाश्च सुराः सुरालये 'इत्यादेश्च दर्शनात् । 'व्यधिकरणे इति, एकस्मिन् देशे इति च वाच्यम् ।' (पृ० ६९१) । रुद्रटस्य बिम्वोक्त्याः विरोधं करोति । 'व्याधिकरणे वा यस्मिन् गुणक्रिये' आदि (७।२७) अनेनैव प्रकारेण मम्मटस्य कारणमालाविषयाकं निम्नलिखित कथनमपि रुद्रटस्य हेत्वलङ्कारस्य लक्षणमुदाहरणञ्चाभिलक्ष्य कथितमस्ति—

**हेतुमता सह हेतोरभिधानमभेदतो हेतुः ।**

इति हेत्वलङ्कारोऽत्र न लक्षितः । आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति । वैचित्र्याभावात्—

**अविरलकमलविकासः सकलालिमदस्य कोकिलानन्दः ।**
**रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः ॥**

(का०प्र० द०उ० श्लो० ५२७)

इति तु काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न हेत्वलङ्कार कल्पनयेति । (का० प्र० पृ० ५४७ चौ० सं०) ।

अनेन प्रकारेणानुमानविषयकेयमुक्तिः साध्यसाधनयोः पौर्वापर्यविकल्पेन किंचिद्वैचित्र्यमिति न तथा दर्शितं (का०प्र० द०उ० पृ० ५३९, चौ० सं०) रुद्रटस्य आशयेन सह मिलति (८५६) तथा वामनप्रतिपादितः गुणालङ्कारयोर्भेदः (काव्यशोभायाः कर्त्तारो धर्मागुणा । तदतिशय हेतवस्त्वलङ्काराः । (का०सू० ३.१.१-२) अस्य कथनस्याप्यालोचनाकृता तेन । अनेनैव प्रकारेण वामनेन प्रतिपादितस्य ओजसः प्रौढिरूपे कृताव्याख्यायाः खण्डनं कृतम् । तद्यथा—

**पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा ।**
**प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥**

इति या प्रौढिः ओज इत्युक्तं तद्वैचित्र्यमात्रं न गुणः । तदभावेऽपि काव्यव्यवहार-प्रवृत्तेः (का० प्र० अ० उ० पृ० ३९६-९७ चौ० वि० सं०) । वामनस्य मते 'अर्थस्य प्रौढिराजः' (काव्याल० सू० ३.२.२) तथा तेन वृत्तौ—'पदार्थे वाक्यरचन-मित्यादि श्लोकोऽयं समुद्धृतः । यद्यपि मम्मटाचार्यः स्वयमपि काव्यप्रकाशस्य षष्ठे उल्लासे भामहस्य निम्नलिखितान् त्रीन् श्लोकान् समुद्धृतवान् (१.१३-१५) । तया तस्य—

**सैषा सर्वत्र वक्रोक्तिरनयार्थे विभाव्यते ।**
**यत्नोऽस्यां कविभिः कार्यः कोऽलङ्कारोऽनया विना ॥ इति ॥**
(का०द०ड० पृ० ५७२ चौ०सं०)

भामहस्य—**'काव्यं नाति समस्तार्थं काव्यं मधुरमिष्यते'** (१.३) अस्मिन्नपि श्लोके मम्मटेन दोषं प्रदर्शितम् । मम्मटस्यात्र कथनमस्ति—

**आह्लादकत्वं माधुर्यं शृङ्गारे द्युतिकारणम् ।**
**........ श्रव्यत्वं पुनरोजः प्रसादयोरपि ॥** (श्लो० ६८, उ० ८)

मम्मटस्तु महाकविकालिदासस्य काव्येष्वपि दोषान् प्रदर्शितवान् । तद्यथा—

१. 'मृदपवनविभिन्नो०' (विक्रमो० ४.२२) इत्यादिश्लोके अमङ्गलाश्लीलं दोषम् ।

२. दिवाकराद्रक्षति यो गुहासु (कु० सं० १.१२) अनुचितार्थः दोषोऽत्र ।

३. अतिथिनाम काकुस्त्थ्यात्पुत्रभावं कुमुंद्वती (रघु० १७-१) अत्र भग्न-प्रक्रमदोषः ।

४. गाहन्तां महिषा निपान सलिलं (शाकु० २.६) अत्र भग्नप्रकम दोषः प्रदर्शितस्तेन ।

५. वपुर्विरूपाक्षमलक्ष्मजन्मता (कु० सं० ५.७२) अत्र अविमृष्टविधेयांश दोषः ।

परवर्त्तीनामनेकाऽचार्याणां मते भरतमुनेः नाट्यशास्त्रादेवकारिकाभागं सङ्गृहीतमनेन काव्यप्रकाशाख्ये ग्रन्थे, केवलं वृत्तिभागस्यैव लेखकोऽयं मम्मटाचार्यः । विद्याभूषणस्य साहित्यकौमुद्यामस्य मतस्यानेन प्रकारेण सम्पुष्टि-कृताऽस्ति । यथा—'सूत्राणां भरतमुनीशवर्णितानां वृत्तीनां गितयपुषां कृतौ गामास्याम ।' (भूमिकाखण्डे द्वितीय-श्लोकोऽयमिति) अस्यैव ग्रन्थस्यान्तेऽयमप्युल्लेखोऽस्ति—

**मम्मटाद्युक्तिमाश्रित्य मितां साहित्य-कौमुदीम् ।**
**वृत्तिं भरत सूत्राणां श्रीविद्या भूषणो व्यधात् ॥**
(पीटर्सन महोदयस्य २ सू०)

अनेनैव प्रकारेण महेश्वरेणापि जीवानन्दसंस्करणस्य तृतीयपृष्ठे भरतमुनिमेव

काव्यप्रकाशस्य कारिकायाः रचयितामन्यते । जयरामोऽपि स्वतिलकाख्या रचनायां मतमिदं प्रकटितं यत् भरतमुनिमेव कारिकायाः रचयिताऽऽसीत् । (पीटर्सनमहोदयस्य द्वितीय सूचनायां पृ० १०७) अस्य मतस्याधारत्रयमस्ति—१. काव्यप्रकाशस्य कतिपयाः कारिकाः नाट्यशास्त्रस्य श्लोकान् इव सन्ति । तद्यथा—

काव्यप्रकाशस्य चतुर्थे उल्लासे—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नान्ये रसाः स्मृताः ॥**
(का०प्र० च०उ० श्लो० २९ पृ० १०६)

तुलना—नाट्यशास्त्रे—

**शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।**
**वीभत्साद्भुत संज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥**
(ना०शा० ष०अ० श्लो० १६, पृ० १८)

काव्यप्रकाशे—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौभयं तथा ।**
**जुगुप्साविस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः ॥**
(का०प्र० च०अ० श्लो० ३०, पृ० ३०)

नाट्यख्शास्त्रे—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥**
(नाट्य० अ० ६, श्लो० १८, पृ० २३)

काव्यप्रकाशे—चतुर्थोल्लासे श्लो-३१-३४ । पृ० १२२-२३।

**निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमः ।**
**आलस्यञ्चैव दैन्यञ्च चिन्तामोहः स्मृतिर्धृतिः ॥**
(उ० ४, श्लो० ३१)

**व्रीडाचपलताहर्ष आवेगो जड़ता तथा ।**
**गर्वोविषाद औत्सुक्यं निद्रापस्मार एव च ॥**
(श्लो० ३२)

**सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३३ ॥**
**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ३४ ॥**

नाट्यशास्त्रे—

**निर्वेदग्लानि शङ्काख्या तथासूयामदः श्रमः ।**

**आलस्यं चैव दैन्यं च चिन्तामोहः धृतिः स्मृतिः ॥ १९ ॥**
**व्रीडाचपलताहर्ष आवेगो जड़ता तथा ।**
**गर्वोविषाद औत्सुक्यं निद्रापस्मार एव च ॥ २० ॥**
**सुप्तं विवोधोमर्षश्चाप्यवहित्वमथोग्रता ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ २१ ॥**
**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।**
**त्रयस्त्रिंशदमी भावाः समाख्याता तु नामतः ॥ २२ ॥**

(नाट्यशास्त्रे षष्ठोध्याये, श्लो० सं० १९-२२, पृ० २४)

अत्रोभयोः कथनस्य साम्यम् ।

प्रथमकारिकायामुपरि वृत्तिरियमस्ति—'ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति' अनेन कथनेन स्पष्टो भवति यद्वृत्तिकारः कारिकाकारात् भिन्नोऽस्ति ।

काव्यप्रकाशस्य दशमे उल्लासे—'समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ (कारिका सं० ९३ पृ० ४६५) तथास्याः कारिकायाः वृत्तिर्यथा—आरोपविषया इवारोप्यमाणा यदा शब्दोपात्ताः, तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम् । आरोपिता इति बहुवचनमविवक्षितम् ।' अत्र कारिकावृत्योर्मध्ये मतभिन्न इव प्रतिभाति ।

किञ्च त्रयोऽपि तर्काः निर्बलास्तथाऽयुक्तिकराः एव प्रतीतो भवन्ति । काव्यप्रकाशस्य १४३ कारिकासु अत्यल्पाः कारिकाः एव नाट्यशास्त्रात् संग्रहीताः सन्ति । साम्यत्वञ्च संयोगपरकत्वमेव नात्र काऽपि विप्रतिपत्तिः । अस्मिन् विषये स्वरचनायां तिलके जयरथो लिखति—'कारिकाणां भरतसंहितायां कासांचित दर्शनं न दोषाय प्रामाण्य ज्ञापनार्थं क्वचित्तासां लिखनात् । (पीटर्सन, द्वि० सूचना पृ० १००)। तत्रैव ग्रन्थ कर्त्तुर्विषये 'ग्रन्थकृदित्यादिना निर्देशस्तु धीरोदात्तस्य सङ्गोपनाम् ।' नाट्यशांस्त्रन्तु तस्मिन् काले रसविवेचनाग्रगण्यग्रन्थः आसीत् । अतस्मात् कारिकाग्रहणे कस्यापि प्रकारकस्य न्यूनतायाः अनुभूतिं नैवाभवत् । मम्मटेन तु अन्येभ्योऽपि ग्रन्थेभ्यः यथावत् कारिकाः समुद्धृताः । तद्यथा—

**कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।**
**संनिधानादिबोधार्थं .................. ॥**

(का०प्र० ७ उ० पृ० ३४६ चौ०सं०)

कारिकेयं वामनस्य निम्नलिखितकारिकायामुपरि आधारितोऽस्ति ।

**कर्णवतंशश्रवणकुण्डलसिरः शेखरेषु कर्णादिनिर्देशः संनिधेः ।**

(वामनस्य का० २-२.१४)

तथा च—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**

**उत्कर्ष हेतवस्ते स्युरचलस्थितयो गुणाः ॥**

(अष्टमोल्लासः का, ६६, पृ० ३८३)

निम्नलिखितध्वनिकारिकाऽपि द्रष्टव्या—

**तमर्थमवलम्बते येऽङ्गिनं ते गुणाः स्मृताः ।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्या कटकादिवत् ॥**

(ध्व०लो० उद्यो० ३, पृ० ३४१ चौ०सं०)

उभयोर्भाव साम्यं दर्शनीयमस्ति । 'ग्रन्थकृतपरामृशति' अत्र तृतीयपुरुषस्य प्रयोगे यथार्थत्वमिदमस्ति यदस्मिन् प्रयोगे ग्रन्थकारेण स्वकीय निरभिमानता प्रदर्शिता । इयमेव प्राचीन ग्रन्थकाराणां लेखनशैली आसीत् । 'अहं ग्रन्थं रचयामि' एवंविध प्रथम पुरुषस्य प्रयोगः विरल एवास्ति ।

कारिकावृत्योरुभयो रचयिता मम्मटाचार्य एवास्ति । अस्मिन् विषये स्वतन्त्रः स्पष्टश्चाधारः कथितुं शक्यते । तद्यथा—

१. समस्तग्रन्थे मम्मटेन कुत्राऽपि नैवमुक्तं यदन्यकृतग्रन्थोपरि वृत्तिरूपेण मया टीका क्रियते । वृत्तौ मङ्गलाचरणस्य पृथगुल्लेखो नैवास्ति । यदि वृत्तिरेव तस्य कीर्त्तिर्भवति, तर्हि परम्परानुसारेण मङ्गलाचरणस्य प्रयोगः कथत्र कृतस्तेन अस्मिन्नेव ग्रन्थे कारिकारम्भे मङ्गलाचरणस्य प्रयोगस्त्वस्त्येवेति ।

२. कारणान्यथ कार्याणीत्यादिः' चतुर्थोल्लासस्य कारिकायाः वृत्तौ 'तदुक्तं भरतेन विभावानुभावव्यभिचारीति कथितमस्ति । काव्यप्रकाशस्य कारिका यदि भरतकृता भवेत्तर्हि वृत्तिकारेण 'भरतेन' पदस्य स्थाने' तदुक्तमनेनैवान्यत्र' अथवा 'तदुक्तं कारिकाकृतान्यत्र' इत्यादय एव कथितव्यम् ।

३. साङ्गमेतत् (उक्त द्विभेदं सावयम्) निरङ्गं तु शुद्धम् । यथा—

**कुरङ्गीवाङ्गानिस्तिमितयति गीतध्वनिषु यत्,**
**सखीकान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।**
**अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनयां,**
**प्रवृत्तोऽस्याः सेक्तुं हृदिमनसिजः प्रेमलतिकाम् ॥**

(का० प्र० ४२३)

माला तु पूर्ववत् अस्ति । अत्र मालारूपकस्य सङ्केतोदतः तथा कथितमस्ति यत् पूर्वोक्तेयं मालोपमायाः सदृश एवेति । किञ्च मालोपमायारूल्लेख स्पष्टतः केवलं वृत्तौ एवमिलति । तेनाऽपि प्रमाणितो भवति यत् कारिका वृत्तिश्च एकस्यैवजनस्य कृतिरस्ति ।

४. माणिक्यचन्द्र-जयन्त-सरस्वतीतीर्थ-सोमेश्वरादयः काव्यप्रकाशस्यारम्भिकाः टीका कर्त्तारः वृत्तिकारिकाकर्त्रोर्मध्ये न कोऽपि भेदो मन्यन्ते । प्रत्युत प्राग्वर्त्तिनः कतिपयाः काव्यप्रकाशस्य टीकाकर्त्तार वृत्तिः कारिका च एकस्यैव कर्त्तुः

कृतिरङ्गीकुर्वन्ति । काव्यानुशासनस्य टीकायां चतुर्थपृष्ठे हेमचन्द्रो वदति—'एवमानन्दयशश्चतुर्वर्गोपाद्यन्युतात्तीनां काव्यप्रयोजनतामसाधारणीं प्रतिपाद्य यत्कैश्चित् श्रीहर्षादिधावकादीनामिवधनं ...अनर्थनिवारणं प्रयोजनत्रयव्युपन्यस्तम्। अस्मिन् कथने 'काव्यं यशसेऽर्थकृते' कारिकेयं तथाऽस्याः वृत्तिश्चैकस्यैव विदुषः कृतिर्मत्वा हेमचन्द्रेणोक्तमिदम् । काव्यानुशासनस्य १०२ पृष्ठे तेनैवोक्तम्—'यथाह मम्मटः—

**अगूढमपरस्याङ्ग व्याच्य सिद्ध्यङ्गमस्फुटम् ।**
**संदिग्धतुल्य प्राधान्ये काक्वाऽऽक्षिप्तमसुन्दरम् ॥**

(का०प्र० स० ५ श्लो० ४५)

अत्र हेमचन्द्रः स्पष्टरूपेणोक्तवान् यत् कारिका मम्मटस्यैव रचना अस्ति । जयरथेन कारिकाकार-वृत्तिकाराभ्यां 'काव्यप्रकाशकृत्' इत्येवं पदस्य प्रयोगः कृतः । (पृ० १०२,१३०,१५०,१९९) ।

अनेन प्रकारेण काव्यप्रकाशस्य कर्त्ताभिन्नोऽभिन्नो वेत्यत्र विदुषां विप्रतिपत्तयः बहुविधाः सन्ति । विप्रतिपत्तीनां च मुख्यतयाऽऽधारः काव्यप्रकाशस्यान्तिमः श्लोक एव—

**इत्येषमार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।**
**न तद्विचित्रं यदमुत्र सम्यग् विनिर्मिता सङ्घटनैव हेतुः ॥ इति ॥**

अत्र काव्यप्रकाशटीकाकृन्माणिक्यचन्द्रसङ्केतनामकटीकायां लिखति—'अथ चायं ग्रन्थोऽन्येन चारब्धोऽपरेण च समापितः, इति द्विखण्डोऽपि सङ्घटनावशादखण्डायते ।' अनेनैव प्रकारेण काव्यप्रकाशस्यापरः सङ्केताख्यटीकाया निर्माता रुरुय्यकापरनामा राजानकरुचकोऽपि अस्यैव श्लोकस्य व्याख्यानावसरे आह—'एतेन महामतीनां प्रसरणहेतुरेष ग्रन्थो ग्रन्थकृतानेन कथमप्यसमाप्तत्वात् अपरेण च पूरितावशेषत्वात् द्विखण्डोऽपि अखण्डतया यदवभासते तत्र सङ्घटनैव हेतुरिति ।' अस्मिन विषये सोमेश्वरेणाऽप्युक्तम्—**'अथ च सुधियां विकाशहेतुर्ग्रन्थोऽयं कथञ्चिदपूर्णत्वादन्येन पूरितशेष इति द्विखण्डोऽपि'** इति । यत्र कियानंशो मम्मटेन कृतः कियाश्चान्येनेति जिज्ञासायां केचन काव्यप्रकाशस्य निदर्शनाख्य टीकायाः कर्त्तुः राजानकानन्दस्येमं श्लोकं प्रमाणत्वेनोपन्यस्यन्ति—

**कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः ।**
**ग्रन्थसम्पूरितः शेषो विधायाल्लटसूरिणा ॥**

इत्थं काव्यप्रकाशस्य परिकरालङ्कारान्तो भागो मम्मटेन कृतः, शेषश्च काश्मीरभवेन अल्लटेन पूरित इति प्रथमः पक्षः । अपरश्च पक्षो यत् सम्पूर्ण एव ग्रन्थे मम्मटाल्लटाभ्यां ग्रथितः । उक्तश्चान्येन—

**काव्यप्रकाशदशकेऽपि निबन्धकृद्भ्याम् ।**
**द्वाभ्यां कृतेऽपि कृतिनां रसवत्वलाभः ॥**

**लोकेऽस्ति विश्रुतमिदं नितरां रसालम् ।**
**बन्धप्रकार रचितस्य तरोः फलं यत् ॥**

(द्रष्टव्यः जे.बी.बी.आर.ए.एस. भा० १६, अतिरिक्त सं० २३)

श्रीमान् भण्डारकरमहोदयः १२१५ विक्रमाब्देऽर्थात् ११५८ खीष्टाब्दे लिखितां काव्यप्रकाशग्रन्थस्य पाण्डुलिपिंहस्ते कृत्य तत्रत्य पुष्पिकायां राजानकमम्टाल्लटयोः' इत्थं लिखितमिति प्रकाशितवान् (Prof. S.R. Bhandarkar Report Page 78 1905-6) । मालवाधीशस्य भोजनराजस्य वंश्यः अमरुशतकस्य टीकाकारः अर्जुनदेवोपीदमेवमतं द्रढयति स 'भवतु विदितम्' इतिश्लोकस्य व्याख्यानावसरे लिखति—'यथोदाहृतं दोषनिर्णये मम्मटाल्लटाभ्याम्-प्रसादेवर्त्तस्व' इत्यादि । किञ्चार्जुनदेव एव—**'लीलातामरसाहतोऽन्य वनितानिःशङ्कदंष्ट्राधरः** (का०प्र० उल्ला० ७ पृ० २५७ चौ० सं०) । इत्यादि पद्यव्याख्यानावसरेऽपि लिखति—'अत्र केचित् वायुपदेन जुगुप्तसाऽश्लीलमिति दोषमाचक्षते । तदावाग्देवतादेश इति व्यवसितव्य एवासौ । किन्तु, ह्लादैकमयी वरलब्धप्रसादौ काव्यप्रकाशकारौ प्रायेण दोषदृष्टी ।' इत्थमर्जुनदेवस्य दृष्टौ सम्पूर्ण एव काव्यप्रकाशो मम्मटाल्लटयोर्विदुषोः सम्मिलिता रचनेति सिद्ध्यति । अपरञ्च काव्यप्रकाशस्य सङ्केतव्याख्यायाः प्रथम-दशमोल्लासयोः पुष्पिकयोरयं सङ्केतो लिखति—

'इति श्रीमद्राजानकमल्लमम्मटरुचकविरचिते निजग्रन्थ काव्यप्रकाशसङ्केते प्रथमोल्लासः ।' अत एव काव्यप्रकाशविषये युग्मकर्तृत्वपक्षः प्रायेण विद्वज्जनसम्मत इति विभावनीयम् ।

अस्मिन् विषये तृतीयो बङ्गीयानां पक्षेऽपि दृग्गोचरीभवति । सोऽपि काव्यप्रकाशं कर्त्तृद्वयस्यैव रचनां मन्यते । अस्मिन् मते कारिकाकारः भरतमुनिः वृत्तिकारश्च मम्मटः । इदं मतं विशेषतो बङ्गीययोः साहित्यकौमुदीकारविद्याभूषणस्य काव्यप्रकाशस्य आदर्शाख्यटीकायाः कर्त्तुः महेश्वरभट्टाचार्यस्य चास्ति । विद्याभूषणः साहित्यकौमुद्यां वारद्वयमिदमुल्लिखितवान् स लिखति—

**मम्मटाद्युक्तिमाश्रित्य मितां साहित्यकौमुदीम् ।**
**वृत्तिं भरतसूत्राणां श्रीविद्याभूषणो व्यधात् ॥**

पुनश्चाऽन्यत्राऽपि स लिखति—

**'सूत्राणां भरतमुनीशवर्णितानां वृत्तीनां मितवपुषां कृतौ ममास्याम् ।'** अनेन ग्रन्थेन प्रतीयते यत् कौमुदीकारो विद्याभूषणः काव्यप्रकाशसूत्राणि भरतमुनिविरचितानि मन्यते । एवमेव महेश्वरोऽपि काव्यप्रकाशसूत्राणि भरतमुनिविरचितानि वृत्तिभागञ्च मम्मटविरचितं स्वीकरोति ।

किन्त्विमानि तथ्यानि न्यायतुलां नाधिरोहन्ति, यतो १४२ कारिकासु द्वित्राः कारिका एव भरतमुनिप्रणीतनाट्यशास्त्रे संदृश्यन्ते, यस्याः उल्लेखः पूर्वमेवकृतो मया, न पुनः सर्वाः । अतोऽन्या मम्मटेन कुतो गृहीता इत्यस्योत्तरं विरोधिनां पार्श्वे नैवास्ति ।

वस्तुतस्तु मम्मट एव कारिकाकृत्, किन्तु, नासौ सर्वा अभिनवाः कारिकाश्चकार। क्वचिदविकलां, क्वचिच्चांशतोविकलां कृत्वाऽन्यकृतिमपि तत्तत्कृतीनां नामान्युल्लिख्यैव स्वकृतावन्तर्भावयामास ।

अपि च कारिकाकृत, भरतमुनिः स्यात्, तदा चतुर्थोल्लासे २८ तमकारिकयोक्त-स्यार्थस्य प्रमाणतया 'उक्तं हि भरतेन' इत्यादिना भरतोक्तिरुद्धृता न स्यात् । कः खल्वनुन्मत्तस्तदुक्तावेव तदुक्तिं प्रमाणतयोपन्यस्यति । किञ्च वृत्तिकारिकयोरभिन्नकर्तृत्वे दृढप्रमाणमिदं मालारूपककरणे—**'साङ्गमेतन्निरङ्गं तु शुद्धं माला तु पूर्ववत् ।'** इति पदेन मालोपमायाः पूर्वोक्तता व्यज्यते । नच मालोपमा कारिकयापूर्वमुक्ता किन्तु वृत्यैव। अत एव 'माला तु पूर्ववत्' इत्युक्तिरुभयोरेककर्तृत्व एव सङ्गता भवति न तु भिन्नकर्तृत्वे । एभिः प्रमाणैः वृत्तिकारिकयोरेककर्तृत्वं सिद्ध्यति ।

**काव्यप्रकाशस्य टीकाकाराः**

काव्यप्रकाशस्य टीकानां संख्या भूयसी वर्त्तते । प्राचीने काले काव्यप्रकाशस्य टीकाकरणं वैदुष्यस्य मानदण्ड अवर्त्तत । एतस्मादेव हेतोः मौलिकग्रन्थकाराः अपि काव्यप्रकाशस्य टीकामलेखिषुः । अत्र कासाञ्चन प्रसिद्धानां टीकाकाराणां टीकानाञ्चोल्लेखः क्रियते । अत्र झलकीकरोपाह्व भट्टवामनाचार्येण स्वटीकायाः बालबोधिन्याः पूर्वं जाताः काव्यप्रकाशस्य षट्चत्वारिंशट्टीका परिगणिता अभूवन् । अत्र केवलं सर्वजन बोधाय टीकानां कर्तृनामयुता सूच्येनैका प्रदीयते ।

| | टीकाकारनाम | टीकानाम | संभावितरचनाकालः |
|---|---|---|---|
| १. | श्रीधरकृता | पुरातनतरा | अज्ञातः |
| २. | चण्डीदासकृतासाहित्यदर्पणकारस्य पितामहः चण्डीदासस्य ग्रन्थस्य दीपिकानाम्नीं व्याख्यामलिखत् । अस्य कालः त्रयोदश शताब्दस्य मध्यभागो वर्त्तते । | | |
| ३. | देवनाथकृता | काव्यकौमुदी | अज्ञातकालः |
| ४. | भास्करकृता | साहित्यदीपिका | ... ... ... |
| ५. | सुबुद्धिमिश्र | ... ... ... | ... ... ... |
| ६. | पद्मनाभकृता | ... ... ... | ... ... ... |
| ७. | अच्युतकृता | ... ... ... | ... ... ... |
| ८. | रत्न पाणिकृता | ... ... ... | ... ... ... |
| ९. | भट्टाचार्यकृता | काव्यदर्पणः | ... ... ... |
| १०. | रविकृता | मधुमती | ... ... ... |
| ११. | रविकृता | तत्त्वबोधिनी | ... ... ... |
| १२. | रविकृता | कौमुदी | ... ... ... |
| १३. | रविकृता | आलोकः | ... ... ... |
| १४. | रुचक(रुय्यक)कृता | सङ्केत | अज्ञातः |

| टीकाकारनाम | टीकानाम | संभावितरचनाकालः |
|---|---|---|
| १५. जयरामकृता | प्रकाशतिलकः | ... ... ... |
| १६. यशोधरकृता | ... ... ... | ... ... ... |
| १७. विद्यासागरकृता | ... ... ... | ... ... ... |
| १८. मुरारिमिश्रकृता | ... ... ... | ... ... ... |
| १९. मणिसारकृता | ... ... ... | ... ... ... |
| २०. पक्षधरमिश्रकृता | ... ... ... | ... ... ... |
| २१. रामनाथकृता | रहस्यप्रकाशः | ... ... ... |
| २२. जगदीशभट्टाचार्यकृता | ... ... ... | ... ... ... |
| २३. गदाधरभट्टाचार्यकृता | ... ... ... | ... ... ... |
| २४. भास्करकृता | रहस्यनिबन्ध | ... ... ... |
| २५. रामकृष्णकृता | काव्यप्रकाशभावार्थः | ... ... ... |
| २६. वाचस्पतिमिश्रकृता | ... ... ... | ... ... ... |
| २७. प्रदीपकारकृता | उदाहरणदीपिका | ... ... ... |
| २८. सूरिजैनकृता | अवचूरिः | ... ... ... |
| २९. माणिक्यचन्द्रकृता | सङ्केतटीका | ११६० ईसवीयः |
| ३०. सरस्वतीतीर्थकृता | बालचित्तानुरञ्जनी | त्रयोदशशताब्दः |
| ३१. जयन्तकृता | दीपिका | १३५० सम्वत्सरः |
| ३२. सोमेश्वरकृता | काव्यादर्शः | त्रयोदशशताब्दस्योत्तरार्धः |
| ३३. विश्वनाथकृता | काव्यप्रकाशदर्पणः | चतुर्दशष्टाताब्दस्य पूर्वार्द्धः |
| ३४. परमानन्दभट्टाचार्यकृता | विस्तारिका | अज्ञातकालः |
| ३५. आनन्दकविकृता | निदर्शनम् | ... ... ... |
| ३६. श्रीवत्सलाञ्छनकृता | सारबोधिनी | ... ... ... |
| ३७. महेश्वरकृता | आदर्शः | ... ... ... |
| ३८. कमलाकरकृता | आदर्शः | ... ... ... |
| ३९. नरसिंहकृता | नरसिंह मनीषा | ... ... ... |
| ४०. भीमसेनकृता | सुधासागरः(सुबोधिनीच) | ... ... ... |
| ४१. महेशचन्द्रकृता | तात्पर्यवृत्तिः | ... ... ... |
| ४२. गोविन्दठक्कुरकृता | काव्यप्रदीपः | ... ... ... |
| ४३. नागेशभट्टकृता | लघूद्योतः बृहद्द्योतश्च | ... ... ... |
| ४४. वैद्यनाथकृता | प्रभा | ... ... ... |
| ४५. ... ... ... | उदाहरणचन्द्रिका | ... ... ... |
| ४६. राघवकृता | अवचूरि | ... ... ... |

४७. झलकीकरवामनः काव्यप्रकाशस्य सुबोधिन्यभिधानामतिसरलां टीकायं- लिखतिस्म ।

**मम्मटस्य कालः**

अयं श्रीमम्मटभट्टः खीष्ट्राब्दीयैकादशशतकस्योत्तरार्द्धभागे काश्मीरभुवमलञ्चकार इति विद्वद्भिर्निश्चितम् । यतो ह्ययं मालवाधीशात्, सिन्धुराजसूनोः सरस्वतीकण्ठाभरणाद्यनेकग्रन्थकर्त्तुः श्रीभोजराजादर्वाक्तन इति तद्रचिते काव्यप्रकाशे दशमोल्लासे उदात्तालङ्कारोदाहरणतयोपन्यस्तः—

**मुक्ताः केलिविसूत्रहार गलिताः सम्मार्जनीभिर्हृताः,**
**प्रातः प्राङ्गणसीम्निमन्थरचलद् बालाङ्घ्रिलाक्षारुणाः ।**
**दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलिं शुकाः,**
**यद्विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायतम् ॥**
(काव्य० उ० १० श्लो० ५०५)

इतिश्लोक एव प्रमाणयति । भोजराजस्य स्थितिकालस्तु ९९६ खीष्ट्रवत्सरादारभ्य १०५१ वत्सरपर्यन्तः इति प्रसिद्धम् । कल्हणकृत राजतरङ्गिण्याः सप्तमे तरङ्गेस्थितः—

**स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ ।**
**सूरीतस्मिन् क्षणे तुल्यं द्वावास्तां कविबान्धवौ ॥** (रा०त० ७।२५९)

इत्थयंलोकोऽपि १०२८ खीष्ट्राब्दे काश्मीर देशं शासतः 'अनन्तराजस्य' भोजराजस्य च समानकालिकत्वम्, दानवीरत्वम्, सूरित्वं च प्रतिपादयन् भोजस्य स्थितिकालं पूर्वोक्तमेव द्रढयति । अतोऽवश्यमेवायं मम्मटः मालवाधीशात् सिन्धुराजपुत्रात् सरस्वतीकण्ठाभरणाद्यनेक ग्रन्थकर्त्तुः भोजराजादर्वाक्तनः । अपि चास्य मम्मटस्य माणिक्यचन्द्रात् प्राक्तनत्वं तु स्फुटमेव । यतो हि माणिक्यचन्द्रेण खीष्ट्र ११६० वर्षे सङ्केताख्या काव्यप्रकाशस्य टीकाऽकारि । अपि चापरा सङ्केताख्या काव्यप्रकाशस्य टीका ११४० खीष्ट्राब्दे वर्त्तमानेन राजानक रुय्यकवर्येण विरचिता । साप्यधुना पुण्यपत्तने भाण्डारकरसंशोधनमहालये उपलभ्यते इति द्वादशशतकस्याऽऽरम्भादेव काव्यप्रकाशस्य पठनपाठनप्रणाली भारते प्रचलिताऽऽसीदित्यगन्तव्यम् ।

किञ्च ग्रन्थकारोक्तयोऽपि मम्मटस्य भोजराजादर्वाक्तनत्वं स्पष्टं द्योतयन्ति । पञ्चमोल्लासे उदाहृतस्य—

**अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-**
**स्तानेतानपि विभ्रति किमपि न क्लान्ताऽसि तुभ्यं नमः ।**
**आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-**
**स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥**
(का०प्र० उ० ५, श्लो० ११९)

अस्य पद्यस्य व्याख्यानावसरे 'पञ्चाक्षरीनामा कविरनेन श्लोकेन भोजराजं स्तुतवान्' इति दीपिकाख्य काव्यप्रकाशस्य टीकायां जयन्तभट्टोक्तिः । प्रथमोल्लासे— 'श्रीहर्षदेर्धावकादीनामिवधनम्' इति प्रतीके 'आदिपदात् भोजप्रबन्ध-कारिभिः भोजराजाद्

बहुतरधनं प्राप्तमित्यूह्यम्' इति सुधासागरे भीमसेनोक्तिश्चेति ।

१०२९ खीष्टाब्दे काश्मीरदेशे राज्यपदाधिष्ठितस्य अनन्तराजस्य मालवाधीशस्य भोजराजस्य च स्थितिकालं प्रत्याययति । एवं भोजराजीय हस्ताक्षरसहितं खीष्ट्र १०२२ मिते वत्सरे भट्टगोविन्दसुतया धनपतिभट्टाय ब्राह्मणाय दत्तं दानपत्रमपि भोजराजस्य पूर्वोक्तमेव स्थितिकालं स्पष्टं कथयति । एवं मम्मटभट्टेनायं काव्यप्रकाशग्रन्थः खीष्टाब्दीयैकादशशतकस्योत्तरार्द्धभागे (ई० १०५०-११००) कदाचिद्विनिर्मित इत्यवगन्तव्यम् । एतेनावमर्शः सिद्ध्यति यत् मम्मटो भोजराजस्यानन्तरं बभूव । काव्यप्रकाशस्य मणिक्यचन्द्रसूरिकृतायाः सङ्केत नाम्न्याः टीकायाः रचनाकालः ११६० ईसवीयो वर्त्तते । रुय्यकः अलङ्कारसर्वस्वे काव्यप्रकाशस्य मतस्य खण्डनमकार्षीत् । अतएव काव्यप्रकाशकारस्य कालो भोजराजरुय्यकयोर्मध्ये एकादश शताब्दस्योत्तरार्धे स्वीक्रियते ।



## रुय्यकः तदीयमलङ्कारसर्वस्वम्

मम्मटस्य पश्चाद्वर्त्ती मान्य आलोचकः अयं खलु रुय्यकः खीष्टाब्दीय द्वादश शतकपूर्वार्द्ध ११५० खीष्टाब्दे काश्मीरदेशेऽविधत । 'राजानकरुचकः' इत्यपि तस्यापर नामासीत् । तस्य पितुर्नाम 'राजनकतिलकः' इत्यासीत्, येनोद्भट विवेकः इति ग्रन्थः प्राणायि । मङ्खको नाम सुप्रसिद्धः कविः स्वकीयस्य श्रीकण्ठचरित काव्यस्यान्तिमे सर्गे रुय्यकमेतं स्वगुरुत्वेन वर्णयति । श्रीकण्ठचरितस्य प्रणेता राजानको मङ्खकः काश्मीरनिवासी रुय्यकस्य शिष्य आसीदिति बहुप्रमाणैः निश्चप्रचम् । रुय्यकेन प्रणीता निम्नस्याग्रन्था अद्यावधिपर्यज्ञायन्त ।

१. श्रीजल्हण कविना प्रणीतस्य 'सोमपालविलासनाम्नः काव्यस्य' अलंङ्कारानुसारिणी नाम्नी टीका, २. श्रीकण्ठस्तवः, ३. 'सहृदयलीला', ४. साहित्यमीमांसा, ५. नाटकमीमांसा, ६. व्यक्तिविवेकव्याख्यानम्, ७. हर्षचरित व्याख्यानम्, ८. अलङ्कारसर्वस्वमित्यादि । एतत् सर्वं काव्यमालापुस्तके विवृतमस्ति । रुय्यकरचितस्य 'अलङ्कारसर्वस्व' ग्रन्थस्य जयरथनाम्ना काश्मीरिकेण विदुषा 'विमर्शिनी' टीका कृतेति ।

एतेषु ग्रन्थेष्वलङ्कारशास्त्रोपरि लिखितः अलङ्कारसर्वस्वमेकः प्रामाणिकः ग्रन्थोऽस्ति। रुय्यककीर्त्तेराधारस्तम्भस्वरूपोऽयं ग्रन्थः अलङ्कारनिरूपणाय अति प्रौढो ग्रन्थो वर्त्तते । अनेन ग्रन्थेनायमर्थो निश्चितो भवति यत् ग्रन्थकारो ध्वनिमतानुयायी वर्त्तते । अयमाचार्यः स्वपूर्वेषामाचार्याणामति समीचीनां समीक्षां प्रस्तुतां चकार । ग्रन्थकारोऽयं द्वयोर्नवीनयोः विकल्पविचित्राभिधानयोरलङ्कारयोः कल्पनामकार्षीत् । (पृ० १९८.२००) यथा तेनैवमुक्तम्—'पूर्वैरकृतविवेकोऽत्र दर्शित इत्यवगन्तव्यम्', विचित्रस्य सन्दर्भे जयरथेनोक्तम्—एतद्धि ग्रन्थकृतैकामिनवत्वेनोक्तम्—(पृ० १६८-९)। अलङ्कारसर्वस्वे १५१ पृष्ठे ध्वन्यालोकस्य निम्नलिखितश्लोकात्मतभिन्नता प्रकटिताऽनेन ।

तद्यथा—

**स वक्तुमखिलाञ् शक्तो हयग्रीवाश्रितान् गुणान् ।**
**योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥**

(ध्व०लो० द्वि० उ० पृ० २८७)

ध्वन्यालोके आक्षेपध्वनिरुदाहरणमिदमस्ति । तथातेन लोचनोपरि प्रदत्तमुदाहरणं (अ०स० पृ० ५२)—

तत्र व्याजस्तुतिर्यथा—

**किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-**
**स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।**
**गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-**
**मुन्मत्तेव भ्रमति भवतो बल्लभा हन्त कीर्त्तिः ॥**

(ध्व०लो० १ उ० पृ० १३३)

अलङ्कारसर्वस्वे १४४ पृष्ठे इदमुदाहरणं सदोषं प्रदर्शितम् । अलङ्कारसर्वस्वे - काव्यप्रकाशस्यानेकेषु स्थलेषु सुष्ठु समीक्षा कृतास्ति । उदाहरणार्थमलङ्कारसर्वस्वे १३६ पृष्ठे पर्यायोक्तस्येदमुदाहरणमस्ति—

**राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः**
**कुब्जे भोजयति मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।**
**इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा**
**च्चित्रस्थानवलोक्य शून्यवलभावकैकमाभाषते ॥**

(का०द० उ० श्लो० ४४०)

अत्र व्यङ्गयाद्वाच्यस्याधिकचमत्कारकारित्वेन न ध्वनित्वव्यपदेशः । किन्त्वलङ्कार-व्यवहार एवेति किञ्चालङ्कारसर्वस्वेऽस्मिन् विषये कथितमस्ति । **अन्ये तु दण्डयात्रौद्यतं त्वां बुध्वा त्वदरथः पलाय्य गता इति कारणरूपस्यैवार्थस्य प्रस्तुतत्वात्कार्य-रूपोऽर्थोऽप्रस्तुत एव राजशुकवृत्तान्तस्याप्रस्तुतत्वात् प्रस्तुतार्थम्प्रति स्वात्मानं समर्पयतीति अप्रस्तुत प्रशंसैवात्र नाय्येति वर्णयन्ति ।'** काव्यप्रकाशकारेणनंश्लोकं अप्रस्तुत् प्रशंसायाः उदाहरणस्वरूपेणोपस्थापितः । अलङ्कारसर्वस्वस्य १३० पृष्ठे—

**अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।**
**प्रधानत्वेन संज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥**

(का०प्र० उ० ४, श्लो० ३८, पृ० १३४)

श्लोकोऽयं न्याय्यस्योदाहरणस्वरूपेण स्वीकृतोऽस्ति । काव्यप्रकाशे भाविकस्य परिभाष्य 'प्रत्यक्षा इव यद्भवाः क्रियन्ते भूतभाविनः । तद्भाविकम् ।' (का०प्र० १० उ० पृ० ५२६) 'भूतभाविन इति द्वन्द्वः, न कर्मधारय इत्यविरोधः । भूता भाविनो भावा यत्प्रक्षा इव क्रियन्ते तद्भाविकम् । भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयको-ऽत्रास्तीति व्युत्पत्तेरित्यर्थः । किञ्चालङ्कारसर्वस्वे (२३० पृष्ठे) 'अतएव प्रत्यक्षा एव

(इव समुद्रबन्धे) यत्रार्थाः क्रियन्ते इतभाविनः । तद्भाविकम्' इत्येवमन्यैर्भाविक लक्षणमकारि । अस्मिन् स्वरूपे एव तत्रोल्लिखितमस्ति ।

काव्यप्रकाशे—'राजतितटीयमभिहत' (५८१ पृष्ठे) शब्दालङ्कारस्येदमुदाहरणं मत्वा लिलेख । अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे तत्रैव ५८१ पृष्ठे । अस्मिन् विषयेऽलङ्कारसर्वस्वकारो लिखति—'शब्दालङ्कारसङ्करस्तु कैश्चिदुदाहृतो यथा—'राजति तदीयमभिहित... अतिपातिसारावनदा' (श्लो० ५७३) अत्र यमकानुलोमप्रतिलोमयोः शब्दालङ्कारयोः 'परस्परापेक्षत्वेनाङ्गाङ्गिसङ्कर इति । एतत्तु न सम्यगावर्जकम् । शब्दालङ्कारयोः शब्दवदुपकार्योपकारकत्वाभावेनाङ्गाङ्गिभावाभावात् । शब्दालङ्कारसंसृष्टिस्त्वत्रश्रेयसी' (२५० पृ०) । स्फुटमेकत्रविषये शब्दार्थालङ्कृतिद्वयम् । व्यवस्थितं च (का० प्र० १०३०, पृ० ५८६) काव्यप्रकाशस्य कारिकामिमां स्मृत्वा सर्वस्वकारेण समीक्षा कृताऽस्ति—अतएव व्यवस्थितत्त्वमन्यानुभाषितमप्रयोजनकं (२५५ पृष्ठे) कोऽप्यलङ्कारः शब्दालङ्कारोऽस्ति वाऽर्थलङ्कारः अस्य निर्धारणमाश्रयाश्रयिभावस्याधारोपरिभवितु शक्यते, न तु अन्वयव्यतिरेकोपरि ।

**लोकवदाश्रयाश्रयिभावश्च तत्तदलङ्कारनिबन्धनम् ।**
**अन्वयव्यतिरेकौ तु तत्कार्यत्वे प्रयोजकौ ॥**

(अ० स० २५६ पृष्ठे)

सर्वस्वकारस्यास्य मतस्य विपरीतो मम्मटस्य प्रतिपादनं मिलति । काव्यप्रकाशस्य—

**स्वसिद्धये पराक्षेपः परार्थं स्व समर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥**

(का०प्र० २, उ०, का० १०, पृ० ४०)

अस्याः कारिकायारुल्लेखः अलङ्कारसर्वस्वस्य चतुर्थपृष्ठे मिलति । एतदतिरिक्तः काव्यप्रकाशस्यानेकाः कारिकाः सर्वस्वे मिलन्ति । केवलमेतावदेवाधारोपरि रुय्यकात्पूर्ववर्त्ती मम्मटं कथितुं न शक्यते । उभयोर्लेखकयोरुपरि अन्यग्रन्थकर्त्तृणामुपरि पर्युदनश्च नञ्चास्ति । एतदतिरिक्तः चित्र-काव्यलिङ्ग-व्याजोक्ति-उत्तर-मीलित-समाधि-प्रभृत्यलङ्काराणां परिभाषा काव्यप्रकाशेऽलङ्कारसर्वस्वे च समानरूपेण मिलति । प्रायःद ७६ उदाहरणानि काव्यप्रकाशस्य दशमे उल्लासे तथा अलङ्कारसर्वस्वे समानरूपेण मिलन्ति ।

जयरथकृतया विमर्शिन्यख्याया व्याख्यया समेतरलङ्कारसर्वस्वाख्यनिबन्धोऽद्यापि स्वकीयमूलस्वरूपेण पुण्यपत्तनस्थ दक्षिणकालेजाख्य विद्यामन्दिरमलङ्करोति । ग्रन्थेऽस्मिन् पञ्चसप्तत्यर्थालङ्काराणां षट्शब्दालङ्काराणाञ्च पाण्डित्यपूर्णवर्णनमस्ति । मम्मटकृत समीक्षातोऽत्यधिकव्यापकरूपेण विस्तृतरूपेण चात्र समीक्षाकृताऽस्ति रुय्यकस्यालङ्कारसर्वस्वाख्यनिबन्धकृर्तृत्वादेव रसगङ्गाधरे विषमालङ्कारे जगन्नाथेन—

**अरण्यानी क्वेयं धृतकनकसूत्रः क्व स मृगः,**
**क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला ।**

**क्व तत्कन्यारत्नं ललितमहिभर्त्तुः क्व च वयं,**
**स्वमाकूतं धाता कमपि निभृतं पल्लवयति ॥**

इत्यलङ्कारसर्वस्वोदाहृतं पद्यमुपक्रम्य' इत्यलङ्कारसर्वस्वकृतोदाहृतमपि प्रत्युक्तं इति ग्रन्थेन रुय्यकोदाहरणं खण्डितम् । एवमुद्योतकारनागेशभट्टेनापि, 'एतेन व्यङ्गयस्य प्रकारान्तरेणाभिधानासंभवात् कार्यमुखेन कारणाभिधानं पर्यायोक्तम्, उदाहरणे राहुवधूकुच नैष्फल्यरूपेण कार्येण राहुशिरश्छेदकारणरूपो गम्यते । इत्यलङ्कारसर्वस्वोक्तम्— काव्यप्रकाशीय पर्यायोक्तालङ्कारप्रकरणे—**'नमस्तस्यै कृतो येन मुधा राहुवधूकुचौ ।'** इति श्लोकस्य विषये 'इत्यलङ्कारसर्वस्वोक्तं (अलङ्कारसर्वस्वेऽप्रस्तुतप्रशंसाऽलङ्कारप्रकरणे रुय्येकेणोक्तम्) अपास्तम् ।' इत्युक्तम् । यत्तु केचिदन्तर्भवन्त्येषु' इति शक्तिर्निपुणता इति चोपलभ्यमानां काव्यप्रकाशकारिकाद्वयीं हेतूकृत्य काव्यप्रकाशकर्त्तु मम्मटात्पर-भाविनमेनं मन्यन्ते तत्र मूलपाठं प्रक्षेपविपर्यस्तं मत्वा समाधानं करणीयम् ।

रुय्यकप्रणीतो ग्रन्थः अलङ्कारसर्वस्वो भागद्वये विभक्तो वर्त्तते । तस्य भागो स्वः—सूत्रवृत्यात्मकौ । अलङ्कारसर्वस्वस्य प्रणेता जयरथः अलङ्कार सर्वस्वस्योभयारेपि भागयोः रुय्यकमेव प्रणेतारं मनुते । ग्रन्थस्य मङ्गलश्लोकस्योत्तरार्द्धेनाप्यस्यैवार्थस्य पुष्टिर्भवति । तथा च श्लोकस्योन्तरार्द्धस्य स्वरूपम्—**'निजालङ्कारसूत्राणां वृत्या तात्पर्यमुच्यते ।'** इति वर्त्तते । किन्तु, दाक्षिणात्यप्रेतौ श्लोकस्योत्तरार्द्धस्य रूपं **गुर्वलङ्कारसूत्राणां वृत्या तात्पर्यमुच्यते ।'** इति वर्त्तते । तस्याः प्रतेः पुष्पिकाया काश्मीराधिपतेः सान्धिविग्रहिको मङ्खको वृत्तेः कर्त्तृरूपेण निरूपितो वर्त्तते ।

यद्यपि दाक्षिणात्याः विद्वान्सः अलङ्कारसर्वस्वस्य सूत्रवृत्योः कर्त्तारौ भिन्नौ इति स्वीकुर्वन्ति, किन्तु, आचार्य अप्पयदीक्षितः उभयोः भागयोः कर्त्तारं रुय्यकमेव स्वीकरोति । अलङ्कारग्रन्थेऽष्वपि रुय्यकस्यैवाथवा रुचकस्यैव नामसमुपलभ्यते, किन्त्व-लङ्कारिकरूपेण मङ्खकस्य नाम क्वाऽपि नहि समुपलभ्यते । अलङ्काररत्नाकरकारः शोभाकरोऽपि उभयोः कर्त्तारं रुय्यकमेवाह । भट्टगोपालः, विद्याधरः, विश्वनाथश्चापि उभयोः कर्त्तारं रुय्यकमेवाहुः ।

अस्य वृत्तेः रचयितुः प्रश्नः अद्यापि विवादास्पद एवास्ति । काव्यमालासंस्करणस्य वृत्तेः प्रथमश्लोके लिखितमस्ति—**'निजालङ्कारसूत्राणां वृत्या तात्पर्यमुच्यते ।'** रुय्यकात् प्रायः पञ्चसप्ततिः वर्षानन्तरं विमर्शिनीकारः जयरथो-ऽभवत् । अयं हि स्वकीय पाठे 'निजालङ्कार' पदस्यैव प्रयोगः कृतवानस्ति । अनेन प्रमाणितो भवति यत् वृत्तिकारः सूत्रकारश्चैकैव रुय्यकः आसीत् । परवर्त्तिनः ग्रन्थ-कर्त्तारः रुचकमथवारुय्यकमेव वृत्तिकर्त्ता मन्यन्ते । प्रतापरुद्रयशोभूषणस्य टीकायाम्— 'तदुक्तं रूचकेन एकार्थाश्रयाऽपि धर्मविषये श्लिष्टशब्दहेतुकाक्वचिद् दृश्यते (रत्नपणे पृ० ३९३) इदमेवकथनं सर्वस्वे ७२ पृष्ठोपरि । 'नचेदं विषमाद्यभेदेऽन्तर्भवति । इहहि स्वनिषेधोवैपरीत्यं गमयति विषमेतुव्यत्यय इतिभेदस्य रूचकेनोक्तत्वात्' (४२५ पृष्ठे, सर्वस्वस्य १६८ पृष्ठे) काव्यग्रहणं तर्कवैलक्षण्यार्थम् । तेन व्याप्तिपक्षधर्मतादयो न क्रियन्ते इति रूचकः (४४८ पृष्ठे, इदं सर्वस्वस्य १८१ पृष्ठोपरि) अनेनैवप्रकारेण चित्रमीमांसायां (७२ पृष्ठे) येतु उद्भिन्नवस्तु निगूहनं व्याजोक्तिः... तेषामिहापि-

व्यञ्जोक्तिरेवनापह्नुतिरिति रूचकादयः' इति लिखितमस्ति । 'अलङ्कार सर्वस्वस्य २१९ पृष्ठे द्रष्टव्यम् । एतदप्यनुसारेण वृत्तिस्तु रूचकस्येव कृतिरस्ति । किञ्च बर्नेल महोदयानुसारेण तञ्जौर नगरस्थैकस्यां हस्तलिखित प्रत्यां निम्नलिखित प्रकारेण पंक्तिरस्ति—गुर्वलङ्कार सूत्राणां वृत्याः । त्रिवेन्द्रं प्रत्यामप्यने- नैवप्रकारेणपाठोऽस्ति । किन्तु, त्रिवेन्द्रं प्रतेश्चान्ते—

**इति मङ्खुको वितेने काश्मीरक्षितिप सन्धिविग्रहिकः ।**
**सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम् ॥**

एवंविधः श्लोको मिलति । समुद्रबन्धोऽपि स्वकीय टीकायाश्चान्ते लिखन्—

**मङ्खुक निबन्धविवृत्तो विहितायामिहसमुद्रबन्धेन ।**

एतदतिरिक्तः कतिपयेष्वन्यस्थलेष्वपि (पृ० २) कदाचिन्मङ्खुकोपज्ञं' तथा चतुर्थपृष्ठे तत्रैव—'व्यक्तिविवेककाराभिमतस्त्वनुमानौपक्षः ...मङ्खुकस्य पूर्वपक्षत्वेनाप्यनभिमत इत्याहुः । अस्य ग्रन्थस्य वृत्याः रचयिता मङ्खकमेव प्रदर्शितोऽस्ति। मङ्खुक 'शब्दः' मङ्खक शब्दस्यैवाशुद्ध स्वरूपोऽस्ति । मङ्खककृत श्रीकण्ठचरितानुसारेण रुय्यकः मङ्खकस्य गुरुरासीत् । राजतरंगिणीकारस्य कथनानुसारेण काश्मीराधिपतेः जयसिंहस्य सन्धिविग्रहिकः मङ्खकः आसीत् । अस्मिन् प्रसङ्गे द्रष्टव्यः—

**'सन्धिविग्रहिको मङ्खकाख्योऽलङ्कारसोदरः ।**
**समठस्याभवत्प्रष्ठः श्रीकण्ठस्य प्रतिष्ठया ॥**

(८.३५.४ तथा श्रीकण्ठचरितः पृ० ३६६ इत्यपि)

समुद्रबन्धं विहाय कदाचिदेव कोऽपि लेखकः मङ्खकं वृत्तेः रचयितारूपेण स्वीकरोति प्रसङ्गेऽस्मिन् चित्रमीमांसायाः दशमपृष्ठस्य निम्नलिखितावतरणमपि दर्शनीयमस्ति—'किन्तु, श्लेषस्यालङ्कारान्तरविविक्तविषयाभावेन निरवकाशतया वलवत्त्वेन... श्लेष एव नोपमेति मङ्खकादिभिरभ्युपेयते ।' (अलङ्कारसर्वस्वस्य १२६ पृष्ठे द्रष्टव्यम्)

सहृदयलीलायाः उपसंहारात्मकपद्यात् प्रतीतोभवति यत् राजानकतिलकस्य पुत्रस्यापरनाम रुय्यकः आसीत्—'कृतिः श्रीविपश्चिद्वरराजानकतिलकात्मज श्रीमदालङ्कारिकसमाजाग्रगण्य श्रीराजानक रुय्यकस्य राजानक रुचकापरनाम्नोऽलङ्कारसर्वस्वकृतः ।' इति (द्र० पिशेलमहोदयस्य शृङ्गारतिलकस्य भूमिकायाः २८-२९ पृष्ठे) । जयरथो निश्चयपूर्वकेणाब्रवीत् यत्काव्यप्रकाशसङ्केतः अलङ्कारसर्वस्वस्य लेखकस्यैव रचनाऽस्तीति । काश्मीरीय लेखकस्य मतमिदमस्ति अतः मतमिदमतीवमहत्त्वपूर्णं तथा स्वीकरणीयमस्ति । अलङ्कारग्रन्थेष्वपि रुय्यपकस्यैवाथवारुचकस्यैवनाम समुपलभ्यते। किन्त्वलङ्कारिकरूपेण मङ्खकस्य नाम क्वाऽपि नहि समुपलभ्यते । अतः सूत्रवृत्योरुभयोः कर्त्तारं रुय्यकमेवासीत् । साहित्यमीमांसा एवं हर्षचरितवार्त्तिकस्य च चर्चाऽलङ्कारसर्वस्वेऽपि मिलति । तद्यथा—**'एषा उत्प्रेक्षा च समस्तोपमाप्रतिपादकविषयेऽपि हर्षचरितवार्त्तिके साहित्यमीमांसायाञ्च तेषु तेषु प्रदेशेषूदाहृता । इह तु ग्रन्थविस्तारभयान्न प्रपञ्चितम् ।'** (पृ० ७७) जयरथस्य मते व्यक्तिविवेकस्य टीकाऽपि रुय्यकेणैव लिखिता—**वाच्यस्य प्रतीयमानेन तादात्म्या तदुत्पत्यभावादिनेहप्रतन्यत इति**

**व्यक्तिविवेकविचारे हि मयैवैतद्वितत्य निर्णीतमितिभावाः ।'** व्यक्तिविवेकस्य टीकायां लिलेख । (त्रिवेन्द्रम संस्करणस्य पृ० ४४) । हर्षचरित वार्त्तिकोऽपि विस्तृत्य प्रतिपादितम् । मतमिदं ५० पृष्ठेऽपि द्रष्टव्यम् ।

## सहृदयलीला

१८८६ खीष्ट्राब्दे पिशेल महोदयेन के.एम. सीरीज संस्थातः प्रकाशितोऽयं लघुकायग्रन्थोऽस्ति । चतुर्षूल्लेखेषु विभक्तोऽस्ति । तेषां चतुर्णामुल्लेखानां नाम क्रमशः गुणालङ्कारजीवितपरिकराः सन्ति । अत्र स्त्रीणां सौन्दर्यगुणानामाभूषणानाञ्च वर्णनमास्ते । प्रथमे उल्लेखे रमणीयानां नारीणां रूप-वर्ण-प्रभाप्रभृतीनां दशगुणानां विशिष्टवर्णन-मस्ति। द्वितीये उल्लेखे स्त्रीभ्यः उपयोगीनामाभूषणोद्वर्त्तनपुष्पादीना वर्णनमस्ति । तृतीयोल्लासे नारीणां सौन्दर्यस्य प्राणभूततारुण्यस्य वर्णनमस्ति । चतुर्थे उल्लासे नारीणां सौन्दर्यवर्द्धकाना साधनानां वर्णनं कृतमस्ति ।

## साहित्यमीमांसा

खीष्ट्रस्य १९३६ ईसवीये अनन्तशयनग्रन्थमालायां प्रकाशिते साहित्यमीमांसा नामके ग्रन्थेऽस्मिन् अष्टौ प्रकरणानि सन्ति । बृहत्कायग्रन्थोऽयमस्ति । ग्रन्थेऽस्मिन् त्रयोभागाः सन्ति । ग्रन्थेऽस्मिन् कारिकाः सन्ति । गद्ये वृत्तयोऽपि सन्ति, उदाहरणान्यपि प्रदत्तानि सन्ति । दुर्भाग्यात् ग्रन्थलेखकस्य नाम नत्वाद्ये न चान्ते मिलति । अस्य ग्रन्थस्य द्वे वैशिष्ट्ये वर्त्तेते । ग्रन्थेऽस्मिन् व्यञ्जना शक्तेः क्वाऽप्युल्लेखोनास्ति । कतिपयेष्वेवार्थालङ्कारेष्वत्र विचारः कृतो वर्त्तते । अस्य ग्रन्थस्य प्रकरणानुसारेण, निम्नाङ्किताः विषयाः विवेचिताः सन्ति । १. प्रथमे प्रकरणे परापराब्रह्मणः प्रतीकयोः वाच्यवाचकयोर्वन्दना, वृत्ति-विवक्षा-तात्पर्य-प्रतिभाग-व्यपेक्षण-सामर्थ्य-अन्वय-एकार्थाद्यष्टवर्ण्य विषयाणां गणना कृतास्ति, इमानष्टविषयान् साहित्य-मभिधीयन्ते । दोषत्यागः, गुणाधानम्, अलङ्कारयोगः, रसान्वयश्च, एते चत्वारः साहित्यस्य परिष्कारा: सन्ति, यैः साहित्यस्य निर्माणं भवति । सत्कविः, विदग्धकविः, आरोचकि कविः, सतृणाभ्यवहारकः कविः, एवं विधाश्चतुः प्रकारकाः कवयो भवन्ति । उत्तम-मध्यमाधमाः (सात्विकराजसतामसाश्चः) त्रिप्रकारकाः रसिका भवन्ति । अनेन प्रकारेण कविरसिकयोः प्रभेदो वर्णितोऽत्र ।

द्वितीये प्रकरणे वृत्यादेर्लक्षणस्य वर्णनमस्ति । तद्यथा—वृत्याः परिभाषा (यथा पदानां व्यापारः) तेषां मुख्या, लक्षणा, गौणीति प्रकारत्रयम्, पुनश्चैतत्त्रयाणां परिभाषा, विवक्षा, प्रविभागः (प्रकृति-प्रत्यय-वाक्यं महावाक्यञ्चेति) व्यपेक्षणं (आकांक्षा) सामर्थ्यं (भेद संसर्गस्ताथोभयमिति) अन्वयः (परस्परग्रन्थनम्), एकार्थ्यं (एकवाक्यता) एतेषां विभिन्ना परिभाषास्तथोदाहरणानि प्रदत्तानि सन्ति । एतदेवाष्ट तत्त्वानि साहित्यस्य निर्माणं कुर्वन्ति । (साहित्यन्तु भाषाव्याकरणयोर्नामास्ति ननु काव्यशास्त्रस्येति), साहित्य—काव्ययोर्भेदस्तु दोषत्यागादिपूर्वमेवोक्तम् ।

तृतीये प्रकरणे दोषाणां विवेचनमस्ति । दोषस्तु पदानामप्रयुक्तत्वम्, ग्राम्यत्वम्, असमर्थत्वम्, अनर्थकत्वम्, साधारणत्वम्, प्रसिद्धार्थत्वञ्चेति षड्दोषाः सन्ति ।

विभिन्नप्रकाराणां विरोधानां परिभाषास्तथा तेषामुदाहरणानि च सन्ति । चतुर्थे प्रकरणे काव्यगुणानां मीमांसा, तद्यथा काव्यस्य गुणः बाह्याभ्यन्तरञ्च । शब्दगुणस्तु बाह्योऽस्ति तथार्थगुणस्त्वाभ्यन्तरश्चेति । काव्यस्य दशगुणास्तु—

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।**
**अर्थव्यक्तिरुदारत्वमोजः कान्ति समाधयः ॥** (काव्यादर्शः १.४१)

एतेषां दशगुणानां लक्षणोदाहरणानि च सन्ति ।

पञ्चमे प्रकरणे अलङ्कारविवेचनमस्ति । अलङ्कारस्य परिभाषा—'काव्ये शोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।' (काव्यादर्शे २.१) । गुणालङ्कारयोर्भेदः, अनुप्रास-क्रम-श्लेष-मुद्रा-दीपक-युक्ति-पठिति-गुम्फना-चित्र-यमकादीनां शब्दालङ्काराणां परिभाषास्तथा-तेषां उदाहरणानि च दत्तानि सन्ति । लाटानुप्रासस्तथा परुषा-उपनागरिका-कोमलाख्या तिसृणां वृत्तीनां, उपमा-रूपक-उत्प्रेक्षा-व्यतिरेक-विभावन-अपह्नुति-भ्रम-साम्य-संशय-सङ्करादीनामर्थालङ्काराणां परिभाषास्तथा तेषामुदाहरणानि च दत्तानि सन्ति । अन्यालङ्काराणामन्तर्भावः एतेष्वेनाऽभवत् । अथवा वक्रोक्तेरन्तर्गते एवैतेषां विवेचनं बभूव ।

षष्ठे प्रकरणें रसभावयोर्विवेचनमस्ति । षष्ठ-सप्तमप्रकरणे त्वतिविस्तृते स्तः । अनयोः पृष्ठसंख्या क्रमशः ५४-११८ तथा ११९-१५९ वर्त्तते । रसः, रसस्य कारणम्, (बीजम्), प्रकृतेः, सहकारी तत्त्वेषु तथा रसनिष्पत्तौ सहायकान्यतत्त्वानां विवेचनं बभूव । भावः, भावस्य प्रधानाप्रधानभेदौ, प्रधानभावस्याष्टौ भेदाः भवन्ति । स्थायीभावोप्यं कथ्यते । अप्रधानभावस्तु वाह्यत्वेनाष्टप्रकारकाः भवन्ति, एते सात्विक-भावाः प्रचक्षते । त्रयस्त्रिंशत् आभ्यन्तरभावाः भवन्ति । एते व्यभिचारीभावाः कथ्यते । एतेषु एतेषां गणना, परिभाषा, उदाहरणानि च समायान्ति । रसानां व्याख्या, प्राचीनालङ्कारिकैः निरूपिताष्ट रसाः, कतिपयैः शान्तरसस्याऽप्युल्लेखः, अस्य शान्त-रसस्य स्थायीभावो धृतिः मन्यते । कतिपयास्तु रसत्रयाणामपि वृद्धिः कृतवन्तः । शृङ्गारस्य संभोग विप्रलम्भौ द्वौ भेदौ कृतौ स्तः । विप्रलम्भ-करुणयोर्भेदः । वैदर्भी, आवन्ती पाञ्चालीगौडीत्यादीनां चतसृणां रीतीनाञ्च विवेचनम्, आसां विभिन्न रसैः सहोपयुक्तता, लाटीमागधी तथा कीर्त्तीनामुपर्युक्तैश्चतसृभिः रीतिभिः सह साम्यम्, कैशिकी, भारती, सात्वती तथा आरभटीवृत्तयः, एतासां वृत्तीनां विभिन्न रसेषु प्रयोगः, संस्कृत-प्राकृत-अपभ्रंशादिभाषाणां प्रयोगस्य विशेषता वर्णनम्, वक्रोक्ति-समासोक्ति, अप्रस्तुतप्रशंसा, तथा कतिपयानामन्यवक्रोक्तिप्रकाराणां वर्णनम् । ध्वनि-वर्ण-पद-वाक्य-प्रकरण-प्रबन्धेषु वक्रत्वस्य स्थितेर्वर्णनं षट्त्रिंशल्लक्षणानां गणना तथा प्रथमत्रयाणामुदाहरणानि च प्रदत्तानि सन्ति ।

सप्तमे प्रकरणे—कवीनां वैशिष्ट्य चतुष्टयंस्य विवेचनम् । कवीनां चतस्रः साधना—

**श्रमः सर्वकलावीक्षा नियोगस्तस्य शीलनम् ।**
**सक्लेशः कर्णोद्योगः प्रतिभाभास्वतीमतिः ॥**

**(प्रज्ञा नवनवोन्मेषशालिनी प्रतिभेति वा)**

चतुर्धा कवयो भवन्ति । सत्कवयः ये वैदर्भीशैल्यां लिखन्ति, (यथा वाल्मीकि कालिदासादयः) । विदग्धकवयः, ये वक्रोक्तेः आश्रयं स्वीकुर्वन्ति (यथा व्यास-बाणादयः), अरोचकि कवयः, ये अलङ्काराणां प्रयोगे कुशलाः भवन्ति (यथा—भारविमाघादयः), सतृणाभ्यवहारकवयः, ये गौड़ीशैल्यां लिखन्ति तथा ये श्लेषचित्र-यमकाद्युपरि अधिकं बलं ददति (यथा शिवभद्रादयः) कविसमयः, कविभ्यः कतिपयाः आवश्यकाः परामर्शोप्यददात् । यथा कस्यापि पादस्य प्रारम्भे खलु, वत्, हन्तादीनां प्रयोगोवर्जनीयः स्यात् । पादस्यान्ते समागतह्रस्वस्वरोऽपि सामान्यतः (न तु सदैव) गुरुः मन्तव्यः यथा वामन इव यथा—

**न कर्मधारयः कार्यो बहुव्रीहिप्रतीतिदः ।**
**संभाव्यस्य निषेधे च दौ निषेधाबुदाहृतौ ॥**

(१२८ पृष्ठे, वामनः ५.१,७.९)

वेद-पाणिनी-वार्त्तिक-भाष्य-निरुक्त-सूत्र-स्मृतिप्रभृतिषु समागतानां शब्दानां प्रयोगः कविभिः कर्त्तव्यम् । कालिदासवाणादिभिः प्रयुक्त शिष्टप्रयोगानामनुसरणं कर्त्तव्यम् । विभिन्न प्रान्तीयनारीणां गुण-स्वभाव-वर्णाना वर्णनमप्यत्राऽस्ति । आवन्त्य-दाक्षिणात्य—पौरस्त्य-औण्ड्रमागध प्रवृत्तीनामप्युल्लेखोऽत्रास्ति ।

अष्टमे प्रकरणे आनन्दस्य स्वरूपवर्णनमस्ति । यो हि पाठकः काव्यस्य आस्वादं गृह्णाति, सः परमानन्दसुखमनुभवति—

**'ईदृशं भावयन् काव्यं रसिकः परमं सुखम् ।**
**प्राप्नोति कालवैषम्यात् गुणतस्त्रिविधोऽपि सन् ॥**

'सक्तुमिवेत्यादि' (१०-७१-२) ऋग्वेद, तथा 'आविर्भूतज्योतिषाम्' ४.१८, उत्तररामचरिते चायमुल्लेखः आयाति यत्कविशब्दानां महिमाऽतिविशिष्टा भवति । उत्तमकाव्यार्थस्य मननादनुपमानन्दस्यानुभूतिर्भवति ।

अस्य ग्रन्थस्य द्वे वैशिष्ट्ये वर्त्तते । अस्मिन् ग्रन्थे शब्दस्य व्यञ्जनाशक्तेः क्वाप्युल्लेखो न मिलति । किञ्चास्मिन् तात्पर्यवृत्तेः विवेचनमस्ति यद्रसानुभूतौ सहायको भवति (अपदार्थोऽपि वाक्यार्थो रसस्तात्पर्यवृत्तितः ८५ पृष्ठे) । ग्रन्थकारस्त्वत्र कतिपयेष्वेवार्थालङ्कारेष्वत्र विचारः कृतोवर्त्तते । वक्रताभ्यन्तर्गते समासोक्तिअप्रस्तुत-प्रशंसा, सहोत्स्यादीनामत्रोल्लेखः कृतो वर्त्तते—विशिष्टादृष्टजन्मन आत्मगुणोद्भूति हेतोरनादिवासनारूपस्याहङ्कारस्य च रसत्वमैक्यं च निषिद्धमस्माभि । ननु कूटस्थात्म स्वरूपस्यानन्दस्यैकरूपस्य भेदोवक्तुं न शक्यते इत्यादि । (पृ० १६१) अनेन कथनेन प्रमाणितोभवति यद्रुय्युकः शृङ्गारप्रकाशस्य सिद्धान्तमस्वीकृतवान् ।

साहित्यमीमांसायारुपर्युक्तवैशिष्ट्यादेवास्माकं सन्मुखे काठिन्यमेकं समायाति । साहित्यमीमांसा, अलङ्कारसर्वस्वस्य रचयितुः रुय्यकस्यैव कृतिरस्ति नवेति यथा तेनैवोक्तम्—सर्वस्वकारः ध्वनिसिद्धान्तस्य, व्यञ्जनाशक्तेश्चानुयायी आसीत् । **'अस्ति**

**तावत् व्यङ्गनिष्ठो व्यञ्जना व्यापारः ।**' अत्र अलङ्कारसर्वस्वे १५९ पृष्ठे अनुक्त निमित्ता विभावनायाः इदमुदाहरणमायाति—

**अङ्गलेखामकाशमीरसमालम्भनपिञ्जराम् ।**
**अनलक्तकताम्राभामोष्ठलेखाञ्च विभ्रतीम् ॥**

काव्यालङ्कारस्य ३८ पृष्ठे श्लोकोऽयमुद्भटः विभावनालङ्कारस्योदाहरणस्वरूप-मुपस्थापितवान् । जयरथस्य मतेऽस्मिन्स्थले सर्वस्वस्य मूलपाठ एव दूषितोऽस्ति । यतः सर्वस्वस्य लेखकः साहित्यमीमांसायामस्य श्लोकस्य टीकायां केवलं मतद्वयस्यैवोल्लेखः कृतवान् । **'ग्रन्थकृताऽपि साहित्यमीमांसायामेतच्छ्लोकविवृतौ पक्षद्वयमेवोक्तम् । लेखकैश्चास्य ग्रन्थस्य प्रतिपदमेव विपर्यासः कृतः ।'** उद्भटस्थ विभावनाया परिभाषा प्रस्तुतकरणोपरान्त साहित्यमीमांसायां ४७ पृष्ठे श्लोकोऽय-मायाति—'अङ्गलेख ... विभ्रतीमित्यादिः संपाद्येन पिञ्जरत्वाद्युपमानेन स्वाभाविकस्य पिञ्जरत्वादेरुपमेयस्याभेदाध्यवसायोऽतिशयोक्त्या द्रष्टव्यः ।' प्रतापरुद्रयशोभूषणोऽपि ११ पृष्ठे साहित्यमीमांसायाः मतस्यानेन प्रकारेणोल्लेखः कृतवान्—'प्रपंचितं साहित्य-मीमांसायाम् । नायकगुणग्रथिताः सूक्तिस्रजः सुकृतिनामा कल्पमाकल्पन्तिः इति ।'

### ३. व्यक्तिविवेकस्य टीका

महिमभट्टस्य व्यक्तिविवेकस्येयं टीका वर्त्तते । परञ्चेयमपूर्णैव लब्धेति ।

### ४. काव्यप्रकाशस्य सङ्केताख्याटीका

सर्वप्रथमं रुय्यक एव काव्यप्रकाशस्य सङ्केताभिधानां लघुटिप्पणीस्वरूपां टीकां व्यरचयत् । अस्यां लध्वां टीकायां रुय्यकः स्थाने स्थाने मम्मटस्य खण्डनमकरोत् ।

### अलङ्कारसर्वस्वस्य टीका

रुय्यककृतस्यालङ्कारसर्वस्वस्य सर्वप्रधानाटीका जयरथकृता विमर्शिनी वर्त्तते । इयं टीका अलङ्कारसर्वस्य समुचितां समीक्षां प्रस्तौति ।

संमुद्रबन्धोनाम केरलदेशनिवासी विद्वानलङ्कारसर्वस्वस्य सरलतमां टीका- मकार्षीत् मूलानुसारिणीम् ।

श्रीविद्याधरचक्रवर्त्ती अलङ्कारसर्वस्वस्यालङ्कारसञ्जीविनी नाम्नी टीकां लिखतिस्म ।

### रुय्यकस्य कालः

अयं हि रुय्यकः काश्मीरराजस्य जयसिंहस्य (११२८-४९ ई०) सान्धिविग्रहिक महाकविमङ्खकस्य गुरुरासीत् । अतश्चैतस्य समयो द्वादशशताब्द्या मध्यभागः । एवं सत्यपि मम्मटापेक्षयायं किञ्चित् प्राचीनः । अतएव 'राजति तटीयम्' इति सङ्करालङ्कारोदाहरणे पद्ये काव्यप्रकाशे मम्मटेन रुय्यकमतं खण्डितम् । अतएव च व्यतिरेकालङ्कारस्य द्वितीयं लक्षणं तदुदाहरणं च रुय्यकोपन्यस्तं तेनैव (मम्मटेन) खण्डितम् । किञ्च योऽलङ्कारो यदाश्रितः' इति सङ्करालङ्कार ग्रन्थेनापि रुय्यकस्यैव

खण्डनं कृतं वर्त्तते । अत एव च 'ननु स्वरितादिगुणभेदाद्' इत्यादिकं 'कथमयं शब्दालङ्कार' इत्यन्तं काव्यप्रकाशग्रन्थमलङ्कारसर्वस्वग्रन्थ खण्डनपरतयैव योजयन्ति शब्दालङ्कार प्रकरणे काव्यप्रदीपकारा अपि ।

अपिच रुय्यक: मङ्खककृतात् श्रीकण्ठचरितात् पञ्चपद्यान्युद्धृतानि चकार । श्रीकण्ठचरितस्य रचनाया: काल: ११४५ ईसवीयोवर्त्तते । अत एव अलङ्कारसर्वस्वस्य रचनाकाल: एतस्मात् पूर्व नहि भवितुमर्हति । फलत: रुय्यकस्य कालो द्वादशशताब्दस्य मध्यभागो वर्त्तते ।



## वाग्भटस्य वाग्भटालङ्कार:

वाग्भटो वाग्भटालङ्कारत्वेन प्रसिद्धो यो निबन्धस्तत्कर्त्ता । वाभटमेव वाग्भट इति नाम्ना केचिद् व्यवहरन्ति । वस्तुतस्तु द्वावपि भिन्नावेव । सम्भवत: अयमपि हेमचन्द्रात्प्राचीन एव ।

ग्रन्थोऽयं काव्यमाला सीरीज मुंबई नगर्यां १९३३ खीष्ट्राब्दे सिंह देवगणि महोदयस्य टीका सहित: प्रकाशितोऽभवत् । अलङ्कारशास्त्रे वाग्भटनाम्नो: द्वौ आलङ्कारिकौ स्त: । वाग्भटोऽयं प्रथमो व्यक्तिरस्ति । वाग्भटालङ्कारोऽस्य ग्रन्थ: नास्ति विस्मृतोऽस्ति । ग्रन्थोऽयं पञ्चसु परिच्छेदेषु प्रविभक्तो वर्त्तते । अत्र २६० पद्यानि सन्ति । अधिकांशा: श्लोका: अनुष्टुप् छन्दसि एव सन्ति । परिच्छेदस्यान्ते कतिपयानि पद्यानि अन्येष्वपि छन्द:सु रचितानि सन्ति । अत्र ओजोगुणस्य चित्रणकर्त्तार: एकस्यैव गद्यस्यावतरणमस्ति । गद्यमिदमनेन प्रकारेणास्ति—**'समराजिरस्फुरदरिनरेशकरिनिकरशिर: सरससिन्दूरपूरपरिचयेनेवारुणितकरतलो देव: ।'**

प्रथमेपरिच्छेदे काव्यस्वरूपस्य, काव्यहेतूनां प्रतिभाभ्यासव्युत्पत्तीनां वर्णनमस्ति । काव्यनिर्माणे का: का: परिस्थितय: अनुकूला: भवन्ति तथा कवये स्वीकरणीय परम्पराणामुल्लेखोऽस्ति । द्वितीयपरिच्छेदे ग्रन्थकार: काव्यस्यानेकेषां भेदानां वर्णनं कृत्वा पदानाम्, वाक्यानाम्, अर्थानाञ्च दोषाणां सङ्क्षिप्तं विवेचनमुपस्थापितवान् । अस्मिन् परिच्छेदे संस्कृत-प्राकृतअपभ्रंश-भूतभाषासु चतसृषु काव्यरसरचना कर्त्तव्येति । काव्यस्य भेद: छन्दोनिबद्ध: गद्यनिबद्धश्चेति तथा पुन: गद्य-पद्य-मिश्रत्वे त्रयोभेदा: भवन्ति । तत्पश्चात् पदवाक्ययो: अष्टदोषाणां लक्षणोदाहरणानाञ्च विवेचनं कृत्वाऽर्थदोषाणाञ्च निरूपणं कृतवानस्ति । तृतीये परिच्छेदे दशगुणानां सोदाहरणानां विवेचनकृतमास्ते । चतुर्थे परिच्छेदे चतुर्णां शब्दालङ्काराणां पञ्चत्रिंशदर्थालङ्काराणां द्वयो: रीत्योश्च निरूपणं कृतम् । पञ्चमे परिच्छेदे नवानां रसानां नायकनायिकयो: भेदानां अन्येषां च विषयाणां वर्णनं समुपलभ्यते ।

वाग्भटः जैनधर्मावलम्बी हेमचन्द्रस्यैव समकालिकः एकः आलङ्कारिको बभूव । अस्य ग्रन्थस्यैकस्य पद्यस्य टीकया ज्ञायते यदस्य प्राकृतं नाम आहड़ आसीत् । अयं सोमस्यात्मजः कस्यचन राज्ञश्च महामात्यपदे प्रतिष्ठित आसीत् । यथा—

**'वंशणुसुत्ति सम्पुड-मुत्तिअमणिणेपहासमूहन्व ।**
**सिरिवाहड़त्तिवणओ आसि बुद्धो तस्य सोमस्स ॥'**

(४.१४८ पृ० ७२)

अस्य पद्यस्य समीक्षां कुर्वन् टीकाकारेण लिखति—**'इदानीं ग्रन्थकार इदमलङ्कार कर्तृत्व ख्यापनाय वाग्भटाभिधस्य महाकवेर्माहामात्यस्य तन्नामगाथयैका निदर्शयति ।'** वाग्भटस्य सकलान्युदाहरणानि स्वरचितान्येव प्रतीतो भवन्ति । एतेषु कतिपयोदाहरणानि प्राकृतभाषायामेव सन्ति । तेषु यथा दर्शनीयानि सन्ति । (४, ४९,५३,५४,७४,७८,१०६,१०७,१४८) तेन निर्मितस्य 'नेनिनिर्वाण महाकाव्यस्य कतिपयाः श्लोकाः समुद्धृताः सन्ति । यथा—**ककाकु कङ्के काङ्क्ङ्केकि कोकैः ककुः ककः । सकुक्कौ काः काककाक्कत्रक्कु कुक का ककुः** (४.१२)। अस्य श्लोकोपरि टीकायाम्—

'ककाकु इत्येषश्लोक एक व्यञ्जनो नेमिनिर्वाण महाकाव्ये राजोमती परित्यागाधिकारे समुद्रवर्णनरूपा ज्ञयेः ।'

वाग्भटालङ्कारे उदाहरणस्वरूपप्रदत्तेषु श्लोकेषु अह्निलवाड़स्य चालुक्यवंशगतस्य कर्णराज्ञः पुत्रस्य जयसिंहराज्ञो बहूल्लेखः समायाति । यथा—

**इन्द्रेण किं यदि स कर्णनरेन्द्रसूनुरै-**
**शवणेम किमहो यदि तद्द्विपेन्द्रः ।**
**दंभोलिनाप्यलमलं यदि तत्प्रतापः**
**स्वर्गोऽप्ययं ननु मुधा यदि तत्पुरीसा ॥** (४.७)
**जगदात्मकीर्त्ति शुभ्रं जनयननुद्दामधामदोः परिघः ।**
**जयति प्रताप पूषा जयसिंहः क्षमामृदधिनाथः ॥** (४.५)
**अणहिल्ल पाटकं पुरमवनिपतिः कर्णदेवनृप सूनुः ।**
**श्रीकलशनामधेयः करीच रत्नानि जड़तीह ॥** (४.१३२)

एतेषु श्लोकेषु प्रथमश्लोके (आः स्यन्दनध्वजधृतोद्धुरताम्रचूड़ः श्रीकर्त्तदेवनृप-सूनुरयं रणाग्रे) अत्र लिखितमिदमस्ति यदनहिल्वाड चालुकस्य ध्वजायां ताम्रचूडस्य (कुक्कुटस्य) चिह्नमासीत् । एतेन ज्ञायते यत् वाग्भटस्य जयसिंहेन सह घनिष्ठतमः सम्बन्धः आसीत् । जयसिंहस्य राज्यः कालः १०९३ खीष्ट्राब्दतः ११४३ ईसवीयं यावत् राज्यमकरोत् । अत एव वाग्भटस्य कालो द्वादश शताब्दस्य पूर्वार्द्धः स्वीक्रियते। वाग्भटालङ्कारस्य लोकप्रियत्वात् वह्यष्टीका सञ्जाता । अस्य ग्रन्थस्याष्टौ टीकाः समुपलभ्यन्ते । तासु केवलं द्वे टीके प्रकाशिते स्तः ।



# हेमचन्द्रस्तदीयं काव्यानुशासनम्

हेमचन्द्रोनाम जैनाचार्यो १०८८-११७२ ई० कालिकोऽलङ्कारशास्त्रे काव्यानुशासनं नाम ग्रन्थं सोपज्ञवृत्तिसहितं प्रणीतवान् । जैनाचार्येषु हेमचन्द्रस्योच्चतमं स्थानमस्ति । जैनधर्मस्यायं प्रख्यात विद्वानासीत् । अस्य विदुषः जीवनस्य ज्ञानाय सोमप्रभरचितस्य कुमारपालप्रतिबोधात् (११८५ ई०) तथा प्रभाचन्द्रस्य प्रभावक-चरितात् (१२७७ ई०) बोधोभवति । अयं हि गुजरात् प्रान्तस्य अहमदावादमण्डले धुन्धक नाम्निग्रामे १०८८ खीष्टाब्दे जनिं प्रापेति । भयं हि धुन्धुकाग्रामे मोड वाणिक् परिवारे उत्पन्नोऽभवत् । अस्य पितुर्नाम चाचः अथवा चाचिङ्गः आसीत् । मातुर्नाम पाहिनी आसीच्चेति । हेमचन्द्रस्याऽपि प्रारम्भिकं मूलनाम चङ्गदेवः आसीत् । हेमचन्द्रस्य विषये चतसृणाम्, महत्वपूर्ण-तिथीनामुल्लेखो मिलति प्रभावकचरितस्य २१२ पृष्ठे । तदुल्लेखानुसारेण ११४५ संवत्सरे तदनुसारेण १०८८ खीष्टाब्दे कार्त्तिकपूर्णिमायां तिथावयं स्वकीयग्रामे जनिं लेभे । ११५० सम्बत्सरेऽर्थात् १०९३ खीष्टाब्देऽयं विद्यारम्भश्चकार । ११६६ सम्वत्सरेऽर्थात् ११०९ खीष्ट्राब्देऽयं सूरिः अथवाऽचार्योऽभवत् । १२२९ सम्बत्सरे ११७३ खीष्ट्राब्दे चतुर्शीतिः वर्षस्यावस्थायां महापुरुषस्यास्य देहान्तोऽभवत् । हेमचन्द्रस्य गुरोर्नाम चन्द्रमुनिरासीत् । अनहिल-पट्टनस्य चालुक्यनृपतेः जयसिंह सिद्धराजस्य प्रार्थनया सिद्धहेमनामकं व्याकरण-ग्रन्थमलेखीष्ट । जयसिंहस्योत्तराधिकारी राजा कुमारपालो हेमचन्द्रस्य शिष्य आसीत् । ११७२ खीष्टाब्दे हेमचन्द्रस्य मृतिः सञ्जाता । (ऑक्सफोर्ड प्रेस संस्करणस्य १९२४ अङ्के, भा० १, पृ० १६५-१९७ द्रष्टव्यम्)

**हेमचन्द्रस्य ग्रन्थः**

हेमचन्द्रस्य काव्यग्रन्थस्य नाम काव्यानुशासनमास्ते । सूत्रात्मिकां शैल्यामलिखितस्यास्य ग्रन्थस्यायं स्वयमेव विवेकाभिधानां व्याख्यामलिखत् । अत्र ग्रन्थे किमपि विशिष्टं वस्तु नास्ति । प्राचामुक्तय एव यथाप्रसङ्गं सङ्गृह्य ग्रन्थाकारं लम्भिता । अन्य संस्करणे अस्य ग्रन्थस्य द्वौ भागौ स्तः । महावीरजैनविद्यालयसंस्करणे ग्रन्थोऽयं भागत्रये विभक्तोऽस्ति । अस्मिन् सूत्र-वृत्ति-उदाहरणानि च सन्ति । अत्र सूत्राणां नाम काव्यानुशासनमस्ति । सूत्राणां वृत्तेर्नामालङ्कारचूडामणिरस्ति । मूलग्रन्थस्य टीकायाः नाम विवेकोऽस्ति । विवेकटीकेयं वृत्तेः स्पष्टीकरणं कृत्वा न्यूनाधिकमुदाहरणानि प्रस्तौति । अत्र प्रस्तावनायां लिखितमस्ति—

**विवरीतुं क्वचिदृध्ध्यंनवं सन्दर्भितुं क्वचित् ।**
**काव्यानुशासनस्यायं विवेकः परितन्यते ॥**

अष्टास्वध्यायेष्वयं ग्रन्थः प्रविभक्तो वर्त्तते । तत्र प्रथमेऽध्याये काव्यप्रयोजनस्य, काव्यहेतोः, काव्यलक्षणस्य शब्दार्थयोः स्वरूपस्य च विवेचनमास्ते । तत्र मुख्यार्थ-गौणार्थ-लक्ष्यार्थ-व्यङ्ग्यार्थादीनां निरूपणमस्ति । द्वितीयेऽध्याये रसस्य तस्य भेदानाम्, स्थायिभाव-सात्विकभाव-व्यभिचारिभावानाञ्च मनोज्ञं विवेचनं कृतं हेमचन्द्रेण ।

तृतीयेऽध्याये शब्ददोष-वाक्यदोष-रसदोष-अर्थदोषादीनाञ्च निर्णयोवर्त्तते । चतुर्थेऽध्याये ओजः प्रसादमाधुर्याणां त्रयाणां गुणानां विवेचनमास्ते । पञ्चमेऽध्याये अनुप्रास-यमक-चित्र-श्लेष-वक्रोक्ति-पुनरुक्ताभासादीनां षट्प्रकारकादीनां शब्दालङ्काराणां वर्णनमस्ति । षष्ठेऽध्याये नवविंशत्यर्थालङ्काराणां चर्चा कृता तेन ।

अयमाचार्यः सङ्करालङ्कारे एव संसृष्टेरन्तर्भावं प्रदर्शयति स्म । दीपके च तुल्ययोगितायाः हेमचन्द्रः परिवृत्तिनामकस्य नवीनस्यालङ्कारस्योद्भावनामकार्षीत् । अस्मिन्नेवालङ्कारे मम्मटाभिमतयोः पर्याप्तपरिवृत्योरलङ्कारयोरन्तर्भावं भवति । निदर्शनायामेव प्रतिवस्तूपमा-दृष्टान्तयोरन्तर्भावञ्चकार हेमचन्द्रः । अयमाचार्यः रसभावाभ्यां सम्बद्धस्य रसंवद् अलङ्कारस्य चर्चामेव नह्या करोत् ।

अस्य ग्रन्थस्य सप्तमेऽध्याये नायकनायिकयोः भेदानां विवेचनं कृत्वा अष्टमेऽध्याये आचार्यो हेमचन्द्रः काव्यभेदानां तथा उपभेदानां वर्णनं कृत्वा तेषां विशिष्टानि लक्षणानि चकार ।

ग्रन्थकारोऽयं काव्यमीमांसायाः, काव्यप्रकाशस्य, ध्वन्यालोकलोचनस्य अभिनवभारत्याश्चातिगुरुस्युदाहरणानि उपन्यस्यतिस्म । अस्य ग्रन्थस्यवृत्तौ ग्रन्थकार अन्येषां ग्रन्थकाराणां १५०० पद्यानि उद्धृतानि चकार ।

कुमारपालनृपसमकालिकोऽयमाचार्यः (१०८८-११७२ ई०) इति तत्तदग्रन्थावलोकनेनावधार्यते । शब्दानुशासनस्य रचनान्तरे काव्यानुशासनस्य रचना बभूव । यतः काव्यानुशासने कुमारपालस्य कोऽप्युल्लेखो नास्ति । अनेन तथ्येन प्रमाणितोभवति यत्काव्यानुशासनस्य रचना प्रायः ११४० ख्रीष्ट्राब्देऽभवत् । जयसिंह सिद्धराजस्य आदेशानुसारेण शब्दानुशासनस्य रचना बभूव । जयसिंहस्य शासनकालः १०९३ ख्रीष्ट्राब्दात् ११४३ ख्रीष्टाब्दपर्यन्तमासीत् । तस्योत्तराधिकारी कुमारपालः ११४३ ख्रीष्टाब्दात् ११७२ ख्रीष्ट्राब्दपर्यन्तं शासनमकरोत् । श्री आर.सी. पारिखस्य मते काव्यानुशासनस्य रचना ११३६ ख्रीष्ट्राब्दः ११४३ ख्रीष्ट्राब्दयोर्मध्येऽभवत् । (भूमिका पृष्ठे C.C.L. XII) ।



## जयदेवः, तदीयः चन्द्रालोकश्च

पीयूषवर्षाऽपरनामधेयोऽसौ जयदेवकविरनेकदिनसाध्यसत्रविद्याप्रवीणात् याज्ञिकान्महादेवात्सुमित्रायां जन्मलेभे इति तत्कृत चन्द्रालोकग्रन्थादेवावगम्यते—

**उल्लासायविचारवीचिनिचयालङ्कारवारांनिधेः ।**
**चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती** ॥ (चन्द्रा० १ म २)

तत्र भवान् तर्ककर्कशवक्रवचनोद्गारवांस्तार्किकशिरोमणिरपि, कोमलकाव्यकौशलकलालीलावानालङ्कारिकचक्रचूडामणिः, ईस्वीय त्रयोदशशतकान्तर्वर्त्ती आचार्यो जयदेव एवातीवलोकप्रियस्यास्य ग्रन्थस्य चन्द्रालोकाभिधानस्य ग्रन्थस्य प्रणयनमकार्षीत् ।

ग्रन्थस्यास्य लोकप्रियतामेवाक्षिलक्ष्यीकृत्यराजाजसवन्तसिंहः, अस्यालङ्कारग्रन्थस्य हिन्दीं भाषायामनुवादमकरोत् । चन्द्रालोकस्य टीकाकर्त्तुः गागाभट्टानुसारेण पीयूषवर्षो जयदेवस्यैवापरं नामासीत् । अयं महादेवसुमित्रयोः पुत्र आसीत् । तथाहि चोक्तं जयदेवेन स्वयम्—

**महादेवः सत्र-प्रमुखमखविद्यैकचतुरः,**
**सुमित्रा तद्भक्तिप्रणिहितमति यस्य पितरौ ।**
**अनेनासावाद्यः सुकवि जयदेवेन रचिते,**
**चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥**

(चन्द्रा० १ म० १६)

प्रसन्नराघवस्यापि प्रणेता स्वमातापित्रोः नाम महादेवसुमित्राकथयति । मातापित्रोर्नामसादृश्यात् प्रसन्नराघवस्य रचयिताऽप्ययमेव जयदेवः बाधकप्रमाणाभावान्निश्चीयते । यतो ह्यनेनायमर्थः स्पष्टो भवति यच्चन्द्रालोकस्यैव प्रणेता जयदेव एव प्रसन्नराघवं नाटकस्याऽपि कर्त्ता आसीत् । गीतगोविन्दस्य प्रणेतुस्तु पित्रोर्नाम भोजदेव रामादेव्यौ आसीदिति । अय जयदेवश्चन्द्रालोककाराद्भिन्न एव । पक्षधरापरनामा जयदेवोऽप्यस्माद्भिन्नएव । अयं हि जयदेवः कौण्डिन्यगोत्रसमुत्पन्नो विदर्भदेशान्तर्वर्त्ति कुण्डिनपुरनिवासीत्यपि ज्ञायते । तथाहि—

**कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-**
**रथासीदातिथ्यं न किमिह महादेव तनयः ।**
**लक्ष्मणस्येव यस्यास्य सुमित्राकुक्षि जन्मनः,**
**रामचन्द्र पदाम्भोजे भ्रमद् भृङ्गायते मनः ॥** (चन्द्रालोकादेव)

प्रसन्नराघवस्य प्रस्तावनया प्रतीयते यज्जयदेवो महान्नैयायिकः आसीत् । तथाहि—नन्वयं प्रमाणप्रवीणोऽपि श्रूयते—

**येषां कोमलकाव्य कौशलकला लीलावती भारती ।**
**तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ॥ इति ॥**

तार्किकोऽयमित्यस्यान्यप्रमाणमपि चन्द्रालोकादेव—

**धूमवत्वादिति यथा देवेत्यामन्त्रणं यथा ।**
**वाक्यानेकार्थविश्रान्तान्याहुर्वाक्यकदम्बकम् ॥**

(चन्द्रा० १ म० १५)

जयदेवस्यैकैवालङ्कारग्रन्थो विद्यते चन्द्रालोकाभिधानः । काव्यशास्त्रोपरि सिद्धान्तनिरूपणस्य ग्रन्थोऽयमस्ति । ग्रन्थोऽयमनुष्टुप् छन्दसि लिखितोऽस्ति । अस्य ग्रन्थस्य भाषा प्रवाहमयी तथा शैली सुगमा-सुस्पष्टाश्चास्ति । ग्रन्थेऽस्मिन् दशमयूखाः सन्ति । अस्मिन् ग्रन्थे ३५० अनुष्टुप्श्लोकाः सन्ति । अत्र चन्द्रालोकशब्दो हि चन्द्रस्य आलोक इवालोकः प्रकाशः काव्योपयोगिविषयाणां यस्मिन्निति व्युत्पत्त्या सिद्ध्यति । इह काव्यप्रकाशादिवत्सर्वेऽपि काव्यविषया अलङ्कारध्वन्यादयः सन्निवेशिताः ।

अथात्र ग्रन्थस्य प्रथमे मयूखे काव्यलक्षणस्य, प्रतिभा-श्रुत-अभ्याससहितस्य काव्यस्य हेतोः, शब्दस्य रूढ-यौगिक-योगरूढादि त्रयाणां भेदानाञ्चास्ति विवेचनम्, अत्रैव वाक्यखण्डवाक्यादीनि च दर्शितानि सन्ति । द्वितीये मयूखे शब्दार्थवाक्यादि दोषास्तत्परिहाराश्च प्रदर्शिताः । तृतीये मयूखे लक्षणसंहत्यादीनि काव्यज्ञापकानि लक्षणानि वर्णितानि सन्ति । अर्थात् कविः स्वकाव्ये रमणीयता वर्द्धनाय कीदृशा-मुपायानां योजनां करोति । अस्य विवेचनमस्ति अत्रोदाहरणं यथा—**'ईदृशश्चरितैर्जानि सत्यं दोषाकरोभवान्'** (चन्द्रा० ३ म० श्लो० ६) । चतुर्थे मयूखे श्लेषादयो दशानां गुणानां वर्णनं विद्यते । पञ्चमे मयूखे पञ्चानां शब्दालङ्काराणां शतसंख्यकानाञ्चार्थालङ्काराणां विवेचनं कृतम् । षष्ठे मयूखे रसानां, भावानाम्, रीतीनाम्, मधुरा-प्रौढा-परुषा-ललिता-भद्रादीनां पञ्चवृत्तीनाञ्च विवेचनं विद्यते । सप्तमे मयूखे व्यञ्जनायाः, ध्वनिकाव्यस्य च भेदानां वर्णनं कृतमास्ते । अष्टमे मयूखे गुणीभूतव्यङ्ग्य काव्यस्य प्रकाराणां विवेचनमास्ते । नवमे लक्षणायाः विशिष्ट वर्णनमस्ति । दशमे मयूखे अभिधायाः वर्णनमस्ति ।

एतेष्वधोलिखितविषयाः काव्यप्रकाशादिभ्योऽप्यधिकाः

तत्र प्रथमे मयूखे रूढियौगिकानां शब्दानां नवभेदाः । तृतीये मयूखे अक्षरसंहत्यादीनि काव्यज्ञापकलक्षणानि । सप्तमे मयूखे वक्तृस्यूतस्वाङ्करितादयो व्यङ्ग्यभेदाः । दशमे चाभिधायाः षड्भेदे वस्तुयोगनिर्देशाख्यौ द्वौ भेदौ चेति । अपिच काव्यप्रकाशादस्य बहुस्थलेषु मतभेदोऽप्यवलोक्यते यथालङ्कारप्रकरणे । अस्य ग्रन्थस्य महदुपयोगित्वादेव चिरन्तनकालादध्ययनाध्यापनादिषु प्रचुरप्रचार आसीत्। यश्च परवर्त्ती कुवलयानन्दाख्योऽलङ्कारग्रन्थोऽप्पय्यदीक्षितविरचितः सोऽपि चन्द्रालोकालङ्कारप्रकरणस्य व्याख्यारूप एव । तथा चोक्तं तत्रैव—

> **'येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।**
> **प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते ॥'** इति ।

अन्यदप्यस्य ग्रन्थस्य वैशिष्ट्यमास्ते यदेकस्मिन्नेवश्लोके अलङ्कारस्य लक्षण-मुदाहरणञ्चोभयमास्ते । इत्थं समासशैल्याम् अलङ्काराणामेतादृशं मनोज्ञं विवेचनमन्यत्र दुर्लभमास्ते । तद्यथा—

> **व्यतिरेको विशेषश्चेद् उपमानोपमेययोः ।**
> **शैला इवोन्नताः सन्तः किन्तु प्रकृति कोमलाः ॥**
> (चन्द्रा० पञ्चम म० श्लो० ५९)

> **विभावनाविनाऽपि स्यात् कारणं कार्यजन्वचेत् ।**
> **पश्य लाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥ इति ।**
> (चन्द्रा० ५ म०, श्लो० ७७)

अस्य सुबोधस्य ग्रन्थस्य लोकप्रियत्वमेवाकलय्याऽचार्योऽप्पयदीक्षितोऽस्य ग्रन्थस्य सम्पूर्णमेवालङ्कारभागं स्वकीयेऽलङ्कारग्रन्थे सन्निवेशयामास । तत्राप्यमाचार्यः कानिचित् नवीनान्युदाहरणानि संयोज्य स्वकीयां पाण्डित्यपूर्णां वृत्तिं योजयतिस्म । इममर्थ-

मप्पयदीक्षितः कुवलयानन्दस्यान्ते स्वीकरोत्यपि । तथाहि—

**चन्द्रालोको विजयतां शरदागम संभवः ।**
**हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥**

श्लिष्टोऽयं श्लोकः । श्लेषमहिम्ना चन्द्रालोकस्य शरदागम शब्दोऽपि टीकां व्यञ्जयति । चन्द्रालोकस्य निम्नलिखिताष्टीकाः सन्ति ।

१. दीपिका, २. शारदशर्वरी, ३. शरदागमटीका, ४. बालचन्द्रेण लिखिता हस्तलिखितरूपेण विद्यमानाटीका, ५. वैद्यनाथपायगुण्डे प्रणीता रमाटीका, ६. राकागम अथवा सुधाटीकेति षट्टीकास्सन्ति ।

श्रीयोधपुराधीशेन १६८३-१७३५ ई० वर्षेषु वर्त्तमानेन प्रथमेन यशवन्तसिंह महाराजेन हिन्दी भाषायां छन्दोनिबद्धो भाषाभूषणाख्योऽलङ्कारग्रन्थोऽपि चन्द्रालोकाश्रयेणैव प्रणीत इति पूर्वोक्तमेव । तुलसीदासादीनामुपर्यपि यत्र तत्र चन्द्रालोकस्य पूर्णरूपेण प्रभावः परिलक्ष्यते । अस्य लेखकस्यापरः यो ग्रन्थः प्रसन्नराघवाख्यः स हि रामायणकथाधारेण निर्मितः । अत्र सप्ताङ्काः, ३९३२ श्लोकाश्च सन्ति ।

जयदेवस्य कालः इदानी यावत् विवादस्पदो विद्यते । अनुमानेनैव निश्चीयते यत् जयदेवस्य कालः १३०० ईसवीयतोऽनन्तरं नहि भवितुमर्हति । तेन हि चन्द्रालोकस्यापि रचनायाः कालः निश्चेतुं काठिन्यमस्ति । चन्द्रालोके कस्यापि लेखकस्य नाम्नः उल्लेखो नैवास्ति । किञ्च—

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृति ।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती ॥** (चन्द्रा० १ म० ८)

अस्मिन् श्लोके स्पष्टतः काव्यप्रकाशस्य निम्नलिखित कारिकाम्प्रति सङ्केतोऽस्ति । तद्यथा—'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' (काव्य०१ उ० पृ०९) इत्यनेन प्रमाणितोभवति यच्छ्रीमम्मटाचार्यमतं तेन खण्डितम् । लक्षणनिरूपणप्रस्तावे च काव्यप्रकाशोक्तलक्षणायाः षड्भेदाः अपि प्रदर्शिता इति सिद्ध्यत्यस्यैकादशशताब्ध्याश्चरमभागस्थित श्रीमम्मटाचार्यान्तिर्भावित्वम् । चन्द्रालोके च सर्वत्र प्रथमं १०५० खीष्टाब्दीयवर्त्तमानेन रुय्यकेणालङ्कारसर्वस्वे । विकल्प-विचित्रालङ्कारयोर्ये लक्षणे-स्वीकृते त एवात्र परिष्कृत्य प्रतिपादिते । तद्यथा—

**'तुलमवलविरोधो विकल्पः'** (अलङ्कारसर्वस्वे, १९८ पृष्ठे)

तुलनीयम्—**'विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ।'** (चन्द्रा० ५ म० ९६)
-तथा—**'स्वपिरीतफलनिष्पत्तये प्रयत्नो विचित्रम्'** (अलङ्कारसर्वस्वे, पृ० १६८)
तुलनीयम्—**'विचित्रं चेत् प्रयत्नः स्यात् विपरीतफलप्रदः ।'** (चन्द्रा० ५ म० श्लो० ८३)

अत्रेदमपि उल्लेखनीयमस्ति यज्जीवानन्दादि कतिपयेषु चन्द्रालोकस्य संस्करणेषु विकल्पविचित्रालङ्कारयोः क्रमशोऽनेन प्रकारेण लक्षणे स्तः—

**'विरोधे तुल्यवलयोर्विकल्पालङ्कृतिर्मया ।**

तथा—

**विचित्रं तत्प्रयत्नश्चेत् विपरीतफलेच्छया ।'**

मम्मटाचार्येणैकषष्टिः, रुय्यकेणैकसप्ततिः, जयदेवेन तु शतमलङ्काराः स्वीकृता इति विकासक्रमेणाऽप्यस्य मम्मटरुय्यकाभ्यां पश्चाद्भावित्वं निश्चीयते । चन्द्रालोकस्य सर्वतः प्राचीना शरदागमाख्या व्याख्या प्रद्योतन भट्टाचार्येण निर्मिता । असौ शरदागमकारः (१५७७ ई० वर्षे) रीवाँनरेश बघेलावंशशिरोमणि श्रीवीरभद्रदेव समाश्रित आसीदिति व्याख्याप्रारम्भतः स्फुटं प्रतीयते एवञ्च सिद्ध्यति चन्द्रालोकस्य प्राचीनता ! १४०० चतुर्दशशताब्दीस्थित साहित्यदर्पणकारविश्वनाथद्वारा हि साहित्य-दर्पणे चतुर्थपरिच्छेदे प्रसन्नराघवीय निम्नाङ्कितं श्लोकमुद्धृतं चकार । तद्यथा—

**कदली कदली करभः करभः करिराजकरः करिराजकरः ।**
**भुव त्रितयेऽपि विभर्त्तितुलामिदमूरूयुगं न चमूसदृशः ॥**

इति पद्यस्य समुद्धरणेन चतुर्दशशताब्दी पूर्वभाविता समायाति जयदेवस्येति। १३३० खीष्ट्राब्दे शिङ्गभूपालेन रसार्णवसुधाकरे प्रसन्नराघवनाटकस्य नामतो ग्रहणात् प्रायस्त्रयोदशशताब्धैव जयदेवस्य सत्ताकालो भवितुं शक्यते । अनेन विवेचनेन जयदेवस्य कालः त्रयोदशशताब्दस्य मध्यभागो निश्चीयते ।



## विद्याधरकृतैकावली

एकावली ग्रन्थस्य प्रणेतुः विद्याधरोऽस्ति । ग्रन्थोऽयं मल्लिनाथस्य 'तरल' नाम्ना टीकया सह बंबई संस्कृतसीरीजतः श्रीत्रिवेदीद्वारा सम्पादितोऽभवत् । अस्य ग्रन्थस्यापि त्रयोभागाः सन्ति—कारिकाभागः, वृत्तिभागः, उदाहरणभागश्चेति । अस्य ग्रन्थस्य विशेषता इयमेवास्ति यदस्य सर्वाण्युदाहरणानि स्वलिखितानि सन्ति । अयं हि ग्रन्थः स्वाश्रयदातुः उत्कलाधिपस्य राज्ञो नरसिंहस्य संस्तुतौ लिखितो वर्त्तते । तेना- रम्भिके सप्तमे श्लोकेऽनेन प्रकारेणोक्तम्—

**ऐष विद्याधरस्वेषु कान्तासंमितलक्षणम् ।**
**करोमि नरसिंहस्य चाटुश्लोकानुदाहरन् ॥**

अनेनोल्लेखेनास्य कालस्य निरूपणं सम्यक्तया संभवति । अनेन विद्याधरेण शास्त्रस्य त्रयो भेदाः कृताः शब्दप्रधानः (मधुसम्मितः), अर्थप्रधानः (मित्रसंमितः), ध्वनिप्रधानः (कान्तासम्मितश्चेति) । अनयादृष्ट्या रचनेयं प्रतापरुद्रयशोभूषणम्, नञ्जराजयशोभूषणं रघुनाथ भूपालीयम्, तथाऽलङ्कारमञ्जूषादिभिः सह मिलति ।

एकावल्यामष्टौ उन्मेषाः सन्ति । प्रथमे उन्मेषे काव्यस्य स्वरूपकथनं तत्र काव्यहेतुः (तत्र प्रतिभा-बहुशास्त्रदर्शिता-अभ्यासश्चेति) । भामहादिग्रन्थकाराणां मतस्य विवेचनम् । द्वितीये—वाचक-लाक्षणिक-व्यञ्जकशब्दानां त्रयोभेदास्तथाऽभिधा-लक्षणा-

व्यञ्जनाख्याः तिसृणां शब्दशक्तीनाञ्च विवेचनम् । तृतीये—ध्वनेर्भेदोपभेदानां वर्णनम् । चतुर्थे—गुणीभूतव्यङ्ग्यस्य विवेचनम् । पञ्चमे—त्रयाणां गुणानाम्, तथा तिसृणां रीतीनाञ्च विवेचनम् । षष्ठे—दोषाणाञ्च वर्णनम् । सप्तमे—विभिन्न शब्दालङ्काराणाञ्च वर्णनम् । अष्टमे उन्मेषे—अर्थालङ्काराश्च वर्णिताः सन्ति । प्रथमोन्मेषे विद्याधरेण ध्वन्यालोकस्य पूर्णतः अनुसरणं कृतमस्ति । अस्य ग्रन्थस्य मुख्योपजीव्यं काव्यप्रकाशः, अलङ्कारसर्वस्वञ्चेति स्तः । अलङ्काराणां विवेचनेऽयं काव्यप्रकाशापेक्षया सर्वस्वमेवाधिकं महत्त्वं ददाति । उदाहरणार्थं तेन परिणाम-उल्लेख-विचित्र-विकल्पा-दीनामलङ्काराणां सर्वस्वमिव विवेचनं कृतिम्, यावदेतान्यलङ्काराणि काव्यप्रकाशे नैवोपलब्धानि सन्ति ।

श्रीत्रिवेदीमहोदयःस्वकीयभूमिकायां विद्याधरस्य समयस्य संबन्धे सर्वेषां तथ्यानां सङ्कलनमकरोत् । तन्मते विद्याधरः केसरिनरसिंहस्य (१२८२-१३०७ खीष्टाब्दे) अथवा प्रतापनरसिंहस्य (१३०७-२७ ई०) आश्रितः आसीत् । अस्य प्रस्तावनात्मके एकादशे श्लोके कवि हरिहरस्य तथा अर्जुनदेवस्योल्लेखौ स्तः । अतः एकावल्याः रचनाकालः त्रयोदशखीष्टाब्दस्य प्रथमार्धांशोपरान्ते एव सम्भवति । सिंहभूपालस्य (१३३० ई०) सुधाकरे एकावल्यारुल्लेखोऽनेन प्रकारेण मिलति—'**उत्कलाधिपतेः शृङ्गाररसाभिमानिनो नरसिंहदेवस्य चित्तमनुवर्त्तमानेन विद्याधरेण कविना बाढमभ्यन्तरी कृतोऽसि । एवं खलु समर्थितमेकावल्यमानेन** (त्रिवेन्द्रम संस्करणस्य २.६ पृष्ठे) । अत्रैव २०० एवं २५८ पृष्ठे सिंहभूपालेन प्रसन्नराघवमुद्धृतम् । अनेनाऽपि एकावल्याः रचनाकालः १२८५-१३२५ खीष्टाब्दस्य मध्ये कथितुं शक्यते ।

विद्याधरो रुय्यकस्योल्लेखं स्वकीये ग्रन्थेऽकार्षीत् । अत एव अस्य ग्रन्थस्य कालस्योत्तरावधिः द्वादशशताब्दो भवति । अस्य कालस्य पुष्टिरेतेनापि भवति यदयं नैषधकारस्याप्युल्लेखमकरोत् स्वग्रन्थे । अस्मिन्नेव प्रसङ्गे विद्याधरोहरिहरनामकस्यापि कवेरुल्लेखमकरोत । हरिहरः स्वकाव्यप्रतिभया अर्जुननामकात् राज्ञो विपुलं धनमवाप । अर्जुनस्यापि कालः त्रयोदशशताब्दस्यारम्भकाल एव वर्त्तते । अत एव एकावल्याः रचनाकालः चतुर्दशशताब्दस्यारम्भकालमेव सुधियः स्वीकुर्वन्ति ।



## विद्यानाथस्य प्रतापरुद्रयशोभूषणम्

विद्यानाथः प्रतापरुद्रयशोभूषणस्य प्रणेता वर्त्तते । अस्य ग्रन्थस्यैकं सुष्ठुसस्करणं बंबई काव्यमाला संस्करणात् प्रकाशितमस्ति । १९०९ खीष्टाब्दे मल्लिनाथस्य पुत्रः कुमारस्वामिनोऽस्य ग्रन्थस्य रत्नापणाख्या टीकामकरोत् । अस्य ग्रन्थस्यापरमपि संस्करणं रत्नापणटीकया सह १९१४ खीष्टाब्दे मद्रासनगरात् प्रकाशितं बभूव । दक्षिणभारतेयं रचनाऽतीव लोकप्रियोऽस्ति । अस्य ग्रन्थस्य भागत्रयं विद्यते

कारिकाभागः, वृत्तिभागः, उदाहरणभागश्चेति । ग्रन्थेऽस्मिन् विद्यमानानि सर्वाण्यु-दाहरणानि विद्यानाथकृतान्येव सन्ति । एतेषूदाहरणेषु काकतीयवंशीयस्य राज्ञः प्रतापरुद्रदेवस्य स्तुतिस्वरूपाणि सन्ति । अस्य राज्ञः राजधानीं एकशिला (वाराङ्गलः) आसीत् । स्तुतिस्वरूपाण्युदाहरणानि यथा—

**प्रतापरुद्रदेवस्य गुणानाश्रित्य निर्मितः ।**
**(अलङ्कारप्रबन्धोऽयनमन्तःकरणोत्सवाय च) ॥**

अन्यत्र—

**अलङ्कारप्रबोधाय सन्तःकर्णोत्सवस्तु यः ॥** (प्र० १.९)

अनया दृष्ट्याऽस्यैकावल्या सह साम्यं वर्त्तते । अस्मिन् ग्रन्थे प्रतापरुद्रदेव-स्यैवस्तुतौ ग्रन्थकारः स्वग्रन्थस्य तृतीयेऽध्यायेऽलङ्काराणां साङ्गोपाङ्गानामुदाहरणरूपेण प्रतापकल्याणनामकस्य नाटकस्य रचनां कृत्वा तत्सन्निवेशयामास । प्रतापरुद्रदेवः काकतीयाधिपतिरासीत् । अस्य राजधानी कतिपयानामैतिहासिकानां मते आन्ध्रप्रदेशस्य एकशिला नाम नगरी बभूव । प्रतापरुद्रदेवस्य पितुर्नाम महादेवः तथा मातुर्नाम मुम्मडि अथवा मुम्मुडम्बा आसीत् । मुम्मुडम्बा रुद्राम्बायाः कन्या आसीत् । रुद्राम्बा चैतिहासिकग्रन्थे रुद्रनाम्ना प्रसिद्धः आसीत् । स्वपितुः गणपतेरुपरतेऽयं एकशिलायां राज्यमकरोत् । इदं कथ्यते यत् प्रतापरुद्रदेवः देवगिरिनृपतिं यादववंशीयं नरेशं रामदेवं पराजयतिस्म । (१२७१ ई०-१३०९ ई०) ।

अनया घटनया तथाऽन्यैः शिलालेखैः ज्ञातोभवति यत् प्रतापरुद्रदेवः त्रयोदश खीष्ट्राब्दस्यान्तिमे चरणे तथा चतुर्दश खीष्टाब्दस्य प्रथमचरणे राज्यं करोतिस्म । मुहम्मदतुगलकस्य चमूः तं कारागुप्तमकरोत् । अतः प्रतापरुद्रयशोभूषणस्य रचना चतुर्दशशतकस्य प्रथम चरणेऽभवत् । वर्णनमिदमाश्रित्य प्रवक्ता के.पी. त्रिवेदी एकशिलायाः सप्तमेन काकतीय नरेशेन साकमभेदं संसाधयामास प्रतापरुद्रस्य विद्यानाथस्याश्रयदातुः । प्रतापरुद्रदेवस्य कालः १२९८ ईसवीयतः १३९७ ईसवीयं यावदास्ते । इत्थं विद्यानाथस्याऽपि अयमेव कालो निश्चीयते ।

प्रतापरुद्रयशोभूषणे नव प्रकरणानि सन्ति । तेषु क्रमशः नायकस्य, काव्यस्य, नाटकस्य, रसस्य, दोषाणाम्, गुणानाम्, शब्दालङ्काराणाम्, अर्थालङ्काराणां मिश्रा-लङ्काराणाञ्च वर्णनानि सन्ति । विद्यानाथस्तु मम्मटमेवादर्शी चकार, किञ्चालङ्काराणां विषये सः रुय्यकस्यैवाधमर्णो विद्यते । अत एव रुय्यकानुसारेणायं परिणामोल्लेख-विचित्रविकल्पानामलङ्कारणां वर्णनं स्वकीये ग्रन्थे कृतवान् । यद्यपि मम्मटः एतेषामलङ्काराणां वर्णनं स्वकीये काव्यप्रकाशे नहि कृतवान् । अस्य रत्नापणाभिधाना मल्लिनाथस्यात्मजस्य कुमारस्वामिनष्टीकाऽति वैदुष्यपूर्णा विद्यते ।

## वाग्भट-द्वितीयः, तदीयं काव्यानुशासनम्

वाग्भटोऽयं द्वितीयोऽस्ति, नामसाम्ये सत्यपि अस्य वाग्भटस्य काव्यालङ्कारकर्त्ता वाग्भटेन साकमभेदो ना हि स्वीकर्त्तव्यः । नामसाम्येऽप्यनयोः ग्रन्थे भेदो वर्त्तते । द्वितीय वाग्भटस्य कृतिः काव्यानुशासनं वर्त्तते । रचनेयं १९१५ खीष्टाब्दे रचनाकर्त्तुः स्वरचित 'अलङ्कारतिलकाख्यया' टीकया सह प्रकाशितोऽभवत् अयमपि वाग्भटो जैन आसीत् । अस्य पितुर्नाम नेमकुमार आसीत् । सः स्वकीये ग्रन्थे प्रथमं वाग्भटस्य निर्देशमकार्षीत् । अयं वाग्भटः स्वकीयेषु ग्रन्थेषु ऋषभदेवचरितस्य छन्दोनुशासन-स्याऽपि निर्देशमकरोत् ।

स्वयमेवायं द्वितीयो वाग्भटः सूत्रशैल्यां लिखितस्य काव्यानुशासनस्य वृत्तिमपि लिलेख । अस्य ग्रन्थस्याधिकांशो भागः गद्यसूत्राणां स्वरूपे एवास्ति । अस्यां टीकायां मूलग्रन्थस्य व्याख्योदाहरणानि च सन्ति । अस्मिन् काव्यानुशासने पञ्चाध्यायाः सन्ति । तत्र प्रथमेऽध्याये काव्यप्रयोजनस्य, काव्यहेतोः (प्रतिभा, सहायकः व्युत्पत्तिः अभ्यासश्च), कविसमयस्य, काव्यस्य नानाप्रकाराणाञ्च वर्णनमकार्षीत् । अस्मिन्नेवाध्याये कविसङ्केतः, काव्यलक्षणम्, तस्य गद्य-पद्य-मिश्रभेदाः प्रदर्शिताः । महाकाव्यम्, आख्यायिका, कथा, चम्पू मिश्रकाव्यादीनां पृथक्-पृथक् लक्षणञ्च प्रदर्शितम् । द्वितीयेऽध्याये षोडशप्रकाराणां पददोषाणां चतुर्दश प्रकाराणाञ्च वाक्यार्थस्य च दोषाणां वर्णनं कृत्वा दण्डिसम्मतानां दशप्रकारकाणां दोषाणाञ्च वर्णनमकरोत् । यद्यप्यस्य द्वितीय वाग्भटस्याप्यनुसारेण गुणैस्त्रिभिरेवभाव्यम् । माधुर्यौजः प्रसादाख्याः एवेति त्रयो गुणाः । एतेषु वैदर्भी गौड़ीया-पाञ्चाली रीतीनामपि वर्णनं समायाति । तृतीयेऽध्याये त्रिषष्ठि संख्याकानामर्थाऽलङ्काराणां वर्णनमास्ते । अनेनाचार्येण कल्पितानामन्य-अपर-पूर्व-लेश-पिहित-उभयन्यास-आशीः । भावाख्या नामलङ्काराणामुल्लेखो महत्त्वपूर्णो वर्त्तते । चतुर्थेऽध्याये चित्र-श्लेष-अनुप्रास-वक्रोक्ति-यमक-पुनरुक्तवदाभासाख्याः षट्प्रकारकाः शब्दालङ्काराः वर्णिताः सन्ति, तेषु वक्रोक्तिरप्यन्यतमोऽलङ्कारो वर्त्तते । पञ्चमेऽध्याये नवरसानां विवेचनम्, विभावानुभावव्यभिचारिभावानामपि वर्णनम्, नायक-नायिकयोर्भेदाश्च वर्णिताः सन्ति । अस्मिन्नेवाध्याये प्रेम्णोदशानामवस्थानां रसदोषाणाञ्च समीक्षणं कृतं वर्त्तते ।

अस्य ग्रन्थस्य लेखकः जैनी आसीत् । अनेन भेदपाठः (मेवाडः) राहड़पुर नलोटकपुरादीनां स्थानानामुल्लेखः कृतोऽस्ति । अयं हि लेखकः नेमिकुमारस्यात्मजः आसीत् । अतः स्पष्टतोऽयं वाग्भटालङ्कारस्य कर्त्तुः प्रथमवाग्भटाद्भिन्नोऽस्ति । अस्मिन्विषयेतेनलिखितम्—'**दण्डीवामनवाग्भटादि प्रणीता दश काव्यगुणाः । परंतु माधुर्यौयः प्रसादलक्षणां स्त्रीनेव गुणान् मन्यावहे** (काव्यानुशासनवृत्तिः पृ० ३१) । अयं हि स्वकीयां टीकायां ३०५ पृष्ठे विभिन्त्र प्रदेशानां, नदीनां-वृक्षाणां-विभिन्त्रप्रदेशानां विशिष्टवस्तूनां विस्तृतं विवरणं दत्तवान् । एवं प्रतीतोभवति यदयं ऋषभदेवचरितनाम्नः महाकाव्यं लिलेख । संभवतः छन्दोनुशासनमपि (२२ पृष्ठे) अस्यैव कृतिरस्ति । अस्यै ग्रन्थकर्त्रेऽपि एकः श्लोकः समायाति (५८ पृष्ठे द्रष्टव्यः)

तथा—अपरःश्लोकः ग्रन्थकर्त्तुः पितरमुद्दिश्य लिखितमस्ति (३२ पृष्ठे)। तद्यथा—

**'गायन्तिरासक विद्याविधेयपाटलनामोऽधुनापि तवनेमिकुमारकीर्त्तिम्'।**

अनेनानेक ग्रन्थानां ग्रन्थकाराणाञ्च यत्र तत्रोल्लेखः कृतोऽस्ति। काव्यानुशासनस्यैका हस्तलिखिता प्रतिसमुपलब्धाऽस्ति (एग्लिंग्स कैटलॉग सं० ११५७)। तदनुसारेणास्यास्तिथिः १५१५ विक्रमाब्दः, अर्थात् १४५८-५९ ख्रीष्टाब्दो भवति। अस्मिन् ग्रन्थे प्रथमवाग्भटस्य तथा काव्यप्रकाशस्य चोल्लेखो मिलति। तेन ह्यस्य समयः ११५० ख्रीष्टाब्दात् पश्चाद्वर्त्ती प्रमाणितो भवति। अतोऽस्य द्वितीयवाग्भटस्य कालः चतुर्दशशताब्दो वर्त्तते।



## विश्वनाथकविराजस्य साहित्यदर्पणः

विश्वनाथकविराजः उत्कलप्रदेशस्याति प्रख्याते विद्वत्कुले जनिमलभत्। अलङ्कार-जगति सर्वाधिको लोकप्रिय आलङ्कारिको वर्त्तते। अयं हि विद्वान् नारायणदासस्य पौत्रः श्रीचन्द्रशेखरपण्डितस्य तनूजन्माऽभवत्। सोऽयं विश्वनाथकविराजः प्रसिद्धं 'साहित्यदर्पणः' नाम ग्रन्थं निर्ममे इति तेन स्वयमेवाभ्यधायि—

**श्रीचन्द्रशेखरमहाकविचन्द्रसूनु**
**श्रीविश्वनाथकविराजकृतं प्रबन्धम्।**
**साहित्यदर्पणममुं सुधियो विलोक्य**
**साहित्यतत्त्वमखिलं सुखमेव वित्त॥**

(सा०द०, दश०परि० श्लो० ९९)

इति साहित्यदर्पणान्तिमस्थपद्यमेव प्रमाणम्। महापात्र विश्वनाथस्य परिचयस्तस्यात्मकथ्योपरि निर्भरोऽस्ति। आत्मकथ्यं विनाऽस्य परिचयः कुत्राऽपि किमपि नोपलभ्यते। किञ्चास्यात्मपरिचय विवादास्पदः (Controversial) अस्ति। तदनुसारेण विश्वनाथस्य पिता चन्द्रशेखरः स्वपुत्रेण सममेव विद्वान् कविः सान्धिविग्रहिकश्चासीत्। विश्वनाथः स्वग्रन्थे स्वपितुः प्रणीतयोः पुष्पमाला भाषार्णवयोरप्युलेखमकरोत्। अलङ्कारशास्त्रस्य ग्रन्थस्य प्रणेता नारायणः अस्य पितामहः आसीत्। अन्यत्र स्वयमेवायं लिखति—

**'तत्प्राणत्वं चास्मद् वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्य-श्रीमन्नारायणपादैरुक्तम्।'** (साहित्यदर्पण ३१।२-३)

किञ्च काव्यप्रकाशस्य दर्पणाख्य टीकायां स्वयमेव लिखति—

'यदाहुः श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराजश्रीनरसिंहदेवसभायां धर्मत्त्वं रथगयन्त ...अस्मत् पितामहश्रीमन्नारायणदासपादाः ।' (का०प्र० भूमि० पृ० २१) किन्त्वयमेव साहित्यदर्पणे सः तमेवास्मत् वृद्धप्रपितामहशब्देनाभिधानमकरोत् । काव्यप्रकाशस्य टीकायां विश्वनाथः अनेकेषां संस्कृतशब्दानां पर्यायरूपाणामुत्कलशब्दानामपि निर्देशमकरोत् । अस्मिन् विषये काव्यप्रकाशस्य २५ पृष्ठे वामनाचार्यस्य भूमिका दर्शनीया—**'वैपरीत्यं रुचिं कुर्विति पाठः' अत्र चिकुपदं काश्मीरादि भाषायां श्लीलार्थबोधकम्, उत्कलादिभाषायां धृतकाण्डकद्रव इत्यादि ।**

अनेन कथनेन प्रतीतो भवति यदयमुत्कलीयः आसीत् । विश्वनाथः स्वपित्रा सह सम्भवतः कलिङ्गदेशस्य कस्याऽपि राज्ञः महत्वपूर्ण पदाधिकारिणावास्ताम् । उभावपि तत्र 'सान्धिविग्रहिक महापात्र' पदव्या विभूषितावास्ताम् । साहित्यदर्पणस्य प्रथमपरिच्छेदस्योपसंहारात्मक पद्येन, यथा—**'इति श्रीमन्नारायणचरणारविन्दमधुव्रत'** इत्यादिः तथा साहित्यदर्पणस्यान्तिमश्लोकेन च—

**यावत् प्रसन्नेन्दुनिभानना श्रीनारायणस्याङ्गमलङ्करोति ।**

(सा०द० दश०प० श्लो० १००)

अनेन प्रमाणितोभवति यत् विश्वनाथः वैष्णवधर्मावलम्बी आसीत् । चण्डीदासश्च नारायणदासानुजस्तदप्युक्तं विश्वनाथेनैव रसप्रकरणे—'इहास्मत्पितामहानुजकविपण्डितमुख्य चण्डीदासपादैरुक्तम् ।' सान्धिविग्रहिक' इत्यादि विशेषणेन प्रधानमन्त्रिपदेस्मितो विश्वनाथो जात्याब्राह्मण एवेति प्रतिभाति । तदानीन्तनकाले मन्वनुसारेण मुख्यामात्यपदे तस्यैवाधिकारित्वात् । तथा च मनुः—

**सर्वेषां तु विशिष्टेन ब्राह्मणेन विशेषतः ।**
**मन्त्रयेत् परमं मन्त्रं राजाषाड्गुण्य संयुतम् ॥**

अत्रार्थ साहित्यदर्पणलोचनाख्यव्याख्याकर्त्तु विश्वनाथ पुत्रस्यानन्तदासस्य लोचनारम्भोक्तिः प्रमाणम् । तथाहि—

**आसीत्कपिञ्जलकुलक्षीराकूपारचन्द्रमाः ।**
**त्रिकलिङ्गाधिपपधराधामधीसचिवः कृती ॥**
**अशेषभाषारमणीभुजङ्गः साहित्यविद्यार्णवकर्णधारः ।**
**ध्वन्यध्वनिः प्रौढधियां पुरोगः श्रीविश्वनाथः कविचक्रवर्त्ती ॥**

विश्वनाथेन काव्यप्रकाशस्य टीकायाः प्रारम्भे स्वल्पेन स्ववृत्तमपि लिखितम् । तथाहि—

**प्रमातृप्रमाणप्रमेयप्रपञ्चप्रसूतिं प्रमिण्वन्ति यां योगिवर्याः ।**
**गिरां देवतां दैवतं देवतानां प्रबोधं प्रदेयादियं मत्प्रबन्धे ॥ १ ॥**
**टीकाकाव्यप्रकाशस्य दुर्बोधानुप्रबोधिनी ।**
**क्रियते कविराजेन विश्वनाथेन धीमता ॥ २ ॥**
**इह सर्वग्रहग्रस्ताः कुर्वन्ति कुधियो मुदा ।**

**न दोषः किन्तु तत्राऽपि विचिन्वन्तु गतिं चिरात् ॥ ३ ॥**

काव्यप्रकाशस्य टीकायाः समाप्तौ तेनैव लिखितम्—

**लक्ष्मीर्वक्षोमुरारेस्थितिकवयगतेर्भोगमालाङ्गमौने,**
**मौनिं सिन्धुःस्वराणामधिवसतिविधेर्भाविता यावदस्य ।**
**तावत्काव्यप्रकाशात्ववधिगमान्वारमासार्ककोटि,**
**व्याख्याविख्यातिमेषां कविमुकुटमणेर्विश्वनाथस्य यायात् ॥**

पद्यमिदमतिशिथिलेऽशुद्धे च पत्रे आसीदिति । अनेन प्रमाणितोभवति—'यः खलु काव्यप्रकाशदर्पणकारो विश्वनाथः स एव साहित्यदर्पणकारोऽपि । यतो हि कथनमिदमप्यस्मिन्प्रसङ्गे द्रष्टव्यम्—

**'इति श्रीमन्नारायणचरणारविन्दमधुकरालङ्कारिकचक्रवर्त्ति-ध्वनिप्रस्थान परमाचार्याष्टादशभाषाविलासिनीभुजङ्गसङ्गीत-विद्याविद्याधर-कलाविद्यामालती-मधुकर-विविधविद्याऽर्णवकर्णधार सन्धिविग्रहिकमहापात्र श्रीविश्वनाथ कविराजकृतौ काव्यप्रकाश-दर्पणेऽर्थालङ्कारनिर्णयो नाम दशम उल्लासः ।'** इति ।

अतएव काव्यप्रकाशदर्पणद्वितीयोल्लासस्य लक्षणानिरूपणप्रसङ्गे 'एषाञ्च षोडशानां लक्षणाभेदानामिह दर्शितान्युदाहरणानि मम साहित्यदर्पणेऽवगन्तव्यानि ।' इत्यपि सङ्गच्छते । काव्यप्रकाशदर्पण पञ्चमोल्लासे 'कष्टत्वादीनां अनित्यदोषत्वम् ।' इति प्रतीकमुपादायोक्तं विश्वनाथेनोक्तम्—'यथामग' नरसिंहविजये—

**स्फुटविकटचपेटा पातनेनायमष्टौ ।**
**सपदिकुलगिरीन् वा खण्डशः चूर्णयामि ॥**

इत्यादिना नरसिंह विजयाख्यखण्डकाव्यस्य, तत्रत्याष्टमोल्लासस्य—**तत्र मसृणनिर्वाहो यथा मम चन्द्रकलायां नाटिकायाम्'** इत्यादिना चन्द्रकलानाटिकायाश्च स्वकृतत्वेन स्वीकृतत्वेनोल्लेखः कृतः । साहित्यदर्पणस्य षष्ठपरिच्छेदे महाकाव्य लक्षणोदाहरणे प्रसङ्गे स्वकृतराघवविलास कुवलयाश्वचरितयोः करम्भकोदाहरणे स्वकृतरत्नावल्या असत्प्रलाप वीथ्यङ्गोदाहरणे प्रभावतीपरिणयनाटकस्य चोल्लेखः स्पष्टरूपेण कृतः ।

आलङ्कारिकेणैव साकं विश्वनाथः एकः सिद्धः कविरप्यासीत् । अयं संस्कृतप्राकृतभाषयोः साकं अन्यासामपि भाषाणां विद्वानासीत् । अतएव सः आत्मानं षाडशभाषावरविलासिनीभुजङ्गशब्देनाभिहितवान् । अयं कवि निम्नाङ्कितानां ग्रन्थानां प्रणयनमकरोत्—१. राघवविलासः (महाकाव्यम्), २. कुवलाश्वचरितम् (प्राकृतकाव्यम्), ३. चन्द्रकला (नाटिका), ४. प्रभावतीपरिणयम् (नाटकम्), ५. प्रशस्तरत्नावली (षोडशभाषानिर्मितकरम्भकम्), ६. नरसिंहविजयः (खण्डकाव्यम्), ७. कंसवधम् (काव्यम्), ८. साहित्यदर्पणः (शास्त्रीयप्रबन्धः), ९. काव्यप्रकाशदर्पणः (काव्य प्रकाशटीका) ।

अस्य लेखकस्य प्रमुखकाव्यशास्त्रीयग्रन्थः साहित्यदर्पणोऽस्ति । अस्य ग्रन्थस्य प्रमुखवैशिष्ट्यमिदमस्ति । यदस्मिन् ग्रन्थे श्रव्यदृश्ययोरुभयोरपि काव्ययोः वर्णनमास्ते ।

अतएव सम्पूर्णस्य काव्यशास्त्रस्य प्रतिनिधिभूतोऽयं ग्रन्थो वर्त्तते । अस्मिन्ग्रन्थे दशपरिच्छेदाः सन्ति । तत्र प्रथमपरिच्छेदे काव्यलक्षणस्य, काव्यप्रयोजनस्य काव्यभेदस्य च वर्णनमास्ते । अत्रैव दोषस्वरूपस्य गुणादिस्वरूपस्य च वर्णनमास्ते । अस्मिन्नेव परिच्छेदे काव्यप्रकाशकारस्य लक्षणस्य सुविस्तृतरूपेण खण्डनं कृतमास्ते । द्वितीयपरिच्छेदे वाक्यस्वरूपस्य, महावाक्यस्य, पदलक्षणस्य, अर्थवैविध्यस्य च वर्णनमास्ते । अनेन प्रकारेण वाक्यपदयोर्लक्षणानन्तरं शब्दस्याभिधालक्षणा व्यञ्जनानां विवेचनमास्ते । तात्पर्यस्यापि तथैव विवेचनमस्ति । तृतीयेपरिच्छेदे—रसस्वरूपस्य, स्वरूपकथनगर्भरसास्वादनप्रकारस्य, रसस्यानुकार्यगतत्वखण्डनस्य रसस्यानुकर्त्तृगतत्वखण्डनस्य च वर्णनमास्ते । एवंविध रसानां, भावानाम्, नायक-नायिकयोर्भेदानाञ्च विस्तरेण वर्णनकृतमास्ते । चतुर्थपरिच्छेदे—ध्वनिकाव्यस्य, गुणीभूतव्यङ्ग्यकाव्यस्य च विवेचनं कृतमास्ते । पञ्चमपरिच्छेदे—व्यञ्जनास्वरूपस्य, अभिधेयतो व्यञ्जनायाः पार्थक्ये हेतूनाम्, लक्षणायाः रसादिप्रतिपादनेऽक्षमत्वनिरूपणस्य, रसादिव्यङ्ग्यस्यानुमानेऽगतार्थत्वप्रतिपादनस्य, व्यञ्जनाया अर्थापत्तावन्तर्भावप्रदर्शनस्य च विवेचनं तथा व्यञ्जनावृत्तेः संस्थापनाया भ्रान्तानां युक्तीनाञ्च प्रदर्शनं कृतमास्ते । अत्र व्यञ्जनां नहि स्वीकुर्वताञ्चापि युक्तीनां खण्डनं कृतम् । षष्ठपरिच्छेदे नाटकस्य पूर्णतया विवेचनं कृतमास्ते । सप्तमे परिच्छेदे—काव्यदोषाणां सोदाहरणं निरूपणं विद्यते । अष्टमे परिच्छेदे—गुणानां वैशिष्ट्यम्, वैविध्यं च वर्णितमस्ति । नवमे परिच्छेदे—चतसृणां रीतीनां वर्णनं विवेचनञ्च कृतमास्ते । दशमे परिच्छेदे शब्दार्थालङ्काराणां विशदं विवेचनं कृतमास्ते ।

नाम्नोऽन्ते 'कविराज' इत्युपाधिना विभूषितोऽयं महापात्र विश्वनाथः । अत्र विचार्यते—'कवीनां राजा' कविराजः इति व्युत्पत्त्याऽऽस्य कविष्वपि प्रमुखप्रतिपादनपरत्वमेवाभिव्यनक्ति । अस्य विलक्षणकाव्यप्रतिभां परिलक्ष्यैव त्रिकलिङ्गेश्वरेण सुप्रीतमनसोपाधिरयं प्रादायीति—

**धम्मिले नवमल्लिकासमुदयो हस्तेसिताम्भोरुहे-**
**हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः ।**
**एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्त्तिराशिर्ययौ-**
**नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे ॥**

'कविराजपदं' वैद्यजातिविशेषबोधकपदमपि नाङ्गीकरणीयम् ।

काव्यप्रकाशदर्पणे विश्वनाथपितामहनारायणनाम्नोऽन्ते दासपदोपलम्भात् साहित्यदर्पणादिषु विश्वनाथनाम्नोऽन्ते तदनुपलम्भात् न शङ्कनीयो व्यक्तिभेदः । यतः विश्वनाथात्मजस्यैवानन्तदासेति नामोपलम्भात् । काव्यप्रकाशदर्पणे तु विश्वनाथनाम्नि 'सङ्गीतविद्याविद्याधर कलाविद्यामालतीमधुकरविविधविद्या विद्यार्णवकर्णधार' इत्युपाधिरस्य महानुभावस्यास्ति । चन्द्रकलानाटिकायां तु 'नाट्यशास्त्र दीक्षागुरुः' अस्य महानुभावस्येत्यप्युपाधिरस्ति । मुख्यमन्त्रिस्वपदद्योतनाय 'सान्धिविग्रहिकः' इत्यविशेषणास्य विदुषः आसीत् ।

अयं हि धीरधुरीणः सर्वतन्त्रस्वतन्त्रो विशालबुद्धिवैभवो विश्वनाथकविराजो न केवलं संस्कृतभाषामेवनाऽपि वा द्वित्राः भाषाः, अपितु अष्टादशाऽपि भाषास्तथा ज्ञातवान् यथा तासु तास्वपि भाषासु रमणीयान् गुणालङ्कारयुतान् भाषा पाठावबोधकप्रबन्धान् रचयितुं समर्थो बभूव । अतएव 'अष्टादशभाषावारविलासिनी भुजङ्ग' इति विशेषणेन संस्तूयते विद्वद्वरैः । तत्र प्राकृतशौरसेन्यादि विविधभाषाप्रकर्ष-पाण्डित्यद्योतकमेकमेवपद्यं पुरस्तात्स्थाप्यते—

**मञ्जुलमणिमञ्जीरे कलगम्भीरेविशालसरसीतीरे ।**
**विरसासिकेलिकीरे किमालि! धीरे च गन्धसमीरे ॥**

अत्र संस्कृत-प्राकृतिक-शौरसेनी-प्राच्यावन्ती-नागरापभ्रंशेषु एकविधमेव । षोडश भाषाविनिर्मितकरम्भकं 'प्रशस्तिरत्नावलि' नामकं काव्यमेतद्रचितं सर्वतोमुखीनं पाण्डित्यमवगमयति । राघवविलासादिकाव्यनाटकग्रन्थाः असाधारणं पाण्डित्यं एतस्य प्रत्यायवन्त्येव । किं बहुना, न केवलं भाषापाण्डित्यमेव दृश्यते । अपितु शास्त्रीय प्रबन्धादिनिर्माणमपि तथैव । अतिगहनव्याकरणदर्शनादितत्तच्छास्त्राणां प्रकर्ष पाण्डित्यस्य परिचायकः शास्त्रीयप्रबन्ध साहित्यदर्पण एव दर्शनीयोऽस्ति ।

**अथास्य पण्डितविश्वनाथस्य समयनिरूपणम्**

कविपुंगवस्य विश्वनाथस्य यद्यपि जन्म समयादिनिरूपणे स्फुटतरं तादृशं किमपि प्रमाणं नोपलभ्यते तथापि तन्निरूपणं नातिकठिनमिव प्रतिभाति । सौभाग्येन कतिपयान्येवंविधानि तथ्यानि सन्ति यस्याधारोपरि अस्य कालनिर्धारणं कर्त्तुं शक्यते । तथाहि पूर्वोक्तदिशाचायं विद्वद्विभूतेमम्मटादर्वाचीनः पण्डितराजजगन्ना- थकृतरम्पगङ्गा-धरोद्धृतेन—

**'यत्तुरसवदेवकाव्यमिति साहित्यदर्पणे निर्णीतं तन्न'**

इतिपंक्त्यंशेन पण्डितराजात् प्राचीन इति निश्चप्रचम् । अनयोर्मध्येकः काल इति विचिकित्सायां चतुर्दशख्रीष्टाब्दा (१४०० ई०) पूर्वभाग एव पर्यालोचनेन निर्णीतो-भवति तथाहि साहित्यदर्पणस्य चतुर्थपरिच्छेदे यवनाधिपतेरलाउद्दीनस्य स्मारकः—

**सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः ।**
**अल्लावुद्दीन नृपतौ न सन्धिर्न च विग्रहः ॥**

इतिश्लोकोऽपि प्रमाणयति । स च यवनाधिपतिः 'सुलतान अलाउद्दीन मुहम्मदखिलजी' इत्यभिधेयेन तत्समये प्रसिद्ध आसीत् । तदायं खिलजी गौड़देशमाक्रम्य तत्रत्यं भुवं शशास । तदनन्तरं केनचित्प्रच्छत्रपुरुषेण ख्रीष्टाब्दीय षोडशाधिकत्रयोदशशतके (१३१६) वर्षे विषप्रयोगेण चायं यवनाधिपतिर्व्यापादितः । अस्यैव विश्वनाथस्य 'नरसिंहविजयाख्यम्' खण्डकाव्यमेकमस्ति । तत्रत्यमेकं पद्यमिदमस्ति—

**आहवे जगदुदण्डराजमण्डलराहवे ।**
**श्रीनृसिंहमहीपाल! स्वस्त्यस्तु तववाहवे ॥**

नरसिंहनामनोभानुदेवनामानश्च बहवोभूपतयः उत्कलराज्यसिंहासनमलञ्चक्रुः । नरसिंहाख्य नृपतेरेव सान्धिविग्रहिको विश्वनाथस्तथा तत्पितामहोनारायणदासः मुख्य सभास्थः आसीत् । तत्रैको नरसिंहः सप्तदशोत्तरद्वादशशतक वत्सरे (१२१७) तद्देशराज्यसिंहासनमलञ्चकार ।

द्वितीयो नरसिंहः षडधिकत्रयोदशवत्सरे (१३०६) राज्यसिंहासनमारुरोह । एवञ्च द्वितीयो यो नरसिंहस्तमधिकृत्यैव विश्वनाथेन खण्डकाव्यं लिखितमिति निर्णयन्त्यैतिहासिकाः । त्रयोदशशतकात्पूर्वं स्थितो यो नरसिंहस्तस्यैव सभापण्डितो विश्वनाथपितामहो नारायणदासः आसीत् । विश्वनाथपिता चन्द्रशेखरो हि भानुदेवनृपतेः सान्धिविग्रहिक आसीदिति साहित्यदर्पणस्य द्वितीयपरिच्छेदोक्तेनावगम्यते । अभिधामूलाव्यञ्जना प्रसङ्गे यथा—

**'यथा मम तातपादानां महापात्र चतुर्दशभाषाविलासिनी भुजङ्गमहाकवीश्वर श्री चन्द्रशेखर सान्धिविग्रहिकाणाम्—**

**दुर्गालङ्घितविग्रहोमनसिजं संमीलयंस्तेजसा ।**
**प्रोद्यद्भाजकलो गृहीतगरिमा विष्वग्वृतोम्भोगिभिः ॥**
**नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन् ।**
**गामाक्रम्यविभूतिभूषित तनूं राजत्युमाबल्लभः ॥**

अत्र प्रकरणेनाभिधया उमाबल्लभ शब्दस्योमानाम्नी महादेवीबल्लभ भानुदेवनृपति रूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीबल्लभरूपोर्थो बोध्यते ।' (सा०द० द्वि०प० पृ० ५९-६०) । अत्र भानुदेव नृपतेः प्राकरिकत्वात् तस्यैवराज्ञः प्रशस्तिपरमिदं पद्यम् । द्वितीय नरसिंहात्मजो निःशङ्कोपाधिको भानुदेवभूपतिर्विश्वनाथपरिपोषकः आसीत् । प्रथमञ्च यदा नरसिंहोराजा तदा खिलजीगौड़देशमधिकृत्य यः समासीत् सः पूर्वोक्त राज्ञः प्रतिपक्षी । निःशङ्कोपाधिना भानुदेवभूपतिनैव 'गयासउद्दीन' यवनाधिपतिः पराजितस्तत्समये स एव गौड़ेन्द्र आसीत् । गौडेन्द्रविजयं लक्षीकृत्यैव **'राजागौड़ेन्द्रं कण्टकं शोधयति'** इति तत्सामयिक प्रवादः प्रसिद्धत्वमुपगतः । कलिङ्गनृपतेः निःशङ्कोपाधिकस्य भानुदेवस्य गौडेन्द्रविजयं लक्ष्यीकृत्यैव हि 'कलिङ्गः साहसिकः' इत्यपि प्रवादः तदाप्रभृतितः प्रचलितः ।

कुमारस्वामीकृत प्रतापरुद्रीय ग्रन्थस्य रत्नापणाख्यां टीकायां साहित्यदर्पणस्योल्लेखोऽस्ति । पञ्चदशशतके समुत्पन्नो सुप्रसिद्धटीकाकारस्य मल्लिनाथस्यायमात्मजः कुमारस्वामी आसीत् ।

इत्थञ्च यदि निष्कर्षरूपेण विविच्यते तदा एकादशत्रयोदशशताब्दी सम्भूताः मम्मट-श्रीहर्ष-जयदेवप्रभृतयस्तथा तेषां वाक्यानि साहित्यदर्पणे स्पष्टमेवोद्धृतानि सन्ति । एवञ्च पञ्चदशशतकसमुद्भूतेन काव्यप्रकाशदीपककृता गोविन्दठक्कुरेण **'तददोषौ शब्दार्थौ'** इति विवरणावसरे 'अर्वाचीनास्तु' इत्यादिना विश्वनाथमतमेवो पस्थापितम् । पञ्चदशशताब्द्याः प्रारम्भकाले समुद्भूतेन कुमारपालेन नामोल्लेखन पूर्वकं साहित्यदर्पणात्पाठः समुद्धृतः । १६२८ खीष्ट्राब्दीयतः १६५७ खीष्ट्राब्दं यावत् 'शाहजहाँ'

भारतीय राज्य सिंहासनेऽधिष्ठितः आसीत् । 'शाहजहाँ' पुत्रस्य 'दारा'ऽभिधानस्य जगदाभरणे प्रशस्तिमुपनिबद्धवतां रसगङ्गाधरकृता **'यत्तुरसवदेव काव्यमिति निर्णीतं तत्र'** इत्यादिना विश्वनाथ एव परिगृहीतः । तथा सति निश्चप्रचमेन यच्चतुर्दशशताब्द्याः पूर्वभागे विश्वनाथकविराजोऽभूदिति ।



## भानुदत्तस्य परिचयः

रसमञ्जर्याः प्रणेता भानुदत्तो नायक-नायिकयोः भेदविषयकस्य सर्वाधिक वृहदाकारस्य ग्रन्थस्य प्रणयनमकरोत् । अस्यैव ग्रन्थस्य संक्षिप्तं विवरणं भानुदत्तो रसतरङ्गिण्यां प्रस्तुतवान् । रसतरङ्गिण्यां रसभावयोरेव विस्तृतं वर्णनमास्ते । रसमञ्जर्याः अन्तिमे श्लोकेऽयमात्मानं 'विदेहभूः' इति शब्देनाभिधत्ते । अतोऽयं गङ्गातटीय विदेह नाम्नः ग्रामस्य निवासी आसीत् । अनेन निश्चीयते यदयं मैथिल ब्राह्मणः आसीत् । अस्य च पितुर्नाम गणेश्वर आसीत् । तद्यथा—

**तातो यस्य गणेश्वरः कविकुलालङ्कारचूडामणिः ।**
**देशो यस्य विदेहभूः सुरसरित् कल्लोलकीर्त्यायुतः ॥**

वर्नेलकृत तञ्जोरनगरस्य ग्रन्थसूच्यां स्पष्टरूपेण लिखितमस्ति यदयं भानुदत्तः मैथिलब्राह्मणः आसीत् । 'इण्डिया आफिस' नाम्नः कार्यालये सुरक्षितैका हस्तलिखिता पाण्डुलिपिरस्ति । एकलिङ्गस्य हस्तलिपिसूच्यां (भा० ३. सं० १२११, पृ० ३५३) रसमञ्जर्याः हस्तलिप्याङ्ग लिखितमस्ति—'मैथिलश्रीगणनाथसन्मिश्रकृत'—इत्यादि ।

कतिपयानपवादान् विहायोभयोः ग्रन्थयोः सर्वाण्युदाहरणानिभानुदत्त रचितान्येवसन्ति । तेन स्वयमेवोक्तम्—

**अवगाहस्वनादेविदिव्यां रसतरंगिणीम् ।**
**अस्मत्पद्येनपद्येन रचय श्रुतिभूषणम् ॥ (रसत० ८. २९)**

तथा—

**पद्येन स्वकृतेन तेन कविना श्रीभानुना योजितः ।'**

(रसमत्र्याश्चान्तिमः श्लोकोऽस्ति)

'रसतरङ्गिणी' अष्टसु तरङ्गेषु विभक्ताः सन्ति । प्रथमे तरङ्गे श्रीकृष्णभक्ति-सम्बन्धिनः मङ्गलाचरणम्, सम्बद्धविषयाणां परिभाषा, भावस्य स्थायिभावस्य च भेदोपभेदानां वर्णनमस्ति । २. द्वितीयतरङ्गे विभावस्य परिभाषा तथा तस्य भेदः ३. तृतीयतरङ्गे कटाक्षादि अनुभावस्य विश्लेषणमस्ति । ४. चतुर्थतरङ्गे स्तम्भ-स्वेदरोमाञ्चादि अष्टानां सात्विकभावनां वर्णनमस्ति । ५. पञ्चमे तरङ्गे—व्यभिचारि-

भावानां विवेचनमस्ति । ६. रसानां शृङ्गारादीनाञ्च विस्तृतविवेचनकृतमास्ते । ७. सप्तमे तरङ्गे हास्यरसस्य तथान्येषां रसनां च वर्णनम् । अष्टमे तरङ्गेऽष्ट प्रकारकाणां व्यभिचारिभावानां, विंशतिप्रकाराणां व्यभिचारिभावनां, अष्टानां रसानाञ्च वर्णनमस्ति । अस्मिन् ग्रन्थे रसस्य विस्तृतं वर्णनं वर्त्तते । अत्र भावानां, विभावानाम्, अनुभावानाम्, सात्विकभावानाम्, व्यभिचारिभावानाम्, शृङ्गार रसस्य, शृङ्गारव्यतिरिक्तरसस्य, रसादुत्पन्नानां दृष्टीनाञ्च वर्णनमास्ते ।

भानुदत्तस्य रसमञ्जरी सर्वाधिकं प्रख्याता वर्त्तते । अस्यां नायिकानां विभेदानां साङ्गोपाङ्गं वर्णनमस्ति । ग्रन्थस्याधिके भागे नायिकानामेव वर्णनं विद्यते शेषभागे नायकानां भेदास्तेषां मित्राणि, अष्टप्रकारकाः सात्विका भावाः, शृङ्गारस्य भेदद्वयम्, विप्रलम्भस्यावस्थाः, दशसंख्याकाश्च वर्णिताः सन्ति । रसमञ्जर्याः एकादशसंख्यकाः व्याख्याः समुपलभ्यन्ते । अत एवास्य ग्रन्थस्य लोकप्रियत्वमपि प्रख्यातं भवति । तासु द्वे प्रख्याते टीके स्तः ।

१. अनन्तपण्डितकृता व्यङ्ग्यार्थकौमुदी

२. नागेशभट्टकृतः प्रकाशश्चेति ।

अस्य द्वितीयः प्रमुखोग्रन्थो रसतरङ्गिणी एवास्ति । रसमञ्जरी रसतरङ्गिणीतः किञ्चित् लघुकायग्रन्थोऽस्ति तथाऽस्य विवेच्य विषयोऽपि भिन्न एवास्ति ।

रसतरङ्गिण्यां भरत-भानुदत्तयोः पितुरुद्धरणान्यपि समायान्ति । (१६,८१, १४१,१६८ पृष्ठे द्रष्टव्यः) । द्वयोरपि ग्रन्थयोरमरूशतकादुद्धरणानि मिलन्ति । 'ताम्बुलाहुरणच्छलेन इत्यादि, श्लो० सं० १८, रसतरङ्गिण्यां १०९ पृष्ठे, 'प्रस्थानं बलयैः कृतमित्यादि, श्लो० सं० ३५, रसमञ्जर्यां १८३ पृष्ठे दर्शनीयः । एतेषामुल्लेखः प्राचीनग्रन्थलेखनस्य स्वरूपे एव कृतोऽस्ति ।

भानुदत्तः उभयोर्ग्रन्थयोर्मध्ये प्राचीनानामुल्लेखोऽनेन प्रकारेण कृतवान्—पूर्वाचार्यः (रस० त० १७५ पृष्ठे), प्राचीनलिखितः (रसमं० ४३ पृष्ठे), पूर्वग्रन्थकारसम्मतिः (रसत० १६८ पृष्ठे), प्राचीनसम्मतिः (रसत० १७०, १८२ पृष्ठे) । अयं हि रसतरङ्गिण्यां रसरत्नदीपिकायाः २० पृष्ठे, तथा शृङ्गारतिलकस्य ६७ पृष्ठे उल्लेखः कृतवान् । रसमञ्जर्याः रचना रसतरङ्गिणीतः पूर्वमेवाऽभवत् । अनेन रसतरङ्गिण्यां १७७ पृष्ठे प्राचीनग्रन्थनाम्ना निम्नलिखितः श्लोको गृहीतः—

**अनौचित्यादृतेनान्यद्रसभङ्गस्य कारणम् ।**
**प्रसिद्धौचित्यवद्वस्तु रसहर्षाय जायते ॥**

श्लोकोऽयं ध्वन्यालोके १८० पृष्ठे तथा व्यक्तिविवेक ३१ पृष्ठे, प्रायः अनेनैव रूपेण मिलति ।

भानुदत्तस्य गीतगौरीशाभिधानादशसर्गेषु प्रविभक्ताः रचनागीति काव्यात्मिका वर्त्तते । आलङ्कारिक भानुदत्तस्य कवेर्भानुदत्तस्य चोभयोरेव पितुर्नाम गणेश्वर एवास्ति । काव्यमिदं जयदेवस्य गीतगोविन्दाभिधानस्य काव्यस्यानुकरणपरकमस्ति । रसमञ्जर्याः

कानिचन पद्यानि गीतगौरीशे समुपलभ्यन्ते । अतएवोभयोर्ग्रन्थकारयोरैक्यं प्रमाणयति । एतेनायमप्यर्थो सिद्ध्यति यत् भानुदत्तो जयदेवस्य पश्चाद्वर्त्ती विद्यते ।

एगलिङ्ग महोदयस्य सूचीग्रन्थे कुमार भार्गवाभिधानमेकमन्यमपि काव्यं मिलति (ग्र०सू० भाव० ७ पृ० १५४०-४१) । अस्मिन् ग्रन्थे कुमारकार्त्तिकेयस्य पराक्रमस्य वर्णनं कृतमास्ते । ग्रन्थेऽस्मिन् द्वादश उच्छ्वासाः सन्ति । ग्रन्थोऽयं गद्य-पद्य मिश्रितोऽस्ति । ग्रन्थेऽस्मिन् गन्थकर्त्तुर्वंशस्यानेन प्रकारेण परिचयो मिलति—रत्नेश्वरः, सुरेश्वरः, विश्वनाथः, रविनाथः, भवनाथः, महादेवः, गणपतिः, भानुदत्तश्चेति । प्रस्तावनायाः अष्टादशतमे श्लोके भानुदत्तस्य पूर्वजेन सुरेश्वरेण वेदान्तोपरि वार्त्तिकस्य रचनाकृतास्ति । किञ्च कथनमिदं सर्वथाऽसङ्गतमस्ति ।

सूचीग्रन्थेष्वपि भानुदत्तो मैथिलरूपेण परिगणितो वर्त्तते । भानुदत्तस्य जनकः गणेश्वरः सम्भवति कस्यापि राज्ञः अमात्यो भवति । अस्यैव गणेश्वर नाम्नोऽमात्यस्य पुत्रश्चण्डेश्वरो विवादरत्नाकरं प्रणैषीत् । अस्यैव चण्डेश्वरस्य १३५३ ईसवीये सुवर्णेन तुलादानमभूत् । अतएव भानुदत्तस्याप्ययमेव कालो भवितुमर्हति ।

भानुदत्तः स्वकीये ग्रन्थे शृङ्गारतिलकस्य दशरूपकस्य च निर्देशमकरोत् । गोपालाचार्यश्च १४२८ ईस्वीये वर्षे रसमर्यञ्जाः विकासाभिधायां टीकामलिखत् । एतेनायमर्थः स्पष्टोभवति यद्भानुदत्तस्त्रयोदश शताब्दस्यान्ते चतुर्दश शताब्दस्यादौ च बभूव ।

चित्रचन्द्रिकाऽपि भानुदत्तस्यैव रचनाऽस्ति (भा, २४ पृ० ९६) किञ्चात्रायं स्वपितुर्नाम्नस्तथा स्वकीयाभिधानस्य चर्चा नैव कृतवान् । अन्ते चायं लिखति—

**विबुधा पद्यसूत्रेण गुम्फितालङ्कृतिर्मया,**
**सूत्रभङ्गोयथा न स्यात् एतस्याः कलयेत्तव्या ।**

अनेन सङ्केतोमिलति यदेतान्युदाहरणानि लेखकस्य स्वकृतान्येव सन्ति । भानुदत्तेन सरस्वतीकण्ठाभरणस्य, काव्यप्रकाशस्य, गीतगोविन्दस्य चोल्लेखः कृतोऽस्ति, तेनास्य समयः १२५० ख्रीष्टाब्दात्पूर्वं भवितुं न शक्यते । स्टेवमहोदयस्य जम्मूनगरे निहितस्य हस्तलिखितप्रतीनां सूच्या प्रतीतोभवति यत् नृसिंहपुत्रेण गोपाल लिखितेन विकास अथवा विलासाख्यया रसमञ्जर्याः टीकायाः १४९४ ख्रीष्टाब्दोऽस्ति । रत्नापणस्य २८० पृष्ठे रसमञ्जर्याः मतस्योल्लेखः निम्न-प्रकारेणास्ति—'नायकयोर्निमित्ततो विप्रयोगः प्रणयमानापरपर्यायोः विरहविप्रलंभ इत्यर्थः । रसमञ्जर्यां परस्परमाज्ञोल्लङ्घनं प्रणयमान इति ।' अनेनोद्धरणेन प्रमाणितोभवति यद्भानुदत्तस्य समयः १२५० ख्रीष्टाब्दात् १५०० ख्रीष्टाब्दयोपर्यन्तमध्येऽर्थात् त्रयोदश ख्रीष्टाब्दस्यान्ते चतुर्दश ख्रीष्टाब्दस्य चादौ बभूवेति ।

## रूपगोस्वामिनः भक्तिरसामृतसिन्धुरुज्ज्वलनीलमणिश्च

१४८६-१५३३ खीष्ट्राब्दे वङ्गप्रदेशे चैतन्यमहाप्रभुः प्रेम्नः रहस्यवादस्य च या भक्तिधारा प्रवाहयामास तासां वैष्णवकल्पनानां रसरूपेण विवेचनमनेके महापुरुषाः अकार्षुः । वैष्णवसम्प्रदाये भक्तेः रसरूपेण साधना क्रियते । तैः वैष्णवैः रसस्य विषयेऽनेकविधाः कल्पना कृता सन्ति । डॉ० डे. महोदयेन Vaishnava Faith and movement in Bengal" नाम्नः स्वग्रन्थेऽस्मिन् विषये विस्तृतविवेचनं सप्रमाणं समुपस्थापितम् । अस्मिन् विषयकेषु ग्रन्थकारेषु रूपगोस्वामिनः सर्वोत्कृष्टं स्थानमास्ते । अय हि रूपगोस्वामी चैतन्यमहाप्रभोः साक्षात् शिष्य आसीत् । अयं हि वैष्णवभक्तिधारया प्रभावितोभूत्वा भक्तिरसामृतसिन्धोस्तथा उज्ज्वलनीलमणेश्च रचना कृतवान् । तथाऽनेनास्मिन् रस सिद्धान्तस्य शब्दावल्यां तथाऽऽवरणे च कृष्णोपरि आधारितस्य भक्तिसिद्धान्तस्य स्थापनाकृता । स्वकीयधर्मानुरागं तथा स्वचिन्त्याध्यात्मिकरहस्यवादञ्च लौकिकप्रेम्णश्ततया सांसारिकस्पृहास्वरूपे व्यक्तं कृतवानयं हि विद्वान्। रूपगोस्वामिनः भ्रातृजः बल्लभस्य पुत्रः जीवगोस्वामी कृत लोचनरोचनीनाम्ना तथा विश्वनाथचक्रवर्तिनकृत आनन्दचन्द्रिका नाम्ना टीकयासह 'उज्ज्वलनीलमणिः' १९३२ खीष्ट्राब्दे काव्यमाला सीरीज-संस्थातः प्रकाशितोऽभवत् । अस्य संस्करणस्यान्तिमः श्लोकः अनेन प्रकारेणास्ति—

**अयमुज्ज्वलनीलमणिगहनमहोघोषसागरप्रभवः ।**
**भजतु तेव मकरकुण्डल परिसर सेवोचितीं देव ॥**

अयं हि रूपगोस्वामी मुकुन्दस्य पौत्रः कुमारस्य च पुत्र आसीत् । अस्य अलङ्कारविषयकाः त्रयो ग्रन्थाः प्रकाशिताः सन्ति—१. नाटकचन्द्रिका २. भक्तिरसामृतसिन्धुः ३. उज्ज्वलनीलमणिश्चेति । तत्र उज्ज्वलनीलमणिः नामकोऽयं ग्रन्थमूलतः भक्तिरसामृतसिन्धुग्रन्थस्य पूरकरूपेणास्ति । अत्रोज्ज्वलशब्दस्यार्थः शृङ्गारो वर्त्तते । अतएव मधुरशृङ्गाररसस्य विस्तृतविवेचनार्थः ग्रन्थोऽयं प्रणीतोवर्त्तते । पूर्वोक्तश्लोकेऽपि 'उज्ज्वलनीलमणिः' शब्दस्य सङ्केतः अनया रचनया तथा श्रीकृष्णेन सहास्ति । यतोहि श्रीकृष्णः शृङ्गारस्य साक्षांदवतारोऽस्ति । अस्योल्लेखः घननीलनाम्ना कृतोभवति । उज्जलः शृङ्गाररस एव नीलमणिः ...गहनप्रभवः' इत्यनेन श्लोकेनाऽप्यस्यैवार्थस्य समर्थनोभवति । पूर्वलिखितभक्तिरसामृतनाम्नः ग्रन्थादेवायं 'उज्ज्वलनीलमणिः' नाम्नः ग्रन्थः समुत्पन्नोऽस्ति । जीवगोस्वामीस्वकीयटीकाप्रस्तावनायाः द्वितीयश्लोके निजमन्तव्यं स्पष्टतया निम्नरूपेण लिलेख—'पुरा संक्षेपेणोदिनत्वे ह्येते रतिरहस्यत्वादिति निवृत्तानां लौकिकादुज्ज्वलाख्य रसात्तत्साम्यम् । ...तथा भागवते ये केचित् तस्मिन् बहुमानिनोऽपि तात्पर्यालोचनायां न चतुरास्तैरपि दुरुहोऽयं रस इति तेभ्योऽपि गोप्य एव कार्यः किमुत विषयेभ्यः इति रहस्यमेवात्र मुख्यो हेतुरिति भावः । अत्र तु विस्तरेण वचने हेतुः रहस्यत्वादित्येव । कालदेशपात्रविशेषसम्बन्धेन रहस्यत्वं प्राप्येत्यर्थः । ल्यब्लोपे पञ्चमीस्यात् । यद्वा पृथगित्यनेनैव रहस्य इति व्यज्ज्यते तस्मादग्रन्थान्तरवद्यत्र कुत्रचित्रायं प्रकाशनीय इत्युपदिष्टम् ।'

विश्वनाथचक्रवर्त्तिनकृत उज्ज्वलनीलमणेः टीका आनन्दचन्द्रिकायाः रचना वृन्दावने १६१८ शकाब्देऽभवत् । अस्याः टीकायाः प्रथमः श्लोकोऽनेन प्रकारेणास्ति—

**नामाकृष्टरसज्ञः शीलनोद्दीपयन् सदानन्दम् ।**
**निजरूपोत्सवदायी सनातनात्मा प्रभुर्जयति ॥**

अत्र सनातनशब्दस्य प्रयोगः श्रीकृष्णाय तथारूपगोस्वामिनः भ्रात्रे कृतोऽस्ति । द्वितीये-श्लोकेऽनेन कथितं यत् भक्तिरसामृतसिन्धौ भक्तिरसस्य संक्षिप्तेन विवेचनं कृतमासीत् । यतो ह्यस्य विषयः गूढरहस्यमयोऽस्ति । किञ्चोज्ज्वलनीलमणौ विषयस्यास्य विस्तृतेन विवेचनमस्ति । भक्तिरसस्य स्थायीभावः मधुराररतिरस्ति । यदेयं रतिः विभावादिभिः आस्वादयोग्योभवति तदा 'मधुर इति व्यज्यते ।'

**वक्षमाणैर्विभावाद्यै स्वाद्यतां मधुरारतिः ।**
**नीताभक्तिरसः प्रोक्तो मधुराख्यो मनीषिभिः ॥**

अस्मिन् प्रसङ्गे भरतेनाऽपि स्वनाट्यशास्त्रे उक्तम्—'शृङ्गारोनाम रतिरस्थायिभाव-प्रभव उज्ज्वलवेषात्मकः । यथा यत्किञ्चिल्लोके शुचिमेध्यं वर्णनीयं वा तच्छृङ्गारेणानुमीयते । यस्तावदुज्ज्वलवेषः स शृङ्गारवानित्युच्यते । ...तदेवमेव गुर्वाचारसिद्धो हृद्योज्ज्वलवेषात्मकः शृङ्गारोरसः ।' (ना० शा० ६, पद्य० ५०, ३०१-२ पृष्ठे) । उज्ज्वलनीलमणौ स्थायिभावप्रकरणे ग्रन्थकारेणोक्तम्—स्नेह-मान-प्रणयादिषट्भावनां प्रेम्णः लीलाः सन्ति एतेषां तुलना गुड़खण्डादिभिः करणीया । तद्यथा—

**बीजभिक्षुः स च रसः सगुडः खण्ड एव सः ।**
**स शर्करा सिता सा च सा यथास्यात् सितोपला ।**
**अतः प्रेमविलासाः स्युर्भावाः स्नेहादयस्तु षट् ॥**
(उ० नी० म० स्था० भा० प्र० श्लो० ५४-५५, ४१७ पृष्ठे)

अनेन प्रकारेणस्मिन् संसारे यत्किञ्चित् पवित्रं, शुद्धं, नयनाकर्षकमस्ति तच्छृङ्गारस्यैव द्योतकं भवति । अत एव मधुरशृङ्गार रसस्य विस्तृतविवेचनायै ग्रन्थोऽयं प्रणीतो भवति । अस्मिन् ग्रन्थे क्रमशः नायकानाम्, नायकस्य सहायकानाम्, हरिप्रियायाः राधायाः, नायिकायाः, गुणैश्वर्याः, भेदानाम्, दूतीनां प्रकाराणां सखीनां वर्णनानन्तरं, कृष्णसखानाञ्च वर्णनं विद्यते ।

एतदनन्तरं मधुररसोद्दीपनस्य अनुभावनाम्, सात्विकभावानाम्, व्यभिचारिणां स्थायिनाञ्च विस्तृतं वर्णनं कृत्वा सम्भोगविप्रलम्भयोः उभयप्रकारकयोः शृङ्गारयोः वर्णनं विद्यते । इत्थं ग्रन्थोऽयं रसराजस्य भक्तिरसस्य च विवेचनायाः विशालोग्रन्थो वर्त्तते । भक्तिसाहित्ययोरुभयो दृष्ट्या ग्रन्थोऽयं श्लाघनीयोऽस्ति ।

रूपगोस्वामिनः मतौ यमनुरागमनुचितं वा गुप्तप्रेम इति कथित्वा सामान्यतः जना तिरस्कुर्वन्ति, तत्तु शृङ्गारस्य चरमकोटिरस्ति । साधारणजनाय एवं विधं प्रेम वर्जनीयमस्ति किञ्च पूर्णावताराय श्रीकृष्णचन्द्राय इदं प्रेम वर्जनीयं नास्ति । यतोऽयं स्वभक्ताय प्रेमरसस्य आस्वादं प्रदातुमेवावतारं गृहीतवान् । यथा—

अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः । 'तथा च मुक्तिबहुवार्य' ते यतः खलु यत्र प्रच्छत्र कामुकत्वं च । या च मिथो दुर्लभता सा परमा मन्मथस्य रतिः । लघुत्वमत्र यत्प्रोक्तं तत्तु प्राकृतनायिके । न कृष्णे रसनिर्यास स्वादार्थं भवत्तारिणी ।'

(उज्ज्वल० १-१६-१८, पृष्ठे १४-१५)

भागवते श्लोकोऽयमस्ति—

**धर्मव्यतिक्रमो दृष्ट ईश्वराणाञ्च साहसम् ।**
**तेजोवतां न दोषाय वह्नेः सर्वभुजो यथा ॥**
**न तत्समाचरेज्जातुमनसाऽपि ह्यनीश्वरः ।**
**विनश्यत्याचरन् मौढ्यात् यथारुद्रोविधजं विषम् ॥**

(भागवते १०-३३, ३०-३१)

उज्ज्वलनीलमणौ भागवतस्योल्लेखं कुर्वन् पूर्व प्रबोधमकार्षीत्—

**वर्त्तितव्यं शमिच्छद्भिर्भक्तवन्नतु कृष्णवत् ।**
**इत्येवं भक्तिशास्त्राणां तात्पर्यस्य विनिर्णयः ॥**
**रामादिवद्वर्त्तितव्यं न क्वचिद्रावणादिवत् ।**
**इत्येष मुक्तिधर्मादिपराणां नय इष्यते ॥'**

काव्शास्त्रीयान्य रचनातोऽस्य ग्रन्थस्य द्वे विशेषते स्तः ।

१. ग्रन्थेऽस्मिन् भक्तिरसस्य सविस्तरं वर्णनमभूत् ।

२. अस्य ग्रन्थस्य सर्वेषामुदाहरणानां सम्बन्धं श्रीकृष्णेन तथा तद्भक्तानां कार्येण तथा स्वभावेन सहास्ति ।

भक्तिरसामृतसिन्धुनाम्निग्रन्थेऽस्मिन् भक्तिरसस्य स्वरूपं विवेचितमास्ते । ग्रन्थोऽयं चैतन्यसम्प्रदाये धार्मिकसाहित्यिकाभ्यां दृष्टिभ्यामनुपमेयो वर्त्तते । ग्रन्थस्यास्य चत्वारो विभागाः सन्ति । पूर्वविभागः, दक्षिणविभागः, पश्चिमविभागः, उत्तरविभागश्चेति । प्रत्येकस्मिन् विभागे बह्व्योलहरिकाः सन्ति ।

तत्र प्रथमे विभागे भक्तेः सामान्यलक्षणस्य निर्देशानन्तरं भक्तेः साधनभक्ति-भावभक्ति-प्रेमाभक्ति-अभिधानवतां विशिष्टं वर्णनमास्ते ।

दक्षिणविभागे क्रमशः—विभावानुभावसात्विकभाव—व्यभिचारिभावानां स्थायिभावानां विभिन्नानां लहरिकानां वर्णनानन्तरं भक्तिरससामान्यं विवरणमास्ते ।

पश्चिमविभागे भक्तिरसस्य विशिष्टं वर्णनमास्ते । अत्र क्रमशः शान्तभक्तिरसस्य, प्रीतिभक्तिरसस्य, प्रेयोभक्तिरसस्य, वत्सल भक्तिरसस्य मधुरभक्तिरसस्य च विभिन्नासु लहरिकासु साङ्गोपाङ्गं वर्णनं विद्यते ।

रूपगोस्वाम्यनुसारेण मूलरसस्तु भक्तिरसस्य विद्यते, तद्व्यतिरिक्ताः रसास्तु तस्यैव, विकृतिभूताः सन्ति ।

उत्तरविभागे भक्तिरसव्यतिरिक्तानां रसनां वर्णनकृतमास्ते । ते च रसाः शृङ्गार-हास्य-करुण-रौद्र वीराद्भुतवीभत्स भयानकादिकाः सन्ति । ग्रन्थस्यान्ते रसानां परस्परं मैत्रीविरोधयोवर्णनं विद्यते । अस्य ग्रन्थस्य १५४१ इसवीयो वर्त्तते ।

रूपगोस्वामिना नाट्यशास्त्रोपरि ग्रन्थस्यापि रचनाकृतास्ति । अस्य ग्रन्थस्य नाम 'नाटकचन्द्रिकाऽस्ति । ग्रन्थोऽयं अष्टखण्डेषु विभक्ताः सन्ति । अस्मिन् ग्रन्थे नाटकस्य स्वरूपस्य पर्याप्तं विवेचनमास्ते । ग्रन्थारम्भे रूपगोस्वामी लिखति यदस्य ग्रन्थस्य रचनायैतेन भरतस्य नाट्यशास्त्रम्, शिङ्गभूपालस्य रसार्णवसुधाकरञ्चाधीतवान् । नाटकचन्द्रिकायाः विषयाः निम्नाङ्किताः सन्ति—नाटकस्य सामान्यं लक्षणम्, नायकवर्णनम्, रूपकाणामङ्गानि, सन्ध्यादिकानां प्रकाराः, अर्थोपक्षेपकस्य, विष्कम्भकादिकस्य च भेदाः, नाटकस्याङ्कानां दृश्यानां च विभाजनं, भाषाविधानम्, वृत्तिविचारः, रसानामनुसारेण तेषां प्रयोगश्च । अस्य ग्रन्थस्योदाहरणानि प्रायेण वैष्णवग्रन्थेभ्य एव स्वीकृतानि सन्ति ।

वृन्दावने गोस्वामिषु रूपगोस्वामी-जीवगोस्वामिनौ सुविख्यातौ स्तः । अनयोः परिवारः मूलतः कर्णाटवंशीयो ब्राह्मणः आसीत् । (See Chaitanya movement, by S.T. Kanedi, Oxford, University Press. 1925, P. 45-46) चतुर्दशखीष्ट्राब्दस्यान्तेऽयं बङ्गप्रदेशे समागतः । सनातनस्तल्लघु भ्रातरौ रूप-जीवौ चैतन्यमहाप्रभोः भक्ति-आन्दोलने सम्मिलितौ वभूवतुः । रूपगोस्वामी भक्तिरसामृतसिन्धौ तथा उज्ज्वलनीलमणौ भक्तिरसशास्त्रस्य व्यवस्थितस्वरूपं स्थापितवान् । जीवगोस्वामी च चैतन्यसम्प्रदायस्य दार्शनिकस्वरूपं व्यवस्थापितवान् (द्र० अफ्रेक्ट महोदयस्य ग्रन्थसूची, भा० १ पृ० ५२३) ।

रूप-जीव गोस्वामिनौ कालनिर्धारणे न किमपि काठिन्यं वर्त्तते । रूपगोस्वामी दानकेलिकौमुद्याः रचना १४९५ खीष्ट्राब्देऽकरोत् । विदग्धनाटकस्यान्ते लिखितेनैकेन श्लोकेन ज्ञातो—भवति यदस्य नाटकस्य रचनाकालः सम्वत् १५८९ अर्थात् १५३२-३३ खीष्ट्राब्देऽभवत् । यथा—

**नन्दसिन्धुरवाणेन्दु संख्येसम्वत्सरे गते ।**
**विदग्धमाधवं नामनाटकं गोकुले कृतम् ॥**

(द्र० का० मा० संस्करणे)

अनेनैव प्रकारेण 'उत्कलिकामञ्जर्याः रचना १५५० खीष्ट्राब्दे अर्थात् १४७१ शकाब्देऽभवत् । (मित्रा नोटिसेज, भा० ९, सं० ३१५९) भक्तिरसामृतसिन्धोः रचनाकालः १५४१-४२ खीष्ट्राब्दो वर्त्तते । अतः रूपगोस्वामिनः जीवनकालः प्रायः १४७०-१५५४ ई० स्वीकर्त्तव्यः ।



## केशवमिश्रः, तदीयः अलङ्कारशेखरः

केशवमिश्र रचितालङ्कारशेखरो नामग्रन्थोऽयं सर्वप्रथमकाव्यमालासीरीजतः प्रकाशितोऽभवत् । अस्य ग्रन्थस्य त्रयो भागाः सन्ति । कारिकाभागः, वृत्तिभागः, उदाहरणभागश्चेति । लेखकेन स्वयं कथितः यदस्य ग्रन्थस्य कारिकाः शौद्धोदनिकृता सन्ति तद्यथा—'अलङ्कारविद्यासूत्रकारोभगवान् शौद्धोदनिः परमकारुणिकः स्वशास्त्रे प्रवर्त्तयिष्यन् प्रथमं काव्यस्वरूपमाह' (पृ० २), श्रुतमेवान्यथाकारमक्षराणि कियन्त्यपि।' (पृ० ८३) । इदं कथितुं न शक्यते यदिदं लेखकस्यैवापरनाम शौद्धोदनिः आसीत्, अथवा कस्याऽप्यन्य बौद्धलेखकस्येति । अथवा केशवमिश्रः कस्यचन शौद्धोदनेः ग्रन्थमेवाधारीकृत्य स्वकारिकानां निर्माणमकरोत् । अयं हि लेखकः काव्यादर्श, काव्यप्रकाश-काव्य-मीमांसा-ध्वन्यालोक-वाग्भटालङ्कार-प्रभृतिभ्यो ग्रन्थेभ्यः सामग्र्याः सङ्कलनमकरोत् । सः श्रीपादनामकस्य कस्यचन आलङ्कारिकस्य निर्देशं करोति । किन्तु, श्रीपादस्यालङ्कारसाहित्ये कश्चनापि ग्रन्थो न हि लभ्यते । अयं कविकल्पलताकारस्यापि निर्देशं करोति । किन्त्वस्याः कविकल्पलतायाः लेखको न तु देवेश्वरो वर्त्तते न वामरचन्द्र इति ।

अस्मिन् अलङ्कारशेखरे अष्टौ रत्नानि सन्ति । विंशति मरीचयश्च सन्ति । अस्य ग्रन्थस्य विषयाः निम्नप्रकाराः सन्ति ।

प्रथमे मरीचौ—काव्यस्य परिभाषा, रसादिमद्वाक्यस्वरूपे, काव्यत्वस्य विवेचनम्, काव्य-हेतु-प्रतिभा व्युत्पत्यादीनां कथनम् ।

द्वितीय मरीचौ—रीतिनिरूपणम्-तिसृणां वैदर्भी-गौड़ी-मागधीरीतीनां विवेचनम्, उक्तेः मुद्रायाश्च विभिन्नप्रकाराः ।

तृतीय मरीचौ—शब्दानां तिस्रो वृत्तयः, लक्षणा-व्यञ्जनादि शब्दशक्तेर्विवेचनम् ।

चतुर्थे मरीचौ—पदस्याष्टानां दोषाणां वर्णनम्—तद्यथा श्रुतिक द्वादिकष्ट-अप्रयुक्त-संदिग्ध-व्यर्थ-अश्लील, अप्रतीति-असाधु-अवाचक-ग्राम्यादयोऽष्ट दोषाणां वर्णनमस्ति ।

पञ्चमे मरीचौ—वाक्यस्याष्टादशदोषाणां वर्णनमस्ति यथा न्यूनविसंधि-व्याकीर्ण-भग्न-भग्नयति-भग्नछन्द प्रभृतयः ।

षष्ठे मरीचौ—अर्थस्य अष्टानां दोषाणां वर्णनमस्ति । यथा-विरस-ग्राम्य-व्याहत-खिन्नता-हीनोपम-अधिकोपम-असदृशोपम-देशादिविरोधेत्यादयः ।

सप्तममरीचौ—शब्दस्य पञ्चगुणानां वर्णनम्—तद्यथा-संक्षेप-उदात्त-प्रसाद-उक्ति-समाधयः ।

अष्टममरीचौ—भाविकत्वम्, सुशब्दत्वम्, पर्यायोक्तिः, सुधर्मिताचेति अर्थस्यैतेषां चतुर्णां गुणानां वर्णनमस्ति ।

नवममरीचौ—दोषाणां गुणभाववर्णनमर्थात् वैशेषिकगुणस्य कथनम्, वैशेषिक-

गुणस्तु, पूर्वोक्ता एव दोषाः कतिपयेषु स्थलेषु गुणाः भवन्ति । अथवा ते दोषाः दोषाः नैव भवन्ति । पद-वाक्यार्थादीनां दोषाः अपि अवस्थाविशेषे गुणाः भवन्ति । तत्सम्बन्धीविस्तृतं विवेचनं सोदाहरणेनात्र प्रपञ्चितम् ।

दशममरीचौ—चित्र-वक्रोक्ति-अनुप्रास-गूढ-श्लेष-प्रहेलिका प्रश्नोत्तरयमकादीनामष्टानां शब्दालङ्काराणाम् वर्णनमस्ति ।

एकादशमरीचौ—अत्र तु उपमा-रूपक-उत्प्रेक्षा-समासोक्ति-अपह्नुति-समाहित-स्वभाव-विरोध-सार-दीपक-सहोक्ति-अन्यदेश-विशेषोक्ति-विभावनादीनां चतुर्दशार्थालङ्काराणां वर्णनमस्ति । एतेषामलङ्कारेषु अन्यदेशकः मम्मटस्या सङ्गत्यलङ्कारोऽस्ति । अत्रोपमायाः दशभेदानां चित्रणमस्ति ।

द्वादशे मरीचौ—अत्र रूपकस्योपभेदाः वर्णिताः सन्ति ।

त्रयोदशे मरीचौ—उत्प्रेक्षा समासोक्त्याद्यलङ्काराणां परिभाषा, तथा तेषामुदाहरणानि सन्ति । नायिकायाः नखशिखवर्णने प्रयोगा उपमानां सूची, यथा—कामिनी तस्याः आकृतिः, केश-शिर-भृकुट्यादि उपमानस्य वर्णनम् ।

**नायिकायाः** उपमानं यथा—चन्द्रकला-अम्बुज-विद्युत्-कनकलता-स्वर्णदीपादयः ।

**लावण्यस्य**—स्वर्ण-विद्युत्हरिद्रा-चम्पक-हेम-केतकीछटादयः । **कचस्य**—तम-शैवाल-भ्रमर-चामर-यमुना-वीचि-नीलकमलप्रभृतयः । **ललाटस्य**—अर्द्धचन्द्र-हेमपट्टिकादयः । **भृकुट्याः**—कामधनुः, वीच्यादनः । **कपोलयोः**—चन्द्रः, **मुखस्य**—चन्द्रमा-कमलप्रभृतयः । **नासिकायाः**—तिलप्रसूनादयः । कण्ठस्य—कम्बु । **नेत्रयोः**—मृग-मीन-खञ्जन-चकोरादयः । **अधरस्य**—प्रवाल-विम्बफलादयः। **दशनस्य**—मुक्तामाणिक्य-दाड़िमादयः । **वाण्याः**—वेणु-कोकिल-वीणाप्रभृतयः । **बाहोः**—विद्युत्-मृणालप्रभृतयः। **करयोः**—कमलनवपल्लवादयः । **नखस्य**—चन्द्रकला-कुन्दप्रभृतयः । **उरोजयोः**—बिल्बफल-कुम्भ-घट-प्रभृतयः । **नाभेः**—रसातल-आवर्त्तत्यादयः । **पृष्ठस्य**—कञ्चन-पटादयः । **कटिप्रदेशस्य** —सूच्यग्रय-सिंह-मुष्टिग्रात्मादयः । **जघनस्य**—पुलिन इव । **नितम्बस्य**—पीठप्रस्तरभूचक्र इवेति । **उरोः**—कस्किर-कदलीप्रभृतयः । **चरणयोः**—कमलपत्र-पद्म-प्रबालप्रभृतयः । अङ्गुलीयकनखानां—पूर्णचन्द्रः। **गतेः**—हंस-गजादयः। **कटाक्षस्य**—यमुनावीचि-भृङ्गावली-विष-अमृतादयः । **हास्यस्य**—ज्योत्स्ना-पुष्प-पीयूष-फेनादयः । **दर्शनस्य**—कमल-दर्शनादयः । **श्वासस्य**—सुरभिः । **नूपुरध्वनिः**—हंस-सारसादीनां शब्द इवेति ।

एतदतिरिक्तः 'कविकल्पलतास्तथागोवर्द्धननिर्दिष्ट अन्योपमानानां सङ्कलनं प्रस्तुतमस्ति । अस्य कथनस्य सम्पुष्ट्यर्थमुदाहरणं द्वयं दर्शनीयमत्र—

**रोचना स्वर्णविद्युद्भिः हरिद्राभिः वराटकैः ।**<br>
**चम्पकैः हेमकेतक्याः वर्ण्यते तत्तनोर्द्युतिः ॥**<br>
**तमः शैवाल पाथोद बर्हभ्रमर चामरैः ।**<br>
**यमुनावीचिनीलाश्म नीलाब्जाभ्रैः समः कचः ॥**

(अलङ्कारशेखरः १३. २-३)

चतुर्दशमरीचौ—नायकस्य वर्णने प्रयोगार्होपमानानां सूचीः—(अलङ्कारशेखर पृ० १४, १-५)

**नायकः**—सुपुष्टः, स्वस्थः, उन्नतशरीरम्, दीर्घबाहुः, लम्बकपाटः, नागराज-दण्डः, स्तम्भश्चेति । **वक्षः**—कपाटस्तथाशिलापट्ट इवेति । **स्कन्धः**—विशालः । शरीरस्य मध्यभागः—क्षीणः । **हृदयः**—स्त्रीणां स्तन इवातिस्वच्छः । **कान्तिः**—यथावसरः नायिकेवेति । **प्रतापः**—अग्निः, वज्रादिवत् । **कीर्त्तिः**—चन्द्रादिशुभ्र-वस्तूनीवातिस्वच्छः । एतदतिरिक्तः गज-सिंहादीनामिवगतिस्तथा व्याघ्र-पुङ्गववृषभ-सिंह-शार्दूलादिवदस्य श्रेष्ठत्वमपि वर्णनीयमस्ति ।

पञ्चदशमरीचौ—सादृश्यविधायकशब्दानां तथा कविसमयश्च निरूपणम् ।

षोडशे मयूखे—काव्ये वर्णनीयविषयाः—नृप-राज्ञी-देश-ग्राम-पुर-सरिता-सर-समुद्र-वन-उद्यान-पर्वत-प्रयाण-अश्व-गज-सूर्य-चन्द्रमा- विवाह-स्वयंम्वर-षड्ऋतु-प्रभृतयः । वर्ण्यपदार्थाः, यथा—सूर्यः

**सूर्यारुणतारविमणिचक्राम्बुज-पथिकलोचनप्रीतिः ।**
**तारेन्दुदीपकौषधिधूकतमयोर-कुलटातिः ॥**

(अलङ्कारशेखरे, पृ० ५९)

सप्तदशे मरीचौ १. वर्णः—श्वेत-नील-रक्तादयः । २. तेषां वर्णानां वर्ण्यपदार्थः = यथा-श्वेत-रक्तादयः ।

**श्वेतानि चन्द्रशक्राश्च शंभुनारदभार्गवाः ।**
**हलीशेषाहि शक्रेभौ सिंहसौधशरद्घनाः ॥**

(अलङ्कारशेखरे १७-६१ पृ०)

अष्टादशे मरीचौ—गतागतादि संस्कृत-प्राकृत ऐक्यतादि शब्दचमत्कारः प्रदर्शितः ।

ऊनविंशतितमे मरीचौ—समस्यापूर्त्तिविधिप्रदर्शनम् ।

विंशतितमे मरीचौ—रसप्रकरणम्, नायकादिनिर्देशः, अनुभावादि सङ्केतः ।

एकविंशतितमे मरीचौ—रसदोषादयः विवेचनम् ।

द्वाविंशतितमे मरीचौ—रसानामनुकूलवर्णानां निरूपणम् ।

उपर्युक्तविवरणेन स्पष्टोभवति यदलङ्कारशेखरोऽपि वर्णकसंस्कृत-काव्यशास्त्रात् प्रभावितोऽस्ति, तथाऽस्य विचारः अभिव्यक्तिदृष्ट्या स्पष्ट एवाऽस्ति ।

श्रीकेशवमिश्रः मिथिलानिवासी आसीत् । मिथिलाप्रदेशे तारसराय रेलवे स्टेशन समीपे जरहटियाख्ये ग्रामेऽयं जन्मलेभे । अस्य पिता मिथिलायाः सुप्रसिद्ध नैयायिकः शङ्करमिश्रस्तथा पितामहश्च मिथिलायाः प्रसिद्धमीमांसकः भवनाथमिश्रः आस्ताम् । अस्मिन्नेव 'जरहटिया' ग्रामे महाराज भैरवसिंह पुष्करिणी नामकं यज्ञमकरोत् । अस्मिन्नेव यज्ञे तत्कालीनाः १४०० मैथिलमीमांसकाः आमन्त्रिताः आसन् (विद्यापति

ठाकुरः पृ० १८३१, डा० उमेश मिश्रः) । यद्यपि महोदयस्यास्य प्रकाशिते साहित्येऽस्थानुवांशिक परिचयः सन्दिग्धोऽस्ति तथाऽपि दरभङ्गाराजकीय पुस्तकालये सुरक्षि हस्तलिखितपुस्तकानुसारेण मिथिलायाः प्रसिद्धमीमांसकः भवनाथमिश्रः अस्य पितामहः आसीत् । मिथिलायाः सुप्रसिद्धनैयायिकः श्रीशङ्करमिश्रस्यायं सुपुत्रः आसीत् । श्रीकेशवमिश्रस्य मातुर्नाम सुदामा आसीत् । द्रष्टव्यः—'काव्यप्रदीपः' ग्रन्थकारः—श्रीकेशवमिश्रः, लिपिकारः—हलधरमिश्रः, लिपिकालः १७८५ ई०, सङ्कलन सं० ६१, ह०लि०पृ०सं० ८१, प्रतिपंक्त्यक्षराणि प्रायः ३०, ग्रन्थस्याकारः ८' x ४' दशा—जीर्णः, भाषा—संस्कृतः, लिपि—मैथिली ।

अलङ्कारशेखरस्याद्यन्तयोः स्वयं लिखति केशवमिश्रः यत् धर्मचन्द्रस्य पुत्रस्य माणिक्यचन्द्रस्याग्रहानुसारेणायं ग्रन्थस्तेन लिखितः । धर्मचन्द्रो राज्ञो रामचन्द्रस्यात्मज आसीत् । सः कावुल (आधुनिक अफगान) देशस्य यवनराजानं परास्तं चकार । कनिङ्घमहोदयस्य मतानुसारेण काँनड़ा प्रदेशस्य राजा माणिक्यचन्द्रो धर्मचन्द्रस्यानन्तरं १५६३ इस्वीये राज्यमवाप्तवान् । सः दशवर्षाणि यावत् प्रशासनमकरोत् । अतएव केशवमिश्रस्य कालः षोडशशताब्दस्योत्तरार्द्धः प्रतीयते ।



## अप्पय्यदीक्षितस्य परिचयः

आचार्यः अप्पय्य वा अप्पयदीक्षितः तमिल ब्राह्मणः आसीत् । अयं हि विद्वान् दक्षिणभारतस्य ग्रन्थकारेष्वग्रगण्यो वर्त्तते । शताधिक ग्रन्थानां रचना कृताऽनेन विदुषा । विशेषरूपेणायं दर्शनशास्त्रस्य विशिष्टोविद्वान् वर्त्तते । अद्वैतवेदान्तस्य कल्पतरूपरिमलाभिख्यः सिद्धान्तलेशसंग्रहश्च प्रख्यातौ ग्रन्थौ वर्त्तेते । सिद्धान्तलेशः अद्वैतवेदान्तस्य केवलं सारभूतः सङ्ग्रहो नास्ति, अपित्वैतिहासिकतया दृष्ट्याऽप्ययमुपादेयो वर्त्तते । अयं शैवाचार्यस्य श्रीकण्ठस्य ब्रह्मसूत्रभाष्यस्य शिवार्कमणिदीपिकानाम्नी व्याख्यामकरोत् । अनेन विदुषा पूर्वमीमांसायाः अपि केचन् ग्रन्था निर्मिता अभूवन् । तेषु प्रख्याताः सन्ति—विधिरसायनम्, उपक्रम-पराक्रमः, वादनक्षत्रावली चित्रकूटश्चेति ।

अस्य लेखकस्य बहुविधानि नामानि समुपलब्धानि भवन्ति । तद्यथा—अप्पदीक्षितः, अप्पयदीक्षितः, अप्पय्यदीक्षितः, इत्यादयः । 'अप्पयः' इतिरूपाय रसगङ्गाधरस्य २१४ पृष्ठे द्रष्टव्यम् । चित्रमीमांसा-खण्डनस्य तृतीयप्रस्तावनात्मके श्लोके अप्पय्यनाम समायाति । छन्दसि नाम इदमावश्यकमप्यस्ति । तद्यथा—

**सूक्ष्मं विभाव्य मयका समुदीरितानामाप्पय्यदीक्षित कृताविहदूषणानाम्'**

(रसंगङ्गाधरस्य १२० पृष्ठे)

अस्मिन् प्रसङ्गेऽन्यदपि—

'यत्तु चित्रमीमांसायामप्यय्यदीक्षितैः' निशेषच्युति । इत्यादि (रसगङ्गाधरस्य ४७ पृष्ठे) कुवलयानन्दस्याप्यन्तिमे श्लोके (अमुं ...अप्पदीक्षितः) इत्येवं रूपं सामायाति । दीक्षितनाम्न्युपर्यपि जगन्नाथेनावाच्यविशेषणस्य यत्र तत्र प्रयोगः कृतोऽस्ति । तद्यथा 'दीर्घश्रवस' द्रविड़पुंगवादिविशेषणादीनां रसगङ्गाधरे प्रयोगो दर्शनीयोऽस्ति । अप्पय्यदीक्षितः भरद्वाजगोत्रस्य तमिलशैवः ब्राह्मणः आसीत् । शिवादित्यमणिदीपिकायाः प्रारम्भे समागतेन निम्नश्लोकेन ज्ञातोभवति यदयं परमशिवभक्तः आसीत् । यथा— **'यद्यप्यद्वैतएव श्रुतिशिखरगिरा भागमाना च निष्ठा ।... प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैस्तथैव ॥**

**तथाप्यनुग्रहादेव तरुणेन्दु शिखरामणेः ।**
**अद्वैतवासनापुंसामाविर्भवति नान्यथा ॥**

१६३७ खीष्टाब्दे रचितस्य नीलकण्ठविजयेऽस्योल्लेखः समायाति यदयं शताधिकग्रन्थस्य रचना कृतवान् ।

अप्पय्यदीक्षितस्य जगन्नाथेन कटु आलोचना कृताऽस्ति । कतिपयानां समालोचकानां कथनानुसारेण पण्डितराजजगन्नाथः दीक्षितमहोदयस्य समाकलिकः आसीत् । अनयोरुभयोर्मध्ये परस्परविसंवादः आसीत् । अस्य विसंवादस्य कारणमेतयोः कुलजातिगतवैमनस्योऽपि श्रूयते ।

अलङ्कारशास्त्रस्याप्पय्यदीक्षित प्रणीतास्त्रयो ग्रन्थाः निम्नाङ्कितास्सन्ति । वृत्तिवार्त्तिकम्, कुवलयानन्दः, चित्रमीमांसा चेति । एतेषु ग्रन्थेषु वृत्तिवार्त्तिकं सर्वप्रथममास्ते । तदनन्तरं चित्रमीमांसायाः रचना समजायत । सर्वस्यान्ते कुवलयानन्दस्याप्पय्यदीक्षितः प्रणयनमकरोत् ।

## १. वृत्तिवार्त्तिकम्

अयं शब्दवृत्तीनां विवेचने लिखिता अतीवलघुग्रन्थो वर्त्तते । अस्मिन् ग्रन्थे परिच्छेदद्वयं वर्त्तते । अत्राभिधाशक्तेः प्रकारत्रयस्य वर्णनमास्ते । तच्छक्तिस्तु—रूढिः, योगः, योगरूढिश्चेति । लक्षणाभेदाः, आदौ लक्षणाभेदा द्विविधाः—शुद्धा गौणी च । शुद्धापि द्विविधा—सारोपा, साध्यवसाना चेति पश्चात् लक्षणायाः भेदोपभेदानां वर्णनञ्चास्ति ।

## २. कुवलयानन्दः

अस्य लेखकस्य द्वितीयोग्रन्थः कुवलयानन्दः छात्राणामुपकारायालङ्कार ग्रन्थोऽस्ति। अस्मिन् ग्रन्थेऽलङ्काराणां मनोज्ञं वर्णनं वर्त्तते । ग्रन्थेऽस्मिन् चन्द्रालोकाल्लक्षणोदाहरणार्नि च संगृहीतानि सन्ति ।

**येषां चन्द्रालोके दृश्यन्ते लक्ष्लक्षणश्लोकाः ।**
**प्रायस्त एव च तेषामितरेषात्वभिनवा विरच्यन्ते ॥**

(कु० न० श्लो० ५)

अनेनास्य ग्रन्थस्य रचना राजावेङ्कटपतेराज्ञया कृताऽस्ति ।

**अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।**
**नियोगाद्वेङ्कटपतेः निरुपाधिकृपानिधेः ॥**

कुवलयानन्देऽयं स्वमतं तथाऽन्येषामुदाहरणानि च सङ्कलितानि । चन्द्रालोकस्य शतालङ्कारेषु पञ्चदशाधिकालङ्काराः संयोजिताः । कुवलयानन्दस्य निर्णयसागर संस्करणे चिरञ्जीव भट्टाचार्यकृता काव्यविलासादपि कतिपयाः शब्दालङ्काराः संग्रहीताः सन्ति । यद्यप्यस्य ग्रन्थस्योपजीव्यं जयदेवकृतचन्द्रालोक वर्त्तते तथाप्यस्य ग्रन्थस्य स्वकीयं महत्त्वमस्ति । ग्रन्थस्यान्ते चतुर्विंशति संख्याकानां नवीनानामलङ्काराणां कल्पनं तेषां निरूपणञ्चास्ति ।

यद्यपि ग्रन्थोऽयं नवीनोनास्ति तथापि अलङ्काराणां ज्ञानायातीवोपयोगी तु नूनमेव। इदमेवास्य लोकप्रियतायाः प्रयोजकम् । प्रायेणास्य ग्रन्थस्य प्रख्याताः नवसंख्याकाष्टीकाः समुपलभ्यन्ते । तास्वाशाधरस्य दीपिकाया वैद्यनाथस्य चालङ्कार-चन्द्रिकायाः असकृतप्रकाशनं जातम् । काश्या विश्वरूपयतेः शिष्यस्य, बाधूल वंशीयदेवसिंह सुमतेरात्मजस्य च गङ्गाधर बाजपेयिनोव्याख्यारसिकरञ्जिनी सर्वापेक्षया मूलानुगता प्रामाणिकी चाभाति ।

### ३. चित्रमीमांसा

अस्य तृतीयोग्रन्थः चित्रमीमांसाऽतीवमहत्त्वपूर्णः ग्रन्थोऽस्ति । प्रथमन्त्वस्मिन् ग्रन्थेऽलङ्कारलक्षणानां कारिकाः प्रदत्ताः सन्ति । तत्पश्चादन्येषां विदुषां मतानां गद्ये चर्चा कृताऽस्ति । अन्ते चावश्यकतानुसारेण खण्डन-मण्डनञ्चापि कृतम् । अत्र ग्रन्थकारेण ध्वनेः, गुणीभूतव्यङ्ग्यस्य, चित्रकाव्यस्य च भेदानां संक्षिप्तविवेचनं कृतम् । शब्दचित्रे रमणीयतायाः अभावत्वादेवार्थचित्रस्य विवेचनं कृतमनेन ।

ग्रन्थकारोऽयं द्वाविंशत्यलङ्काराणामाधारः उपमामेव मन्यते । अस्मिन् ग्रन्थे अतिशयोक्त्यलङ्कारपर्यन्तं वर्णनं वर्त्तते । अस्य ग्रन्थस्यान्ते विद्यमानाकारिका ग्रन्थस्यापूर्णतामेव सूचयति । तथा च कारिका—

**अप्यर्धचित्रमीमांसा न मुदेकस्य मांसला ।**
**अनूरुरिव घर्मांशोरर्धेन्दुरिव धूर्जटेः ॥**

जगन्नाथमुद्रिते चित्रमीमांसायामपह्नुत्यलङ्कारपर्यन्तमेव विवेचनमभवत् । 'अधिकं निदर्शनालङ्कार प्रकरणे चिन्तयिष्यते (चि०मी०पृ० १३१) । अनेन स्पष्टो भवति यदस्य ग्रन्थकारस्य मनसि एतदधिकस्याप्यलङ्काराणां विवेचनस्यापीच्छाऽऽसीत् । कुवलयानन्दं श्लेषस्यान्तेऽनेन प्रकारेणायं लिखति—एतद्विवेचनं तु चित्रमीमांसायां द्रष्टव्यम् ।' अस्योपरि वैद्यनाथस्यानेन प्रकारेण समीक्षा वर्त्तते—'यद्यप्युत्प्रेक्षाग्रन्थानन्तरं चित्रमीमांसा न क्वाऽपि दृश्यते' कतिपयैः प्रमाणैः विदितो भवति यदप्पय्यदीक्षितेन 'लक्षणरत्नावलिनामकस्यान्योऽपि ग्रन्थो लिखितः । तस्मिन् ग्रन्थेऽयं लेखकः नान्दी-सूत्रधार-पूर्वरङ्ग-प्रस्तावनादयः-नाटकस्य पारिभाषिक शब्दानां व्याख्या कृतवान्—द्र०जे० ओ०आर० मद्रास, भा० ४ पृ० २४२-२४४ ।

अप्पय्यदीक्षितेनैकावल्याः प्रतापरुद्रयशोभूषणस्य, अलङ्कारसर्वस्व-सञ्जीविन्याश्च स्वकीयग्रन्थे चर्चा कृताऽस्ति । अतोऽस्य समयः चतुर्दशशतकानन्तरमेव ज्ञातव्यम् । अप्पय्यस्य कालनिर्धारणे मतभिन्नता वर्त्तते । सामान्यतोऽस्य कालः खीष्ट्राब्दस्य १५५४ ई० तः खीष्ट्राब्दस्य १६२६ ई० पर्यन्तं स्वीक्रियते । (द्र० इ० आई० भा० १२, पृ० ३४० श्रीरङ्गाचार्य द्वितीयस्य ताम्रपत्रानुसारेण तञ्जोरनगरस्य नायक-वंशीय राजाशिवाप्पनायकस्यानुरोधेन विजयनगरस्य राजा श्रीरङ्गदेवरायः माधवाय (विजयेन्द्रतीर्थाय) अरमोलीमङ्गलं नामकं ग्रामं दाने अयच्छत् । अयमेव माधवः सन्यासग्रहणात्पूर्वं सुविख्यातोऽपय्यदीक्षितस्य मित्रमासीत् । अत्र ३४५ पृष्ठे अप्पय्यदीक्षितस्यात्मार्पणस्तुतिर्विषयेः लिखिताः निम्नलिखिताः श्लोकाः अपि द्रष्टव्या सन्ति—

**वीणातत्त्वज्ञसंख्यालसितकलिसमाभाक्प्रमादी च वर्षेकन्यामासेतु कृष्ण-प्रथमातिथियुतेऽप्युत्तर प्रोष्ठपादे । कन्यालग्नेऽद्रिकन्तापतिर्मितदया सेवधिर्वैदिकेषु श्रीगौर्यैर्प्राग्यिथाहस्मसमजनिविरिञ्चीशपुर्यां कलेशः ।**

**लग्ने रवीन्दुसुतयोर्मकरे च मान्यौ**
**मीनेराशिन्यथवृषेरविजे च राहौ ।**
**चात्रेगुरौक्षितेसुते मिथुने तुलायां**
**शुक्रे शिखिन्यलिगते शुभलग्न एवम् ॥'**

इयमप्पय्यदीक्षितस्य जन्मपत्रिकाऽस्ति । नीलकण्ठदीक्षितस्य शिवलीलार्णव काव्यानुसारेण (नीलकण्ठः अप्पय्यस्य कनिष्ठ भ्रातु अच्चनस्य पौत्रः आसीत्) अप्पय्यः ७२ वर्षपर्यन्तं जीवितमासीत् (१.६) **कालेन शंभुः किल तावतापि कलाश्चतुषष्टि मिताः प्रणिन्ये । द्वासप्ततिं प्राप्य समाप्रबन्धाच्छतं व्यधादप्पयदीक्षितेन्द्रः** । किञ्च तिथिरियं विवास्पदाऽस्ति । हल्शमहोदयस्य (South Indian Inscription Part I, Page 69 and 84) तदनुसारेण चित्रकोंड़ नगरस्य राजा वेङ्कटप्रथमस्य प्रेरणां प्राप्य कुवलयानन्दस्य रचना कृता तेन । वेङ्कटप्रथमस्य शिलालेखस्य कालः १५०८-१५३५ शकाब्दः, वा १५८६ खीष्ट्राब्दात् १६१३ खीष्ट्राब्दो वर्त्तते । अयमेव कालः अप्पय्यदीक्षितस्य मान्य कालो भवितुं शक्यते ।



## 'पण्डितराज जगन्नाथः, तदीयः रसगङ्गाधरश्च'

पण्डितराज जगन्नाथः सप्तदशखीष्टाब्दस्य मध्यभागे तैलङ्गदेशे (आधुनिक कर्णाटक प्रदेशे) समुत्पत्तिं लेभे । अयमान्ध्रवेगिनाड़िपरिवारस्य तैलङ्गो ब्राह्मणः आसीत् । अस्य पितुर्नाम पेरूभट्टोऽथवा पैरंभट्टः आसीत् । अस्य मातुर्नाम

लक्ष्मीदेव्यासीत् । यथा—

**तैलङ्गान्वय-मङ्गलालय-महालक्ष्मीदयालालितः**
**श्रीमद् पैरमभट्ट सूनुरनिशं विद्वल्ललाटं तपः ।**
**संतुष्टः कमताधिपस्य कवितामाकर्ण्य तद्वर्णनम्**
**श्रीमत्पण्डितराजपण्डित जगन्नाथो व्यधासीदिदम् ॥'**

(प्राणाभरणस्यान्तिमः श्लोकोऽयम्)

रसगङ्गाधरस्य प्रस्तावनात्मकश्लोके लिखितोऽयं पितुर्नाम पेरुभट्ट इति पण्डितराज अप्पयदीक्षितस्य समकालीनः आसीत् । अस्य पिता पेरुभट्टः वेदान्त-शास्त्रस्याध्ययनं ज्ञानेन्द्रभिक्षोः सविधे, न्यायवैशेषिकयोरध्ययनं महेन्द्रपण्डितस्य सविधे, पूर्वमीमांसायाः खण्डदेवस्य सविधे, व्याकरणस्य चाध्ययनं शेषवीरेश्वरस्य सविधे करोतिस्म । एतेषां समेषां विषयाणामध्ययनं पण्डितराजः स्वपितुः सविधे स्वपितुर्गुरोः वीरेश्वरस्य च सविधे अकार्षीत्—

**श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकल-ब्रह्मविद्या-प्रपञ्चः**
**काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।**
**देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमनीयं**
**शेषाङ्कप्राप्त शेषामलभणितिरभूत सर्वविद्याधरो यः ॥ २ ॥**
**पाषाणादपि पीयूषं स्यन्दते यस्य लीलया ।**
**तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ॥ ३ ॥**

तैलङ्गदेशावयवमुनगुण्डाभिध ग्रामवासी वेजनतीजातीयो जगन्नाथो गोदावरी मण्डलस्य भूषणमासीत् । तस्याभिजनं नाम 'उपद्रष्टा' इत्यासीत् । काव्यशास्त्रे पण्डितराजजगन्नाथस्य सर्वापेक्षयाऽधिका प्रख्यातिरास्ते । जगन्नाथः दिल्लीश्वरस्य भारतीय यवनशासकस्य शाहजहाँ नामकस्य सभायामासीत् । शाहजहाँनृपतेः पुत्रो दाराशिकोहाऽस्य पोषकः आसीत् ।

श्रूयते दिल्ल्याः 'शाहजहाँ' भारत-सम्राजा स्वकीय ज्येष्ठात्मजस्य 'दाराशिकोहस्य संस्कृताध्यापनाय निमन्त्रितस्तदर्थं तत्र गतवानयं जगन्नाथः । अस्य प्रकर्ष पाण्डित्येन तुष्टोभूत्वा सम्राट् एनं 'पण्डितराज' इत्युपाधिदानेन विभूषयामास । युवावस्थायां दिल्लीपतिरेवाश्रये जीवनं व्यतीत्यान्ते मधुपुर्य्यां (मथुरायां) स्वकीयां वसतिमलङ्करोदयं पण्डितराजः । तथाचोक्तं स्वयमेव भामिनीविलासे—

**शास्त्राण्याकलितानि नित्यविधयः सर्वेऽपि सम्भाविना,**
**दिल्लीबल्लभपाणिपल्लवतले नीतं नवीनं वयः ।**
**सम्प्रत्युज्झित वासनं मधुपुरीमध्ये हरिः सेव्यते,**
**सर्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम् ॥**

अयं परमोवैष्णव आसीत् । भगवतो विष्णो स्तुतिपरा अस्य पण्डितराजस्यानेके मनोज्ञतमाः श्लोकाः सन्ति । अयं हि पण्डितराजः निज युवास्थायां कस्याञ्चन

यवनयुवत्यामासक्तो भूत्वा तामुपयेमे इति प्रवादोऽपि जगन्नाथस्य नाम्ना प्रचारिताभिः कविताभिरपि पुष्टिं नीयते । तेन समाजात् वहिष्कृतोऽयं कयाचिदलौकिकया घटनया स्वनिर्दोषतां साधयामास । अयं स्वग्रन्थे दिल्लीश्वरस्य वदान्यतायाः वर्णनं कुर्वन् प्राह—

**दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः ।**
**अन्येन केनाऽपि नृपेण दत्तं शाकाय वा स्यात् लवणाय वा स्यात् ॥**

पण्डितराजस्य यदिदमप्रघृष्यं प्रकाण्डपाण्डित्यं लेखनीसहायतया प्रकाशमुपेतम्, तत् तात्कालिक पण्डितमण्डलीकृतसमालोचना विजृम्भितमेव सहृदयधुरीणैस्तद्ग्रन्थेषु द्रष्टव्यमेव । कवित्वेन काव्यशास्त्रेण च सार्धमेवास्य लेखनीविहारोव्याकरणशास्त्र-समीक्षणेऽप्यव्याहतः । अस्य पण्डितराजस्य समालोचनायां संतुलितः निर्णयो मिलति । तस्य समीक्षायामुच्चकोटिकव्यङ्ग्यात्मकतया सूक्ष्मतया च सहैव भाषागत सुसभ्यताऽपि च मिलति । (अप्पयदीक्षितस्य विचारस्थलं विहाय) अस्य समीक्षायाः उपयुक्तता-मधिकतरस्थलेषु स्वीकरणीयैवास्ति । जगन्नाथः प्रतिभासम्पन्नकविरासीत् । अस्मिन् कवौ रचनात्मककाव्यसौन्दर्यस्यास्वादस्य पर्याप्तशक्तिरासीत् । अयं विशिष्टकविरप्यासीत् सहृदयविचारकोऽपि चासीत् । अस्य पण्डितराजस्य संस्कृतभाषायामुपरि प्रतिभा-पूर्णमाधिपत्यमासीत् । सः स्वकीयश्लोकेषु शब्दध्वन्याः एव भावाभिव्यक्तं कर्त्तुमशक्यत् । भामिनीविलासस्यान्ते तेनेनैवोक्तम्—

**'धुर्यैरपि माधुर्यैः द्राक्षाक्षीरेक्षुमाक्षिकसुधानाम् ।**
**वन्द्यैवमाधुरीयं पण्डितराजस्य कवितायाः ॥**

**पण्डितराजस्य ग्रन्थाः**

१. गङ्गालहरी—द्विपञ्चाशत्पद्यबद्धा गङ्गास्तुतिः ।
२. सुधालहरी—द्वात्रिंशत्पद्यात्मिका सूर्यस्तुतिः ।
३. अमृतलहरी—एकादशश्लोकमिता यमुनाप्रशस्ति ।
४. करुणालहरी—चतुषष्टिश्लोकमिता विष्णुस्तुतिः ।
५. लक्ष्मीलहरी—एकचत्वारिंशत्पद्यात्मिका लक्ष्मीस्तुतिः ।
६. यमुनावर्णनचम्पूः—नामव्याख्यात विषया ।
७. आसफविलासः—आसफखाँमहोदयस्य प्रशस्तिः ।
८. प्राणाभरणम्—कामरूपाधीशस्य प्राणनारायणस्य प्रशस्तिः ।
९. जगदाभरणम्—उदयपुराधीशराजाकर्णसिंहसूनोर्जगतसिंहस्य प्रशस्तिः ।
१०. चित्रमीमांसाखण्डनम्—अप्पयदीक्षितस्य चित्रमीमांसाग्रन्थस्य आलोचना ।
११. मनोरमाकुचमर्दनम्—सिद्धान्तकौमुदीटीकाया मनोरमायाः खण्डनम् ।
१२. भामिनीविलासः—कवितासंग्रहः ।
१३. रसगङ्गाधर—अपूर्णोऽतिप्रौढोऽलङ्कारशास्त्रीयग्रन्थः ।

'दिल्ली' निवाससमय एव हि 'जगदाभरणानामिकां प्रशस्तिपरकग्रन्थं तथा 'आसफविलास' नामिकामपि दारासभासद् 'नवाबआसफखाँ नाम्नश्च प्रशस्ति-मुपनिबद्धवानयं पण्डितराजः । अयं हि विद्वान् यत्र तत्र काव्यप्रकाशादि प्रमुखग्रन्थानामतिशिष्टभाषया खण्डनं चकार । किञ्च, कुवलयानन्दचित्रमीमांसादि-कर्त्तुरप्पयदीक्षितस्य तु जातिगतं वैमनस्यमाधाय प्रतिपदं खण्डनञ्चकार पूर्णपाण्डित्यगर्वेण । यच्चकार 'कुचमर्दनी' कृत्वा 'भट्टोजिदीक्षित' 'मनोरमां' खण्डनं तत्तु प्रक्रियाप्रकाश कर्त्तुर्वरेश्वरगुरोर्मनोरमायां खण्डनं दृष्ट्वैव । यतः स्वयमेवतदारम्भे लिखितम्—

**नामं नामं घनश्यामं धाम तामरसेक्षणम् ।**
**पण्डितेन्द्रो जगन्नाथः स्यति गर्वं गुरुद्रुहाम् ॥** इति ।

कविकर्मस्य मर्म प्रकाशनं तु स्फुटतरं भामिनीविलासावलोकनेनैव भवतीति नाविदितं सहृदयधुरीणानाम् । जगन्नाथः स्वीयानि पद्यरत्नानि अत्र संगृहीतवान्, तदुक्तं तेन—

**दुर्वृत्ताजारजन्मानो हरिष्यन्तीतिशङ्कया ।**
**मदीयपद्यरत्नानां मञ्जूषैषा मयाकृता ॥**

अस्मिन् ग्रन्थे संगृहीताः श्लोकाः ग्रन्थान्तरेऽप्युदाहरणतया पण्डितराजेनोद्धृताः । वस्तुतो रसपेशलकविताधारायाः जगन्नाथ एव समाप्तिर्जातेति यद्युच्यते तदा सत्यं नापलायते । स्वयं दक्ष आलोचकः प्रकाण्डपण्डितो दार्शनिक चूडामणिश्चायं पण्डितराजः स्वङ्काव्यं तथा परिमार्जितं निर्मितवान् यथा तत्र रेखाऽपि त्रुटेर्नान्विष्यापि द्रष्टुं शक्यते । स्वयं प्रशंसिताऽपि तेन स्वकविता—

**मधुं द्राक्षा साक्षादमृतमथ वामाधरसुधा,**
**कदाचित् केषांचित् न खलु विदधीरन्नपि मुदम् ।**
**ध्रुवं ते जीवन्तोऽप्यहह मृतकामन्दमतयो,**
**न येषामानन्दं जनयति जगन्नाथ भणितिः ॥**

भामिनीविलासे चत्वारः खण्डाः सन्ति । १. प्रथम खण्डे प्रस्तावना विलासोऽस्ति । यथा—

**आपेदिरेऽम्बरपथं परितः पतङ्गाभृङ्गाः रसालमुकुलानि समाश्रयन्ति ।**
**सङ्कोचमञ्चति सरस्वतिदीनदीनेमीनोनुहन्त कतमाङ्गतिमभ्युपैति ॥**

अत्रान्योक्तयः प्रधानतयोक्तः ।

२. शृङ्गाराख्य द्वितीयविलासे शृङ्गाररसस्य कविताः सन्ति । यथा—

**तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद् विकासम् ।**
**आलोक्य धावत्युभयत्र मुग्धा मरन्द लुब्धालि किशोरमाला ॥**

३. तृतीये करुणाविलासनाम्निखण्डे पत्नीवियोगजनितस्य व्यथितजनस्य मर्मस्पृशः उक्तयः सन्ति । यथा—

**धृत्वा पदस्खलनभीतिवशात्करं मे या रूढवत्यसि शिलाशकलं विहाहे ।**
**सा मां विहाय कथमद्य विलासिनिद्यामारोहसीति हृदयं शतधा प्रयाति ॥**

४. शान्तिविलास नाम्नि चतुर्थखण्डे भक्तिप्रधानाः कविताः सन्ति ।

अस्य पण्डितराजस्य कवितायाः अद्भुतं चम्त्कारित्वं विद्यते यदन्वयः सातिशयः स्फुटो भवति, कुत्राप्यन्वयस्यावश्यकतानानु भूयते । सर्वत्र रसपरिपाकश्च स्फीत एवास्ति ।

अलङ्कारशास्त्रस्य क्षेत्रेऽतीव प्रौढो ग्रन्थोऽनेन कृतो रसगङ्गाधराभिधानो वर्त्तते । अस्मिन्ग्रन्थे उदाहरणरूपेणोपन्यस्ताः सर्वे श्लोकाः अनेनैव कृताः सन्ति । तथा चोक्तमपि रसगङ्गाधरे—

**निर्माय नूतनमुदाहरणानानुरूपम्,**
**काव्यं मयात्र निहितं न परस्य किञ्चित् ।**
**किं सेव्यतां सुमनसां मनसापि गन्धः,**
**कस्तूरिका जननशक्तिभृता मृगेण ॥** (रसगङ्गाधरे ५० पृष्ठे)

अस्य रसगङ्गाधरोऽलङ्कारशास्त्रस्य सर्वाधिकः प्रौढो मर्मप्रकाशकः काव्यशास्त्रीयय-विवेचना पूर्णोऽस्ति । पण्डितराज जगन्नाथस्य समये नव्यन्यायशास्त्रस्य प्रचुरतर प्रचार-प्रसारमासीत् । अतोऽनेन स्वग्रन्थे तदनुसारिणी सूक्ष्मेक्षिका समाश्रिता, येन पदार्थनिर्वचने स्थूलता पदं नाधात् ।

पण्डितराजः आलङ्कारिकशिरोमणिकवितार्किकसिहश्चासीत् । रसगङ्गाधरग्रन्थो यद्यपि परिपूर्णो नास्ति, तथाप्ययं ग्रन्थोऽतीव महत्त्वपूर्णोऽस्ति । अनेन पण्डितराजेन रसनिरूपणे महती सूक्ष्मता स्पष्टता च प्रकटीकृता । अनेनैव प्रकारेणानेन माधुर्यादिनिरूपणप्रसङ्गेऽपि नितान्तनूतनं कृतम् । अलङ्काराणां लक्षणं सूत्रशैल्या निबध्य तद्भाष्यमपि नितान्त प्रौढं कृतम् । अनेन कत्यलङ्कारा निरूपयितुमिष्यन्तेस्म' इति तु कथितुं न शक्यते ।

अस्मिन् ग्रन्थे केवलमाननद्वयमुपलभ्यते । प्रथमानने काव्यस्य 'रमणीयार्थः प्रतिपादकः शब्दः काव्यम्' इति लक्षणं विधाय प्राचीनानामालङ्कारिकाणां काव्यलक्षणस्य विवेचनं कृतमनेन । स्वकीय काव्यलक्षणस्यार्थस्य संपुष्ट्यै अन्यालङ्कारिकाणां मतस्य खण्डनमप्यकरोत् पण्डितराजः । अस्य पण्डितराजस्य विचारे स्वप्रातिमज्ञानमूलकालौकिकचमत्कारकारणेन मनोहरस्यार्थस्य वाच्यलक्ष्य-व्यङ्ग्यान्यतरस्य प्रतिपादकः शब्दः काव्यं काव्यपदेन व्यवह्रियमाण इति यावत् । पण्डितराजस्य जगन्नाथस्य मतानुसारेण प्रतिमैव काव्यस्य मुख्यं हेतुर्भवति । अस्य मतानुसारेण काव्यस्य चत्वारो भेदाः भवन्ति, तद्यथा—उत्तमोत्तमकाव्यम्, उत्तमकाव्यम्, मध्यमकाव्यम्, अधमकाव्यञ्चेति । एतदनन्तरं पण्डितराजो रसस्य साङ्गोपाङ्गं विशिष्टविवेचनमकरोत् । गुणत्रयस्य तद्विषये विभिन्नमतानाञ्च विवेचना कृताऽनेन । भाव, रसाभास-भावोदयादीनां व्याख्याऽपि कृताऽनेन ।

द्वितीया न स्यादौ ध्वनोर्विवेचनं कृत्वाऽभिधालक्षणयोः समीक्षणमकरोत् ।

एतस्मादनन्तरमलङ्काराणां विवेचनमकार्षीत् । पण्डितराजः सप्ततिसंख्याकाना-मेवालङ्काराणां विवेचनमकार्षीत् । ग्रन्थोऽयमुत्तरालङ्कारस्य वर्णनेन सह समाप्तिमगमत् । जगन्नाथात्पञ्चाशद्वर्षानन्तरं नागेशस्य टीकायामपि उत्तरालङ्कारपर्यन्तमेव विवेचनमस्ति । चित्रमीमांसाखण्डनस्य द्वितीयप्रस्तावनात्मकश्लोकात् ज्ञातोभवति । यच्चित्रमीमांसायाः रचना रसगङ्गाधरात्पश्चाद्वर्ती आसीत् । यथा—

**रसगङ्गाधरे चित्रमीमांसायां मयोदिता ।**
**ये दोषास्तेऽत्र संक्षिप्य कथ्यन्ते विदुषां मुदे ॥**

चित्रमीमांसाखण्डनस्य द्वादशपृष्ठेऽयं लिखति—'**विशेषस्तु उदाहरणालङ्कार-प्रकरणे रसगङ्गाधरादवसेयः** ।' किञ्चैतत्सर्वमस्य प्रखरपाण्डित्यमेव प्रकाशयन्ति । इति

स्वजीवनस्यावसानकाले इमे मथुरानिवासिनः आसन् । अपि च परम वैष्णवाः एते । विष्णौ स्तुतौ—एतेषां सरसानि पद्यानि पठित्वा कोऽप्यालोचकः एषामहैतुक्या भक्त्याऽप्रभावितो भवेदिति न । परमाराध्या मुक्तिदायिनीकाशी एषां कर्मभूमिरासीत् । इयं जनश्रुतिर्वर्तते यत्—स्वनिर्मितायाः गङ्गालहर्याः पाठकरणात् स्वयं गङ्गा-उपरिभागे वर्द्धतेस्म, स्वयं च स्वाङ्के निधाय मुक्तिमेनमयच्छत् ।

## रसगङ्गाधरस्य टीका

१. मूलग्रन्थकारापेक्षया विशदं पाण्डित्यमावश्यकं मन्यते भाष्यव्याख्याकारा-दीनाम् । वैयाकरणशिरोमणि म०म०नागेशभट्टेन रसगङ्गाधरस्य महिमानं विभाव्य रसगङ्गाधरमर्मप्रकाशाख्य व्याख्या (टीका) कृता । तस्य प्रखरतरस्य प्रकाशस्य सारल्यसम्पादनाय भट्टश्रीमथुरानाथशास्त्रिणा सरलाख्या टिप्पण्या कृतेति ।

२. रसगङ्गाधरस्य द्वितीया प्रख्याततमा टीकाविषमपदी वर्त्तते ।

३. ओझोपाख्येन श्रीकेदारनाथमहोदयेन महता श्रमेण रसगङ्गाधरस्य 'रस-चन्द्रिकाख्या टीका कृतेति ।

श्रीमतां कविवराणां पण्डितवरेण्यानां मथुरानाथभट्टपादानां सरलानाम्नी लघ्वीटीकाप्युपलब्धास्ति एवमेव काशीनागरीप्रचारिणीसभातः पण्डित श्रीपुरुषोत्तमशास्त्री चतुर्वेदिना हिन्दी अनुवादरूपेण प्रकाशिताऽस्ति । वाराणसेय चौखम्भा विद्याभवनात् मैथिल श्रोत्रियकविशेखराणां विद्वन्मूर्द्धन्यानां पण्डित श्रीवदरीनाथ झा महोदयानां 'चन्द्रिका' नाम्न्यद्भुता टीका प्रकाशिता, अस्याष्टीकायाः हिन्दीव्याख्याकाराः सन्ति मदनमोहनझा महोदयाः । अन्यच्च—काशीहिन्दूविश्वविद्यालयात् पण्डितमधुसूदन शास्त्रिणो रसगङ्गाधर व्याख्या प्रकाशिता अस्ति ।

## पण्डितराजस्य जगन्नाथस्य कालः

भारतवर्षस्य सम्राजः 'शाहजहाँ' तथाऽस्य ज्येष्ठपुत्रः दाराशिकोहस्य च समसामयिकत्वात् पण्डितराजस्य जगन्नाथस्य समयोऽपि सम्यक्तया निश्चेतुं शक्यः । शाहजहाँ भारतस्य मुगलसम्राट् आसीत् । अयं हि सम्राट् १६२८ ई० तः १६३८

ई० पर्यन्त राज्यमकरोत् । प्रचण्डपाण्डित्यसमन्विते स्वकीये रसगङ्गाधरे शाहजहाँ सम्राजः प्रशंसायां पद्यमेकं प्रदत्तमेभिः तद्यथा—

**'भूमीनाथ-शहाब्बुद्दीन भवतस्तुल्यो गुणानां गणैः**
**रेतद्भूतभवप्रपञ्चविषये नास्तीति किं ब्रूमहे ।**
**धातानूतन कारणैर्यदि पुनः सृष्टिं नवां भावये**
**न्न स्यादेव तथाऽपि तावक् तलालेशं दधानोनरः ॥'**

अपि च दाराशिकोहस्य प्रशंसायामेषां जगदाभरणनामकं काव्यमेवास्ति । शाहजहाँ-सम्राजः परिपन्नायकस्य 'नवाब आसफखाँ' इत्यस्याश्रयेऽपि कतिचिद्दिनानि व्यतीतानि । अस्य नायकस्यावसानः १६४१ ईस्वीये कालेऽभूत् । तद्दुःखे दुःखितोऽयम् पण्डितराजः 'आसफविलास' नामकः ग्रन्थोऽलीलिखत् । अतः पण्डितराजजगन्नाथस्य कालः सप्तदशशताब्द्या-मध्यभागः सिद्ध्यति ।



# अल्पप्रसिद्धा अन्ये काव्यशास्त्रसृजः

### (रसविषयकः लेखकः)

## शारदातनयः

शारदातनयः रस-भावयोः लोकप्रियोलेखकोऽभवत् । अस्य लेखकस्य काव्यशास्त्रीयरसविषयकः ग्रन्थः भावप्रकाशः, क्वचित् 'भावप्रकाशिका' 'भावप्रकाशनम्' इति नामभ्यामपि प्रसिद्ध्यति । अस्य पितुर्नाम 'भट्टगोपालः' इत्यासीत् । अयं हि श्रीकृष्णस्य पौत्रस्तथा काश्यपगोत्रोत्पन्नस्य लक्ष्मणस्य प्रपौत्र इत्यासीत् । स चायं लक्ष्मणः आर्यावर्त्तस्य मेरूत्तरप्रदेशस्यान्तर्गते माटरपूज्याख्यग्रामस्य निवास्यासीत् । अयं वेदानामुपरि 'वेदभूषणम्' नामिकां टीकामटीटिकन् । अयं शारदातनयः आत्मानं वाराणसीवासिनी शारदादेव्या पुत्रमभिधत्ते तस्मादयं शारदातनयनाम्ना प्रख्यातो वर्त्तते ।

अभिनवगुप्तपादार्यस्य मतस्य अनुसरणं कृतमनेनेति । अस्य ग्रन्थः कतिपयेष्वंशेषु मुख्यरूपेण भोजकृत शृङ्गारप्रकाशस्य संक्षिप्तस्वरूपमस्ति । मुख्यरूपेणास्मिन् ग्रन्थेऽयं भोजराजमतस्यैवोल्लेखं करोति, शृङ्गार-प्रकाश-काव्य-प्रकाशयोश्च श्लोकान् उद्धृतान् करोति, अत एवास्य कालो द्वादशशताब्दस्यानन्तरमेव निश्चेतुमर्हति । सिंहभूपालः शारदातनयस्य मतस्योल्लेखं करोति । रसार्णवकारस्य सिंहभूपालस्य कालः १३२० खीष्टाब्दो वर्त्तते । अतएव शारदातनयस्य कालः १२५० खीष्टाब्दः स्वीक्रियते ।

भावप्रकाशनेऽस्मिन् ग्रन्थेऽयं बह्वीनामज्ञातरचनानां मतमुल्लेखयति । प्राचीनानां रसाचार्याणामपि मतस्य ज्ञाने ग्रन्थोऽयं सहायको भवति । ग्रन्थस्यास्य दशाधिकाराः सन्ति । तत्र प्रथमद्वितीयऽधिकारयोः भाव-रसयोः स्वरूपस्य विवेचनमास्ते । तृतीये-

ऽधिकारे रसस्य विवेचनं कृतमनेन । चतुर्थेऽधिकारे शृङ्गारावलननायकनायिकादि-स्वरूपस्य विवेचनमस्ति । पञ्चमेऽधिकारे नायकभेदावस्था स्वभावविकरस्य वर्णनमस्ति । षष्ठेऽधिकारे शब्दार्थसंबन्धभेदप्रकारस्य विवेचनम् । सप्तमेऽधिकारे नाट्येतिहास-शरीरयोस्तथावृत्त्यादिलक्षणस्य निर्धारणम् । अष्टमेऽधिकरणे दशरूपकाणां लक्षण्यनि । नवमेऽधिकरणे नृत्यभेदस्वरूपलक्षणानि चेति । दशमेऽधिकरणे नाटकभेदप्रयोगस्य क्रमशो वर्णनमास्ते ।

ग्रन्थेऽस्मिन् उल्लिखितः 'कविकल्पलता' अरिसिंह-देवेश्वराभ्यां रचित 'कविकल्पलतातः भिन्न एवास्ति । यतोऽस्य सामग्र्याः उपयोगः शारदातनयानुसारेण काव्यप्रकाशे कृतोऽस्ति । अस्मिन् विशेषज्ञानाय 'आड्यारलाइब्रेरी' सूचना सं xix १-२, पृ० ४७-५१ द्रष्टव्य इति ।



# शिङ्गभूपालस्य परिचयः

शिङ्गभूपालस्यापरो नामशिङ्गधरणीशः, शिङ्गराजोऽथवा शिङ्गमहीत्यपि आसीत् । त्रिवेन्द्रम्-संस्कृत सीरीजतः प्रकाशितस्य रसार्णवसुधाकरस्यालोचनेन ज्ञातो भवति यत् रसार्णवसुधाकरप्रणेतुः सङ्गीतसुधाकरटीकायाः प्रणेतुश्चैक्यमास्ते । कलकत्तातः प्राप्तायां पाण्डुलिप्यां शिङ्गभूपालस्य जीवनविषये नैकानि रहस्यानि संरक्षितानि सन्ति । अस्य ग्रन्थस्य पुष्पिकायां लिखितमास्ते । **'इति श्रीमदान्ध्र—मण्डलाधीश्वर-श्रीयववान्-नरेन्द्रनन्दनभुजबलभीम-श्रीशिङ्गभूपालविरचितायां सङ्गीतरत्नाकरटीकायां सुधाकरा-ख्यायां रागविवेकाध्यायो द्वितीयः ।'**

रसार्णवसुधाकरस्यादौ शिङ्गभूपालस्य पूर्वपुरुषाणां संक्षिप्तमैतिह्यमास्ते । एतेन ज्ञायते यत् शिङ्गभूपालस्य जन्म रेचल्लवंशे बभूव । अयं नृपतिः स्वकीयैः षड्भिः पुत्रैः सह राजाचलाभिधानायां राजधान्यां निवसतिस्म । अस्य राज्ञो राज्यस्य विस्तारो विन्ध्याचलादारभ्य श्रीशैलं यावद् वर्त्तते । (Biographical Sketches of the Raja of Benkatgiri")

एतदनुसारेण शिङ्गभूपालः शिङ्गमनायड एवास्ते रसाऽर्णवसुधाकरे शिङ्गभूपालः आत्मानं शूद्रवर्णस्थमभिधत्ते । अस्य पितुर्नाम अनन्तोऽथवाऽनपोतः आसीत् । अस्य मातुर्नाम 'अन्नमांवा' तथा पितामहस्य नाम शिङ्गःप्रभुः अथवा शिङ्गमनायकः आसीत् । अस्य प्रपितामहस्य नाम याचमनायकः आसीत् । अयं हि राजा धुरन्धरो विद्वान् आसीत् । अतोऽयं सर्वज्ञनाम्नाख्यातो वर्त्तते । राजायं परमसाहित्यानुरागी आसीत् ।

अस्मिन् देशे नाट्यशास्त्रे सङ्गीतस्यानेकानि रहस्याणि समुद्घाटितानि सन्ति तथाप्यस्य विषयस्योपलब्धेषु ग्रन्थेषु शिङ्गभूपालरचित सङ्गीतरत्नाकर एव सर्वापेक्षया महत्कायोग्रन्थो विद्यते । ग्रन्थेऽस्मिन् सङ्गीतस्य सुगमा सरला सर्वाङ्गीणा च व्याख्याकृता वर्त्तते । अस्य ग्रन्थस्य वह्वयः टीका सन्ति; तासु च मल्लिनाथप्रणीता

टीका आनन्दाश्रमतः प्रकाशिता बभूव । किञ्च नाट्याशास्त्रं नारदविरचितं सङ्गीतमकरन्दञ्च विहाय सङ्गीतरत्नाकरः सर्व प्राचीनो ग्रन्थो वर्त्तते । अस्य ग्रन्थस्यैकाऽन्यापि सङ्गीत सुधाकराभिधाना टीकाऽस्ति । टीकेयं कलकत्तातः प्रकाशिता बभूव । अस्या टीकायाः प्रणेता स्वयं शिङ्गभूपालो वर्त्तते । अस्यां टीकायामनेकेषामनुपलभ्य ग्रन्थानां नामनिर्देशितोऽस्ति ।

शिङ्गभूपालस्य समयनिर्धारणे मतभेदाः सन्ति । डॉ० भण्डारकरानुसारेणायं आन्ध्रमण्डलाधिपतिः दाक्षिणात्यः आसीत् । अस्यैव राज्ञः सभायां शार्ङ्गदेवः आसीत् । अतएवास्य शिङ्गभूपालस्य कालः त्रयोदशशताब्दस्य मध्यभागो भवितुमर्हति । पी.आर. भण्डारकरमहोदयानुसारेणास्य समयः षोडशशताब्दो वर्त्तते ।

शिङ्गभूपालस्य रसार्णवसुधाकरो मुख्यतः भोजकृत शृङ्गारप्रकाशस्तथा शारदातनयकृत भावप्रकाशोपर्याधारितोऽस्ति । तथाप्यस्य ग्रन्थस्य किमपि वैशिष्ट्यं वर्त्तते । नाट्यशास्त्रविषयिणी शिङ्गभूपालस्येयं कृतिः नाट्यशास्त्रीयाणामनेकेषां विषयाणां रहस्योद्भेदनं करोति । ग्रन्थोऽयं त्रिषु विलासेषु विभक्तोऽस्ति । रञ्जकोल्लासा-भिधाने प्रथमे विलासे नायक-नायिकयोः स्वरूपगुणानां विस्तरेण विवेचनमस्ति । ततश्चतसृणां वृत्तीनां स्वरूपस्य प्रभेदानाञ्च वर्णनं कृतमास्ते । द्वितीये विलासे रसस्य मनोज्ञं विस्तृतं वर्णनं कृतमास्ते । अस्य विलासस्य नाम रसिकोल्लासः वर्त्तते । अत्र रतिवर्णनप्रसङ्गे भोजराजस्य मतस्य प्रत्याख्यानं कृतं वर्त्तते। विवेचनमिदं निजस्पष्टतायै सुबोधत्वाय च प्रख्यातमास्ते । बहुविधोदाहरणैः परिपुष्टं युक्तिभिर्युक्तञ्चासीत् ।

भावविलासाख्ये तृतीये विलासे रूपकविषयाणां विस्तृतं वर्णनमास्ते । ग्रन्थेऽस्मिन् रूपकस्य त्रयाणामङ्गानां नेतृरसवस्तूनां साङ्गोपाङ्गं विवेचनं कृतमास्ते । दशरूपकापेक्षया ग्रन्थोऽयमधिकं विस्तृतं विशदञ्चास्ति । दक्षिणे भारतेऽस्य ग्रन्थस्य दशरूपकापेक्षयाऽधिकः प्रचारो वर्त्तते । शिङ्गभूपालेन 'नाटक परिभाषा' नामकस्य ग्रन्थस्याऽपि रचनाकृताऽस्ति । रसार्णवाख्यग्रन्थस्यान्तेऽस्मिन् विषये विवेचनमास्ते । बैङ्कटगिरि-राज्ञा वंशावल्यानुसारेणास्य राज्यकालः १३३० ख्रिष्टाब्दोऽस्ति ।



## रामचन्द्रगुणचन्द्रयोः परिचयः

'नाट्यदर्पणः' रामचन्द्र-गुणचन्द्रयोः सम्मिलिता कृतिरास्ते । रङ्गनाथेन विक्रमोर्वशीयनाटकस्य टीकायां तथा मल्लिकभट्टेन भट्टिकाव्यटीकायामस्य ग्रन्थस्य उल्लेखः कृतोऽस्ति । ग्रन्थोऽयं कारिकाबद्धोऽस्ति । ग्रन्थेऽस्मिन् चत्वारो विवेकाः सन्ति । यस्मिन् नाट्यशास्त्रविषयकस्य विवेचनमस्ति । रूपकस्य द्वादशभेदानां तथोपरूपकानाञ्च विवेचनमस्ति । तत्र विवेकानुक्रमेणास्मिन् ग्रन्थे क्रमशः नाटकस्य, प्रकरणादिरूपकस्य, वृत्तिरसभावाभिनयस्य, रूपकस्य साधारणलक्षणस्य च वर्णनानि कृतानि सन्ति । नाट्यविषयकेषु शास्त्रीयग्रन्थेषु 'नाट्यदर्पणस्य' महत्त्वपूर्णं

स्थानमास्ते। ग्रन्थेऽस्मिन् विविधविषयाः अतीवमहत्त्वपूर्णाः सन्ति । परम्परागत-सिद्धान्तैर्विलक्षणाः सन्ति । सुखात्मकस्य दुःखात्मकस्य च नाटकस्य स्वरूपवर्णन-मस्ति । बहुविधलुप्तप्रायाणा रूपकाणाञ्चोदाहरणानि सन्ति । अतएवास्य ग्रन्थस्यैति-हासिकं महत्त्वमप्यस्ति ।

अस्य नाट्यदर्पणस्य लेखकः रामचन्द्र एकाक्षः आसीत् (डॉ० सुशीलकुमार डे, सं०का०शा० पृ० २८४) । अयं हि महापुरुषः जैनधर्मस्य मान्य आचार्यः आसीत्। अयं हेमचन्द्रस्य शिष्यः आसीत् । अयं हि लेखकः गुर्जरप्रदेशस्य सिद्धराजस्य (१०९३-११७३ ईसवीयं यावत्), कुमारपालस्य (११४३-११७२ ईसवीयं यावत्), अजयपालस्य च (१०७२-११७२ खीष्ट्राब्दपर्यन्तं), समये वर्त्तमान आसीत् । श्रूयते यत्केनचित्कारणेन अजयपालस्यैवाज्ञयाऽयं प्राणदण्डेन दण्डितो बभूव । सिद्धराजो यदा हेमचन्द्रं तस्योत्तराधिकारिणो विषयेऽप्राक्षीत् तदा हेमचन्द्रो रामचन्द्रमेव निर्दिदेश । गुणचन्द्रोऽपि हेमचन्द्रस्यैव शिष्य आसीत् । गुणचन्द्रस्य कस्यापि स्वतन्त्रस्य ग्रन्थस्य कर्त्तारूपेणोल्लेखो न मिलति कुत्राऽपि । रामचन्द्रः जैनधर्मे प्रबन्धशतककर्त्तारूपेण विख्यातो वर्त्तते । रामचन्द्रस्यैकादश नाटकानामपि निर्देशः समुपलभ्यते । अस्य लेखकस्य नाटकेषु रघुविलासः अथवा रघुविलापः प्रमुखोऽस्ति । हरिश्चन्द्रनाटकस्याऽपि जैनरूपान्तरमुपलभ्यते । रामचन्द्रस्य ग्रन्थरचनाकालः ११०० खीष्ट्राब्दात् ११७५ ईसवीयं यावदवधार्यते । अतोऽस्य कालः द्वादश शताब्दस्योत्तरार्द्धो विद्यते । गुणचन्द्रस्याऽपि सैव कालोऽस्ति ।



## शोभाकरमित्रस्य परिचयः

शोभकरमित्रः प्रायः काश्मीरजः प्रतिभावान् प्रभाववांश्च विद्वानासीत् । अस्य पिता त्रयीश्वरमित्र नाम्ना व्यपदिश्यतेस्म । सोऽयं शोभाकरमित्रः प्रसिद्धं 'अलङ्काररत्नाकरो नामग्रन्थं निर्ममे । अस्य ग्रन्थस्योल्लेखं पण्डितराजजगन्नाथाप्यदीक्षितौ च कृतवन्तौ । काश्मीरिको जयरथः स्वकीयायां विमर्शिन्यां शोभाकरमित्रस्य मतस्य खण्डनमनेकत्रा करोत् । ग्रन्थेऽस्मिन् त्रयोंशाः सन्ति—सप्ताधिकशत सूत्राणि (१०७), वृत्तयः, उदाहरणानि चेति । एतेन प्रमाणितो भवति यत् शोभाकरमित्रो जयरथात् पूर्ववर्त्तिनो वर्त्तते । काश्मीरजः कविः यशस्करोऽस्य ग्रन्थस्य सूत्रानुद्धृत्यालङ्काराणामुदाहरणं दातुं 'देवीस्तोत्र' नामकस्य काव्यस्य रचनामकरोत् ।

शोभाकरमित्रस्य तिथिस्त्वज्ञातमेवास्ति । किञ्च, ग्रन्थ गतालङ्काराणां संख्यातस्तथा तेषां लक्षणैः अपेक्षाकृतार्वाचीनोऽयं प्रतीतो भवति । रुय्यकात्पश्चाद्वर्त्ती लेखकोऽयमस्ति, यतो ह्ययं तस्यालोचनाकृतवानस्ति । पण्डितराजजगन्नाथाप्पयदीक्षितौ चास्योल्लेखं कृतवन्तौ, अतोऽयं षोडश खीष्ट्रशतकात्पूर्वमेवाऽभवत् । जयरथः स्वविमर्शिनी नामकटीकायां शोभाकरस्यालोचनयाः विरुद्धे रुय्यकस्य मतस्य समर्थनं कृतवान् । अतोऽस्य शोभाकरस्य कालः रुय्यकस्यानन्तरं जयरथात्पूर्वञ्च वर्त्तते । अतोऽयं

संभवत: द्वादशशतकस्यान्ते अथवा त्रयोदशशतकारम्भेऽभवत् । अलङ्काररत्नाकरे केवलमलङ्काराणामेव विवेचनमभवत् । विवेचितानामलङ्काराणां संख्या १०९ वर्त्तते ।

अत्र केचनालङ्कारस्त्वस्य प्रतिभया कल्पिता: सन्ति, केचन च प्राचीनैरलङ्कारैः सङ्गृहीता: सन्ति । अलङ्काररत्नाकरेऽनेके एतदृष्ट्याऽलङ्कारा: सन्ति येषामुल्लेखो रुय्यककृतेऽलङ्कारसर्वस्वे समुपलभ्यते न वा जयरथकृतेऽलङ्कारोदाहरणाभिधाने ग्रन्थे । जयरथ: स्वकीयायां विमर्शिन्यां शोभाकरभित्र कल्पितानामभेदप्रतिभावर्धमान-काख्यानामलङ्काराणां प्रत्याख्यानमकरोत् । किन्तुः स: तुल्य वैधर्म्य-प्रत्यूह प्रत्यनीकादीनामलङ्काराणां लक्षणानि तु जयरथो रत्नाकरग्रन्थमाश्रित्यैव चकार । शोभाकरमित्रस्य जयरथोपरि प्रभूत: प्रभावो वर्त्तते । अलङ्काराणां विकाशे ग्रन्थोऽयं महत्त्वपूर्णं स्थानं विभर्त्ति ।



# सागरनन्दी आचार्यस्य परिचयः

सिल्वाँ लेवीमहोदयेनास्य ग्रन्थस्यैकाऽद्वितीया हस्तलिप्या: अन्वेषणं नेपालदेशे कृतमास्ते । प्रकाशित: 'नाटक-लक्षण-रत्न-कोशाख्य ग्रन्थोऽयं तस्या: एव हंस्तलिप्या: देवनागरीलिप्यां प्रतिलेखोऽस्ति । (See Journal of Asiatic Society xe iii, 1923 page 210) यथाऽस्य ग्रन्थस्य नाम्नासूचितो भवति यदस्मिन् ग्रन्थेऽनेकानां प्रसिद्धलेखकानां नाट्यशास्त्रविषयकमहत्त्वपूर्णविचाराणां संग्रहोऽस्ति । अस्य ग्रन्थकारस्य नाम सागरो वर्त्तते । यतो ह्ययं विद्वान् नन्दबंशे समुत्पन्नोऽभवत् तेनास्य विदुषः नाम सागरनन्दी बभूव । अस्य ग्रन्थस्यान्ते ग्रन्थकारो वदति यत्—विभिन्नाऽचार्याणां श्रीहर्ष-विक्रममातृगुप्तादीनां मतानुसारेण मुनि-भरतस्य सिद्धान्तस्य चानुशीलनं कृत्वाऽस्य 'नाटकलक्षण-रत्न-कोशस्य' प्रणयनमभूत्—

**श्रीहर्षविक्रमनराधिपमातृगुप्तगर्गाश्मकुट्टनखकुट्टकबादराणाम् ।**
**एषां मतेन भरतस्य मतं विगाह्य घुष्टं मया समनुगच्छत् रत्नकोशम् ॥**

यद्यप्यस्याचार्यस्य परिगणना नाट्याचार्येष्वेव भवति तथाऽप्यस्याचार्यस्य मतस्योल्लेख: नाट्यग्रन्थेषु विरल एवास्ते । कोशकारत्वेनायमस्मिन् ग्रन्थे निम्न-लिखितानां विषयणां विवेचनं कृतवानस्ति । तद्यथा—रूपकस्य, रूपकभेदानाञ्च, उपरूपकस्यान्येषां प्रकाराणाञ्च, अवस्था पञ्चकस्य, अर्थप्रकृते:, अङ्कस्य, सन्धीनां, प्रवेशस्य, पताकास्थानस्य, भाषाप्रकारस्य, वृत्तीनां लक्षणस्य, नायिकानां गुणभेदानाम्, उपक्षेपकस्य, अलङ्कारस्य, रस-भावादीनाञ्चेति । अस्मिन् ग्रन्थे कतिभयानां प्रसिद्धलेखकानां चिन्तनस्य संग्रहोऽस्ति ।

अस्याचार्यस्य कालनिर्धारणमनुमानेनैव कर्त्तुं शक्यते । विभिन्न समीक्षकैः एकादशशताब्दोऽनुमीयतेऽस्य काल: (१०५०-११००) । ग्रन्थेऽस्मिन् राजशेखरस्य

'काव्यमीमांसयारेकमुद्धरणम् (**विलास विन्यास-क्रमः'** चतुश्चत्वारिंशत्पृष्ठे) मिलति । अतोऽयं ग्रन्थः दशमशतकात् पूर्ववर्त्ति भवितुं नार्हति । अपरञ्च रायमुकुटः (१४३१ ई०), विश्वनाथः (१३००-१३५० ई०) तथा बहुरूपमिश्रः (१३०० शतकः) अनेन ग्रन्थेन परिचिताः आसन् । अतोऽस्य समयः एकादशशतक एव भवितुमर्हति । रूपकादीनां पूर्वोक्तविषायाणां संग्रहेण महत्त्वपूर्णोऽयं ग्रन्थोऽस्ति । धनञ्जयस्यापि सिद्धान्तादत्र मतभेदाः समुपलभ्यतेऽत्र ।



## अरिसिहामरचन्द्रयोः परिचयः

श्रीअरिसिहामरचन्द्रवुभावेव मिलित्वा 'काव्यकल्पनावृत्तिः' नामकं ग्रन्थं लिलिखतुः । अरिसिंहस्य पितुर्नामलवणसिंहः आसीत् । ढोलकायाः राणाधीरधवलस्य प्रख्यातजैन मन्त्रिणो वस्तुपालस्य स्तुतौ 'सुकृतसङ्कीर्तननामकं काव्यमयमलिखत् । अमरचन्द्रः अरिसिहापेक्षया उच्चकोटिकः आसीत् । उभयोरेकस्यैव गुरौत् शिष्यावास्ताम् । अनयोः गुरोर्नाम जिनचन्द्रः सूरिरासीत् । अयमपरान् त्रीन् ग्रन्थानलिखत्—बालभारतम्, स्यादिशब्दसमुच्चयम्, पद्मनन्दकाव्यञ्चेति ।

काव्यकल्पलतावृत्तेश्चत्वारः प्रताना सन्ति प्रत्येकस्मिन् प्रताने अनेके स्तवकाः सन्ति । एतेषां प्रतानानां विषयाः निम्नलिखिताः सन्ति । तद्यथा—१. छन्दः सिद्धिः, अत्र पञ्च अनुच्छेदा सन्ति, १. अनुष्टुप् शासनं (अर्थात् अनुष्टुप् छन्दसः रचना) २. प्रमुखछन्दसां गणना, क्रियायाः व्याकरणसम्मतरूपेषु परिवर्त्तनम्, प्राकृतशब्दस्य स्थानेऽभिनव शब्दस्य प्रयोगः, कस्यापि कवेः स्वकीया-परकीया वा रचनायाः परिवर्त्तित प्रयोगः, छन्दसः छन्दान्तरे परिवर्त्तनम्, अस्य सम्पूर्णानुच्छेदस्य नाम छन्दोऽभ्यासोऽस्ति ३. पादपूरकशब्दानां तथा छन्दसां रिक्तस्थानस्य सम्पूर्त्यर्थं शब्दानां प्रयोगः (छन्दःपुराणप्रभृतयः) यथा—श्री-सम्-सत्-द्राक्-वि-प्रादयः । ४. तर्कपूर्णमार्मिक कथनादिविशिष्टचिन्तनस्य प्रयोगः । ५. विवरणात्मक काव्यविषयाः, कविसमयस्य गणना (वर्ण्यस्थित्यादयः) ।

२. द्वितीयाध्यायस्य नाम शब्दसिद्धिरस्ति—अस्मिनध्याये निम्नलिखितानां विषयाणां विवेचनं कृतमास्ते । यथा—शब्दानां व्युत्पत्तिः, समस्तपदानां व्युत्पन्नार्थाः, छन्दसां मध्येऽनुप्रासयमकयोः प्रयोगः, शब्दसम्बन्धाभिव्यक्तीनां परिगणना, ध्वनि-सम्प्रदायस्य प्रभावः, अभिधार्थ-लक्ष्यार्थ-व्यङ्ग्यार्थानाञ्च विवेचनम् ।

३. तृतीयाध्यायस्य नाम श्लेषसिद्धिरस्ति—अत्रैकार्थप्रतिपादकानामेवशब्दानां यत्रानेकोऽर्थानां प्रतिपादनं भवेत् तस्य विवेचनम्, श्लेषोपयोगिनः शब्दानां सूची, एकोच्चारणेनैव युगपदनेकार्थबोधकैः पदैरभिधयाऽनेकार्थबोधकः श्लेषस्य विवेचनम् । सभङ्गाऽभङ्गोभयात्मकत्वात्त्रिविधश्लेषस्यापि स्वरूपप्रदर्शनम्, अस्य विषयस्य विशिष्ट विवेचनं धर्मदाससूरिलिखित 'विदग्धमुखमण्डनम्' नामकग्रन्थे द्रष्टव्यम् ।

४. चतुर्थोऽध्यायस्य नामार्थसिद्धिरस्ति—अस्मिन् अध्याये निम्नलिखितानां विषयाणां वर्णनं कृतमास्ते उपमायाः, शब्दलोपस्य तथाऽन्याऽलङ्काराणां च रचना । अस्मिन् प्रसङ्गे एवंविधानां सादृश्यानां समतुल्यानाञ्च वृहत्तरा सूच्यपि प्रदत्तास्ति । यथा—अधरस्य तुलना, प्रवालेन, विम्बफलेन, नवपल्लवेन च सह कर्तु शक्यते ।

धीरधवलवस्तुपालयोः समकालीनत्वादनेः अरिसिंहाऽमरचन्द्रयोः कालः ख्रीष्टाब्दस्य त्रयोदशशतकस्य मध्यभागो निश्चीयते ।



## देवेश्वरस्य परिचयः

देवेश्वरः कविशिक्षायाः आचार्यः आसीत् । अस्य पितुर्नाम वाग्भटः आसीत् । वाग्भटोयं कस्याऽपि मालवाधीशस्य महामात्यः आसीत् । एकस्मिन् समस्याश्लोके हम्मीरमहीमहीन्द्रस्य चर्चा कृताऽनेन । प्रत्यक्षरूपेणायं हम्मीरः चौहानवंशीयः एकः राजा आसीत् । राजायं १२८३ ई० तः १३०१ ई० यावत् राज्यमकरोत् (See Journal of the Royal Asiatic Society 1927 p. 577)

'कविकल्पलता' अस्य कविशिक्षा' विषयक प्रमुखग्रन्थस्य नाम आसीत् । एतद्विषयेषूपलब्धेषु ग्रन्थेषु सर्वापेक्षया प्रख्यातोऽयं ग्रन्थोऽस्ति । देवेश्वरः अमरचन्द्ररचितं कविकल्पलताभिधानमेव ग्रन्थमादर्शीचकार । यतो ह्यस्य विषयविवेचनं तथाऽस्य सामान्यग्रन्थव्यवस्थाऽप्यरिसिंह—अमरचन्द्रयोः ग्रन्थानुसारेणैवास्ति । एतदतिरिक्तः इदमपि सिद्धं कर्त्तुं कठिनं नैवास्ति यद्देवेश्वरः स्वपूर्ववर्त्तिनः लेखकानां प्रतिलिपिञ्चकार । अयं हि अमरचन्द्रप्रणीतग्रन्थात् न केवलं विषयाणां निरूपणे, अपितु अनेकेषां नियमानां लक्ष्यमाणानाञ्चाक्षरशः अनुकरणं कृतवान् । अमरचन्द्रेणोपस्थापितानामुदाहरणानामपि स्वकीयग्रन्थे चोदाहरणरूपेण स्वीकरणे किमपि सङ्कोचं न करोति । अमरचन्द्रस्यानुकरणं यत्रतत्रैव नैवास्ति प्रत्युत् नियमिते व्यवस्थितरूपे च मिलति । प्रतीतो भवति यदस्य ग्रन्थकर्त्तुः सन्मुखे स्वग्रन्थ रचनाकाले तस्य काव्यकल्पलतायाः मूलपाठो विद्यमानः आसीत् । अस्मिन् आधारे तस्य समयस्यैकासीमा त्रयोदशशतकस्य मध्यभागः प्राप्तो भवति ।

देवेश्वरस्येकं पद्यं शार्ङ्गधरपद्धतावप्युद्धृतमस्ति । शार्ङ्गधरपद्धतेः रचना १२६३ ईसवीये सञ्जाता । यदि देवेश्वरारिसिंहयोर्मध्ये अर्द्धशतकस्यान्तरो भवति तदा देवेश्वरस्य कालः चतुर्दशशताब्दस्यन्तिमो भागः निश्चीयते । अस्य ग्रन्थस्य कतिपयाः टीकाः अपि प्रकाशिताः सन्ति ।



## संस्कृतकाव्यशास्त्रस्याल्पख्याताः कतिपयाः शास्त्रसृजस्तत्कृतयश्च

### 'संस्कृतकाव्यशास्त्राय बिहारप्रान्तस्य (विशेषतः मिथिलायाः) अवदानम्'[१]

### Contribution of Bihar (Specially Mithila) to Sanskrit Poetics

(Chronological list of authors)

**प्रारम्भात् षोडशशतकं यावत्**

१. श्रीकरमिश्रः (मैथिलः)—अलङ्कारतिलकः—एकादशशतकस्य पूर्वार्द्धम् ।

२. नान्यदेवः (कर्णाटवंशीयो राजामैथिल)—भरत-भाष्यम्—१०९० ई० तः ११४७ ई० यावत्

३. वाचस्पतिमिश्रः (मैथिलः) ... ... ... प्रायः द्वादशशतकम् ।

४. श्रीधरठक्कुरः (मैथिलः) काव्यप्रकाशस्य टीका—त्रयोदशशतकस्य प्रथमचरणे ।

५. मिश्ररत्नेश्वरः (मैथिलः)—रत्नदर्पणः (सरस्वतीकण्ठाभरणस्य टीका)—त्रयोदशशतकस्य पूर्वार्द्धम् ।

६. ज्योतिरीश्वरठक्कुरः (मै०)—१. धूर्त्तसमागमः (हास्यव्यङ्ग्यात्मकोऽभिनयः) । २. वर्णरत्नाकरः (कविशिक्षात्मकं शास्त्रम्) । ३. रङ्गशेखरः (प्रेम-सम्बन्धितं कामशास्त्रम्) । ४. पञ्चसायकः (कामशास्त्रम्) । ५. देशावलि-विवृत्तिः (भौगोलिकोऽयं ग्रन्थः)

अस्य समयः—त्रयोदशशतकस्य चरमभागश्चतुर्दशशतकस्यादिभागश्चेति (१२६५ ई० तः १३५० ई० यावत्)

७. म० म० श्रीहरिनाथः—काव्यादर्शस्य सरस्वतीकण्ठाभरणस्य च मार्जनाख्या टीका लिखिताऽनेन—त्रयोदशशतकस्योत्तरार्द्धम् ।

८. उमापति उपाध्यायः (मैथिलः) सङ्गीतरहस्यं पारिजातहरणञ्चेति १३०३ ई० तः १२२३ ई० यावत् ।

९. जयदेवमिश्र (मैथिलः) 'चन्द्रालोकः'—चतुर्दशशतकस्य प्रथमचरणे ।

१०. लाटभास्करमिश्रः (मैथिलः)—१. काव्यप्रकाशस्य टीका—'साहित्यदीपिका' २. काव्यालङ्काररहस्यं—अस्य कालः—चतुर्दशशतकस्य प्रथमदशकः ।

११. श्रीवेणीदत्तः (मैथिलः)—१. रसकौस्तुभः, २. अलङ्कारमञ्जरी—चतुर्दशशतकस्य पूर्वार्द्धः ।

१२. भानुदत्तमिश्रः (मैथिलः)—१. रसतरङ्गिणी, २. रसमञ्जरी, ३. अलङ्कारतिलकः, ४. गीतगौरीशः अथवा गीतगौरीपतिः, ५. रसपारिजातः,

---

१. टीकाकर्त्तृन् विदुषों विहाय संक्षिप्तेयं नामावलिः, अत्र प्रसङ्गे इतोधिकमपि ज्ञातुमुच्छुभिः पी.बी. काणेमहोदयस्य '[illegible]नकाव्यशास्त्रे[illegible]' द्रष्टव्यः

६. शृङ्गारदीपिका, ७. कुमारभार्गवीयस्तथा चित्रचन्द्रिका ।

१३. गोविन्दठक्कुरः (मैथिलः)—'काव्यप्रदीपः' १३८० ई० तः १४५० ई० यावत् ।

१४. अमृतकरो वाऽमृतानन्दः (मैथिलः) अलङ्कारसंग्रहः—चतुर्दशशतकम् ।

१५. जीवनाथमिश्रः (मैथिलः)—अलङ्कारशेखरः—चतुर्दशशतकम् ।

१६. रुचिनाथमिश्रः (मैथिलः)—टीकाकारः—चतुर्दशशतकस्यान्तिमो भागतः पञ्चदशशतकस्य पूर्वार्द्धम् ।

१७. सुबुद्धिमिश्रः (मैथिलः)—१. काव्यपरीक्षा, २. सारबोधिनी—प्रायः पञ्चदशशतकम् ।

१८. आचार्यजगद्धरः (मैथिलः)—समयः पञ्चदशशतकस्य पूर्वार्द्धम् अस्य कृतयः—१. सरस्वतीकण्ठाभरणस्य टीका, २. रसिकसर्वस्वम्कामशास्त्रीय-ग्रन्थेऽयम्, ३. सङ्गीतसर्वस्वम्—सङ्गीतशास्त्रीयो ग्रन्थः, ४. रसदीपिका—मेघदूतस्य टीकेयम्, ५. तावदीपिका—वासवदत्तायाः टीका, ६. मालती-माधवः—टीका, ७. भगवद्गीता प्रदीपः, ८. देवीमाहात्म्य टीका, ९. सारदीपिका टीका, १०. दीपिका

१९. अच्युतानन्दः (मैथिलः)—काव्यप्रकाशस्य टीकाकृताऽनेन प्रायशः पञ्चदश-शतकस्य पूर्वार्द्धम् ।

**अच्युतेन कृता टीका मिथिलेशस्य मन्त्रिण**
**तथा सदात्मजेनाऽपि सुधिया रत्नपाणिना ।**
**भट्टाचार्येण रचिता काव्यदर्पणसंज्ञिका**
**तत्पुत्रेणाऽपि रविना कृता मधुमतीस्तथा ॥**

(वामनाचार्यझलकीकारः)

२०. रत्नपाणिठक्कुरः (मैथिलः)—काव्यदर्पणः—प्रायशः १४५० खीष्ट्राब्दः ।

२१. रविकरः (मैथिलः)—'मधुमतिः—पञ्चदशशतकस्यान्तिमे चरणे ।

२२. देवनाथठक्कुरः (मैथिलः)—काव्यकौमुदी—पञ्चदशखीष्ट्राब्दः ।

२३. पण्डितरायरघुनन्दनः (मैथिलः) काव्यप्रकाशस्य टीका—१५०० खीष्ट्राब्दः

२४. रामानन्दठक्कुरः (मैथिलः)—रसतरङ्गिणी—षोडशशतकस्य पूर्वार्द्धम् ।

२५. नारायणसर्वज्ञः (मैथिलः)—१. काव्यवृत्तिरत्नावली, २. शब्दभेदनिरूपणञ्च, षोडशशतकस्य पूर्वार्द्धम् ।

२६. श्रीशङ्करमिश्रः (मैथिलः)—साहित्यकलिका—षोडशशतकम् ।

२७. श्रीभगीरथठक्कुरः (मैथिलः)—काव्यादर्शस्य टीका—षोडशशतकम् ।

**पद्मपत्रमपि यत्र दुर्लभं रन्धनं भवतीन्धनं विना ।**
**श्रीभगीरथगुणेन केवलं मौरगौरवकथा गरीयसी ॥**

२८. केशवमिश्रः (मैथिलः)—'अलङ्कारशेखरः'—षोडशशतकस्योत्तरार्द्धम् ।

२९. गङ्गानन्दमिश्रः (मैथिलः)—१. 'कर्णभूषणम्', २. काव्यडाकिनी, ३. भृङ्गदूतः—षोडशशतकस्योत्तरार्द्धम् ।

३०. महादेवठक्कुरः (मैथिलः)—रसमञ्जर्याः रसतरङ्गिण्याश्च टीका । अस्य समयः—षोडशशतकस्योत्तरार्द्धम् ।

३१. रामकवि (मैथिलः)—१. नायिकावर्णनम्, २. पाण्डवदिग्विजयः—षोडशशतकस्योत्तरार्द्धम् ।

३२. म० म० चतुर्भुजमिश्रः (मैथिलः)—साहित्यविलासः—१५८९ ई० तः १६०४ ई० यावत् ।

३३. गोविन्ददासः (मैथिलः)—'काव्यदीपिका' काव्यप्रकाशस्य टीकेयम् । अस्य समयः—षोडशशतकस्यान्तिमे चरणे ।

यथा—

**मासे कर्त्तिक नाम्नि चन्द्र सुखदे पक्षे तृतीयातिथौ,**
**बद्धे लक्ष्मणभूपतेः परिगते मासेषु संसूचिते ।**
**गोविन्दं हृदये निधाय सदयो गोविन्दपादोदके,**
**कायस्यार्धमगात् त्रिविष्टपमहोगोविन्दसठक्कुरः ॥**

अस्य लेखनशैली—

**नाथ प्रार्थनया कया महिमया भूयो भवानर्चिता,**
**कस्यां वा भवता कृपां कमयता मालस्यमभ्यासितम् ।**
**निर्लज्जोऽस्मि तथाप्यनन्यशरणः श्रीमन्तमभ्यर्थये,**
**कालव्यालमुखान्तराल पतितं गोपाल मां पालय ॥**

३४. श्रीप्रभाकरठक्कुरः (मैथिलः)—१. रसप्रदीपः—काव्यशास्त्रीयग्रन्थः, २. काव्यलक्षणम्—तथैव, ३. अलङ्काररहस्यम्—तथैव अस्य समयः—षोडशशतकस्यान्तिमचरणे—

## सप्तदशशतकादारभ्य नवदशशतकं यावत्

१. भवदेवमिश्रः (मैथिलः)—'लीला' काव्यप्रकाशस्य टीका—१६०५ ई० तः १६८५ ई० यावत् ।

२. सुन्दरमिश्रः (मैथिलः)—'नाट्यप्रदीपः—अभिरामणिनाटकश्च, अस्य समयः—सप्तदशशतकस्य प्रथमचरणे ।

३. नरसिंहठक्कुरः (मैथिलः)—'नरसिंहमनीषा' का०प्र० टीका—सप्तदशशतकस्योत्तरार्द्धम् ।

४. अनन्तः (मैथिलः)—'व्यङ्ग्यार्थकौमुदी' टीका—सप्तदशशतकस्य पूर्वार्द्धम् ।

५. दामोदरमिश्रः (मैथिलः)—१. काव्यालङ्कार, २. वाणीभूषणम्—सप्तदशशतकस्य पूर्वार्द्धम् ।

६. भावमिश्रः (मैथिलः)—शृङ्गारसरसिः—सप्तदशशतकस्य पूर्वार्द्धम् ।

७. म० म० रघुदेवमिश्रः (मैथिलः)—कारिकार्थप्रकाशिका—का०प्र० टीका अस्य समयः—सप्तदशशतकस्य पूर्वार्द्धम् ।

८. लोचनकविः (मैथिलः)—रागतरङ्गिणी—सप्तदशशतकम् ।

९. गोकुलनाथ उपाध्यायः (मैथिलः)—१. रसमहार्णवः, २. पदवाक्यरत्नाकरः, ३. सार्जवः काव्यप्रकाशस्य टीका, ४. अमृतोदयः—नाटकम् ।

अस्य समयः—१६७५ ई० तः १७२५ ई० यावत् ।

**जानकीजननभूमिरिक्षितमम्बुजाक्षिमिथिलेयमग्रतः ।**
**अत्र विज्ञवदनेषु दर्पिता नृत्यतिप्रतिगृहं सरस्वती ॥** (कविकर्णपूरः)

१०. म० म० इन्द्रपति (मैथिलः)—१. सूक्तिमुक्तावली, २. प्रभावती परिणयः—सप्तदशशतकस्योत्तरार्द्धम् ।

११. श्रीपद्मनाभमिश्रः (मैथिलः)—'रसरहस्यम्' तथाविषयान्तरग्रन्थाः अस्य समयः—चतुर्दशशतकम् ।

१२. प्रबलशाहः (शाहावादी-बिहारी)—रसमञ्जर्याः-हिन्दीपद्यात्मकोव्याख्या अस्य समयः—सप्तदशशतकस्योत्तरार्द्धम् ।

१३. सुखलालमिश्रः (मैथिलः)—१. अलङ्कारमञ्जरी, २. शृङ्गारमाला—अष्टादशशतकस्य पूर्वार्द्धम् ।

१४. चक्रपाणिः (मैथिलः)—नखशिखवर्णनम्—अष्टादशशतकस्य पूर्वार्द्धम् ।

१५. म० म० चित्रधरमिश्रः (मैथिलः)—१. वीरतरङ्गिणी, २. शृङ्गारसारिणी ।

**युगेन्दु रामेन्दु मिते यावने श्रावणे भृगौ ।**
**दर्शेऽलिखदिदं पुस्तं यदुनाथो महीसुरः ॥**

शृङ्गा० पा० उ० पृष्ठे० अस्य समयः—अष्टादशशतकस्य पूर्वार्द्धम् ।

१६. श्रीशङ्करमिश्रः (मैथिलः)—'रसार्णवः'—अष्टादशशतकस्य पूर्वार्द्धम् ।

**बालोऽहं जगदानन्द नमे बालासरस्वती ।**
**अपूर्णे पञ्चमे वर्षे वर्णयामि जगत्त्रयम् ॥** (पण्डितविजया-श्रीशङ्करः)

१६. रमापति उपाध्यायः (मैथिलः)—१. बृहत्तररत्नाकरः, २. रुक्मिणि परिणयः—अष्टादशशतकस्योत्तरार्द्धम् ।

१७. रतिपतिमिश्रः (मैथिलः)—गीतगोविन्दस्य टीका—अष्टादशशतकस्योत्तरार्द्धम्

**यद्गन्धर्वकलासु कौशलमनु ध्यानञ्च यद्वैष्णवम्,**
**यच्छृङ्गारविवेक तन्त्ररचना काव्येषु लीलायितम् ।**
**तत्सर्वं जयदेव पण्डितकवे कृष्णैकतारात्मनः,**
**सानन्दः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥** (ग्रन्थान्तात्)

१८. शिवराजः (मैथिलः)—कृष्णविलासः—नायिका भेदविषयको ग्रन्थ अस्य समयः—अष्टादशशतकस्यान्तिमो दशकः ।

१९. चन्द्रदत्तझा (मैथिलः)—'विरुदावली'—प्रायशः १८३५ खीष्टाब्दः ।

२०. पण्डितराघवझा (मैथिलः)—१. 'अवचूरिः'—काव्यप्रकाशस्य टिप्पणी । २. 'छन्दकल्पतरुः' ३. भट्टिकाव्यस्य टीका ।

अस्य समयः—नवदशशतकस्य पूर्वार्द्धम् ।

२१. भानुनाथझा (मैथिलः)—१. शृङ्गारमञ्जरी, २. प्रभावतीहरणम्, ३. व्यवहाररत्नम्, नवदशशतकस्य पूर्वार्द्धम् ।

२२. श्रीहर्षनाथझा (मैथिलः)—१. रसालङ्कारदीपिका, २. उषाहरणम्, ३. माधवानन्दः, ४. राधाकृष्णमिलनलीला—१८४७ ई० तः १८९८ ई० यावत् ।

२३. दिनेश द्विवेदी (सरयूपारीणः)—'रसरहस्यम्'—नवदशशतकस्य पूर्वार्द्धम् ।

२४. श्रीयदुनाथमिश्रः (मैथिलः)—१. व्यञ्जनावादः, २. समासशक्तिवादः, ३. गूढार्थदीपिकाः, ४. प्रदीपः, १८८५ ई० तः १९२८ ई० यावत् ।

२५. कविशेखरवदरीनाथझा (मैथिलः)—१. रसमञ्जरीसुभिः, २. ध्वन्यालोकदीधितिः, ३. रसगङ्गाधरचन्द्रिका । एतदतिरिक्त षड्विंशत्यधिकानां ग्रन्थानां रचना सम्पादनञ्चेति । अस्य—जन्माब्दः१८९३ई० महाप्रयाणश्च१९४७ ई०

२६. पं० बालगोविन्दमिश्रः (+) 'छन्दप्रकाशः' ग्रन्थेऽस्मिनष्टचत्वारिंशत् छन्दसां लक्ष्यलक्षण निरूपणम् । (२) कुण्डलीरामायणं अयं हि विद्वान् गयाक्षेत्रनिवासी शाकक्षेत्री ब्राह्मणः आसीत् । अनेन स्वयं लिखति—

**विख्यातारण्यडीह प्रथम सुभगपुरे श्रीगयाक्षेत्र देशे,**
**वासो यस्य प्रणम्येश्वरपदयुगलं भाविरामायणंवत् ।**
**शाकद्वीपीद्विजोऽहं द्विजपदनुचरो, बालगोविन्दमिश्रः,**
**कुर्वे छन्दानुबद्धं कलिकलुषहरं कुण्डलीयाख्यवृत्या ॥**

अस्य समयः—नवदशशतकस्योत्तरार्द्धम् ।

२७. नरसिंहठक्कुरः (मैथिलः)—'नरसिंहमनीषा' काव्यप्रकाशस्य टीका अस्य समयः—अष्टादशशतकस्योत्तरार्द्धम् ।

## 'कतिचनाऽर्वाचीनाः संस्कृतकाव्यशास्त्रसृजः'

१. श्रीआनन्दझा (मैथिलः)—१. ध्वनिकल्लोलिनी, २. ध्वनिसिद्धिः, ३. ध्वनिखण्डनम्; ४. व्यक्तिविवेकविमर्शः ।

अस्य समयः—विंशतिशतकम् ।

२. आचार्यजानकीबल्लभशास्त्री—प्राच्यसाहित्यम्—विंशतिशतकम् ।

३. डॉ० बेचनझा (मैथिलः)—(i). Concept of Poetic Blemishes in Sanskrit Poetics. (ii) Dhvani Theory and its Exponent and Opponents.

अस्य समयः—विंशतितमः शतकम् ।

४. श्रीकृष्णमोहनठक्कुरः (मैथिलः)—साहित्यदर्पणस्य 'लक्ष्मी' टीका ।

अस्य समयः—विशतितमः शतकम् ।

५. डॉ० जयमन्तमिश्रः (मैथिलः)—१ काव्यात्मतत्त्वविमर्शः, २. अलङ्कारानुशीलनम् । समयः—विंशतितमः शतकम् ।

६. राजवंशसहायः—अलङ्कारानुशीलनम्' आधुनिकः ।

७. डॉ० त्रिलोकनाथझा (मैथिलः)—१. शृङ्गारसारिणी, २. वीरतरङ्गिणो,—विंशविशकम् ।

८. कान्हूलालगुरदा—सुधारसतरङ्गिणी—विंशतिशतकस्य पूर्वार्द्धम् । अस्य पुस्तकस्यान्ते लिखितमस्ति—

**'श्रीमत्परमपूजनीय ब्रह्मप्रकल्पितगयापालकुलावतंस गुरदोपनामक श्रीयुक्त कान्हूलाल विरचित सुधातरङ्गिण्यां नवमः तरङ्गः समाप्तः ॥'**

९. श्रीकृष्णमाधवझा (मैथिलः)—अलङ्कारविद्योतनम्, विशतिशतकम् ।

१०. आचार्य देवेन्द्रनाथशर्मा (कान्यकुब्जः)—१. काव्यालङ्कारस्य भाष्यम्, २. वक्रोक्तिजीवितस्य भाष्यम्, ३. अलङ्कारमुक्तावली ।

अस्य समयः—विंशतिशतकस्योत्तरार्द्धम् ।

इतोऽधिकमप्यनेकाः काव्यशास्त्रसृजो विद्वान्सः अस्मिन् क्षेत्रे सन्ति, किञ्चात्माल्पज्ञत्वात्, प्रामाणिकपरिचयाभावाच्च तेषां नामोल्लेखः अस्यां सूच्यां मया न कृतः । यतः ऐतिहासिकरूपेण वैधानिकरूपेण तान् विदुषः प्रति किमपि लिखितुं मां कोऽप्यधिकारो नास्ति । अतः नामावलिरियं मया विचार्यैव लिखिता, तथापि मानव-सुलभदोषात्, मदीयानवधानतावशात्, अज्ञानात्, विस्मृतेर्भ्रान्त्या वा स्खलितानि स्युस्तदा गुणैकपक्षपातिनः सहृदयास्तानि संसूच्यमानवश्यमनुग्रहीष्यन्ति ।

**इति शम्**



